आचार्यशर्ववर्मप्रणीतं

# कातन्त्रव्याकरणम्

**तृतीयो भागः**

प्रथमखण्डम्

## व्याख्याचतुष्टयोपेतम्

कुलपतेः प्रो. राममूर्तिशर्मणः प्रस्तावनया समलङ्कृतम्

सम्पादकः
डॉ. जानकीप्रसादद्विवेदी

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA - GRANTHAMĀLĀ
[ Vol. 135 ]

# KĀTANTRAVYĀKARAṆA

OF

*ĀCĀRYA ŚARVAVARMĀ*

[ PART - THREE ]

( VOLUME - 1 )

*With four Commentaries*

'VṚTTI' & 'ṬĪKĀ'

*BY*

ŚRĪ DURGA SINGH

'KĀTANTRAVṚTTI PAÑJIKĀ'

*BY*

ŚRĪ TRILOCANADĀSA

'KALĀPACANDRA'

*BY*

KAVIRĀJA SUṢEṆA ŚARMĀ

Bilveshvaratikā

*by*

*Acharya Bilveshvara*

'SAMĪKṢĀ'

*By Editor*

*FOREWORD BY*

PROF. RAMMURTI SHARMA

VICE - CHANCELLOR

*EDITED BY*

Prof. JĀNAKĪ PRASĀDA DWIVEDĪ

*Dean, faculty of Shabdavidyā*

*Central Institute of Higher Tibetan Studies*

*(Deemed University)* Sarnath, Varanasi.



VARANASI

2000

*Research Publication Supervisor —*
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.

**ISBN : 81-7270-052-0 (Vol. III, Part 1)**
**ISBN : 81-7270-006-7 (Set)**



*Published by —*
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at —*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002



**First Edition,** 500 Copies
**Price :** Rs. 480.00



*Printed by —*
**Anand Printing Press**
C. 27/170-A, Jagatganj,
Varanasi-221 002

सरस्वतीभवन-ग्रन्थमाला
[ १३५ ]

आचार्यशर्ववर्मप्रणीतं

# कातन्त्रव्याकरणम्

## (तृतीयो भागः)

### [ प्रथमखण्डम् ]

*श्रीदुर्गसिंहकृताभ्यां कातन्त्रवृत्ति-टीकाभ्यां*
*श्रीमत्त्रिलोचनदासकृतया 'कातन्त्रवृत्तिपञ्जिका'-टीकया*
*कविराजसुषेणशर्मकृतया 'कलापचन्द्र'-टीकया*
*आचार्यबिल्वेश्वरकृतटीका*
*सम्पादकीयसमीक्षया*

कुलपतेः प्रो०राममूर्तिशर्मणः प्रस्तावनया च विभूषितम्

*सम्पादकः*
प्रो० जानकीप्रसादद्विवेदः
आचार्यः, संस्कृतविभागे, शब्दविद्यासङ्कायाध्यक्षश्च
केन्द्रीय-उच्चतिब्बतीशिक्षा-संस्थानम्, सारनाथ-वाराणसी




वाराणस्याम्
२०५७ तमे वैक्रमाब्दे    १९२२ तमे शकाब्दे    २००० तमे खैस्ताब्दे

*अनुसन्धानप्रकाशनपर्यवेक्षकः —*

**निदेशकः, अनुसन्धान-संस्थानस्य**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी।

ISBN : 81-7270-052-0 (Vol. III, Part 1)

ISBN : 81-7270-006-7 (Set)



*प्रकाशकः —*

**डॉ०हरिश्चन्द्रमणित्रिपाठी**

*निदेशकः, प्रकाशन-संस्थानस्य*

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी-२२१ ००२



*प्राप्तिस्थानम् —*

**विक्रय-विभागः,**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी-२२१ ००२



**प्रथमं संस्करणम्,** ५०० प्रतिरूपाणि

**मूल्यम् —** ४८०.०० रूप्यकाणि



*मुद्रकः —*

**आनन्द प्रिंटिंग प्रेस**

सी० २७/१७०-ए, जगतगंज,

वाराणसी—२२१ ००२

# प्रस्तावना

षडङ्गेषु प्रथमं वाङ्मलानां चिकित्सितम्, वेदानामपि वेदस्वरूपम्, शब्दानुशासनात्मकं व्याकरणशास्त्रं शब्दब्रह्मावगमपुरस्सरमपवर्गसाधनाय प्रभवति। महर्षिपतञ्जलिना यथा चित्तगतदोषशमनाय योगसूत्रम्, देहदोषापसारणाय चरकाभिधानं वैद्यकशास्त्रं च प्रणीतमासीत्, तथैव वाग्दोषापनोदाय महनीयं पदशास्त्रं महाभाष्यमपि विरचितम्। एतेन न केवलं रक्षोहागमलघ्वसन्देहार्थमेव व्याकरणमध्येतव्यम्, अपि च मितसारवचोरूपवाग्मित्वाधिगमायापि व्याकरणमवश्यमध्येतव्यं भवति। पूर्वं व्याकरणमष्टधा नवधा चापि प्रसिद्धमासीत्। साम्प्रतमुपलब्धेषु पाणिनीय-कातन्त्र-चान्द्र-जैनेन्द्र-सारस्वत-सरस्वतीकण्ठाभरण-शाकटायन-सिद्धहैमादिबहुविधव्याकरणेषु परम्पराद्वयं स्पष्टमवभासते—माहेश्वरपरम्परा माहेन्द्रपरम्परा च। तत्र माहेश्वरपरम्परामनुसरन्ति पाणिनीय-चान्द्र-सरस्वतीकण्ठाभरणादीनि व्याकरणानि, परमिदानीं माहेन्द्रपरम्परायाः प्रतिनिधित्वमाचरति केवलं कातन्त्रव्याकरणमेव। माहेशी परम्परा प्रत्याहारप्रधाना कृत्रिमरचनायोजनाप्रधाना शब्दलाघवावबोधपरा च प्रतिभासते। माहेन्द्री परम्परा च लोकव्यवहारप्रधाना सती अर्थलाघवमाविष्कुरुते। एवं पाणिनीयव्याकरणप्रक्रिया पर्याप्तं विस्तृता दुरूहा च वर्तते। कातन्त्रव्याकरणप्रक्रिया सारल्यं संक्षेपं च वितनुते।

काशकृत्स्नतन्त्रापेक्षया संक्षिप्तत्वात् कातन्त्राभिधानेन लोके विदितं व्याकरणमिदं रचनाकारादिविविधाश्रयवैशिष्ट्यवशात् कलाप-कौमार-मुष्टि-शार्ववर्मिक-दौर्गसिंहीय-नामभिरपि विदितवेदितव्यैर्बुधैर्व्यवह्रियते। सुखप्रतिपत्तये प्रवृत्तमर्थलाघवप्रधानमिदं व्याकरणं लोकाभिधान-शिष्टव्यवहार-प्रक्रियालाघव-विवक्षा-आर्षप्रयोग-सर्ववेदपारिषदत्वादि-वैशिष्ट्यानि बिभर्ति। वङ्ग-उत्कल-शारदा-भोट-देवनागर्यादिलिपिमयैर्हस्तलेखैर्द्वादश-ग्रन्थानां भोटभाषानुवादेन पञ्चचत्वारिंशद्भोटभाषाव्याख्याभिः, जैनाचार्यकृतत्रिंशट्टीकाभिः, गुरुनाथविद्यानिधिसीतानाथाद्याचार्यकर्तृकवङ्गभाष्यटीकाटिप्पणीभिः, एतदाधारितबालशिक्षा-गान्धर्वकलापव्याकरण-कच्चायनादिव्याकरणैर्मुद्रितैश्चापि पञ्चचत्वारिंशत्संख्याकैर्ग्रन्थ-रत्नैरस्य समृद्धं श्रेयस्करं च वाङ्मयं वीक्ष्य कोऽपि सुधीजनः प्रमोदातिशयमवाप्नुयात्।

पूज्यपाददेवनन्दिप्रणीतं जैनेन्द्रव्याकरणम्, अभिनवशाकटायनप्रणीतं शाकटायन-व्याकरणम्, हेमचन्द्रप्रणीतं सिद्धहैमशब्दानुशासनं चेति त्रीणि व्याकरणानि असन्दिग्ध-रूपेण जैनव्याकरणानि मन्यन्ते, जैनाचार्यैः प्रणीतत्वात्। परं साम्प्रतं जैनसमाजेन कातन्त्रमपि परमं समादृतम् आत्मसात्कृतं चापि वर्तते। जैनसमाजेन भगवदृषभदेवजयन्तीमहोत्सव-

सङ्गोष्ठ्याम् आगराजनपदे चत्वारि व्याख्यानानि, दिल्लीस्थेन श्रीकुन्दकुन्दभारतीन्यासेन द्विदिवसीयाऽखिलभारतीया सङ्गोष्ठी च कातन्त्रमधिकृत्य समायोजिता आसीत्। श्रीकुन्दकुन्दभारतीन्यासेन कातन्त्रव्याकरणस्य सर्वाङ्गीणपुस्तकालयोऽप्येकः प्रतिष्ठापयिष्यते। यत्र मुद्रितलेखानां मुद्रितग्रन्थानां विविधलिप्यात्मकहस्तलेखानां चापि सङ्ग्रहो भविष्यति। आचार्यकुन्दकुन्दपुरस्कारसम्मानितः प्रो० राजारामजैनमहोदयो व्याकरणमिदं जैनसमाजस्य गौरवग्रन्थं मनुते।

व्याकरणस्याऽस्य प्रभावः कच्चायनाख्यपालिव्याकरणे, 'तोलकाप्पियम्' इत्याख्यतमिलव्याकरणे च स्पष्टं परिलक्ष्यते। वङ्ग-कश्मीर-राजस्थानादिप्रदेशेषु श्रीलङ्का-भूटाननेपाल-तिब्बतप्रभृतिदेशान्तरेष्वपि प्रसिद्धं प्रचलितं च व्याकरणमिदं शास्त्रान्तररतानामैश्वर्यसम्भृतानामलसानां लोकयात्रादिषु स्थितानां वणिजां चापि स्वकीयया सरलया संक्षिप्तया च प्रक्रियया महान्तम् उपकारमातनोत्।

१९९६ तमयीशवीयाब्दस्य जुलाईमासे प्रकाशनसमितेः स्वीकृत्यनुसारं कातन्त्रव्याकरणे आख्यातात्मकस्य तृतीयभागस्य प्रथमखण्डमिदं विदुषां करकमलयोः समुपाहरतो मोमुदीति मे चेतः। खण्डेऽस्मिंष्टीकाचतुष्टयस्य सम्पादनं हिन्दीभाषायां सम्पादकीया समीक्षा च विदुषां जिज्ञासूनामनुसन्धित्सूनां च महते उपकाराय नूनं कल्पेत। इतः पूर्वं सन्धिप्रकरणात्मकः प्रथमभागः १९९७ तमे यीशवीयाब्दे, नामचतुष्टयाध्यायस्य पूर्वार्द्धपादत्रितयात्मको द्वितीयभागीयप्रथमखण्डः १९९८ तमे यीशवीयाब्दे, नामचतुष्टयाध्यायस्योत्तरार्द्धपादत्रितयात्मको द्वितीयभागीयद्वितीयखण्डः १९९९ तमे यीशवीयाब्देऽस्मादेव विश्वविद्यालयात् प्रकाशितः सञ्जातः। इदं नाविदितं विदुषां यद् 'मोदकं देहि' इति वचनाश्रिते व्याकरणेऽस्मिन् सम्पादकेन **प्रो० जानकीप्रसादद्विवेदेन** १९९७ तमयीशवीयाब्दस्य लक्षमुद्रात्मकः **आचार्य-उमास्वामिपुरस्कारः**, **'कातन्त्रसिन्धुः'** इति सम्मानित उपाधिश्च सम्प्राप्तः।

अत्र वङ्गाक्षरेषु शताधिकवर्षपूर्वं मुद्रितान् ग्रन्थानधिकृत्य सम्पादनकार्यं प्रवृत्तमस्ति। अस्मिन् सम्पादनकार्ये उद्धृतग्रन्थानां सन्दर्भपूरणेन सौष्ठवं किमपि संवर्धितम्। परमोपयोगिभिः परिशिष्टैरस्मिन् शोधकार्यसौविध्यमारचितम्। भूमिकाभागे सम्पादकेन पाणिनीयव्याकरणापेक्षया कातन्त्रीयविध्यादिनिर्देशे साम्यम्, केषाञ्चिद् वचनानां पक्षाणां वा सुखप्रतिपत्ति-प्रपञ्च-वैचित्र्य-बालावबोधाद्यर्थप्रदर्शनसिद्धान्तादिसूचकवचनसङ्ग्रहश्च कृतः। तत् सर्वं सुखेन कातन्त्रीयविषयावबोधाय नूनमलं भवेत्। प्रकीर्ण-दुरूह-महनीयकार्यस्यास्य महता श्रमेण मनोयोगेन च समीचीनसम्पादनाय प्रो० श्रीद्विवेदो धन्यवादं प्रशंसां च नितरामर्हति। सम्पादनसमीक्षाकर्मणि समर्पितं तमहं सम्प्रीतः सन् विविधैराशीर्वचोभिरभ्युदयेन च

योजये। इदमाशास्यते आशंस्यते चापि यत् सङ्कल्पितस्यावशिष्टस्यापि कार्यस्य यथोचितं सम्पादनं प्रकाशनं चाशु सम्पद्येतेति।

ग्रन्थस्यास्य सौष्ठवपूर्णप्रकाशने सन्नद्धाय प्रकाशननिदेशकाय **डॉ० हरिश्चन्द्रमणि-त्रिपाठिने**, ईक्ष्यशोधकाय **डॉ० हरिवंशकुमारपाण्डेयाय**, मुद्रकाय 'आनन्द-प्रिण्टिङ्ग-प्रेस'-सञ्चालकाय **श्रीजगदीशपाण्डेयाय** च प्रभूतमाशीराशिं वितरन्नहमतितरां हर्षमनुभवामि। अन्ते च ग्रन्थमिमं सान्नपूर्णाय श्रीकाशीविश्वेश्वराय समर्पयंस्तं श्रीभवानीजानिं प्रार्थये यद् ग्रन्थोऽयं पाठकानां महते श्रेयसे प्रभवेदिति।

रामभूर्ति शर्मा

**वाराणस्याम्**
गुरुपूर्णिमायाम्,
वि० सं० २०५७

**राममूर्तिशर्मा**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# भूमिका

**वाग्देवीं मनसा ध्यात्वा त्याद्यन्तमिह दर्श्यते।**
**ससमीक्षं पदं सम्यग् व्याख्याचतुष्टयात्मकम्॥**
**कातन्त्रतन्त्रेऽस्ति महान् प्रयासः संक्षेपसारल्यनिदर्शनार्थम्।**
**सन्धिं समासादिविधिं प्रदर्श्य प्रस्तूयते त्यादिविधिस्तदीयः॥**

**'मोदकं देहि'** इति वचनाधारितस्याध्यायत्रितयात्मकस्य कातन्त्रव्याकरणस्य १९९७ तमे यीशवीयाब्दे प्रकाशिते सन्धिप्रकरणात्मके **प्रथमभागे** पञ्चसु पादेषु स्वर-व्यञ्जन-प्रकृतिभाव-अनुस्वार-विसर्गाभिधानान् पञ्च सन्धीन् निर्वर्ण्य 'मा+उदकम्' इति सन्ध्यभिप्रायः प्रपूरितः। तदनु १९९८ तमे यीशवीयाब्दे प्रकाशितस्य नामचतुष्टयात्मकस्य **द्वितीयभागस्य प्रथमखण्डे** पुंलिङ्ग-स्त्रीलिङ्ग-नपुंसकलिङ्गशब्दान्, १९९९ तमे यीशवीयाब्दे प्रकाशितस्यास्यैव नामचतुष्टयात्मकस्य **द्वितीयभागस्य द्वितीयखण्डे** कारक-समास-तद्धितांश्च प्रदर्श्य 'मोदकम्' इति स्याद्यन्तपदेनोपलक्षितानि कार्याणि संक्षेपेण सूत्रेषु निबद्धानि।

**'देहि'** इति यदाख्यातपदमवशिष्टम्, तस्यैव सम्पूर्तये शर्ववर्माचार्येणाष्टसु पादेषु त्याद्यन्तपदरूपाख्यातविधयो निर्दिष्टाः। तेषामेव विधीनां प्रदर्शनार्थम्, अथवा सन्धिभागे वर्णानाम्, नामचतुष्टये स्याद्यन्तपदस्य च वर्णनानन्तरं वाक्यपूर्तये परमापेक्षितानां क्रियापदानामन्वाख्यानार्थं **तृतीयभागस्य प्रथमखण्डे**ऽस्मिन् केवलं त्रयः पादाः १२३ सूत्रात्मकाः संगृहीताः सन्ति। त्रयाणामेषां पादानां क्रमेण नामानि विज्ञेयानि – १. परस्मैपादः, २. प्रत्ययपादः, ३. द्विर्वचनपादश्च। पादनामानुसारेण **प्रथमे परस्मैपादे** 'परस्मैपद – आत्मनेपद-प्रथमपुरुष-मध्यमपुरुष-उत्तमपुरुष-दा-धातु-वर्तमाना-परोक्षा-ह्यस्तनी-अद्यतनी-क्रियातिपत्ति – भविष्यन्ती-आशीः-श्वस्तनी-पञ्चमी-सप्तमी-सार्वधातुक' इत्येता अष्टादशसंख्याकाः संज्ञाः, तदीयाः केचिद् विधयः, वर्तमानादिविभक्त्यर्थबोधार्थं कालाधिकारः, 'पञ्चमी-अद्यतनी-ह्यस्तनी' इत्येतासां विभक्तीनां विशेषप्रयोगाः प्रकीर्तिताः सन्ति।

**द्वितीये प्रत्ययपादे** प्रत्ययसंज्ञापुरस्सरं 'सन्-यिन्-काम्य-आयि-इन्-य-आय' इत्येते सप्त प्रत्ययाः नामधातुविधानार्थं विहिताः, 'कृ - भू - अस्' इत्येतेषां त्रयाणां धातूनामनुप्रयोगः, 'सिच्-सण्-चण्-अण्-इच्-यण्' इत्येते विभक्तिविशेषप्रत्यया उक्ताः भ्वादिप्रभृतिधातुगणपठितानां धातूनां त्यादिप्रत्ययानां च मध्ये 'अन्-यन्-नु-न-उ-ना'

इत्येते षट्संख्याका विकरणाः कृताः, आत्मनेपद-परस्मैपद-उभयपदप्रत्ययानां विधानं निर्दिश्य स्वरितानुबन्धधातुभ्यः कर्त्रभिप्राये क्रियाफले सति आत्मनेपदम्, परगामिनि क्रियाफले च परस्मैपदमुपपद्यते पाणिनिमतेन, परं शर्ववर्माचार्यस्य नेदं विशिष्ट-विधानमभिमतम्, किं च स तत्र सामान्यविधानमेव मनुते । अर्थात् स्वरितानुबन्धेभ्यो धातुभ्यः कर्त्रभिप्रायेऽकर्त्रभिप्राये च क्रियाफले सति परस्मैपदमात्मनेपदं च प्रवर्तते । विषयेऽस्मिन् कुलचन्द्राद्याचार्याणां कारिकाभिर्दर्शितमभिमतमत्रोपस्थाप्यते –

"एतेनास्मन्मते प्रायेण व्यभिचारदर्शनात् - कर्त्रभिप्राये क्रियाफले" (अ० १।३।७२) इति पाणिनिसूत्रं न सम्मतमिति । तथा च कुलचन्द्रः –

**विशेषः पाणिनेरिष्टः सामान्यं शर्ववर्मणः ।**
**सामान्यमनुगृह्णन्ति तत्राचार्यपरम्परा ।।** इति ।

तन्नेति महान्तः । तथाहि,

**वर्णयामास यत्नेन यतो वररुचिः स्वयम् ।**
**पाणिनेरनुसारेण तात्पर्यं शर्ववर्मणः ।।**

वयं तु

**कर्त्रभिप्राय इत्येतत् सूत्रं न विहितं यतः ।**
**तस्मात् सामान्यमेवास्य सम्मतं शर्ववर्मणः ।।**

केचित्

**परस्मै पद्यते यस्मात् तत् परस्मैपदं स्मृतम् ।**
**आत्मने पद्यते यस्मात् तदेवात्रात्मनेपदम् ।।**
**इत्थमन्वर्थसंज्ञाया विधानेनैव लक्ष्यते ।**
**मतं हि पाणिनेरेव सम्मतं शर्ववर्मणः ।।**
**नैवमन्वर्थसंज्ञायाः प्रायो वृत्तिर्न दृश्यते ।**
**अतो न पाणिनेः सूत्रं सम्मतं शर्ववर्मणः ।।"**

**तृतीये द्विर्वचनपादे** द्विर्वचनाधिकारमादौ प्रदर्श्य तत्राभ्यासाभ्यस्तसंज्ञाद्वयं चोपनिबध्य द्विर्वचनविधिनिषेध-आदिव्यञ्जनावशेष-प्रथमवर्ण-तृतीयवर्ण-ज्-चवर्ग-ह्रस्व-अ-दीर्घ-गुण-इ-अभ्यासगुण-अभ्यासदीर्घ-अनुस्वार-उ-सन्वद्भाव-अत्-इस्-इ-इत्-ईत्-दिगि' इत्येते आदेशाः, 'न्-नी-री' इत्येते त्रयं आगमाश्च विहिताः । एतेषु त्रिषु पादेषु सूत्राणां [1]व्याख्याचतुष्टयवचनानां च यद् वैशिष्ट्यं दृश्यते, तदेवं वक्तुं शक्यते –

---

१. इदमत्रावधेयं यद् यस्मिन् सूत्रे कविराजसुषेणभूषणकृतः कलापचन्द्रो नोपलभ्यते, तस्मिन् सूत्रे आचार्यबिल्लेश्वरकृता टीका समुपन्यस्तेति ।

१. शर्ववर्माचार्यस्य सुखेन व्याकरणविषयावबोधार्थं प्रतिज्ञावचनम् ।

२. 'ति' प्रभृतीनां १८० संख्यकप्रत्ययानां पाठो दशसु विभक्तिषु वृत्तिकारेण दुर्गसिंहेन कृतः, न तु सूत्रकारेण शर्ववर्माचार्येण ।

३. 'वर्तमाना-सप्तमी-पञ्चमी-ह्यस्तनी-अद्यतनी-परोक्षा-श्वस्तनी-आशीः-भविष्यन्ती-क्रियातिपत्ति' इत्येतासामन्वर्थानां दशविभक्तीनां संज्ञात्वेनोपादानम् । विषयेऽस्मिन् पाणिनेर्लडादयो दश कृत्रिमा लकाराः प्रसिद्धाः सन्ति ।

४. छन्दोवत् सूत्राणि भवन्ति, छन्दसि च दृष्टानुविधिरङ्गीक्रियते प्रमाणरूपेण, तेन कातन्त्रीयसूत्रेषु विभक्तिपदवर्णानां यः आदि-मध्य-अन्तलोपो दृश्यते, स न दोषाय कल्पते । लोपविषयकं वचनमस्ति –

**आदिलोपोऽन्तलोपश्च मध्यलोपस्तथैव च ।**
**विभक्तिपदवर्णानां दृश्यते शार्ववर्मिके ॥**

५. आचार्यवररुचिमतानुसारं शेषश्चतुर्विधः परिकीर्त्यते । तद् यथा –

**अर्थाद् उपपदत्वे तु तथा चैवानुबन्धतः ।**
**कारकाच्चैव विज्ञेयः शेष उक्तश्चतुर्विधः** ॥इति ।

६. 'प्र-सम्-उप-उत्' इत्येतेषां चतुर्णामुपसर्गाणां स्वार्थे द्विर्वचनम् अभिमतम् । तद् यथा –

**प्रप्रपूज्य महादेवं संसंयम्य मनः सदा ।**
**उपोपहाय संसर्गमुदुद्गतः स तापसः** ॥इति ।

७. 'वस्तुतः-अयमभिप्रायः-अस्यायमाशयः' इत्यादिभिर्वचनैर्वस्तुतत्त्वस्य परीक्षणं कृतं व्याख्याकारैर्निष्कर्षश्च कश्चिदास्थितः । एवं तदीयवचनानि विज्ञेयानि –

**[वस्तुतः]**

१. वस्तुतस्तु 'विदितान्येव' इति पाठो युक्तः (क० च० ३।१।१) ।

२. वस्तुतस्तु अयुक्तमिदं यावता सूत्रमिदं व्यर्थीकृत्य तद्बलेनात्मनेपदिनोऽपि धातोः परस्मैपदं सन् विधीयते (क० च० ३।१।१) ।

३. वस्तुतस्तु उक्तिबाधा परग्रहणान्नवग्रहणाच्चावगम्यते (क० च० ३।१।१) ।

४. वस्तुतस्तु शास्त्रीयसंज्ञायां लौकिकहेतुर्न प्रयोजकः (क० च० ३।१।१) ।

५. वस्तुतस्तु समुदायापेक्षया नायं दृष्टान्तः, किन्त्वेकदेशोच्चारणेन समुदायस्याप्युपस्थितिरिति अंशमात्रे दृष्टान्तो दर्शित इति न दोषः (क० च० ३।१।२) ।

६. वस्तुतस्तु यथासङ्ख्यमन्तरेणापि क्रमशस्त्यादीनां त्रिकाणां प्रथममध्यमोत्तमसंज्ञाप्रवृत्तौ अभिमतसिद्धिर्भवत्येव, यथासंख्यमिति यदुक्तं तत् प्रकारान्तरमेव (क० च० ३।१।३) ।

७. वस्तुतस्तु वचनग्रहणाभावे स पचतीत्यादिषु ------- कालं तदाश्रयसाधनं चाभिदधति स्वभावात् (क० च० ३।१।४)।

८. वस्तुतस्तु अर्थपर एवायं निर्देशः, शब्दपरत्वे लक्षणापत्तेः (क० च० ३।१।६)।

९. वस्तुतस्तु क्रियालक्षणमाह – सा च पूर्वापरीभूतावयवैवेत्यादि (क० च० ३।१।९)।

१०. वस्तुतस्तु सम्प्रतिग्रहणं वर्तमानाया एककालनियमार्थं वर्तमानकाल एव वर्तमानेति (क० च० ३।१।११)।

११. वस्तुतस्तु भूतस्य यः शेषक्षणो भविष्यतश्च समीपे भवन्नारोपितवर्तमानो द्विविध उच्यते (क० च० ३।१।१६)।

१२. वस्तुतस्तु गिरीणां नित्यप्रवृत्तत्वं नास्त्येव (क० च० ३।१।१६)।

१३. ननु यत्र वस्तुतो गमनं पानं च ह्यस्तनं तत्र कथमद्यतनीत्याह- ह्यस्तनस्याविवक्षयैवेति (क० च० ३।१।१६)।

१४. वस्तुतस्तु प्रतिषेधोऽत्र वारणार्थः, वारणं पुनरनिष्पन्नकार्यं प्रत्येव घटते न त्वतीते (क० च० ३।१।२२)।

१५. वस्तुतस्तु संज्ञाप्रकरणेऽपठितत्वान्नेदं संज्ञासूत्रमिति (क० च० ३।२।१)।

१६. वस्तुतस्तु अन्तर्भूतेनर्थस्य कितः कर्मकर्तृविवक्षया रुचादिवचनादात्मनेपदमिति (क० च० ३।२।३)।

१७. वस्तुतस्तु कर्तुरिति सम्बन्धे षष्ठी न तु पञ्चमी (क० च० ३।२।८)।

१८. वस्तुतस्तु विचित्रार्थ एवाकारः, अत एव पाणिनितन्त्रे न दृश्यते (क० च० ३।२।८)।

१९. वस्तुतस्तु "ओजसोऽप्सर०" इत्यादिनात्र सलोपो नास्तीति व्याख्यास्यते। अतो 'विद्वस्यते' इत्यत्र नास्ति सलोप इति ब्रूमः (क० च० ३।२।८)।

२०. वस्तुतस्तु 'गल्भाञ्चकार, गल्भाञ्चक्रे देवदत्तेन' इति प्रयोगो भवत्येव (क० च० ३।२।८)।

२१. वस्तुतस्तु शुन्भधातोरयं प्रयोगः (शोशुभ्यमाना – क० च० ३।२।१४)।

२२. वस्तुतस्तु अत एव ज्ञापकात् क्विबन्तस्यैव गत्वम्। तेन 'तच्छ्लक्ष्णः' इत्यादौ न गत्वम् (क० च० ३।२।२३)।

२३. वस्तुतस्तु 'अचीकरत्' इत्यादौ प्राग् द्विर्वचने ह्रस्वे वा विशेषो नास्तीति कृत्वा पौर्वापर्यं न चिन्तितमिति (क० च० ३।२।२६)।

२४. वस्तुतस्तु आम्नायादेव सर्वविप्रतिपत्तिनिरासः (क० च० ३।२।२७)।

२५. वस्तुतस्तु चकारकरणं कर्तर्यनुवर्तनार्थमेव (क० च० ३।२।३०)।

२६. वस्तुतस्तु प्रकृतत्वाद् धातुमात्रानुवृत्तिरेव प्राप्यते (क० च० ३।२।३९)।

२७. वस्तुतस्तु अन्वयादेव नानुवृत्तिः (क० च० ३।२।४०)।

२८. वस्तुतस्तु अनिष्टार्थप्रक्लृप्तिभयादेव तत्पुरुषनिरासः (क० च० ३।२।४१)।

२९. वस्तुतस्तु व्यतिक्रमनिर्देशात् कानानशोरप्यतिदेशः (क० च० ३।२।४१)।

३०. वस्तुतस्तु पूर्वसदृशात् सनन्तात् कार्यं भवतीति सूत्रार्थः (क० च० ३।२।४६)।

३१. वस्तुतस्तु प्रत्ययादिति विधिवाक्यम् (क० च० ३।२।४६)।

३२. वस्तुतस्तथाभूतं न भवतीति व्यपदेशिवद्भाव उच्यते (दु० टी० ३।३।१)।

३३. वस्तुतस्तु टीकायाम् अत एव जुहूषतीत्यत्र द्वयंग्रहणस्य फलं दृष्ट्वा परपक्षमाह (बि० टी० ३।३।५)।

३४. वस्तुतः प्रधानं प्रतीयते इति, तर्हि जातेः कोऽन्यो भेदः इत्यवग्रहणं युक्तमिति (दु० टी० ३।३।९)।

३५. वस्तुतस्तु अरं बाधित्वा गुण एव प्राग् भवति (बि० टी० ३।३।१००)।

**[अयमर्थः]**

१. अयमर्थः – यस्मान्नित्यतायुक्ता सत्ता तस्मान्न क्रिया भवितुमर्हतीति। अथवा सत्ताया नित्यता सत्तानित्यतेति षष्ठीलक्षणस्तत्पुरुषः (वि० प० ३।१।९)।

२. अयमर्थः – अनागतस्य भविष्यतः इष्टार्थस्य लाभनिमित्तं यत् प्रयोक्तुराविष्करणं तदाशीरिति (क० च० ३।१।१६)।

**[अस्यायमर्थः]**

१. अत्र सामीप्यशब्दः समीपवचनः। अन्यथा वर्तमानस्य समीपम्, वर्तमानसामीप्यमिति युक्तार्थत्वात् समासो न स्यात्। न हि सामीप्यं वर्तमानस्य धर्मः, किन्तर्हि समीपस्येति तस्मादत एव ज्ञापकात् स्वार्थे यण् प्रत्ययः सिद्धः (क० च० ३।१।१६)।

**[अयमाशयः]**

१. अयमाशयः – रात्रिशेषे यो मुहूर्तमपि सुप्तस्तस्यां प्रभातायां रात्रौ भ्रान्त्यभावादद्यतननिश्चय एव नास्ति, यत्र भ्रान्तिस्तत्राद्यतनत्वनिश्चय इति। एवं च सति अज्ञानज्ञानाभ्यामेवोदाहरणसङ्गतौ किं सूत्रेणेति भावः (क० च० ३।१।१६)।

८. विवक्षा – अभिधान – लोकाभिधानबलाच्छब्दप्रयोगस्य साधुत्वमङ्गीक्रियते तद् यथा –

**[अभिधानात्]**

१. अभिधाननियमस्तु सर्वैरेवावश्यमङ्गीकर्तव्य एव, अन्यथा 'पाचकोऽहं व्रजामि' इत्यत्रापि नामयोगात् कदाचित् प्रथमपुरुषोऽपि स्यात् (क० च० ३।१।४)।

२. यावता अन्योपसर्गसहितस्य ग्रामेः प्रयोग एव नास्ति अभिधानादिति (क० च० ३।१।९)।

३. अर्थात् पूर्वं कर्म इति प्रकृतिः प्रत्ययवाच्यः कर्त्तेति न दुष्यति, अभिधानाद् व्यवस्थितवाधिकाराच्चेति (दु० टी० ३।२।७)।

४. वर्णनाशोऽपि दृश्यतेऽभिधानादिति भावः (दु० टी० ३।२।८)।

५. अभिधानादिह वर्णनाशो वेदितव्य इति भावः (वि० प० ३।२।८)।

**[लोकतः सिद्धेः]**

१. सार्वधातुकं नपुंसकं लोकतः सिद्धम् (दु० टी० ३।१।३४)।

२. लोके कर्त्राद्यर्थविशिष्टोऽनेकरूपः पदार्थः पदेनैव गम्यते नावयवेन (दु० टी० ३।२।३१)।

३. स च व्यपदेशिवद्भावो लोकतः सिद्धः (दु० टी० ३।३।१)।

४. यस्तु लोकतः सिद्धस्तत्र किं यत्नेनेति भावः (दु० टी० ३।३।१)।

५. व्यपदेशिवद्भावश्च लोकत एव सिद्धः (वि० प० ३।३।१)।

६. प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा, तस्यां गम्यमानायां द्विर्वचनं लोकत एव सिद्धम्, ततः किं विशेषवचनेनेति भावः। तथेति लोकोपचारादित्यर्थः (वि० प० ३।३।१)।

**[लोकोपचारात्]**

१. अर्थस्य वर्तमानादेर्विभञ्जनाद् विभक्तय उच्यन्ते लोकोपचारात्, किं संज्ञाविधानेनेति भावः (दु० टी० ३।१।१)।

२. तथापि लोकोपचाराद् यथा द्विर्वचनं यथाभिधानं तथा एकपदनिबन्धनं कार्यमपि बोध्यम् (क० च० ३।१।२१)।

३. यथा प्रकृतिसंज्ञा लोकोपचारात् तथा प्रत्ययसंज्ञेति (दु० टी० ३।२।१)।

४. लोकोपचारादित्येतेन "उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः" (अ० १।२।२९, ३०, ३१) इत्युदात्तादिसंज्ञां प्रति सूत्रत्रयं न वक्तव्यम् (वि० प० ३।२।४२)।

५. तथा च लौकिकव्यवहारः – कदा पुष्येण चन्द्रो योजयितव्यो भवतेति (वि० प० ३।२।१०)।

**[विवक्षातः]**

१. नैवं लौकिकी विवक्षा विधीयते (वि० प० ३।१।७)।

२. हेतुविवक्षायामिन् (दु० टी० ३।१।९)।

३. परैस्तु सम्प्रति द्रव्यसमवेतास्वपि क्रियासु अतीतानागतविवक्षा लौकिकीति मन्यते (दु० टी० ३।१।११)।

४. सतोऽपि चाविवक्षा। यथा अनुदरा कन्येति (दु० टी० ३।१।१६)।

५. सतोऽपि चाविवक्षा। यथा अलोमिका एडका इति। असतोऽपि च विवक्षा। यथा समुद्रः कुण्डिकेति (दु० टी० ३।१।१६)।

६. यदा तु भूतभविष्यद्विवक्षा, तदा यथायथं प्रत्यया भवन्त्येव (वि० प० ३।१।१६)।

७. यस्माद् विवक्षा गरीयसीत्याह – सुखार्थमेवेदमिति (दु० टी० ३।१।२१)।

८. लोकेष्वेवं विवक्षास्तीत्याह – सुखार्थमित्यादि।----- क्रियासमुच्चयेऽपि विवक्षया विभाषयेत्यर्थः (वि० प० ३।१।२१)।

९. अथ विवक्षा गरीयसीत्याह – अथवेति (क० च० ३।१।२३)।

१०. यथा वाक्यं तथेदं विवक्षयेति मतम् (दु० वृ० ३।२।४)।

११. तस्याप्यस्थिचर्मावशेषतया मर्तुमिच्छतीति लोके विवक्षादर्शनात् (वि० प० ३।२।४)।

१२. नाश्वो गर्दभतीति नञ्प्रयोगेऽपि विवक्षया भवतीत्यर्थः।---- आचारार्थविवक्षायाम् आयिप्रत्ययः (वि० प० ३।२।८)।

१३. तथा हेत्वर्थविवक्षायामेव हन्तेरिन्नित्यर्थः (वि० प० ३।२।१०)।

१४. किन्तर्हि स्वयमेव एतदात्मानमभिनिर्वर्तयतीति विवक्षा (वि० प० ३।२।४२)।

१५. कर्मभूतस्य साधनस्य कर्तृत्वविवक्षायां सत्यां कर्मत्वमपनीय कर्तृत्वं विवक्ष्यते (क० च० ३।२।४१)।

१६. इनन्तात् परस्मैपदस्यैव विवक्षा – 'आस्ते माणवकः, आसयति माणवकम्' (दु० टी० ३।२।१७)।

१७. एष्वपि कर्तुः फलवद्विवक्षा (वि० प० ३।२।१७)।

**९.** बहूनि कार्याणि व्याख्याकारैः सुखावबोधार्थं प्रतिपत्तिगौरवनिरासार्थं मन्दमतिबोधार्थं बालावबोधार्थं शङ्कानिरासार्थं रूढ्यर्थं मङ्गलाद्यर्थं च समादृतानि। एतेषां क्रमबद्धपरिचयार्थं वर्णानुक्रमेण सम्बद्धवचनानि प्रस्तूयन्ते –

**[अगुणार्थम् - १]**

१. णकारोऽगुणार्थः (दु० टी० ३।२।२४)।

**[अनुक्तसमुच्चयार्थम् - २]**

२. चकारोऽनुक्तसमुच्चयार्थः (दु० टी० ३।२।२८)।

३. "जपादीनां च" (३।३।३२) इत्यतश्चकारो मण्डूकप्लुत्या वर्तते सोऽनुक्तसमुच्चयार्थः इति (दु० टी० ३।३।३६)।

**[इष्टार्थम् - ३]**

४. वाशब्दस्येष्टार्थत्वाद् आयेश्च (दु० वृ० ३।२।८)।

५. वाशब्दस्येष्टार्थत्वादिति हेतुं वर्णयन्नाह ---- (दु० टी० ३।२।८)।

६. आम्नायविरुद्धत्वाद् अनिष्टत्वाच्च साहचर्यमिष्टार्थमेव (क० च० ३।२।१८)।

७. साध्यसाधनभावस्येष्टत्वात् (दु० टी० ३।२।७)।

**[उच्चारणार्थम् - ४]**

८. इकारः (यिन्प्रत्ययस्य) उच्चारणार्थः (दु० टी० ३।२।७)।

९. सिच इकार उच्चारणार्थः (दु० टी० ३।२।२४)।

१०. 'ज' इत्यकार उच्चारणार्थः (दु० टी० ३।३।१२)।

११. (अतः) तकार उच्चारणार्थः इति (दु० टी० ३।३।३१)।

**[उत्तरार्थम् - ६]**

१२. एतच्चोत्तरार्थम् (दु० टी० ३।१।५)।

१३. तथा च टीकायामप्येतच्चोत्तरार्थमित्युक्तम् (क० च० ३।१।५)।

१४. तर्हि परग्रहणमुत्तरार्थम् (क० च० ३।२।३६)।

१५. 'इण ईः' इति सिद्धे दीर्घग्रहणमुत्तरार्थम्, परोक्षायामेवेणोऽभ्यासस्य सम्भवात् परोक्षाग्रहणमप्युत्तरार्थमेव (दु० टी० ३।३।१७)।

१६. 'तस्य नोऽन्तः' इत्यास्ताम्, किमिह परादिरित्यनेन ? सत्यम्, उत्तरार्थम् (दु० टी० ३।३।१९)।

१७. परग्रहणमुत्तरार्थं क्रियमाणमिहापि सुखप्रतिपत्त्यर्थं भवति (दु० टी० ३।३।३५)।

**[उभयसंज्ञानिरासार्थम् - १]**

१८. अन्ये तु युगपद् उभयसंज्ञानिरासार्थमित्याहुः (क० च० ३।१।२८)।

**[कटाक्षार्थम् - १]**

१९. अत्रापि परमते सूत्राभावात् कटाक्षार्थमेवेति बोध्यम् (क० च० ३।१।१७)।

**[गौरवनिरासार्थम् - १]**

२०. अदाबिति बकारान्तं पठति तदा प्रतिपठितगौरवनिरासार्थमेव भवति (दु० टी० ३।१।८)

**[द्विर्वचनार्थम् - २]**

२१. अकारोच्चारणं किम् ? "स्वरादेर्द्वितीयस्य" (३।३।२) इति द्विर्वचनार्थम् (दु० वृ० ३।२।२)।

२२. एकस्वरस्येति बहुव्रीहिः किम् ? व्यञ्जनेन सह द्विर्वचनार्थम् (दु० वृ० ३।३।१)।

**[निमित्तार्थम् - १]**

२३. चकारस्तु निमित्तार्थः (दु० टी० ३।२।१२)।

**[नियमार्थम् - १]**

२४. यसिपाठेनैव सिद्धे संयसिपाठो नियमार्थः (वि० प० ३।२।३३)।

**[परमतदर्शनार्थम् - १]**

२५. 'आयादयः' इत्यादिग्रहणं परमतदर्शनार्थम् (वि० प० ३।२।१५)।

**[पूर्वाचार्यमतदर्शनार्थम् - १]**

२६. चेक्रीयितग्रहणं पूर्वाचार्यसंज्ञाविर्भावनार्थम् (दु० टी० ३।२।१४)।

**[प्रतिपत्तिगौरवनिरासार्थम् - ४]**

२७. तस्मादनुप्रयोगविधानं प्रतिपत्तिगौरवनिरासार्थमेव (दु० टी० ३।२।२३)।

२८. कर्मकर्तृत्वप्रतीतिरर्थाद् भविष्यति किं सूत्रेण ? सत्यम्, प्रतिपत्तिगौरवनिरासार्थम् (क० च० ३।२।४१)।

२९. किञ्च ऋकारे चेति यद् वचनम्, तदेवात्रान्तसंयोगबाधकं भविष्यति ? सत्यम्। प्रतिपत्तिगौरवनिरासार्थमिति (बि० टी० ३।३।२१)।

३०. इह सन्नियोगशिष्टस्य कुतःप्राप्तिरिति ? सत्यम्। प्रतिपत्तिगौरवनिरासार्थमेव (दु० टी० ३।३।३८)।

**[प्रतिपत्तिलाघवार्थम् - १]**

३१. तथापि प्रतिपत्तिलाघवमिष्टमिति सारसमुच्चयकृता उक्तम् (क० च० ३।२।४६)।

**[प्रतिपत्त्यर्थम् - २]**

३२. केवलं व्यामिश्रप्रतिपत्त्यर्थं श्वःशब्दोच्चारणम् (वि० प० ३।१।१६)।

३३. पुनः कर्तरीति शेषात् कर्तरीति प्रतिपत्त्यर्थं कर्तैव यत्र कर्ता यथा स्यात् (दु० टी० ३।२।४७)

**[प्राचीनप्रयोगदर्शनार्थम् - १]**

३४. 'तृष्णां छिन्धि' इत्यादिप्राचीनप्रयोगदर्शनार्थम् (क० च० ३।१।१८)।

**[बाधकबाधनार्थम् - १]**

३५. अथ भविष्यद्ग्रहणं बाधकबाधनार्थमवश्यमङ्गीकर्तव्यम् (क० च० ३।१।१६)।

**[बालावबोधार्थम् - २]**

३६. 'आत्मने प्रथमैकवचने' इति बालावबोधार्थं वा (दु० टी० ३।२।३०)।

३७. अत्र पूर्वं वाक्यं बालकव्युत्पादनार्थमेव कैश्चिदुपादीयते (दु० टी० ३।२।४१)।

**[मङ्गलार्थम् - १]**

३८. अथशब्दाभावपक्षे "न य्वोः पदाद्योर्वृद्धिरागमः" (२।६।५०) इत्यत्र वृद्धिग्रहणं मङ्गलार्थं भविष्यति (क० च० ३।१।१)।

**[मन्दमतिबोधार्थम् - ४]**

३९. मन्दधियां बोधार्थमिति धातुग्रहणम् (दु० टी० ३।२।४)।

४०. 'काम्य' इत्यविभक्तिकनिर्देशो मन्दमतिबोधार्थः (दु० टी० ३।२।६)।

४१. यच्चेक्रीयितग्रहणं तन्मन्दमतिबोधार्थम् (दु० टी० ३।३।१४)।

४२. यच्चेक्रीयितग्रहणं तन्मन्दमतिबोधार्थमिति टीकायाम् (बि० टी० ३।३।१४)।

**[योगविभागार्थम् - ४]**

४३. 'इच् ते पदेः' इति सिद्धे गुरुकरणं योगविभागार्थम् (दु० वृ० ३।२।२९)।

४४. व्यतिक्रमनिर्देशादपि योगविभागः सिध्यति (क० च० ३।२।२९)।

४५. नाग्रहणं योगविभागार्थम् (क० च० ३।२।३८)।

४६. तस्माद् वर्णग्रहणं दीर्घार्थमिति कथं योगविभागार्थमिति ? (बि०टी० ३।३।२७)।

**[रूढ्यर्थम् - १]**

४७. प्रयुज्यमानग्रहणस्य द्व्यर्थः– रूढ्यर्थो योगार्थश्च (क० च० ३।१।५)।

**[लाघवार्थम् - १]**

४८. लाघवार्थं कर्तृत्रितयबोधनार्थमेव वयमपाक्ष्म इत्युक्तवान् इत्यदोषः (क० च० ३।१।४)।

**[विचित्रार्थम् - ३]**

४९. विचित्रार्थमित्यपरे (क० च० ३।१।२८)।

५०. विप्रतिपत्तिः परिहृता भवति ? सत्यम्। विचित्रार्थमिति (क० च० ३।१।३२)।

५१. वर्गग्रहणं वैचित्र्यार्थम् (दु० टी० ३।३।१३)।

**[विप्रतिपत्तिनिरासार्थम् - १]**

५२. प्रत्येकमादिशब्दः पुषश्च द्युतादिश्चेति विप्रतिपत्तिनिरासार्थः (दु० टी० ३।२।२८)।

**[विभाषाख्यापनार्थम् - १]**

५३. चकारो विभाषाख्यापनार्थः (दु० टी० ३।३।३७)।

**[विशेषणार्थम् - २]**

५४. चकारः "सिचि परस्मै स्वरान्तानाम्" (३।६।६) इति विशेषणार्थः (दु० टी० ३।२।२४)।

५५. नकारः "शमादीनां दीर्घो यनि" (३।८।६६) इति विशेषणार्थः (दु० टी० ३।२।३३)।

[विस्पष्टार्थम् - १]

५६. भृञ्माङोस्त्वनुबन्धो विस्पष्टार्थ एव भवति (दु० टी० ३।३।२४)।

[व्यवस्थितविभाषार्थम् - १]

५७. यद् अन्यतरस्यामिति वचनं तद् व्यवस्थितविभाषार्थम् (क० च० ३।१।२१)।

[व्यामिश्रप्रतिपत्त्यर्थम् - १]

५८. व्यामिश्रप्रतिपत्त्यर्थं श्वःशब्दोच्चारणम् (वि० प० ३।१।१६)।

[शङ्कानिरासार्थम् - १]

५९. शङ्कानिरासार्थं पृथग्योगकरणमिति कश्चित् (क० च० ३।१।२८)।

[शिष्यबोधार्थम् - २]

६०. शिष्यसन्देहनिरासार्थमिदमुक्तं न तु त्यादयः सर्वक्रियाकालेषु भवन्तीति कृत्वा (क० च० ३।१।२२)।

६१. अथ परमतमपि शिष्यबोधनार्थं स्फुटीकर्तव्यम् (क० च० ३।२।८)।

[संज्ञास्मरणार्थम् - १]

६२. अत्र मुग्धबोधे सर्वशास्त्रप्रसिद्धाः संज्ञाः प्रायेणैकदेशेनोच्यन्ते तत्तत्संज्ञास्मरणार्थम् (समीक्षा ३।१।८)।

[समस्तलोपार्थम् - १]

६३. पुनरभ्यासग्रहणं समस्तलोपार्थम् (दु० वृ० ३।३।३८)।

[सस्वरार्थम् - २]

६४. शब्दग्रहणं सस्वरार्थम् (दु० टी० ३।२।१३)।

६५. 'ऋतो रः' इति सिद्धे शब्दग्रहणं रेफस्य सस्वरार्थम् (वि० प० ३।२।१३)।

[सामानाधिकरण्यार्थम् - १]

६६. तथा प्रयुज्यमानग्रहणं सामानाधिकरण्यार्थमिति वररुचिः (क० च० ३।१।५)।

[सुखनिर्देशार्थम् - ३]

६७. आदिशब्दोऽयं प्रकारवचने इति रुचादिङानुबन्धादिति समाहारे कृते लघुसुखनिर्देशश्च भवति (दु० टी० ३।२।४२)।

६८. समाहारेण सुखनिर्देशे सिद्धे यद् बहुवचनम्, तद्वचनाच्च 'निविशते' इत्यादि सिध्यतीति चकारेण सूच्यते (वि० प० ३।२।४२)।

६९. 'ईत्' इति तकारः सुखनिर्देशार्थ एव (वि० प० ३।३।४०)।

**[सुखपरिहारार्थम् - २]**

७०. परिहारगौरवमिदं दृष्ट्वा सुखपरिहारमाह – रूढिरित्यादि (दु० टी० ३।२।१)।

७१. अयं तु परिहारो मन्दधियां दुःखावह इति सुखपरिहारमाह – रूढिरिति (वि० प० ३।२।१)।

**[सुखप्रतिपत्त्यर्थम् - १३]**

७२. ननु च सुखप्रतिपत्त्यै कृतप्रतिज्ञो हि भगवान् कथं "त्यादीनि परस्मैपदानि" इति नोक्तवान् ? सत्यम्। शास्त्रमध्ये मङ्गलार्थोऽपि प्रतिपत्तव्यः सिद्धशब्दवत् (दु० टी० ३।१।१)।

७३. यदस्या भविष्यद्विधानं तत् सुखप्रतिपत्त्यर्थम् (दु० वृ० ३।१।१६)।

७४. विध्यङ्गशेषभूता योगे उपतिष्ठते इति सुखप्रत्तिपत्त्यर्थं गौरवोक्तिरिति (दु० टी० ३।२।१)।

७५. अन्तग्रहणं सुखप्रतिपत्त्यर्थम् (दु० टी० ३।२।१७)।

७६. पृथग्योगः सुखप्रतिपत्त्यर्थ एव (दु० टी० ३।२।१८)।

७७. भावकर्मणोरित्यधिकारः सुखप्रतिपत्त्यर्थ एव (दु० टी० ३।२।४१)।

७८. 'शेषात्' इति सुखप्रतिपत्त्यर्थमेव स्यात् (दु० टी० ३।२।४२)।

७९. उभयपक्षेऽपि दूषणाभावे सुखप्रतिपत्तिहेतुकम् (बि० टी० ३।३।२)।

८०. तिबग्रहणं सुखप्रतिपत्त्यर्थम् (बि० टी० ३।३।८)।

८१. वर्णग्रहणं सुखार्थम् (बि० टी० ३।३।२६)।

८२. वर्णग्रहणं सुखार्थम् (बि० टी० ३।३।२७)।

८३. तपरकरणं सुखप्रतिपत्त्यर्थम् (बि० टी० ३।३।३३)।

८४. परग्रहणमुत्तरार्थं क्रियमाणमिहापि सुखप्रतिपत्त्यर्थं भवति (दु०टी० ३।३।३५)।

**[सुखार्थम् - ४०]**

८५. लोके प्रसिद्धेयं संज्ञा मन्दधियं प्रति सुखार्थमन्वाख्यायते (वि० प० ३।१।२)।

८६. वचनमिदं सुखार्थम् (क० च० ३।१।४)।

८७. सुखार्थमेव प्रयुज्यमानग्रहणम् (वि० प० ३।१।५)।

८८. प्रयुज्यमानग्रहणं सुखार्थमिति (क० च० ३।१।५)।

८९. तत्राशीरर्थमेव भविष्यद्विधानं कर्तव्यम्। कथं सुखार्थमिति ? (वि० प० ३।१।१६)

९०. ततश्च वर्तमानकालबाधनार्थमेव भविष्यद्विधानं भवत् कथं सुखार्थं स्यात् ? (क० च० ३।१।१६)।

९१. कारकेणेति सुखार्थमेवेदम् (दु० वृ० ३।१।२१)।
९२. यस्माद् विवक्षा गरीयसीत्याह – सुखार्थमेवेदमिति (दु० टी० ३।१।२१)।
९३. लोकेष्वेवं विवक्षास्तीत्याह – सुखार्थमित्यादि (वि० प० ३।१।२१)।
९४. सूत्रमिदं सुखार्थमेव (क० च० ३।१।२१)।
९५. पराभिसन्धानं सुखार्थमिति (क० च० ३।१।२१)।
९६. सूत्रं सुखार्थमिति (क० च० ३।१।२१)।
९७. तस्माद्ग्रहणं सुखार्थमेवेत्युक्तम् (क० च० ३।२।१)।
९८. न्यासकारस्तु दोषप्रदर्शनमिदम्, न तु सुखप्रयोजनं दर्शितम् (क० च० ३।२।१)।
९९. अत्र स्थिते अकारे तत्र सुखार्थम् (क० च० ३।२।२)।
१००. सुखार्थमेव धातुग्रहणम् (वि० प० ३।२।४)।
१०१. आत्मशब्दोऽत्राध्यात्मवचन एव मन्दधियां सुखार्थः (दु० वृ० ३।२।५)।
१०२. यद्यात्मग्रहणं सुखार्थं न क्रियते (क० च० ३।२।५)।
१०३. कारितमिति पूर्वाचार्यसंज्ञा सुखावबोधार्था (दु० टी० ३।२।९)।
१०४. एषां पण्डितानां सिद्धान्तेन सूत्रमिदं सुखार्थमिति वक्तुं शक्यते (क० च० ३।२।१२)।
१०५. लघुग्रहणं च सुखार्थमेव (वि० प० ३।२।१३)।
१०६. इतरेषां गणेऽप्रसिद्धत्वात् सुखार्थम् (दु० टी० ३।२।१६)।
१०७. ततो गणेऽप्रसिद्धिःकोपयोगिनीत्याह – सुखार्थमिति (वि० प० ३।२।१६)।
१०८. यद् आदिग्रहणं तत् सुखार्थम् (क० च० ३।२।१९)।
१०९. अत एव कृञो ञकारः सुखार्थः (क० च० ३।२।२२)।
११०. अन्तग्रहणं सुखार्थमेव (दु० टी० ३।२।२४)।
१११. 'तेभ्यः' इति सूत्रं निर्दिश्यतां चेत् ? तर्हि सुखार्थम् (क० च० ३।२।४२)।
११२. यदिहान्तग्रहणं तत् सुखार्थम् (वि० प० ३।२।४३)।
११३. अकारः सुखोच्चारणार्थ एव (दु० टी० ३।३।३)।
११४. अन्तग्रहणं सुखार्थमेव भवतीति (वि० प०, क० च० ३।३।७)।
११५. अवग्रहणं सुखार्थमेवेति (वि० प० ३।३।९)।
११६. तदा तस्माद्ग्रहणं सुखार्थमिति (वि० प० ३।३।१००)।
११७. तदा तस्मादिति सुखार्थं भवतीति (बि० टी० ३।३।१००)।
११८. सुखार्थमागमग्रहणमिति (बि० टी० ३।३।१००)।

११९. पृथग्योगस्तिपूनिर्देशश्च सुखार्थः (दु० टी०, बि० टी० ३।३।२५)।
१२०. वर्णग्रहणं सुखार्थम् (बि० टी० ३।३।२७)।
१२१. चेक्रीयितग्रहणं सुखार्थम् (दु० टी० ३।३।२८)।
१२२. दीर्घग्रहणं सुखार्थम् (बि० टी० ३।३।२९)।
१२३. चण्परग्रहणमिहापि सुखार्थं भवति (वि० प० ३।३।३५)।
१२४. तपरः सुखार्थ एव (दु० टी० ३।३।४०)।

**[स्पष्टार्थम् - ४]**

१२५ योगग्रहणमिह स्पष्टार्थम् (दु० टी० ३।१।२३)।
१२६. 'प्रयुज्यते' इति स्पष्टार्थम् (दु० वृ० ३।२।२२)।
१२७. 'प्रयुज्यते' इति स्पष्टार्थमिति (वि० प० ३।२।२२)।
१२८. एदिति सिद्धे गुणग्रहणं स्पष्टार्थम् (बि० टी० ३।३।३३)।

**[स्वरूपार्थम् - १]**

१२९. ख्यातेस्तु तिपा निर्देशः स्वरूपार्थः (दु० टी० ३।२।२७)।

## एषां संग्रहः एवं द्रष्टव्यः (१२९)

| क्र०सं० | प्रयोजनम् | संख्या | क्र०सं० | प्रयोजनम् | संख्या |
|---|---|---|---|---|---|
| १. | अगुणार्थम् | १ | १५. | प्रतिपत्तिलाघवार्थम् | १ |
| २. | अनुक्तसमुच्चयार्थम् | २ | १६. | प्रतिपत्त्यर्थम् | २ |
| ३. | इष्टार्थम् | ४ | १७. | प्राचीनप्रयोगदर्शनार्थम् | १ |
| ४. | उच्चारणार्थम् | ४ | १८. | बाधकबाधनार्थम् | १ |
| ५. | उत्तरार्थम् | ६ | १९. | बालावबोधार्थम् | २ |
| ६. | उभयसंज्ञानिरासार्थम् | १ | २०. | मङ्गलार्थम् | १ |
| ७. | कटाक्षार्थम् | १ | २१. | मन्दमतिबोधार्थम् | ४ |
| ८. | गौरवनिरासार्थम् | १ | २२. | योगविभागार्थम् | ४ |
| ९. | द्विर्वचनार्थम् | २ | २३. | रूढ्यर्थम् | १ |
| १०. | निमित्तार्थम् | १ | २४. | लाघवार्थम् | १ |
| ११. | नियमार्थम् | १ | २५. | विचित्रार्थम् | ३ |
| १२. | परमतदर्शनार्थम् | १ | २६. | विप्रतिपत्तिनिरासार्थम् | १ |
| १३. | पूर्वाचार्यमतदर्शनार्थम् | १ | २७. | विभाषाख्यापनार्थम् | १ |
| १४. | प्रतिपत्तिगौरवनिरासार्थम् | ४ | २८. | विशेषणार्थम् | २ |
| | | ३० | | | २५ |

| क्र०सं० | प्रयोजनम् | संख्या | क्र०सं० | प्रयोजनम् | संख्या |
|---|---|---|---|---|---|
| २९. | विस्पष्टार्थम् | १ | ३७. | सामानाधिकरण्यार्थम् | १ |
| ३०. | व्यवस्थितविभाषार्थम् | १ | ३८. | सुखनिर्देशार्थम् | ३ |
| ३१. | व्यामिश्रप्रतिपत्त्यर्थम् | १ | ३९. | सुखपरिहारार्थम् | २ |
| ३२. | शङ्कानिरासार्थम् | १ | ४०. | सुखप्रतिपत्त्यर्थम् | १३ |
| ३३. | शिष्यबोधार्थम् | २ | ४१. | सुखार्थम् | ४० |
| ३४. | संज्ञास्मरणार्थम् | १ | ४२. | स्पष्टार्थम् | ४ |
| ३५. | समस्तलोपार्थम् | १ | ४३. | स्वरूपार्थम् | १ |
| ३६. | सस्वरार्थम् | २ | | | |
| | | १० | | | ६४ |

एवं पाणिनीयव्याकरणापेक्षया कातन्त्रीया शब्दसाधनादिप्रक्रिया सरला संक्षिप्ता च सिध्यति। अपि च तत्र लोकव्यवहारस्य प्रामाण्यमधिकं परिलक्ष्यते, पाणिनीये कृत्रिमशब्दानां प्रयोगाधिक्यं नैवोत्कर्षाय कल्पते।

अत्र प्रतिसूत्रं हिन्दीभाषायां सूत्रार्थः, व्याकरणान्तरादिभिः सह हिन्दीभाषायां समीक्षा, व्याख्याचतुष्टयस्य सम्पादनं च पूर्ववर्तिभागवदेव वर्तते। तृतीयभागस्य प्रथमखण्डेऽस्मिन्नयमेव विशेषो यद् यत्र यत्र कलापचन्द्रनाम्नी व्याख्या नोपलभ्यते तत्र तत्राचार्यबिल्वेश्वरकृता टीका संयोजिता। एवं सर्वत्र चतस्रो व्याख्या वर्तन्ते। ४९२ क्रमसंख्याके "कर्तरि रुचादिङानुबन्धेभ्यः" (३।२।४२) इत्येतस्मिन् सूत्रे यो हि रुचादिगणो निर्दिष्टस्तदीयानि सूत्राणि नैव शर्ववर्मप्रणीतानि मन्यन्ते, अत एव तदीयसूत्राणि व्याख्यासहितानि प्रथमे परिशिष्टे (अ) प्रदत्तानि। धातुसंज्ञाविधायकं सूत्रमस्ति ४२५ क्रमसंख्याकं "क्रियाभावो धातुः" (३।१।९) इति, तत्र दुर्गसिंहकृतायां टीकायाम् आचार्यविद्यासागरेणैका महती टिप्पणी प्रस्तुता विविधमतप्रदर्शनपरा। परमोपयोगिनी सा टिप्पणी प्रथमे परिशिष्टे (आ) इह संगृहीता। आचार्यदुर्गसिंह-प्रणीतायां वृत्तौ सूत्रनिर्दिष्टकार्यस्य यान्युदाहरणानि प्रस्तुतानि, तेषां रूपसिद्धिर्मया समीक्षाखण्डे दर्शिता। ४७७ परिमितानामेतेषां शब्दानां वर्णानुक्रमेण सूची द्वितीये परिशिष्टे निबद्धा। चतसृषु व्याख्यासु प्रसङ्गतः श्लोकाः श्लोकांशा वा समुद्धृता आचार्यैः, १५३ संख्याकानामेषामक्षरानुक्रमेण सूची तृतीये परिशिष्टे द्रष्टव्या। व्याख्याकारैर्न्यूनतः १५५ शब्दानामर्थावबोधाय व्युत्पत्तिरपि प्रदर्शिता, एतेषां वर्णानुक्रमेण सूची पृष्ठनिर्देशपुरस्सरं चतुर्थे परिशिष्टे प्रस्तुता। न्यायविवक्षापरिभाषामतभेदादिप्रदर्शकानां ६३६ संख्याकानां विशिष्टशब्दानां वर्णानुक्रमसूची पृष्ठनिर्देशसहिता पञ्चमे परिशिष्टे

उपनिबद्धाऽस्ति। व्याख्याकारैः ८५ ग्रन्थानाम्, १११ ग्रन्थकाराणां च नामानि स्मृतानि, तेषां सूची पृष्ठनिर्देशपुरस्सरं क्रमशः षष्ठे सप्तमे च परिशिष्टे दर्शिता। अष्टमे परिशिष्टेऽन्तिमे साङ्केतिकशब्दपरिचयो वर्तते।

ऐषमः कातन्त्रव्याकरणविषये एको महान् सुयोगः समुपस्थितः, यद् **व्याकरणमिदमधिकृत्य** द्विदिवसीया एका अखिलभारतीया संगोष्ठी दिल्लीनगरे सम्पन्ना। विद्वांसः सुपरिचिताः सन्ति यज्ज्येष्ठशुक्लपक्षीया पञ्चमीतिथिर्जैनानां भवति **श्रुतपञ्चमी** तिथिः। एतस्मिन् श्रुतपञ्चमीमहापर्वशुभावसरे २००० तमयीशवीयवर्षे जूनमासस्य षष्ठे सप्तमे च दिनाङ्के नवदिल्लीस्थश्रीकुन्दकुन्दभारतीन्यासस्य सौजन्येन **अखिलभारतीय-शौरसेनीप्राकृतसंसद**स्तत्त्वावधाने परमपूज्यानाम् आचार्य**श्रीविद्यानन्द**मुनिराजमहाभागानां पावनसान्निध्ये स्थानीये 'गुरुनानक फाउण्डेशन' संस्थायाः सभाकक्षे राष्ट्रियभावात्मिकाया एकताया **अखण्डतायाश्च** प्रतीकरूपं कातन्त्रव्याकरणमधिकृत्य राष्ट्रियसंगोष्ठ्या आयोजनमभूत्, यत्र देशस्य विशेषज्ञैर्विद्वद्भिः स्वकीयाः सारसंभृताः शोधनिबन्धाः पठितास्तत्र विदुषां मध्ये विचारविमर्शश्च प्रवृत्तः। संगोष्ठ्याः कार्यक्रमविवरणानुसारं **सभाध्यक्षा** आसन् –

१. **राज्यसभायाः** संसत्सदस्यः श्रीलक्ष्मीमलसिंघवी, २. पश्चिमवङ्गप्रदेशीयः **प्रो० सत्यरञ्जनबनर्जी**, ३. नवदिल्लीस्थः प्रो० नामवरसिंहः, ४. विहारप्रदेशीयः प्रो० विधाता मिश्रश्च।

**सारस्वतविदुषां** नामानि सन्ति – १. पं० नाथूलालशास्त्रीं (इन्दौर-मध्यप्रदेशीयः), २. डॉ० जानकीप्रसादद्विवेदः (वाराणसी – उत्तरप्रदेशीयः), ३. डॉ० रामसागरमिश्रश्च (लखनऊ-उत्तरप्रदेशीयः)।

**सत्रसंयोजका** आसन् – १. डॉ० सुदीपजैनः, नवदिल्लीस्थः, २. प्रो० राजारामजैनः, आरा-विहारप्रदेशीयः, ३. प्रो० प्रेमसुमनजैनश्च, उदयपुर-राजस्थानीयः।

संगोष्ठ्यां **समाहूता** विद्वांसः सन्ति – १. प्रो० राजारामजैनः, २. प्रो० विद्यावती जैन, ३. प्रो० एम० डी० वसन्तराजः, ४. प्रो० हरीरामाचार्यः, ५. प्रो० मानसिंहः, ६. प्रो० प्रेमसुमनजैनः, ७. प्रो० गङ्गाधरपण्डा, ८. प्रो० वृषभप्रसादजैनः, ९. प्रो० धर्मचन्द्रजैनः, १०. प्रो० रमेशकुमारपाण्डेयः, ११. प्रो० लक्ष्मीनारायणतिवारी, १२. डॉ० सुषमा सिंघवी, १३. प्रो० जानकीप्रसादद्विवेदः, १४. डॉ० देवेन्द्रकुमारशास्त्री, १५. डॉ० रामसागरमिश्रः, १६. डॉ० प्रकाशचन्द्रजैनः, १७. डॉ० उदयचन्द्रजैनः, १८. डॉ० रमेशचन्द्रजैनः, १९. डॉ० आनन्दमङ्गलवाजपेयी, २०. डॉ० दामोदरशास्त्री, २१. डॉ० अश्विनीकुमारदासः, २२. डॉ० सुदीपजैनश्च।

संगोष्ठयाः सत्रचतुष्टये आचार्यश्रीविद्यानन्दमुनिराजमहाभागानां पावनं सांनिध्यं संगोष्ठ्याः संसिद्धये महते सौभाग्याय च संकल्पते। समवेतानां विदुषां मध्ये मध्ये कातन्त्रव्याकरणसंबद्धाः याः काश्चन समीक्षाः, टिप्पण्यः, उपयोगिता, तत्र विधेयादिकं च यत् प्रस्तुतं तत् सर्वं कातन्त्रजिज्ञासूनां शब्दविद्यारसिकानां कृते परमं प्रेरणादायकमासीत्, समवेताः सर्वे श्रोतारो विद्वांसस्तेन मन्त्रमुग्धा अभूवन् आचार्यवर्याणां मङ्गलाशीर्वचोभिरात्मानं धन्यं चामन्यन्त। उद्घाटनसत्रीय-कार्यक्रमस्य शुभारम्भः श्रीलालबहादुरशास्त्रिकेन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतिवर्याणां प्रो० वाचस्पति-उपाध्यायमहोदयानामध्यक्षतायां डॉ० जयकुमार-उपाध्येद्वाराप्रवर्तितेन मङ्गलाचरणेन संजातः। **प्रथमसत्रे** सर्वप्रथममत्र सारस्वतविदुषो **प्रो० जानकीप्रसादद्विवेद**महोदयस्य तिब्बतीसंस्थानसारनाथे शब्दविद्यासंकायाध्यक्षस्य कातन्त्रव्याकरणस्य विषयविवेचना-पद्धतिम् आचार्यः शर्ववर्मा तदीयं कातन्त्रव्याकरणं चाधिकृत्य विस्तृतं व्याख्यानमभूत्, तदनुसारं शब्दव्युत्पादनस्य सरलसंक्षेपप्रक्रियादृशा कातन्त्रातिरिक्तं नास्ति किमप्यन्यद् व्याकरणम्। व्याकरणं भवति स्मृतिः, स्मृतयश्च नियतकालाः भवन्ति। अतः पाणिनीयव्याकरणस्य ह्रासे संजाते कदाचिद् अध्ययनाध्यापनादिक्षेत्रे कातन्त्रव्याकरणस्य महोदयः संभवेत्। विषयगाम्भीर्यदृशा व्याख्यानमिदं प्रेरकं तथ्यपरं बहुजनहितकरं विद्वन्मनोरञ्जकं चासीत्। व्याख्यानेऽस्मिन् प्राच्यभारतीयव्याकरणादिशास्त्रैः सह तुलनात्मकं समीक्षात्मकं चाध्ययनं कातन्त्रव्याकरणस्य तेन प्रस्तुतम्। इदमवश्यं ज्ञातव्यं यद्यावधि कातन्त्रविषयकाः षड् ग्रन्थाः षोडश शोधलेखाश्च तेन लिखिताः सम्पादिताश्च प्रकाशिताः संजाताः। आख्यातकृदध्यायीयं खण्डद्वयं प्रकाशनार्थम् अवशिष्टम्। तदनन्तरं कातन्त्रव्याकरणस्य सर्वाङ्गीणः इतिहासोऽपि तेनावश्यं रचयिष्यते। तदीया एषा मान्यता वर्तते यद् यथा कातन्त्रव्याकरणरचनायाः सम्प्रेरिका आसीद् राज्ञः सातवाहनस्य काचिद् विदुषी राज्ञी, तथैव व्याकरणस्यास्य प्रचारप्रसारादावपि शब्दविद्यानुशीलनपरा काचिन्नारी एव कारणं भवेत्। भारतीयजैनसमाजेन कार्यमिदमवश्यं साधयितुं शक्यते इति मन्यते।

द्वितीयं व्याख्यानं सारस्वतविदुषो **डॉ० रामसागरमिश्र**महोदयस्य लक्ष्मणपुरस्थ-केन्द्रीयसंस्कृतविद्यापीठे उपाचार्यस्य कातन्त्रव्याकरणस्य परम्परां महत्त्वं चाधिकृत्यासीत्। यत्र शारदालिपिमयस्य शिष्यहितावृत्ति–शिष्यहितान्यासनामकस्य व्याख्याद्वयस्य वैशिष्ट्यानि व्याख्यातानि। एतद्ग्रन्थद्वयं तेन सम्पादितं प्रकाशितं चापि इति हर्षस्य विषयः। कश्मीर-अफगानिस्तानदेशयोर्व्याकरणस्यास्याध्ययनादिपरिचयस्तेन महता परिश्रमेण संगृह्य संप्रस्तुतः।

तृतीयः शोधलेखः 'कातन्त्रे कतिपयविचाराः' इति विषयकः पठितः प्रो० **वृषभप्रसादजैन**महोदयेन लखनऊस्थ-महात्मगान्धि–अन्ताराष्ट्रियहिन्दीविश्वविद्यालयस्य

निदेशकेन। यत्र पाणिनीयकातन्त्रव्याकरणमाध्यमेन भाषागतध्वनिविचारः संगृहीत आसीत्।

**द्वितीये सत्रे** षण्णां विदुषां शोधलेखपाठः संजातः। यत्र कथात्मकतथ्य-परम्परा-अपूर्वता-दुर्लभपाण्डुलिपि-वर्णविचार-प्राचीनतादिविषयाः समाविष्टा आसन्। उदयपुरविश्वविद्यालये प्राकृतभाषाविभागाध्यक्षेण प्रो० **प्रेमसुमनजैन**महोदयेन कातन्त्रव्याकरणस्य कथात्मकं तथ्यं व्याचक्षाणेन 'कातन्त्रकालीन भारत' इति ग्रन्थरचनाया आवश्यकता प्रतिपादिता। लालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठे नवदिल्लीस्थे प्राकृतभाषाविभागाध्यक्षेण डॉ० **सुदीपजैन**महोदयेन कातन्त्रव्याकरणस्य मूलपरम्परा वैशिष्ट्यानि च व्याख्याय विश्वविद्यालयीयपाठ्यक्रमे कातन्त्राध्ययनमवश्यं सम्मिलितं भवेदिति स्वकीयमभिमतं प्रकाशितम्, तदर्थं विद्वांसः संप्रार्थितांश्चापि। वस्तुतो यद् व्याकरणं वेदपाठपरायणानाम्, स्वल्पमतीनाम्, शास्त्रान्तररतानाम्, वाच्यनिरतानाभीश्वराणाम्, आलस्यपरायणानाम्, तृष्णादिसंसक्तानां वणिज़ाम्, लोकयात्रादौ प्रसक्तमानसव्यापाराणां च जनानामुपकारकं भवेत् तस्य कातन्त्रव्याकरणस्याध्ययनाध्यापनादिकमवश्यमेव महते कल्याणाय कल्पेत। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य पुराणविभागाध्यक्षेण साहित्यसंस्कृतिसंकायाध्यक्षेण च प्रो० **गङ्गाधरपण्डा**महोदयेन कातन्त्रव्याकरणस्य काचिद् अपूर्वता प्रतिपादिता। यत्र माहेश्वरमाहेन्द्रव्याकरणपरम्परावद् वैदिक-श्रमणधारायाः सांस्कृतिकं किञ्चिन्महत्त्वं दर्शितम्।

आरा-विहारप्रदेशीयमगधविश्वविद्यालयस्य पूर्व-प्रो० डॉ० **विद्यावतीजैन**महोदयाया व्याख्यानमासीत् कातन्त्रव्याकरणसंबद्धकतिपयदुर्लभपाण्डुलिपिविषये। यत्र पाण्डुलिपिद्वयं कातन्त्रश्रियमधिकां संवर्धयति। एकस्याः परिचयः इत्थं वर्तते –

१. श्रेणिकचरितमहाकाव्यम् – आचार्यजिनप्रभसूरिविरचितम्। अपरं नामधेयमस्ति दुर्गवृत्तिद्वयाश्रयमहाकाव्यम्। अस्मिन् कातन्त्रीयदुर्गवृत्तावुपन्यस्तान्युदाहरणानि भट्टिकाव्यशैल्यां सिद्धहैमशब्दानुशासनशैल्यां च प्रदर्शितानि अष्टादशसर्गेषु।

२. कलापव्याकरणसन्धिगर्भितस्तवः। आचार्यरत्नेश्वरसूरिविरचितस्त्रयोदशपद्यात्मकोऽयं वर्तते। एवं श्रूयते यदुपदेशमाध्यमेन रत्नेश्वरसूरिणा दिल्लीसुलतानफीरोजशाहतुगलकस्य विचारधारामहिंसापरायणां प्रवर्तयितुं प्रयत्नः कृत आसीत्।

राजेन्द्रनगर-साहिबावादस्थसमन्तभद्रमहाविद्यालयस्य पूर्वप्राचार्येण डॉ० **प्रकाशचन्द्रजैन**महोदयेन शर्ववर्मप्रणीतकातन्त्रव्याकरणे वर्णविचारमधिकृत्य शोधलेखः पठितः। विदितवेदितव्यानां विदुषामिदं सुविदितमेव यत् प्रत्येकं संस्कृतव्याकरणे वर्णसमाम्नायः स्वीक्रियते, चतुर्दशमाहेश्वरसूत्राधारिते पाणिनीयव्याकरणवर्णसमाम्नाये द्वाचत्वारिंशद् वर्णाः परिगणिताः सन्ति, परं कातन्त्रीयवर्णसमाम्नाये संस्करणभेदेन सप्तचत्वारिंशत्, पञ्चाशत्, द्विपञ्चाशत्, त्रिपञ्चाशद् वा वर्णाः अभिमताः। वैदिकव्याकरणेषु प्रातिशाख्येषु त्रिषष्टिश्चतुःषष्टिश्चापि वर्णाः पठ्यन्ते।

नईदिल्लीस्थभारतीयज्ञानपीठस्य शोधाधिकारिणो **डॉ० देवेन्द्रकुमारशास्त्रिणः** शोधलेख आसीत् कातन्त्रव्याकरणस्य प्राचीनताविषये। श्रीयुधिष्ठिरमीमांसकविचारानुसारेण व्याकरणमिदं विक्रमपूर्वपञ्चदशशतवर्षेषु प्रचलितमासीत्। अन्ये समीक्षका अस्य रचनाकालं यीशवीयप्रथमशतके स्वीकुर्वन्ति।अस्तु, न्यूनतः सहस्रद्वयवर्षेभ्यो व्याकरणमिदं शब्दविद्याश्रीसंवर्धने देशे विदेशेषु च प्रवृत्तमस्ति।

द्वितीयस्यास्य सत्रस्य आध्यक्ष्यं निर्व्यूढं प्रो० सत्यरञ्जनबनर्जीमहाभागेन। कार्यक्रमस्य संचालक आसीत् प्रो० राजारामजैनमहोदयः।

**तृतीयसत्र**स्याध्यक्षतां कृतवान् समालोचकः प्रो० नामवरसिंहमहोदयः।अस्मिन्नपि सत्रे षट् शोधलेखाः विद्वद्‌भिः पठिताः।सभासंचालनं चाकरोत् प्रो० प्रेमसुमनजैनमहोदयः।

**अत्र** सर्वप्रथमं 'Katantra Vyakarana : The style and technical terms' विषये शोधलेखं पठितवती राजस्थानीय-कोटा-मुक्तविश्वविद्यालयस्य निदेशिका डॉ० **सुषमा सिंघवी**। यत्र दीर्घलृ-क्षवर्ण-सन्ध्यक्षर-जिह्वामूलीय-उपध्मानीयप्रभृतिसंज्ञाशब्दा विचारिताः आसन्।

राजस्थान – उदयपुरस्थसुखाड़ियाविश्वविद्यालये उपाचार्येण डॉ० **उदयचन्द्रजैन**-महोदयेन राजस्थानीयशास्त्रभण्डारेषूपलब्धं कातन्त्रव्याकरणमधिकृत्य स्वकीयः शोधलेखः पठितः।तदनुसारेण राजस्थानीयग्रामीणाञ्चलमन्दिरेष्वपि पर्याप्तसंख्याका हस्तलिखित-प्रतय उपलभ्यन्ते। बालावबोधव्याख्याया रचना तेन प्राकृतभाषामिश्रिता संसाधिता।

आचार्यकुन्दकुन्दपुरस्कारेण राष्ट्रपतिसम्मानेन च संमानितः प्राकृतसिन्धुपदवीकः आरा-विहारप्रदेशीयः प्रो० **राजारामजैन**महोदयः अद्यावधि अप्रकाशितस्य कातन्त्रविस्तरस्य परिचयात्मकमध्ययनं प्रास्तौत्। अस्य कर्गलीयपाण्डुलिपिः आरा-विहार-स्थितजैन-सिद्धान्तभवनस्य प्राच्यग्रन्थागारे सुरक्षिताऽस्ति।अस्या अपि मूलाधारो वर्तते मूडबिद्री-कर्नाटकस्थदिगम्बरजैनमठीयग्रन्थागारे सुरक्षिता ताडपत्रीया काचित् प्रतिः।ग्रन्थस्यास्य कारकीयः कश्चिदंशो मञ्जूषापत्रिकायां (व० १२, अं० ९) मुद्रितो दृश्यते।कर्णदिवो-पाध्यायप्रणीतोऽयं वङ्गोत्कलादिलिपिष्वपि संप्राप्यते। प्रो० जैनमहोदयेन ग्रन्थादि-मङ्गलपाठः प्रस्तुतः –

**'जिनेश्वरं नमस्कृत्य गौतमं तदनन्तरम्'** इति।

परमन्यत्र भिन्न एव पाठः परिलक्ष्यते –

**'महेश्वरं नमस्कृत्य कुमारं तदनन्तरम्'** इति। अस्य सम्पादनप्रकाश-नानन्तरमेव वस्तुस्थितिः स्पष्टा स्यात्।

नवदिल्लीस्थश्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठे शोधप्रकाशनविभागीय-निदेशकस्य प्रो० **रमेशकुमारपाण्डेय**महोदयस्य शोधलेख आसीत् – 'नाट्यशास्त्रे कातन्त्रीय-प्रभावः' इति।विदुषां विदितमिदं यत् कातन्त्रनाट्यशास्त्रीयरचनाकालस्य पौर्वापर्यविषये

विवादो भवेन्नाम, परं पाण्डेयमहोदयस्य लेखप्रस्तुतिः कातन्त्रव्याकरणमेव पूर्वभवं मनुते नाट्यशास्त्रोद्भवापेक्षया। तदीयपक्षसाधकमभिमतमस्ति आचार्यविद्यानन्द-महाभागानाम्। एतत् सर्वं वार्तया विदितं मया।

तृतीयसत्रस्यान्तिमे व्याख्याने कातन्त्रव्याकरणस्य सम्पादनानुभवो दिल्लीविश्व-विद्यालयात् सेवानिवृत्तेन डॉ० आर० एस० सैनीमहोदयेन, कातन्त्रव्याकरणं तदीयोप-योगिता च कुरुक्षेत्रविश्वविद्यालयीयेन प्रो० **धर्मचन्द्रजैन**महोदयेन स्वकीयशोधलेखमाध्यमेन प्रस्तुता।

अध्यक्षेण प्रो० **नामवरसिंह**महोदयेन व्याकरणेऽपि जीवनदर्शनमस्ति, भारतीय-संस्कृतिसुरक्षायै व्याकरणाध्ययनं नितान्तमावश्यकम्, ब्राह्मण-श्रमणविरोधो नैव शाश्वतिक इत्यादीनि बहूनि तथ्यानि प्रतिपादितानि चन्द्रधरशर्मागुलेरीमहोदयस्य 'पुरानी हिन्दी' पुस्तके समुद्धृतकातन्त्रीयचर्चापुरस्सरम्।

**समापनसत्रस्या**ध्यक्षतां चकार दिल्लीविश्वविद्यालयीयभाषाविज्ञानविभागाध्यक्षेण प्रो० **प्रेमसिंह**महोदयेन, सभायाः संचालनं च कृतं डॉ० सुदीपजैनमहोदयेन। अस्मिन् सत्रे त्रयः शोधलेखा विद्वद्भिः पठिताः।

सर्वप्रथमं पाणिनीयकातन्त्रव्याकरणयोस्तुलनात्मकं वैशिष्ट्यमधिकृत्य नईदिल्लीस्थ-श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य प्रो० **अश्विनीकुमारदास**महोदयेन शोधलेखः पठितः। यत्र तेन पाणिनीयापेक्षया कातन्त्रीयं भावकर्मार्थकप्रत्ययविधानं सकर्मकाकर्मक-व्याख्या वर्णादिविचारश्च विशिष्टो मन्यते। परं तदीयमिदं कथनं नैव समीचीनं प्रतिभाति यत् पाणिनीयव्याकरणवत् कातन्त्रे नैव दर्शनविषयो व्याख्यातः परिलक्ष्यते इति, यतो हि महाभाष्यपस्पशाह्निक - वाक्यपदीय - वैयाकरणभूषणसार - मञ्जूषाप्रभृतिषु व्याकरणदर्शनग्रन्थेषु नैव केवलं पाणिनीया एव व्याकरणसिद्धान्ता व्याख्याताः, अपि तु व्याकरणशास्त्रमात्रस्य। अथ च कातन्त्रीयव्याख्यास्वपि यत्र तत्र व्याकरणदर्शनविषयो नूनमेव व्याख्यातो दृश्यते।

द्वितीयः शोधलेख आसीत् 'पाणिनीयव्याकरणालोके कातन्त्रव्याकरणम्' बिजनौर-स्थजैनकालेजे संस्कृतविभागाध्यक्षस्य डॉ० **रमेशचन्द्रजैन**महोदयस्य। 'कातन्त्रव्याकरणस्य पालिव्याकरणेषु प्रभावः' इति विषयेऽन्तिमः शोधलेखश्च पठितो लखनऊस्थकेन्द्रीय-संस्कृतविद्यापीठस्योपाचार्येण डॉ० **विजयकुमारजैन**महोदयेन। अत्रेदमवश्यं ध्यातव्यं यत् कातन्त्रीयाणि शतद्वयसंख्याकानि सूत्राणि कच्चायनपालिव्याकरणे समानानि दृश्यन्ते कानिचिच्च सूत्राणि मोग्गलानव्याकरणेऽपिं समानान्येव सन्ति।

संगोष्ठ्याः समाप्तौ संयोजकेन डॉ० **सुदीपजैन**महोदयेन विदुषां पक्षेण स्वीकृताः संस्तुतयः एवं समुद्घोषिताः –

१. श्रीकुन्दकुन्दभारतीसंस्थानेन वर्षद्वयाभ्यन्तरमेव कातन्त्रव्याकरणविषयिण्या बृहद्राष्ट्रियसंगोष्ठ्या आयोजनं पुनः करिष्यते।

२. श्रीकुन्दकुन्दभारतीप्राङ्गणे खारवेलभवने स्वतन्त्ररूपेण कातन्त्रीय-पुस्तकालय-कक्षस्य स्थापना भविष्यति, यत्र कातन्त्रव्याकरणविषयकाः मुद्रिता लेखाः, विविधलिपिमय्यो हस्तलिखितपाण्डुलिपयः, प्रकाशिता ग्रन्थाश्च सुरक्षिता भविष्यन्ति (प्रो० जानकीप्रसाद-द्विवेदप्रस्तावानुसारम्)।

३. कातन्त्रव्याकरणस्य शोधात्मकमूल्याङ्कनाय कातन्त्रपरिषद एकस्याः स्थापनाय सङ्कल्पो वर्तते, यस्या उद्देश्यमस्ति – कातन्त्रव्याकरणविषयकशोधकार्यस्य रूपरेखा-निर्धारणम्, तस्य क्रियान्वयनम्, प्रकाशनादिकार्यव्यवस्था चेति (प्रो० जानकीप्रसाद-द्विवेदप्रस्तावानुसारम्)।

४. 'पाणिनि-पतञ्जलिकालीन भारतवर्ष' - पद्धतिमाश्रित्य 'कातन्त्रकालीन भारत' नामकस्यैकस्य शोधपरकग्रन्थस्य रचना भवेत्, यस्मिन् इतिहासस्य भारतीयसंस्कृते-रन्येषामपि विविधोपयोगिविषयाणां च ससन्दर्भं प्रकाशनं स्यात् (प्रो० प्रेमसुमनजैन-महोदयस्य प्रस्तावानुसारम्)।

५. प्रो० राजारामजैनमहोदयेन सम्पादनीयस्य कातन्त्रविस्तरस्य, प्रो० विद्यावतीजैन-महाभागया सम्पादनार्हस्य दुर्गवृत्तिद्वयाश्रयकाव्यस्य, डॉ० उदयचन्द्रजैनमहोदयेन सम्पाद्यमानायाः प्राकृतमिश्रिताया बालावबोधटीकायाश्च सम्पादनं प्रकाशनं चापि शीघ्रमेव सम्पद्येत।

संगोष्ठ्यामस्यां केन्द्रियविद्यालयेभ्यः पञ्चाशत् संस्कृताध्यापकाः, स्थानीयाः शताधिकसंस्कृतविद्वांसः, जिज्ञासवः शोधच्छात्राः, संस्कृतानुरागिणश्चापि विद्वांसः सोत्साहं सहभागितां स्वीकृतवन्तः।

## प्रस्तुतशोधलेखानां संग्रह एवं वर्तते –

| क्र० सं० | शोधलेखाः | विद्वांसः | सत्रमु-लेखसं० |
|---|---|---|---|
| १. | कातन्त्रव्याकरण की विषयविवेचनापद्धति | प्रो० जानकीप्रसादद्विवेदः | १-२ |
| २. | कातन्त्रव्याकरण की परम्परा एवं महत्त्व | डॉ० रामसागरमिश्रः | १-२ |
| ३. | कातन्त्र पर कुछ विचार | प्रो० वृषभप्रसादजैनः | १-३ |
| ४. | कातन्त्रव्याकरण और कथात्मक तथ्य | प्रो० प्रेमसुमनजैनः | २-१ |
| ५. | कातन्त्रव्याकरण की मूलपरम्परा एवं वैशिष्ट्य | डॉ० सुदीपजैनः | २-२ |
| ६. | कातन्त्रव्याकरण की अपूर्वता | प्रो० गङ्गाधरपण्डा | २-३ |
| ७. | कातन्त्रव्याकरणसम्बन्धी दुर्लभ पाण्डुलिपियाँ | डॉ० विद्यावती जैन | २-४ |
| ८. | शर्ववर्मप्रणीत कातन्त्रव्याकरण में वर्णविचार | डॉ० प्रकाशचन्द्रजैनः | २-५ |
| ९. | कातन्त्रव्याकरण की प्राचीनता | डॉ० देवेन्द्रकुमारशास्त्री | २-६ |
| १०. | Katantra Vyakarana-The style and technical terms | डॉ० सुषमा सिंघवी | ३-१ |

| क्र० सं० | शोधलेखाः | विद्वांसः | सत्रम्-लेख सं० |
|---|---|---|---|
| ११. | राजस्थान के शास्त्रभण्डारो में कातन्त्रव्याकरण | डॉ० उदयचन्द्रजैनः | ३-२ |
| १२. | कातन्त्रविस्तर का परिचयात्मक अध्ययन | प्रो० राजारामजैनः | ३-३ |
| १३. | कातन्त्र का नाट्यशास्त्र पर प्रभाव | प्रो० रमेशकुमारपाण्डेयः | ३-४ |
| १४. | कातन्त्रव्याकरण का सम्पादन-अनुभव | डॉ० आर० एस० सैनी | ३-५ |
| १५. | कातन्त्रव्याकरण और उसकी उपादेयता | प्रो० धर्मचन्द्रजैनः | ३-६ |
| १६. | पाणिनीय-कातन्त्रव्याकरण का तुलनात्मक अध्ययन | प्रो० अश्विनीकुमारदासः | ४-१ |
| १७. | कातन्त्रव्याकरण : पाणिनीय व्या० के आलोक में | डॉ० रमेशचन्द्रजैनः | ४-२ |
| १८. | कातन्त्रव्याकरण का पालिव्याकरणों पर प्रभाव | डॉ० विजयकुमारजैनः | ४-३ |

## अपठितास्त्रयः शोधलेखाः सन्ति –

१. Katantra Vyakarana in the View of Jain tradition.-M.D.Vasantaraj.

२. पाणिनीयकातन्त्रव्याकरणयोस्तुलनात्मकमनुशीलनम्-डॉ० गङ्गाधरभट्टः।

३. कातन्त्रव्याकरण का कारकवैशिष्ट्य – श्रीमती राका जैन।

कातन्त्रव्याकरणस्य वैशिष्ट्यकथनप्रसङ्गेऽस्मिन्निदमप्यविस्मरणीयमस्ति यत् प्रो० राजारामजैनमहोदयेन **'जैन समाज का महनीय गौरव ग्रन्थ कातन्त्रव्याकरण-इक्कीसवीं सदी : कातन्त्रव्याकरण का स्वर्णयुग'** इत्येषा शोधलेखद्वयी श्रीकुन्दकुन्दभारतीसंस्थानीय-प्राकृतविद्यापत्रिकायाम् (११।४; १२।१) प्रकाशिता। तदनुसारं मालवदेशस्य सांस्कृतिककेन्द्ररूपा उज्जयिनीनगरी यदा चालुक्यवंशीयनरेशसिद्धराजजयसिंहेन समाक्रम्य विजिता अधिकृता चापि, तदा नगरपरिक्रमावसरे तेनोज्जयिन्या विशालग्रन्थागारोऽप्यवलोकितस्तदानीं हीरक-मौक्तिकजटितं सुरक्षितमेकं हस्तलेखं वीक्ष्य स परमं विस्मयमापन्नः, यतो हि तस्य वेष्टने लिखितमासीत् – **'मालवा का गौरवग्रन्थ'** इति। व्याकरणग्रन्थोऽयमासीद् धाराधीश्वरभोजराजकृतं **सरस्वतीकण्ठाभरणम्** इति। सर्वसामान्यजनस्वीकृतिपुरस्सरं ग्रन्थोऽयं मालवदेशस्य गौरवग्रन्थरूपेण समुद्घोषितो बभूव। आश्चर्यचकितो गुर्जरदेशाधिपतिः स सिद्धराजजयसिंहो यदा स्वराजधानीम् अणहिलपुरपाटननाम्नीं प्रत्यागतः, तदा रात्रावनिद्रितः सन् सोऽग्रिमे दिवसे गुरुवर्यस्य आचार्यश्रीहेमचन्द्रस्य श्रीचरणयुगले निपतितो भूत्वा स्वान्तरात्मनो व्यथाकथां श्रावयामास। गुरुदेव ! नाहं प्रसन्नोऽस्मि मालवदेशीयविजयाधिगमेन, अपि चाहं नितान्तं दुःखमनुभवामि-यतो हि मालवदेशस्य गौरवग्रन्थो वर्तते, न चास्ति गुर्जरदेशस्य गौरवग्रन्थः। एतेन न केवलम् अहमेवैककः, अपि च समस्तगुर्जरदेशः स्वकीयमपमानदुःखमनुभवति। एतस्माद् दुःखात् समुद्धर्तुं भवानेव समर्थः। एवं प्रार्थितः सः वर्षावधावेकाग्रमनसा

ग्रन्थमेकं रचयामास । तस्य विद्वत्सभायाम् आद्योपान्त्यरूपेण वाचनानन्तरं नामकरणं संजातम् – **'सिद्धहैमशब्दानुशासनम्'** इति । हर्षध्वनिपूर्वकमयमेव ग्रन्थः 'गुजरात का गौरव ग्रन्थ' रूपेण समुद्घोषितो बभूव ।

प्रो० जैनमहोदयः स्वकीये लेखे वदति यत् सरस्वतीकण्ठाभरणं सिद्धहैमशब्दानुशासनं च केवलं स्वदेशस्यैव गौरवग्रन्थावास्ताम्, परं कातन्त्रव्याकरणस्य देशे विदेशेषु च महतीं लोकप्रियतां दर्शं दर्शं स कस्य गौरवग्रन्थो मन्येत । किं केवलं भारतस्य, एशियामहाद्वीपस्य, समग्रस्य विश्वस्य वा ? इति । स विद्वज्जनसकाशादेवं विज्ञातुमीहते, तदर्थं स पृच्छति यत् तथ्यानि समीक्ष्य मौलिकतां गुणवत्तां लोकप्रियतां च संवीक्ष्य यदि कातन्त्रव्याकरणं विश्वसाहित्यस्य गौरवग्रन्थो मन्येत तर्हि किमत्युक्तिर्भवेत् ? इति । अर्थात् तदीयविचारानुसारं कातन्त्रव्याकरणं विश्वसाहित्यस्यापि गौरवग्रन्थरूपेण सम्मानितं भवितुमर्हतीति दृढं वक्तुं शक्यते । अस्तु. साम्प्रतं सः **'जैन समाज का महनीय गौरव ग्रन्थ कातन्त्रव्याकरण'** इत्येतस्मिन् लेखे (प्राकृतविद्या ११।४) जैनसमाजस्य गौरवग्रन्थरूपेण कातन्त्रव्याकरणं मुक्तकण्ठं स्वीकरोत्येव ।

स निवेदनपुरस्सरं प्रार्थयते विद्वज्जनान् यत् साम्प्रतमिदमावश्यकं प्रतिभाति- जैनपाठशालासु छात्रैरस्याध्ययनमनिवार्यतया क्रियेतैव, अपि च संघस्थसाधुभिः, आर्यिकाभिः साध्वीभिः, व्रतिभिश्चाप्यस्य गहनं तुलनात्मकं चाध्ययनमनुष्ठीयेत, समाजेऽपि तदीयमहत्त्वख्यापनपुरस्सरं प्रचारःप्रसारश्च विधेयः ।अथ च जैनप्रोफेसरमहोदयैः प्रयत्नेन पाठ्यक्रमे कातन्त्रस्य समावेशः कार्यः ।परमपूज्या आचार्यश्रीविद्यानन्दमहाराज- महाशया अस्याभ्युदयार्थमत्यन्तं व्यग्राः सन्ति । ते दीर्घकालादेव कातन्त्रव्याकरणस्य व्यापकाध्ययनेऽनुशीलने शोधात्मकचिन्तने च व्यापृतमानसाः परिलक्ष्यन्ते । तेषामेव सत्प्रेरणया विषयेऽस्मिन्नाचार्य-उमास्वामिनाम्ना निर्धारितेन लक्षमुद्रात्मकपुरस्कारेण प्रो० जानकीप्रसादद्विवेदः सम्मानितः श्रीकुन्दकुन्दभारतीन्यासस्य प्रवरसमित्या १९९९ तमयीशवीयाब्दे मार्चमासस्य चतुर्दशे दिनाङ्के । एतेन जैनसमाजस्य परममिदं कर्तव्यमाभाति साम्प्रतं यत् स स्वकीयातीतकालीनगौरवग्रन्थान् संस्मरतु, स्वाध्यायमाचरतु, तदीयमहत्त्वमवगच्छतु, शोधार्थिजनान् प्रोत्साहयतु, तान् पुरस्कारादिभिः संमानितानपि करोतु, येनास्माकं गौरवग्रन्थाः सुरक्षिताः भवन्तु इत्यादि ।

अयमन्योऽप्येको हर्षविषयो यदेषमः ८।६।२००० दिनाङ्कादारभ्य २२।६।२००० दिनाङ्कपर्यन्तं पञ्चदशदिवसीयकार्यशालायां कातन्त्रे बहूनि व्याख्यानानि मया श्रीकुन्दकुन्दभारतीसंस्थाने प्रदत्तानि, यत्र स्वयम् आचार्यश्रीविद्यानन्दमहाराज- महाभागैर्बहुभिरध्यापकैः शोधार्थिभिः शब्दविद्यानुरागिभिश्च सार्धं भागो गृहीतः । एतेन कार्यक्रमेण सर्वे महतीं मुदं लब्धवन्तः। अग्रेऽपि कार्यक्रमोऽयं बहुधा प्रवर्तितो भवेदित्याशास्यते । तस्मिन् कार्यक्रमे विचारिताः प्रमुखा विषया एते सन्ति –

१. मङ्गलविधानम्, २. व्याकरणस्य परम्पराद्वयम्, ३. वर्णसमाम्नायः, ४. अव्याकृता वाक्, ५. व्याकरणशास्त्रीयप्रयोजनानि, ६. व्याकरणस्य चतुर्दशसहस्रसंख्याका विषयाः, ७. कातन्त्रव्याकरणस्य रचनायाः प्रयोजनादिकम्, ८. कातन्त्रव्याकरणे लोकव्यवहारस्य समादरः, ९. स्वरव्यञ्जनादयः पञ्च सन्धयः,

१०. वाशब्दैश्चापिशब्दैर्वा सूत्राणां चालनैस्तथा ।
एभिर्येऽत्र न सिध्यन्ति ते साध्या लोकसम्मताः ॥

११. आदिलोपोऽन्तलोपश्च मध्यलोपस्तथैव च ।
विभक्तिपदवर्णानां दृश्यते शार्ववर्मिके ॥

१२. भवेद् वर्णागमाद् हंसः सिंहो वर्णविपर्ययात् ।
गूढोऽऽत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम् ॥

१३. आगमोऽनुपघातेन विकारश्चोपमर्दनात् ।
आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणात् ॥

१४. चं शे सूत्रमिदं व्यर्थं यत् कृतं शर्ववर्मणा ।
तस्योत्तरपदं ब्रूहि यदि वेत्सि कलापकम् ॥ - एषां विस्तृतव्याख्या ।

१५. नामचतुष्टये षड्लिङ्गप्रकरणानि, १६. कारकम्, १७. समासप्रकरणम्, १८. तद्धितप्रकरणम्, १९. उपसर्गविचारः, २०. निपातनविधिविचारः, २१. प्रकृतिप्रत्ययविचारः, २२. पदविचारः, २३. शब्दार्थलाघवविचारः । २४. कातन्त्रेतिहासः, २५. व्याख्यासम्पत्तिः, २६. सम्प्रति विधेयानि कार्याणि चेत्यादि ।

## कृतज्ञताप्रकाशनम्

एतेन परमपूज्यान् आचार्यश्रीविद्यानन्दमहाभागान् सर्वात्मना वन्दनीयान् अभिनन्दनीयांश्च मन्ये । कातन्त्रसंगोष्ठ्याः पूज्या माननीयाश्च सर्वे अध्यक्षाः सारस्वतविद्वांसः संयोजकाः प्रतिभागिनो विद्वांसश्चापि नूनं धन्यवादार्हा भवन्ति । अविस्मरणीयेभ्यः सर्वेभ्यस्तेभ्यो विद्वद्वर्येभ्यो धन्यवादान् वितरामि, ये कातन्त्रीयकार्यशालायां भागं गृहीतवन्तः ।

टीकाचतुष्टयसमीक्षादिसंवलितस्य कातन्त्रव्याकरणस्य महनीयप्रकाशनकार्यनिर्वाहाय संबद्धाः कुलपतिप्रभृतयः सर्वेऽधिकारिणो यशोभाजो भवन्ति । तदर्थं परममाननीयान् कुलपति**श्रीराममूर्तिशर्म**महोदयान् प्रति प्रणामाञ्जलिं निवेदयामि । माननीयाय कुलसचिवाय वित्ताधिकारिणे च महीयांसो धन्यवादाः प्रदीयन्ते । सुहृद्वर्यान् प्रकाशननिदेशकश्री**हरिश्चन्द्रमणि**त्रिपाठिमहोदयांश्च प्रति सुहृत्सम्मितसद्भाव-

संवलितधन्यवादप्रदानेन स्वकीयां कृतज्ञतां विज्ञापयामि। ईक्ष्यपत्रसंशोधनादिकार्येषु कौशलमावहन्तो डॉ० **हरिवंशपाण्डेय-कन्हईसिंहकुशवाहा**प्रभृतयः प्रकाशनविभागीयाः सदस्यास्त्वरितसन्मुद्रणयोजनाव्यापारपरा **आनन्दप्रिंटिंगप्रेससदस्याः श्रीजगदीशपाण्डेयादयोऽपि** सन्ति नूनं धन्यवादार्हाः।

**लडादयः पाणिनिना गृहीताः स्वकीयशास्त्रे दश कालभेदाः।**
**कलापकारस्य तु वर्तमानादयो मतास्तत्र च लोकसिद्धाः॥**
**क्रियाप्रधानेऽष्टविधं निरुक्तं विधानमाख्याततृतीयभागे।**
**त्याद्यन्तरूपं कृतिना कलापे पादाष्टकेऽपूर्वनिदर्शनार्थम्॥**
**कात्तिकेयप्रसादेन सत्पादत्रितयात्मकम्।**
**बुधानां रमयेच्चित्तं त्याद्यन्ते तु कलापकम्॥**

**सारनाथ-वाराणसी**
कार्त्तिकपूर्णिमा
दि० ११-११-२०००

**विदुषामाश्रवः**
**जानकीप्रसादद्विवेदः**
सम्पादकः समीक्षाकारश्च
शब्दविद्यासंकायाध्यक्षः
केन्द्रीय – उच्चतिब्बतीशिक्षासंस्थानम्,
सारनाथ-वाराणसी।

# विषयानुक्रमणी

## [आख्यातप्रकरणम्]

उद्भावना, सत्ता तथा पाकादिरूप क्रिया का बोध कराने वाले शब्दों की 'धातु' संज्ञा, सिद्ध कार्यों का भी साधनायत्त होना, क्रिया-कारकव्यवहार का बुद्धि के अधीन होना, व्याकरणशास्त्र का शिष्टप्रयोगानुसारी होना, सत्ता के विविध रूप तथा व्याख्याएँ, साङ्ख्यशास्त्रीय तथा बौद्धशास्त्रीय विविध मतों की चर्चा, महती संज्ञा की अन्वर्थता, धातुओं की अनेकार्थता, गोपथब्राह्मण-बृहद्देवता आदि प्राचीन ग्रन्थों तथा हैमशब्दानुशासन आदि अर्वाचीन व्याकरणों में धातुसंज्ञा का प्रयोग, शब्दशक्तिप्रकाशिका में भी इसका वर्णन]



[परवर्ती सूत्रों में विशेषणवाची 'सम्प्रति-भविष्यति-अतीते' शब्दों का 'काले' के साथ अन्वय, आकाश की तरह काल की नित्यतादि, क्रियाभेद से काल के ऋतु आदि नाम, पाणिनीय व्याकरण में कालाधिकार का स्वतन्त्र रूप में अभाव]



[वर्तमान काल में 'स्म' शब्द का प्रयोग होने पर भूतकाल में भी वर्तमाना विभक्ति का प्रयोग, भूतकाल में परोक्षा-ह्यस्तनी-अद्यतनी-क्रियातिपत्ति विभक्तियों का, भविष्यत्काल में भविष्यन्ती-आशीः-श्वस्तनी विभक्तियों का, अनुमति-समर्थना-आशीः अर्थों में पञ्चमी विभक्ति का तथा विधि-निमन्त्रण आदि अर्थों में सप्तमी विभक्ति का व्यवहार, पाणिनीय लट् आदि लकारों की अपेक्षा वर्तमाना इत्यादि संज्ञाओं की अन्वर्थता तथा लट् आदि लकारों की सङ्केतपरता, राजकृत क्रियाओं के आधार पर 'पर्वतास्तिष्ठन्ति' आदि वाक्यों का प्रयोग, लोकव्यवहार के आधार पर द्रव्यसमवेत क्रियाओं में अतीत-अनागत की विवक्षा, आचार्य हेमकर के प्रलाप की गवेषणा, 'वर्तमान-परोक्ष-अद्यतन-अनद्यतन-आशीः' आदि शब्दों का अर्थविचार, परोक्ष-अपरोक्षरूप अतीतकाल के दो भेद, 'वेदान्तवादी-व्यवहारवादी' आदि आचार्यों के विविध मत, वर्तमान के सामीप्य आदि ४ भेद, ३ प्रकार की परोक्षता, सत् की अविवक्षा, असत् की विवक्षा, मण्डप-मयूर आदि निरन्वय संज्ञाएँ, काल के ११ भेद, शिष्टव्यवहार के अनुसार कालविशेष में 'वर्तमाना' आदि विभक्तियों का प्रयोग, १४ श्लोकों में भविष्यन्ती-सप्तमी आदि विभक्तियों के प्रयोग, कुछ अव्ययों का नियतप्रयोग, 'अनुमति-व्यापार-अनुज्ञा' आदि शब्दों के अर्थ, शर्ववर्मा के द्वारा आद्य व्याकरण का देखा जाना, 'वररुचि-चन्द्रगोमी' आचार्यों के मत तथा विधि में छह प्रतिपत्तियाँ ]



[क्रियासमभिहार अर्थ में वर्तमान धातु से सभी कालों में पञ्चमीविभक्तिसंज्ञक मध्यमपुरुष-एकवचन का, 'मा' शब्द के योग में धातु से अद्यतनी विभक्ति का तथा

'मास्म' शब्द के योग में 'ह्यस्तनी-अद्यतनी' विभक्तियों का प्रयोग, क्रियासमभिहार का अर्थ, पाणिनीय मत का खण्डन, आभीक्ष्ण्य अर्थ में द्विर्वचन, लौकिकी विवक्षा, शिष्यसन्देहनिरासार्थ विधिवचन, 'मा-माङ्' के प्रयोग की विचित्रता, भाष्यकार द्वारा 'मास्म' शब्द के योग में 'ह्यस्तनी-अद्यतनी' विभक्तियों के व्यवहार = प्रयोग की चिन्ता न करना तथा स्वतन्त्र 'मास्म' शब्दविषयक वररुचि का अभिमत]

**७. त्यादि १८० प्रत्ययों की 'वर्तमाना-सप्तमी-पञ्चमी-ह्यस्तनी-अद्यतनी-परोक्षा-श्वस्तनी-आशीः-भविष्यन्ती-क्रियातिपत्ति' संज्ञाएँ तथा 'वर्तमाना-सप्तमी-पञ्चमी-ह्यस्तनी' की सार्वधातुक संज्ञा १०९-१६**

['ति-तस्-अन्ति-सि-थस्-थ-मि-वस्-मस्-ते-आते-अन्ते-से-आथे-ध्वे-ए-वहे-महे' प्रत्ययों की वर्तमाना, 'यात्-याताम्-युस्-यास्-यातम्-यात-याम्-याव-याम-ईत-ईयाताम्-ईरन्-ईथास्-ईयाथाम्-ईध्वम्-ईय-ईवहि-ईमहि' प्रत्ययों की सप्तमी, 'तु-ताम्-अन्तु-हि-तम्-त-आनि-आव-आम-ताम्-आताम्-अन्ताम्-स्व-आथाम्-ध्वम्-ऐ-आवहे-आमहे' की पञ्चमी, 'दि-ताम्-अन्-सि-तम्-त-अम्-व-म-त-आताम्-अन्त-थास्-आथाम्-ध्वम्-इ-वहि-महि' की ह्यस्तनी-अद्यतनी संज्ञाएँ, 'अट्-अतुस्-उस्-थल्-अथुस्-अ-अट्-व-म-ए-आते-इरे-से-आथे-ध्वे-ए-वहे-महे' प्रत्ययों की परोक्षा संज्ञा, 'ता-तारौ-तारस्-तासि-तास्थस्-तास्थ-तास्मि-तास्वस्-तास्मस्-ता-तारौ-तारस्-तासे-तासाथे-ताध्वे-ताहे-तास्वहे-तास्महे' की श्वस्तनी, 'यात्-यास्ताम्-यासुस्-यास्-यास्तम्-यास्त-यासम्-यास्व-यास्म-सीष्ट-सीयास्ताम्-सीरन्-सीष्ठास्-सीयास्थाम्-सीध्वम्-सीय-सीवहि-सीमहि' की आशीः, 'स्यति-स्यतस्-स्यन्ति-स्यसि-स्यथस्-स्यथ-स्यामि-स्यावस्-स्यामस्-स्यते-स्येते-स्यन्ते-स्यसे-स्येथे-स्यध्वे-स्ये-स्यावहे-स्यामहे' की भविष्यन्ती, 'स्यत्-स्यताम्-स्यन्-स्यस्-स्यतम्-स्यत-स्यम्-स्याव-स्याम-स्यत-स्येताम्-स्यन्त-स्यथास्-स्येथाम्-स्यध्वम्-स्ये-स्यावहि-स्यामहि' की क्रियातिपत्ति संज्ञा तथा 'वर्तमाना-सप्तमी-पञ्चमी-ह्यस्तनी' विभक्तियों की सार्वधातुकसंज्ञा, सामान्य का आश्रयण कष्टकर, उक्त सभी संज्ञाओं के १-१ विधिसूत्र, पाणिनीय लट् आदि लकारों की कृत्रिमता, एक ही साथ 'ह्यस्तनी-अद्यतनी' संज्ञाओं की प्रवृत्ति-शङ्का का अभाव-एतदर्थ ही दो संज्ञाओं के लिए दो सूत्र, विचित्रार्थ पृथक् योगकरण, पूर्वाचार्यप्रसिद्ध वर्तमाना आदि संज्ञाओं की अन्वर्थता, 'सार्वधातुक' संज्ञा की पूर्वाचार्यों में प्रसिद्धि तथा उसकी लोकसिद्ध स्वाभाविक नपुंसकलिङ्गता, आचार्य आपिशलि द्वारा स्त्रीलिङ्ग 'सार्वधातुका' शब्द का प्रयोग, काशकृत्स्नव्याकरण आदि प्राचीन ग्रन्थों में तथा जैनेन्द्रव्याकरण आदि अर्वाचीन ग्रन्थों में इस संज्ञा का प्रयोग]

## द्वितीयः प्रत्ययपादः

### ८. प्रत्यय संज्ञा तथा 'सन्' प्रत्यय ११७-४४

[प्रत्यय तथा प्रकृति पदार्थ, उपाधि के २ भेद, लोकोपचार के आधार पर प्रत्यय तथा प्रकृति संज्ञाएँ, २ प्रकार की प्रकृति, प्रधान में कार्यसम्प्रत्यय, प्रत्ययसंज्ञा के विषय में आशङ्का, कुलचन्द्र आदि आचार्यों के विविध विचार, वृत्तिकार दुर्गसिंह द्वारा १० विभक्तियों के १८० प्रत्ययों का संग्रह, एतदर्थ पाणिनि के १८ तिङ् प्रत्यय, २९ आदेश तथा ५ आगम। 'गोपथब्राह्मण-ऋक्तन्त्र' आदि प्राचीन ग्रन्थों तथा 'मुग्धबोधव्याकरण-अग्निपुराण-शब्दशक्तिप्रकाशिका' आदि अर्वाचीन ग्रन्थों में प्रत्यय का प्रयोग, केवल प्रत्यय का प्रयोगाभाव, वरवधूसमागम की तरह प्रत्यय-प्रकृतियोग गुपादि धातुओं से अर्थविशेष में 'सन्' प्रत्यय का विधान, 'मीमांसते' इत्यादि में अभ्यासगत इकार को दीर्घ, लौकिकी विवक्षा के अतिक्रमण का अभाव, लौकिक विवक्षा के अनुसार 'नदी कूलं पिपतिषतीव, श्वा मुमूर्षतीव' आदि प्रयोग, गुणीभूत क्रिया द्वारा भी साधनसम्बन्ध का अनुभव तथा सन्नन्त से सरूप सन् प्रत्यय का अभाव]

### ९. 'यिन्-काम्य-आयि-इन्-य-आय' प्रत्यय १४४-९८

[आत्मेच्छा अर्थ में 'यिन्' प्रत्यय, उपचार से वाक्यैकदेश की भी वाक्यरूपता, पदसमुदायरूप वाक्य, 'काम्य' प्रत्यय का अविभक्तिक निर्देश, मन्दमतिबोधार्थ, सूत्र की विचित्र रचना से बोधलाभ, मैत्रेयरक्षित आदि आचार्यों की प्रासङ्गिक विषयसम्बन्धी मान्यताएँ, 'उपमान- आचार' आदि शब्दों के अर्थ, साध्यसाधनभाव का इष्टि के अनुसार व्यवहार, कातन्त्रीय 'यिन्' आदि प्रत्ययों के लिए पाणिनीय 'क्यच्-काम्यच्-क्यङ्-णिच्-यङ्-आय' प्रत्ययों का विधान, अन्वाचयशिष्ट चकार, कातन्त्रीय 'यण्' प्रत्यय में णकार का अगुणार्थ होना, कण्ड्वादिगणपठित धातुपाठ, प्रयोक्ता के अनुसार विशेषणविशेष्यभाव का प्रयोग, 'इन्' प्रत्यय की 'कारित' संज्ञा, पूर्वाचार्यकृत 'कारित' संज्ञा का सुखावबोधार्थ होना, लौकिक विवक्षा के अनुसार शब्दप्रयोग, सभी क्रियाओं का हेतुमती होना, कर्ता की हेतुसंज्ञा, अन्य गणों में भी पठित धातुओं का चुरादिगण में समावेश, गणनिर्दिष्ट कार्यों की अनित्यता, प्राप्त्यर्थक 'भू' धातु के आत्मनेपदप्रयोग –

**याचितारश्च नः सन्तु दातारश्च भवामहे।**
**आक्रोष्टारश्च नः सन्तु क्षन्तारश्च भवामहे॥**

गणनिर्दिष्ट कार्यों के अनित्य होने से 'इन्' प्रत्यय की वैकल्पिक प्रवृत्ति, चुरादिगण के अन्तर्गत ४२ धातुओं वाले युजादि गण का पाठ आवश्यक, स्वर तथा

स्वरव्यञ्जनसमुदाय के लिए 'अक्षर' संज्ञा का व्यवहार, 'प्रथयति' इत्यादि प्रयोगों में ऋकार को रकारादेश, इस 'र'-विधि में छह शब्दों का पाठ –

**पृथुं मृदुं दृढं चैव कृशं च भृशमेव च।**
**परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत्॥**

क्रियासमभिहार अर्थ में वर्तमान व्यञ्जनादि धातु से 'य' प्रत्यय का विधान, दो प्रकार का समभिहार, वृत्ति-वाक्य की भिन्नार्थता, क्रिया के दो भेद, पूर्वाचार्यप्रसिद्ध चेक्रीयितसंज्ञा का व्यवहार, भाष्यकार-पदकार के विविध मत, वेदपाठ में वृषल का अधिकार नहीं, 'गुपू' आदि धातुओं से 'आय' प्रत्यय का विधान, सौत्र 'ऋत' धातु]

**१०. धातुसंज्ञा तथा आम्-प्रत्यय का विधान १९८-२१२**

['सन्-यिन-काम्य-आयि-इन्-य-आय' प्रत्ययान्त शब्दों की धातुसंज्ञा, विशेषतः बालकों के अवबोधार्थ इस संज्ञा का विधान आवश्यक – 'प्रायेण गणपठितानामेव धातुत्वं मन्दधियः पश्यन्तोऽन्येषां न मन्येरन्निति भावः' (विवरणपञ्जिका), प्रकृत धातुसंज्ञा के सन्दर्भ में शर्ववर्मा के , प्रत्यय – 'सन्-यिन्-काम्य-आयि-इन्-य-आय' तथा पाणिनि के १२ प्रत्यय – 'सन्-क्यच्-काम्यच्-क्यङ-क्यष्-आचार क्विप्-णिच्-यङ्-यक्-आय-ईयङ्-णिङ्। शर्ववर्मा द्वारा निर्दिष्ट ७ प्रत्ययों के अतिरिक्त दुर्गसिंह आदि के द्वारा 'ईयङ्-णिङ्' प्रत्ययों की मान्यता, चकास्-कासूप्रत्ययान्त धातुओं से 'आम्' प्रत्यय का विधान, 'प्रत्ययान्तेभ्यः' में 'अन्त' शब्द का पाठ सुखार्थ, भट्टिकाव्य-कुमारसंभव के उदाहरण, 'दय-अय्-आस्' धातुओं से आम्-प्रत्यय, पृथक् सूत्र की रचना सुखावबोधार्थ, नाम्यादि-गुरुमान् धातु से आम् प्रत्यय, मैत्रेयरक्षित आदि आचार्यों के विविध मत, पाँच प्रकार की गुरुसंज्ञा का स्पष्टीकरण –

**संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम्।**
**विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन॥** (बँगलाभाष्य)

'उष्-विद्-जागृ' धातुओं से आम्-प्रत्यय]

**११. 'कृ-भू-अस्' धातुओं का अनुप्रयोग २१२-१७**

[आम्-प्रत्ययान्त धातु से तीनों का अनुप्रयोग, लोक में सामान्य अभिधान की अप्रसिद्धि, विना अनुप्रयोग के अर्थोपलब्धि का अभाव, अर्थ का आन्तरतम्य होना, 'कृ-भू-अस्' का क्रियासामान्यवाची होना, पुरुषापराध से विपरीत प्रयोग की सम्भावना, प्रतिपत्तिगौरव के निरासार्थ अनुप्रयोग का विधान, शास्त्र में अनिष्ट की संभावना नहीं]

**१२. 'सिच्-सण्-चण्-अण्-इच्-यण्' प्रत्यय २१७-३९**

[अद्यतनी विभक्ति = पाणिनीय लुङ् लकार में 'सिच्' प्रत्यय का विधान, इकार की योजना उच्चारणार्थ, नाम्युपध आदि धातु से सण् प्रत्यय, 'ण्' अनुबन्ध

की योजना अगुणार्थ, 'शिडन्तात्' शब्द में अन्तग्रहण का सुखार्थ होना, हेमकर आदि आचार्यों के मत, 'सण्' के लिए पाणिनि का 'क्स' प्रत्यय, 'श्रि-द्रु-स्रु' आदि धातुओं से 'चण्' प्रत्यय, 'काशिकावृत्ति-पञ्जी' आदि के विविध मत, 'चण्' के लिए पाणिनीय 'चङ्' प्रत्यय, 'अस्-वच्' आदि छह धातुओं से 'अण्' प्रत्यय, चेक्रीयितलुगन्त (पाणिनीय यङ्लुगन्त) का छान्दसत्व, अवयवसिद्धि की अपेक्षा समुदायसिद्धि की बलवत्ता, 'पुष-द्युत्' आदि धातुओं से 'अण्' प्रत्यय, सौत्र स्तन्भु धातु, आम्नाय से ही सभी विप्रतिपत्तियों का समाधान, चकार का अनुक्तसमुच्चयार्थ होना, धातुओं की अनेकार्थकता, रुचादिगण का आकृतिगण माना जाना, दण्डकधातुएँ, अद्यतनी विभक्ति में इच् प्रत्यय का विधान, सूत्र का गुरुकरण योगविभाग के लिए, बुद्धिकल्पना से योगविभाग, शर्ववर्मकृत कातन्त्रव्याकरण के सूत्रों में आदि-मध्य-अन्तलोप की उपस्थिति –

**आदिलोपोऽन्तलोपश्च मध्यलोपस्तथैव च।**
**विभक्तिपदवर्णानां दृश्यते शार्ववर्मिके॥**

'इच्' के लिए पाणिनीय 'चिण्' का विधान, साम्प्रदायिक मान्यता, हेमकरमत का निरसन, सार्वधातुक प्रत्यय के परे रहते सभी धातुओं से 'यण्' प्रत्यय, पद से ही पदार्थज्ञान का होना अवयव से नहीं, शास्त्र से अवयवों की कल्पना]

**१३. 'अन्-यन्-नु-न-उ-ना' विकरण २३९-५३**

[सार्वधातुकसंज्ञक प्रत्ययों के परे रहते भ्वादिगणपठित धातुओं से 'अन्', दिवादिगणपठित धातुओं से 'यन्' स्वादिगणपठित धातुओं से 'नु', रुधादिगणपठित धातुओं से 'न', तनादिगणपठित धातुओं से 'उ' तथा क्र्यादिगणपठित धातुओं से 'ना' विकरण का विधान, पूर्वाचार्यों द्वारा विकरण की प्रसिद्धि, प्रकृति-प्रत्यय के मध्य में विकरण का विधान, पाणिनीय 'शप्-श्यन्-श्नु-श-श्नम्-उ-श्ना' विकरणों की योजना, 'श्रु' धातु को 'शृ' आदेश, 'धातुप्रदीप' आदि ग्रन्थों के मतों का उद्धरण, 'खञ्नाति' प्रयोग में लेखक का प्रसाद, प्रकृति-प्रत्यय द्वारा एक साथ प्रत्ययार्थ का कथन, वररुचि के अनुसार प्रकृत तथा उत्तरवर्ती सूत्र-हेतु 'पर' शब्द का उपादान, आख्यात का क्रियाप्रधान होना, अनेक सौत्र धातुएँ, वररुचिवृत्ति का उद्धरण]

**१४. आन-आत्मनेपदसंज्ञक प्रत्यय, कर्मवद्भाव २५३-७१**

['हि' प्रत्यय के परे रहते विकरणसंज्ञक 'आन' प्रत्यय का विधान, पाठ की प्रामाणिकता, भाववाच्य तथा कर्मवाच्य अर्थ में आत्मनेपदसंज्ञक प्रत्ययों का विधान, क्रियापदार्थ तथा क्रिया के दो भेद, नियम की परिभाषा, एकवचन के भी कालसंख्या-कर्म आदि अर्थ, सदवस्था-असदवस्था की परिभाषाएँ, अन्वयमात्र स अनवृत्ति नहीं होती, विभक्तिसंज्ञा की अन्वर्थता, कर्म की क्रियावचनता तथा कारकवचनता,

श्रीपतिदत्तकृत कातन्त्रपरिशिष्ट का एक सूत्र प्रलापमात्र, कर्ता के रूप में विवक्षित कर्म को कर्मवद्भाव –

**क्रियमाणं तु यत् कर्म स्वयमेव प्रसिध्यति।**
**सुकरैः स्वैर्गुणैः कर्तुः कर्मकर्तेति तद् विदुः॥**

अन्तरात्मा-शरीरात्मा के रूप में द्विविध आत्मा, रूप-व्यपदेश आदि से सादृश्य, बालकों के व्युत्पादनार्थ पूर्व वाक्य की योजना, व्याकरण का पदसंस्कारक होना, प्रकरण का नियामक प्रकरण, अभेदान्वय के होने पर भेदान्वयग्रहण का अभाव, प्रतिपत्तिगौरव के निरासार्थ निर्वचन, वति-प्रत्यय के विना भी वत्यर्थ का बोध, आम्नाय के विरुद्ध ज्ञापित करना उचित नहीं, प्रयोक्ता के अनुसार विशेषण-विशेष्यभाव का निर्धारण, विवक्षा की प्रधानता]

**१५. आत्मनेपद-उभयपद-परस्मैपद** **२७१-९६**

[रुचादिगणपठित तथा ङानुबन्ध वाली धातुओं से आत्मनेपद का विधान, समाहार = स्वरित का व्यवहार लोकव्यवहार पर आधारित, सुखार्थ निर्देश, चेक्रीयित-प्रत्ययान्त धातु से आत्मनेपद, सुखार्थ 'अन्त' शब्द का सूत्र में ग्रहण, 'आयि' प्रत्ययान्त ('हंसाय' आदि) धातुओं से आत्मनेपद, इन्प्रत्ययान्त-ञकारानुबन्धविशिष्ट तथा यजादिगणपठित धातुओं से उभयपद का विधान, गणकार के वचन का प्रामाण्य, 'उभयपद' के लिए 'उभयतोभाष' शब्द का व्यवहार, भारद्वाजीय वैयाकरणों का अभिमत, भारवि-मयूर के उदाहरण, व्याकरण का पदसंस्कारक होना, सूत्रकार- गणकार का अभिप्रायविशेष, परस्मैपद-आत्मनेपदविषयक शर्ववर्मा-पाणिनि आचार्यों के अभिमत –

**विशेषः पाणिनेरिष्टः सामान्यं शर्ववर्मणः।**
**सामान्यमनुगृह्णन्ति तत्राचार्यपरम्परा॥** इत्यादि ६ श्लोक द्रष्टव्य।

जयदेव के प्रयोग में प्रमाद, शर्ववर्मा द्वारा इन्प्रत्ययान्त-ञकारानुबन्धविशिष्ट-यजादिगणपठित धातुओं से कर्तृवाच्य में उभयपद का विधान, पाणिनि द्वारा क्रियाफल के कर्तृगामी होने पर ही आत्मनेपद का विधान, पूर्व स्थिति के अनुसार सन् प्रत्यय होने के बाद भी धातु में उसी पद की काकाक्षिन्याय के अनुसार प्रवृत्ति, शेष धातुओं से परस्मैपद का विधान, यजादिगण-रुचादिगण की अनित्यता, आचार्य वररुचि के अनुसार चार प्रकार का शेष –

**अर्थाद् उपपदत्वे तु तथा चैवानुबन्धतः।**
**कारकाच्चैव विज्ञेयः शेष उक्तश्चतुर्विधः॥**

क्रियाव्यतिहार में आत्मनेपद, महाकवि माघ का स्खलन, कुलचन्द्र के प्रलाप की हेयता, धातुपारायण में 'चोरयति-चोरयते' रूप उभयपद में]

# तृतीयो द्विर्वचनपादः

## १६. द्विर्वचनविधि का अधिकार, द्विर्वचनविधि का निषेध २९७-३२२

[एकस्वरविशिष्ट धातु का द्विर्वचन, लोकव्यवहार के अनुसार वीप्सा में पद की द्विरुक्ति तथा व्यपदेशिवद्भाव की मान्यता, समुदाय के व्यापार में अवयवों का भी व्यापार, 'प्र-सम्-उप-उत्' उपसर्गों का स्वार्थिक द्विर्वचन –

**प्रप्रपूज्य महादेवं संसंयम्य मनः सदा।**
**उपोपहाय संसर्गमुदुद्गतः स तापसः॥**

वाक्यों का सोपस्कार होना, अधिकार की व्याख्या, दो प्रकार का अधिकार, 'हेमकर-वैद्य' आदि आचार्यों के विविध मत, सम्भ्रम आदि स्थलों में पदों का द्विर्वचन, स्वरादि धातु के एकस्वरवाले द्वितीय अवयव का द्विर्वचन, शिष्टप्रयोग के अनुसार द्विर्वचनविधि, सभी व्याकरणों का सिद्धान्त, स्वरादि धातु के द्वितीय अवयवरूप-संयोग के आदि में विद्यमान 'न्-ब्-द्-र्' इन चार वर्णों के द्विर्वचन का निषेध]

## १७. 'अभ्यास-अभ्यस्त' संज्ञाएँ ३२२-३१

[द्विर्वचन होने पर पूर्ववर्ती रूप की अभ्याससंज्ञा, धातु के एकदेश में भी धातु का व्यवहार, 'निरुक्त-ऋक्तन्त्र' आदि प्राचीन ग्रन्थों तथा 'जैनेन्द्र व्याकरण' आदि अर्वाचीन ग्रन्थों में उक्त संज्ञाओं का प्रयोग, द्विर्वचन के दोनों रूपों की अभ्यस्तसंज्ञा, हेमकर आदि आचार्यों के विविध मत, जातिपक्ष-व्यक्तिपक्ष का विचार, लोक में अनेक अभ्यास वाले कार्य के लिए अभ्यस्त शब्द का व्यवहार, द्विर्वचन न होने पर भी 'जक्ष्' आदि पाँच धातुओं की अभ्यस्तसंज्ञा, छान्दस प्रयोग]

## १८. द्विर्वचनविधि तथा आदिव्यञ्जन आदि का अवशेष रहना ३३१-४७

[चण्-परोक्षासंज्ञक-चेक्रीयितसंज्ञक-सन् प्रत्यय के परवर्ती होने पर धातु का द्विर्वचन, स्पष्टार्त 'अन्त' शब्द का ग्रहण, उमापति आदि आचार्यों के विचार, विषयसप्तमी-परसप्तमी का विचार, कातन्त्रीय 'चण्-परोक्षा-चेक्रीयित' के लिए पाणिनि द्वारा 'चङ्-लिट्-यङ्' का प्रयोग, जुहोत्यादिगणपठित धातुओं का द्विर्वचन, संज्ञाओं का रूढ होना, सुखार्थ 'तिप्' – प्रत्ययान्त शब्द का पाठ, कातन्त्रीय 'हु' आदि धातुओं का अदादिगण के अन्तर्गत पाठ, टीकाकार द्वारा सूत्रकार का समर्थन, अभ्याससंज्ञक रूप में आदि व्यञ्जन का ही सुरक्षित रहना, अन्य व्यञ्जनों का लोप, ज्ञापकवचनों का वैकल्पिक होना, लोकव्यवहार के आधार पर जाति-व्यक्ति-उभय की सिद्धि, धातुओं की अनेकार्थता, शिट् से परवर्ती अघोषवर्ण का शेष रहना-शिट् का लोप होना, शिक्षा का आश्रयण करने से प्रतिपत्तिगौरव]

**१९. 'प्रथम-तृतीयवर्ण-ज्-चवर्ग' आदेश** ३४७-५८

[अभ्याससंज्ञक शब्दरूप में स्थित द्वितीय-चतुर्थ वर्णों के स्थान में क्रमशः प्रथम-तृतीय वर्णादेश, तन्त्रान्तर में परकार्य का असिद्धवत् न होना, स्थानिवद्भाव, कुलचन्द्र-हेमकर आदि आचार्यों के विविध मत, सर्वसम्मति का दोष के रूप में उपादान, अभ्याससंज्ञक हकार के स्थान में जकारादेश, शिक्षा के आश्रयण से प्रतिपत्तिगौरव, अभ्याससंज्ञक कवर्गीय वर्णों के स्थान में चवर्गादेश, पाणिनि के अनुसार 'ह्' को 'झ्' तदनन्तर 'झ्' को 'ज्' आदेश, 'कवर्ग-चवर्ग' में 'वर्ग' शब्द का पाठ सूत्ररचना की विचित्रता के प्रदर्शनार्थ, दण्डक धातुएँ, पाणिनि द्वारा 'उ' अनुबन्ध से तथा शर्ववर्मा द्वारा 'वर्ग' संज्ञा द्वारा वर्ग = वर्गीय वर्णों का बोध, अभ्यासगत 'कु' धातु में चवर्गादेश का प्रतिषेध, मन्दमतिवालों के अवबोधार्थ 'चेक्रीयित' का ग्रहण]

**२०. ह्रस्व-अ-दीर्घ-नकारागम-गुण-इ-अभ्यासगुण-अभ्यासदीर्घ-'नी' आगम-अनुस्वार-उ- 'री' आगम** ३५८-४०१

[अभ्याससंज्ञक शब्द के अन्त में विद्यमान दीर्घ स्वर का ह्रस्व आदेश, पाणिनीय निर्देश की समानता, अभ्याससंज्ञक ऋवर्ण को अकारादेश, सौत्र धातु, लोकोपचार से ऋवर्ण-ऌवर्ण का सावर्ण्य, अभ्यासवर्ती 'इण्' धातु को दीर्घादेश, अभ्यास के आदि में विद्यमान अकार को दीर्घादेश, दीर्घीभूत अभ्यास से पर में नकारागम, आगम का ग्रहण सुखार्थ, अर्थानुसार विभक्ति का विपरिणाम, अनेक श्लोकवार्त्तिक, कातन्त्रीय नकारागम के लिए पाणिनीय नुडागम, प्रतिपत्तिगौरव का निरास, अभ्याससंज्ञक 'भू'-घटित उकार को अकारादेश, सभी शब्द व्युत्पत्तिलभ्य अर्थ को धारण नहीं करते, वृद्ध कातन्त्रीय वैयाकरणों का मत, 'निज्-विज्-विष्' धातुओं के अभ्यास में विद्यमान इकार को गुणादेश, गुण का ग्रहण स्पष्टता के लिए, सूत्रकार के पाठ की सङ्गति, 'भृञ्-हाङ्-माङ्' इन तीन धातुओं के अभ्यास में विद्यमान अकार को इकारादेश, स्पष्टार्थक अनुबन्धयोजना, 'ऋ-पॄ' धातुओं के अभ्याससंज्ञक अकार को इकारादेश, सुखार्थक पृथग्योग-तिपूनिर्देश, अभ्याससंज्ञक अकार को इकारादेश, अभ्यासघटित उकार को इकारादेश, सौत्र धातु-'जु', योगविभाग से इष्टसिद्धि, 'हेमकर' आदि आचार्यों के विविध मत, अभ्यास को गुणादेश, भाषा में भी चेक्रीयितलुगन्त की मान्यता, अभ्यास को दीर्घादेश, 'वन्च्' आदि धातुओं के अभ्यासान्त में 'नी' आगम, अभ्यासघटित अकार के अन्त में अनुस्वारादेश, 'रूढि-छान्दस' की चर्चा, कातन्त्रीय अनुस्वारागम के लिए पाणिनीय नुगागम का विधान, 'जप' इत्यदि धातुओं के अभ्यासान्त अकार को अनुस्वारागम, पूर्ववर्ती गणकारों द्वारा अभिप्राय के परिज्ञान का अभाव, दो प्रकार की धातुएँ, 'चर्-फल्' धातुओं

के अभ्यासान्तवर्ती अकार को अनुस्वारागम, सुखनिर्देशार्थ तपरकरण, ऋकारघटित धातु के अभ्यासान्त में अकार को 'री' आगम, कातन्त्रीय 'री' आगम के लिए पाणिनीय 'रीक्' आगम]



[समानसंज्ञक वर्ण का लोप न होने पर अभ्यास को सन्वद्भाव, आधार होने पर ही जाति का निश्चय, साङ्ख्यसिद्धान्त का आश्रयण, कातन्त्रीय 'चण्' के लिए पाणिनीय 'चङ्' प्रत्यय, 'त्वर्' आदि धातुओं के अभ्यास को 'अत्' आदेश, गणपाठ में 'स्पश' धातु की मान्यता, विभाषाख्यापन के लिए चकार का पाठ, पाणिनीय १० धातुओं के लिए कातन्त्रीय त्वरादिगण, अभ्यासलोप का अधिकार, अभ्यास का पुनर्ग्रहण-समस्त अभ्यास के लोपार्थ, जातिपक्ष-व्यक्तिपक्ष का आश्रयण, 'पत्-पद्' आदि धातुओं के स्वर को 'इस्' आदेश-अभ्यासलोप, योगविभाग से इष्टसिद्धि, 'आप्' धातुघटित स्वर को 'ई' आदेश-अभ्यासलोप, 'दन्भ्' धातुघटित स्वर को 'इत्-ईत्' आदेश-अभ्यासलोप, इच्छा के विना क्रिया का अभाव, 'देङ्' धातु को 'दिगि' आदेश – अभ्यासलोप, 'तिप्' प्रत्यय से धातु का निर्देश, पाणिनि के अनुसार 'दीङ्' धातु को तथा कातन्त्रकार के अनुसार 'देङ्' धातु को 'दिगि' आदेश ]

•

॥श्रीः॥

# कातन्त्रव्याकरणम्

## [तृतीयो भागः]

## अथ तृतीये आख्याताध्याये प्रथमः परस्मैपादः

### ४१७. अथ परस्मैपदानि [३।१।१]

**[सूत्रार्थ]**

धातुविहित 'ति' से 'स्यामहि' तक १८० प्रत्ययों की परस्मैपद संज्ञा होती है। इनमें से 'वर्तमाना' इत्यादि कालबोधक दश संज्ञाओं के अन्तर्गत प्रत्येक में १८-१८ प्रत्यय होते हैं, परवर्ती सूत्र के अनुसार परवर्ती ९-९ प्रत्ययों की आत्मनेपद संज्ञा होने के कारण पूर्ववर्ती ९-९ प्रत्यय परस्मैपदसंज्ञक होंगे ॥४१७।

**[दु० वृ०]**

अथानन्तराणि त्यादीनि स्यामहिपर्यन्तानि परस्मैपदसंज्ञकानि भवन्ति। **"नव पराण्यात्मने"** (३।१।२) इत्युक्तिबाधया पूर्वाणि नवैव वचनानि सर्वासां विभक्तीनामिति। अर्थस्य विभञ्जनाद् **विभक्तय** इति। ति, तस्, अन्ति, सि, थस्, थ, मि, वस्, मस्। एवं सर्वत्र। परस्मैपदप्रदेशाः– **"शेषात् कर्तरि परस्मैपदम्"** (३।२।४७) इत्येवमादयः ॥४१७।

**[दु० टी०]**

अथ०। अथशब्दः प्रश्नानन्तर्यमङ्गलाधिकारेषु वर्तमानोऽप्यानन्तर्यार्थ एव गृह्यते, न्याय्यरूपत्वात्। **आनन्तर्यं** पुनस्तद्धितमपेक्ष्य भवतीति मनसि कृत्वाह– अथानन्तराणीति। ननु च विध्याद्यर्थस्यासंभवात् परिशिष्टमेतत् संज्ञासूत्रम्, न च संज्ञिपदान्यत्र श्रूयन्ते, संज्ञिनमन्तरेण च संज्ञा नोपपद्यते। न चाथशब्देनानन्तराणि त्यादीनि उच्यन्ते, निपातोऽयं स्वभावाद् द्योतक इति ? सत्यम्, येषामानन्तर्यमनेन द्योतितं तान्येव त्यादीनि संज्ञित्वेनावभासन्ते बहुवचनादभेदनिबन्धनादिति भावः। तर्हि किमथशब्देन, परस्मैपदमिति संज्ञित्वेनाभिधीयतां यथा कृदिति ? नैवम्, व्यवहितानां

सन्नादीनामपि संज्ञा स्यात्, व्यवधानं पुनस्तेषां पादान्तरितत्वात्, अत एव परस्मैपदानामधिकारस्य द्योतकोऽयमिति नोच्यते । यथा **'अथ शब्दानुशासनम्'** (म० भा० – प्रारम्भिकवचनम्) इति । शब्दानामनुशासनमधिक्रियते इति । ननु च **सुखप्रतिपत्त्यै कृतप्रतिज्ञो हि भगवान्** कथं "त्यादीनि परस्मैपदानि" इति नोक्तवान् ? सत्यम् । शास्त्रमध्ये मङ्गलार्थोऽपि प्रतिपत्तव्यः सिद्धशब्दवत् । यद्येवम्, येषामात्मनेपदसंज्ञा, तेषां परस्मैपदसंज्ञापि स्यात् । न च संज्ञया संज्ञान्तरस्य बाधा, तथा च सिर्विभक्तिर्घुट् संबुद्धिरिति दृश्यते, **'लोकवच्छास्त्रे व्यवहारः'** इति हृदि कृत्वा परिहारमाह – नवेत्यादि । बाधा पुनरुक्तित इति नवग्रहणात् परग्रहणाच्चावसीयते । यथा 'अमी विष्णुमित्राः परे नव देवदत्ताः' इति । नात्र देवदत्तानां विष्णुमित्रत्वं गम्यते तथेहापीत्यर्थः । किञ्च **"इनूञ्यजादेरुभयम्"** (३।२।४५) इति ज्ञापकात् **"शेषात् कर्तरि परस्मैपदम्"** (३।२।४७) भवदात्मनेपदं सिद्धमिति भावः । अन्यथा परस्मैपदसंज्ञामाश्रित्य उत्पत्स्यमानानां त्यादीनां भवन्ती संज्ञेयम् इतरेतराश्रयदोषाय न कल्पते, **शब्दानां नित्यत्वात्** । लोके च **'भाविनि भूतवदुपचारः'** (का० परि० – १४) । यथा 'अस्य सूत्रस्य शाटकं वय' इति । अर्थस्येत्यादि । अर्थस्य वर्तमानादेर्विभञ्जनाद् **विभक्तयः** उच्यन्ते **लोकोपचारात्** , किं संज्ञाविधानेनेति भावः ॥४१७।

**[वि० प०]**

अथ० ।इह यद्यपि प्रश्नानन्तर्यमङ्गलाधिकारेष्वथशब्दो वर्तते, तथाप्यानन्तर्यार्थ एव गृह्यते । तथाहि प्रश्नः पर्यनुयोग उच्यते, स च सामान्यरूपेणावगतस्य विशेषरूपतया (विशेषरूपेणा)-नवधारितस्य वस्तुनो भवति। यथा अथ किमिदमिति । त्यादीनि तु सर्वथा विदितान्येव, न तस्यावकाशः। अधिकारार्थोऽपि न घटते, तथापि व्यवहितानामपि सन्नादीनां परस्मैपदसंज्ञा स्यात्, ततो **"गुपुतिजूकिद्भ्यः सन्"** (३।२।२) इत्यादिविशेषविधानं विधाय **"धातोर्वा तुमन्तादिच्छति"** (३।२।४) इत्यादिना सन्नादयो विधीयमाना आत्मनेपदिभ्यो धातुभ्यो न भवेयुः, अस्त्वेवं विशेषाभावादिति चेत्, तदयुक्तम् **'न ह्यनिर्दिष्टार्था शास्त्रे प्रक्लृप्तिः'** (भोज० परि० १०७) इति । किञ्च यद्यधिकारार्थोऽयमथशब्दः स्यात्, तदैनमपनीय परस्मैपदमित्येवं ब्रूयात् । यथा कृदिति । किमथशब्देनेत्याह – अथानन्तराणीति ।

आनन्तर्यं पुनस्तद्धितमेपक्ष्य वेदितव्यम् । ननु कश्चिदिह संज्ञी न श्रूयते, कथमिदं संज्ञासूत्रम्, न हि सञ्ज्ञिनमन्तरेण सञ्ज्ञोपगम्यते, नाप्यथशब्दोक्तानां त्यादीनां संज्ञित्वमिति वक्तव्यम् । अथशब्दोऽयमव्ययः स्वभावाद् द्योतको न वाचक इति ?

सत्यम् । येषामानन्तर्यमनेन द्योतितम्, तान्येव त्यादीनि सञ्ज्ञितया वेदितव्यानीत्याह – त्यादीनीति । अत एव परस्मैपदानीति संज्ञासंज्ञिनोरभेदविवक्षायां त्यादिसमानाधिकरणो बहुवचननिर्देश; अन्यथैकत्वात् संज्ञाया एकवचनमेव युज्यते इति । यद्येवम्, "त्यादीनि परस्मैपदानि" इति कथन्न कृतम्, **सुखप्रतिपत्तिकृतप्रतिज्ञो हि भगवानिदं शास्त्रं चकार** इति । एतेनाथशब्दार्थविवेचनप्रयासश्च परिहृतो भवतीति ? सत्यमेतत्, किन्तु शास्त्रमध्ये मङ्गलार्थोऽपि प्रतिपाद्य एवेति मङ्गलपूर्वकमानन्तर्यमथशब्दः प्रतिपादयतीत्यदोषः ।

ननु येषामात्मनेपदसंज्ञा, तेषां परस्मैपदसंज्ञा च प्राप्नोति, न च संज्ञया संज्ञान्तरस्य बाधा क्रियते । यथा 'इन्द्रः शक्रः पुरन्दरः' इति । सिविभक्तिर्घुट्संबुद्धिश्चेति । **लोके शास्त्रे** चैकस्यापि नाना संज्ञा दृश्यन्त इत्याह– नवेत्यादि । **उक्तितो बाधा उक्तिबाधा "नव पराण्यात्मने"** (३।१।२) इति येयमुक्तिस्ततः पूर्वस्य वचनस्य बाधाऽवसीयते । यथा 'अमी विष्णुमित्राः, परे नव देवदत्ताः' इति । नात्र देवदत्तानां विष्णुमित्रत्वं गम्यते, तद्वदत्रापीत्यर्थः। **लोकाश्रयणं** कष्टमित्याह– इन्निति, **"इनञ्यजादेरुभयम्"** (३।२।४५) इति ज्ञापकाद् वा । यद्यात्मनेपदान्यपि परस्मैपदसंज्ञकानि भवेयुः, तदा **"शेषात् कर्तरि परस्मैपदम्"** (३।२।४७) इति सिद्धे किमुभयपदविधानेनेति । अर्थस्येत्यादि । वर्तमानादयोऽर्था आभिर्विभज्यन्ते इति **विभक्तयः । अन्वर्थबलादेव** विभक्तिसंज्ञा सिद्धा, यथा स्यादीनामित्यर्थः ।।४१७ ।

**[क० च०]**

**रमापतिपदाम्भोजराजहंसेन यत्नतः।**
**आचार्यकविराजेन व्याख्याख्यातस्य लिख्यते ॥**

अथ । अथानन्तराणीति । ननु अथेत्यादि वृत्तिग्रन्थः कथं संगच्छते, तथाहि यदि स्यामहिपर्यन्तानां त्यादीनां प्रागेव परस्मैपदसंज्ञा प्रवर्तते, तदा **"नव पराण्यात्मने"** (३।१।२) इति वचनशतेनापि तद्बाधा कर्तुं न शक्यते ? सत्यम् । इत्थं योजनीया वृत्तिः– प्रथमम् अथशब्दस्य द्योत्यार्थमाह । अथ अनन्तराणि (अर्थात्) त्यादीनीति । तानि कतिपयानि ? इत्याह– स्यामहिपर्यन्तानि इत्येकं वाक्यम् । अपरं तु 'नव पराण्यात्मने' इत्युक्तिबाधया सर्वासां विभक्तीनां पूर्वाणि नवैव वचनानि परस्मैपदसंज्ञकानि भवन्तीत्यन्वयः । यद् वा भवन्तीति शन्तृङन्तबहुवचनेन संभावना कथिता, किन्तु पूर्वाणि नवैव वचनानि इत्यस्यानन्तरं भवन्तीति क्रियापदमध्याहार्यमिति ।

ततश्च (अथानन्तराणि) त्यादीनि परस्मैपदसंज्ञकानि भवन्ति सन्ति– नव पराण्यात्मने इत्युक्तिबाधया **पूर्वाणि** नवैव वचनानि सर्वासां विभक्तीनां परस्मैपद-

संज्ञकानि भवन्तीति साध्याहारेण वाक्येनान्वय इति । यद् वा यथाश्रुतमेव घटते **वाक्यार्थः** । तथाहि अथ अनन्तराणि त्यादीनि तानि कतिपयानि ? इति प्रश्ने स्यामहिपर्यन्तानि इत्युत्तरम् । एवम्भूतानि त्यादीनि परस्मैपदसंज्ञकानि भवन्तीति वाक्ये विशेषमाह – **"नव पराण्यात्मने"** (३।१।२) इति ।

**अथ स्यान्मङ्गले प्रश्ने कार्यारम्भेष्वनन्तरे ।**
**अधिकारे प्रतिज्ञायामन्वादेशादिषु क्वचित् ॥**

इति बह्वर्थे यद्यप्यथशब्दो वर्तते तथापीह ग्रन्थे कार्यारम्भप्रतिज्ञान्वादेशानाम-संभवात् प्रश्नाद्यर्थचतुष्टयमादायैव विचारयन्नाह – इहेत्यादि **पञ्जी** ।

ननु विघ्नध्वंसार्थं ग्रन्थादौ देवतानमस्कारवदथशब्द एव **मङ्गलमिति शिष्टाचारतो** निश्चितम् । यत्तु –

**ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।**
**कण्ठं भित्त्वा विनिर्जातौ तेन माङ्गलिकावुभौ ॥**

इत्यत्र माङ्गलिकावित्युक्तं तत्र स्वार्थ एवेकण् – प्रत्यय इति **वृद्धाः** । ननु यद्यथ-शब्द एव मङ्गलं तदा कथमथशब्दो मङ्गले वर्तत इत्युक्तम् । नहि मङ्गलं मङ्गलार्थं भवति ? सत्यम् । एकापीयं सप्तमी अर्थवशाद् द्विधा भिद्यते । तथाहि आनन्तर्यादौ द्योत्ये मङ्गले च गम्यमाने अथशब्दो वर्तते उच्चार्यते इत्यर्थः । न चाथशब्दो मङ्गलार्थवाचकः । यथा वैशब्दः पादपूरणे वर्तते, तथा वैशब्दः पादपूरणवाचक इति, किन्तु पादपूरणे कर्तव्ये वैशब्दः प्रयुज्यते इत्यर्थः । यद् वा मङ्गले वर्तते इत्यत्र धर्मपरं विवक्षणीयम्, मङ्गलत्वं च प्रतिबन्धकान्यस्य सतः प्रारिप्सितप्रतिबन्धकनिवृत्त्य-साधारणकारणत्वम्, एतच्चात्र न व्याख्यातं **ग्रन्थगौरवभयात्** । यथा अथ किमिदमिति । नहि किमिदमित्यनेनैव प्रश्नार्थस्योक्तत्वाद् अथशब्दो व्यर्थ इति चेत्, न । अथ-शब्दस्याव्ययत्वेन द्योतकत्वात् किमिदमित्यनेनैव प्रतिपादितः प्रश्नोऽथशब्देन द्योत्यते इत्यदोषः । यद् वा अथशब्देन सामान्यप्रश्न उपस्थापितः, किमिदमित्यनेन तु विशेषप्रश्न उक्त इति ।

अथ आचार्यस्य शिष्यप्रश्नानुवादनेऽथशब्दः प्रश्नार्थ एवेति कथं न स्यादित्याह – त्यादीनि तु सर्वथा विदितान्येव इति, पश्चाद् विधास्यमानत्वाद् अविदितान्येवेत्यर्थः । ननु कथमिदमुच्यते, यावता भविष्यत्यपि वस्तुनि प्रश्नो घटत एव । यथा देवदत्तस्यापत्यं भविष्यतीति किन्तदिति । तथा यानि त्यादीनि भविष्यन्ति, तानि कानि ? इति प्रश्ने उत्तरम् – परस्मैपदानीति भविष्यन्ति । नैवम् अपत्यस्य

भविष्यत्त्वावगमो गर्भादिकारणवशाद् अत्र तु त्यादीनां भविष्यत्त्वे किं कारणं वक्तव्यमिति। विदितान्येवेति पाठान्तरम्, तेषां विदितत्वं पुनर्लोकप्रसिद्धत्वादिति। तथापि अयं पाठो न संगच्छते, अन्वाख्याने त्यादीनि भावीनीति तत्कथमत्र प्रश्नो घटत इति **हेमकरः**।

**वस्तुतस्तु** विदितान्येवेति पाठो युक्त। तथाहि आचार्यस्येदं वाक्यं तस्य सर्वज्ञत्वात् त्यादीनि तु सर्वथा प्रकारेण विदितानि, कथं तत्राचार्यस्य प्रश्नावकाशः। ननु अविदितान्येवेति पाठे त्यादीनामविदितत्वात् तत्र प्रश्नो न घटतां किन्तु कानि परस्मैपदानीति परस्मैपदविषयकः प्रश्नः कथन्न स्यादिति चेत्, न। सूत्रे उत्तरस्यानुपात्तत्वान्न ह्युत्तरं विना प्रश्नो घटत इति। न च त्यादीनां विदितत्वेऽपि त्यादीनि कीदृशानि ? इति प्रश्नमध्याहृत्य परस्मैपदानीत्युत्तरमेवेति वाच्यम्। अध्याहारे प्रमाणाभावाद् वाक्यभेदापत्तेश्च [वाक्यभेदकल्पने प्रमाणाभावादिति दिक्]। व्यवहितानामित्यादि। व्यवहितत्वं पुनस्तेषां पादान्तरितत्वादिति भावः। अथानन्तर्यपक्षेऽपि वर्तमानया व्यवहितानां सप्तम्यादीनां संज्ञा कथं स्यात्, नैवं ज्ञापकात्। **अयमर्थः— आनन्तर्यपक्षेऽपि "सिचि परस्मै स्वरान्तानाम्"** इत्यादिज्ञापकाद् व्यवहितानां सप्तम्यादीनां भवत्येव। **अधिकारपक्षे** तु पादान्तरितत्वेनातिव्यवहितानामपि सन्नादीनां संज्ञा स्यात्।

ननु **"धातोर्वा तुमन्तात्"** (३।२।४) इत्यादिना विधीयमाना ये सन्नादयस्ते कथं **"गुपूतिजूकिद्भ्यः सन्"** (३।२।२) इत्यादिविशेषविधिं परित्यक्तुं शक्नुवन्ति, भिन्नविषयत्वेन तेषामप्रसङ्गात् ? सत्यम्, एवं योज्या **पञ्जी**— तथाहि आचार्येण विधीयमानाः सन्नादयः **"गुपूतिजूकिद्भ्यः सन्"** (३।२।२) इत्यादिविशेषविधानं विहाय धातोर्वेत्यादिना करणभूतेन नात्मनेपदिभ्यो भवेयुरिति। एवं च सति आचार्यस्य विधीयमानत्वेन सर्वेषामुपस्थितौ सत्यां तत्र विधिपरित्यागः संगच्छत एव। यथा कौण्डिन्यं विहाय ब्राह्मणान् भोजयेदित्युक्ते ब्राह्मणत्वेनोपस्थितस्य कौण्डिन्यस्य भोजनक्रियायां निषेधो गम्यते इति। ननु यदि आत्मनेपदिभ्यः सन्नादयो न प्रवर्तन्ते इत्युच्यते तदा सनन्तात् **"शेषात् कर्तरि"** (३।२।४७) इत्यादिना परस्मैपदमेव भविष्यति किं पूर्ववत् सनन्तादित्यनेन चेत्, यथा परस्मैपदाधिकारस्तथात्मनेपदाधिकारे सति परस्मैपदिभ्य आत्मनेपदिभ्यश्च सन्नुत्पत्तौ सत्यां **"शेषात् कर्तरि"** (३।२।४७) इत्यादिना परस्मैपदमात्रप्रसक्तौ आत्मनेपदमपि स्यादेतदर्थं तत् सूत्रमिति वाच्यम्, नैवम्। **"नव पराण्यात्मने"** (३।१।२) इत्यस्येति साक्षान्नव पराणीति संज्ञिनिर्देशात् संज्ञासूत्रत्वेन निश्चितत्वात् सन्नादौ परनवत्वानुपपत्तेश्च

सत्यम् । **"इनुञ्यजादेः"** (३।२।४५) इत्यत्रोभयपदविधानात् परस्मैपदीभूतस्य सनोऽपि विधानमस्ति ततः पूर्ववत् सनन्तादिति सूत्रं विना सनन्तस्य **"शेषात् कर्तरि"** (३।२।४७) इत्यादिना परस्मैपदस्य प्रसक्तौ तद्बाधया 'पिपक्षते' इत्यादौ आत्मनेपदमपि स्यात्, एतदेव तस्य प्रयोजनमिति। ननु तथापि **"सनि दीङः"** (३।४।२३) इत्यस्य वैयर्थ्यम्, दीङ्धातोरात्मनेपदित्वेन सन्नुत्पत्तेरभावात् कथं तस्मिन् दीङ्धातोराकारो विधीयते। तस्मादेतस्मादेववचनाद् अथशब्दोऽधिकारार्थो न घटते इति, किं **'न ह्यनिर्दिष्टार्था शास्त्रे प्रक्लृप्तिः'** (भोज० परि० १०७) इति **पञ्जिकायाम्** इष्टाश्रयणसमाधानेन ? नैवम्, दीङ्धातुमात्रमादाय सन्नुत्पत्तिज्ञापनेन तस्य सार्थकत्वेऽधिकारनिवृत्तौ सामर्थ्याभावात्। ननु तथापि सनः परस्मैपदस्यापि दीङ्धातोर्दृष्टत्वाद् 'उपदिदासते' इत्यत्र पूर्ववत् सनन्ताद् इति वचनादुपदिदासतीति परस्मैपदमपि स्याद् इत्यशुद्धप्रयोगप्राप्तिरेव विशेष इति इष्टाश्रयणेन पञ्जीकृतं **कश्चिदा**क्षिपति। तन्न, आशयापरिज्ञानात्। तथाहि सनन्तात् **"शेषात् कर्तरि परस्मैपदम्"** (३।२।४७) इत्यस्य बाधया **"पूर्ववत् सनन्तात्"** (३।२।४६) इति विशेषवचनेन। सनः पूर्वं यस्माद् धातोर्यत् पदं दृष्टं सनन्तादपि तदित्यात्मनेपदमेव स्यान्न परस्मैपदमिति।

न च परस्मैपदीभूतसन्नादयोऽपि धातोर्दृष्टा इति सनन्तात् सन्प्रत्ययस्याभावात् परस्मैपदीभूततिप्रत्ययादयो न प्रवर्तन्ते इति वाच्यम्, तद्धातोस्तेषामपि दृष्टत्वात् तस्मात् पञ्जीकृत इष्टाश्रयणपरिहार एव युक्त इति। **वस्तुतस्तु** (अ) युक्तमिदं यावता सूत्रमिदं व्यर्थीकृत्य तद्बलेनात्मनेपदिनोऽपि धातोः परस्मैपदं सन् विधीयते, तावता सूत्रवैयर्थ्यभयादत्राथशब्दस्याधिकारार्थो न भवति इति कथं नोच्यते ? अथ विनिगमनाविरहादिति चेत्, न। **"सनि दीङः"** (३।४।२३) इति ज्ञापकस्य सर्वोद्दिष्टत्वात् सर्वेभ्य आत्मनेपदिभ्यः सन् ज्ञापयिष्यते। एवं च सत्यधिकारार्थो न भविष्यति ? सत्यम्, सत्यपि अस्मिन् सिद्धान्ते **पञ्जीकृता सुखसिद्धान्तार्थम् इष्टाश्रयणं** कृतमिति **दिक्**। [इति तु सिद्धान्तान्तरम्]।

**इष्टाश्रयणं कष्टमि**त्याह – किञ्चेति। तदैनमपनीय इत्यादि। अथ यद्ययमथशब्दो न क्रियते तदा कथं मङ्गलस्य प्राप्तिस्तदभावाच्च शास्त्रस्य मङ्गलमध्यान्तताव्याघातः स्यात् ? सत्यम्। अथशब्दाभावपक्षे **"न य्वोः पदाद्योर्वृद्धिरागमः"** (२।६।५०) इत्यत्र **वृद्धिग्रहणं मङ्गलार्थं भविष्यति**, ॐकारो वा पठितव्यः इति किमथशब्देन सन्देहमूलेनेति। येषामानन्तर्यमनेन द्योतितमित्यादि। ननु पदान्तरप्रतिपाद्यार्थस्य प्रकाशके द्योतकः इत्युच्यते, इह तु आनन्तर्यार्थस्य केनाप्यनुक्तत्वात् कथमत्राथशब्दो

द्योतक इति ? सत्यम्। प्रसिद्धिवशात् प्राप्तानामनन्तरत्यादीनां यदानन्तर्यं प्राप्तं तदेवाथशब्देन द्योतितमिति। यद् वा आनन्तर्यमुक्तमित्यर्थः। यद्येवम् 'अथशब्दोऽयं द्योतको न वाचक इति' इति पङ्क्तिः कथं संगच्छते ? सत्यम्। स्वरादिशब्दवद् अथशब्दस्यापि आनन्तर्यरूपधर्मस्य वाचकत्वमित्युक्तम्। यत् पुनर्न तु वाचक इत्युक्तम्, तत्तु तदनन्तराणां धर्मिणां त्यादीनामिति बोध्यम्, किन्तु धर्मधर्मिणोरविनाभावसंबन्धाद् धर्मिणामपि प्रतिपत्तिरिति। शास्त्रमध्यमङ्गलार्थोऽपीति। **अथशब्दोऽत्र वस्त्वर्थः**। **तेनायमर्थः–** विघ्नध्वंसकारणं वस्त्वपि प्रतिपाद्यमिति, मङ्गलपूर्वकमिति। अन्यार्थमानीतं दधिदूर्वादिकं यथा गच्छतः पुरुषस्य मङ्गलमिति तद्वदत्रापीति भावः। एतेन **'सकृदुच्चरितः शब्दः सकृदर्थं गमयति'** (का० परि० ३६) इति न्यायात् कथमर्थद्वयं प्रतिपादयतीति **पूर्वपक्षो** निरस्तः।

नन्वथशब्दो मङ्गलम्, कथं मङ्गलपूर्वकमित्युक्तम्? सत्यम्, अथशब्दो विघ्ननाशनकारणस्वरूपमात्मानं प्रतिपाद्य आनन्तर्यमपि प्रतिपादयतीति न दोषः। यद् वा मङ्गलशब्देन विघ्नध्वंसोऽप्युच्यते। अतो मङ्गलं विघ्नध्वंस एव पूर्वो यस्यानन्तर्यस्य तत् तथा। तथा च **''भद्रं भद्रं वितर भगवन्! भूयसे मङ्गलाय'** इति भद्रं प्रशस्तं भद्रं मङ्गलं भूयसे मङ्गलाय विघ्नध्वंसाय वितरेति **मालतीश्लोको रक्षितेन** व्याख्यातः। न ह्यन्यथा श्लोकार्थ उपपद्यत इति। अमी विष्णुमित्रा इत्यादि। ननु अमीशब्द एव पूर्वेषां बुद्धिस्थीभूतानां विष्णुमित्रत्वं प्रतिपादयति, तेन परे नव यज्ञदत्ता इत्युक्तिबाधा न घटते। तत्कथं दृष्टान्तः सङ्गच्छते इत्याह– **''इनुत्र्यजादि०''** (३।२।४५) इत्यादि **कुलचन्द्रः**। तन्न, 'अमी विष्णुमित्राः' इत्युक्ते किममीतिशब्दो बुद्धिस्थीभूते प्रयुक्तः उतस्वित् समुदाये, प्रतिपत्तुरिति सन्देहे 'परे नव देवदत्ताः' इत्युक्त्वा परेषां नवानां विष्णुमित्रत्वस्य दूरीकृतत्वात्।

**वस्तुतस्तु** उक्तिबाधा परग्रहणान्नवग्रहणाच्चावगम्यते। तथाहि परशब्दस्य सावधिकार्थत्वाद् अवध्याकाङ्क्षाया उपस्थितत्वात् परस्मैपदमेवावधित्वेन कल्पते। तथा च सति 'परस्मैपदात् पराण्यात्मनेपदानि' इत्युक्ते परेषां परस्मैपदत्वं नास्ति इत्येव गम्यते, परशब्दस्य भिन्नार्थवाचकत्वात्। ननु तथापि परस्मैपदीभूतप्रथमपुरुषापेक्षया परेषां नवानामात्मनेपदसंज्ञा स्यात्, नैवम्, नवशब्दसान्निध्येन परस्मैपदमपि नववचनस्यैव संज्ञा। अतस्तदपेक्षया परेषामेव नवानामात्मनेपदसंज्ञाविधानं स्यात्, न तु प्रथमपुरुषापेक्षया इति।

---

१. तुल० – 'तव वितरतु भद्रं भूयसे मङ्गलाय' (उ० रा० ३।४८)।

अथ **परसूत्रे** परशब्दस्य भिन्नार्थत्वे किं प्रमाणम्, येनोक्तिबाधा भविष्यति, किन्तु घटानां मध्ये यः परः स मे दीयताम् इत्युक्ते घट एव प्रदीयते नान्यदिति तथाऽत्रापि विनिगमनाभावात् परशब्दस्योभयार्थत्वे परस्मैपदीभूतानामेव नवानां वचनानामात्मनेपदसंज्ञा स्याद् इत्याह – इन्त्र्यजादेरित्यादि। **वस्तुतस्तु** शास्त्रीयसंज्ञायां लौकिकहेतुर्न प्रयोजक इत्याह – इन्त्र्० इत्यादि। ननु **पाणिनिना** विभक्तिसंज्ञार्थं सुपो विभक्तयस्तिङश्चेति सूत्रं विधीयते, **तदस्मन्मते** सूत्राभावात् कथं विभक्तित्वम् इत्याह – अर्थस्येत्यादि ॥४१७।

**[समीक्षा]**

कातन्त्रव्याकरण के अनुसार त्यादि प्रत्ययों की तथा पाणिनीय व्याकरण के अनुसार ल् के स्थान में होने वाले 'तिप्' आदि आदेशों की परस्मैपद संज्ञा की गई है – **"लः परस्मैपदम्"** (अ० १।४।९९)। यह ध्यातव्य है कि प्रत्याहार-प्रक्रिया के अनुसार पाणिनीय व्याकरण में 'तिप्' आदि १८ प्रत्ययों को 'तिङ्' कहते हैं, परन्तु कातन्त्रव्याकरण में प्रत्याहार मान्य न होने के कारण उक्त प्रत्ययों के बोधार्थ 'त्यादि' शब्द का प्रयोग किया जाता है। पूर्वाचार्य 'परस्मैपद' के लिए प्रायः 'परस्मैभाष' शब्द का प्रयोग करते थे। **काशकृत्स्नव्याकरण** में 'परस्मैपद' का व्यवहार होने से इसकी प्राचीनता सिद्ध है – "उदात्तानुबन्धः परस्मैपदम्" (का० धा० व्या०, सू० ९०)। 'परस्मैभाष' शब्द का प्रयोग **अथर्ववेदप्रातिशाख्य** में उपलब्ध होता है – "वर्णलोपागमह्रस्वदीर्घप्लुत – आत्मनेभाषा – परस्मैभाषा अपियन्त्यपियन्ति" (३।४।७)। पाणिनीय धातुपाठ में भी इन्हें पढ़ा गया है – "उदात्तः परस्मैभाषः, एधादय उदात्ता अनुदात्तेत आत्मनेभाषाः" (भ्वादिः, धा० १, २ – ३७)।

परस्मैपद उसे कहते हैं, जिससे परार्थ अथवा परप्रयोजन जाना जाता है – परस्मै परार्थः परप्रयोजनं वा पद्यते = ज्ञायते येन तत् परस्मैपदम् – 'परस्मै पद्यते येन तत् परस्मैपदं स्मृतम्'। इस अन्वर्थता के कारण ही क्रियाफल के कर्तृगामी होने पर आत्मनेपद तथा परगामी होने पर परस्मैपद की प्रवृत्ति उचित प्रतीत होती है, फिर भी पाणिनि ने कर्त्रभिप्राय क्रियाफल के होने पर स्वरितेत् तथा ञित् धातुओं से जो आत्मनेपद का विधान किया है, उसे समीचीन नहीं माना जाता है। काशकृत्स्नतन्त्र में एतद्विषयक सामान्य निर्देश है – "स्वरितञानुबन्ध उभयपदम्" (का० धा० व्या०, सू० ८९)। कातन्त्रकार ने भी इसी पक्ष का समादर किया है। इसीलिए दुर्गादास विद्यावागीश ने कविकल्पद्रुम की टीका में वर्धमान के मत को

उद्‌धृत करते हुए कहा है –

**विशेषः पाणिनेरिष्टः सामान्यं शर्ववर्मणः।**
**सामान्यमनुगृह्णन्ति तत्राचार्यपरम्परा ॥**

(कविकल्पद्रुमटीका, पृ० ६२)।

इसीलिए इस नियम में व्यभिचार भी देखा जाता है, जिसकी विद्यावागीश ने विस्तार से चर्चा की है

अर्वाचीन व्याकरणों में परस्मैपद संज्ञा –

**जैनेन्द्रव्याकरण –** लो लम् (१।२।१५०)।

**हैमशब्दानुशासन –** नवाद्यानि शतृक्वसू च परस्मैपदम् (३।३।१९)

**मुग्धबोधव्याकरण –** नवमः पमेञितोऽन्यङिद्‌भ्यां घे (सू० ५३१)।

**अग्निपुराण –** पूर्वं नव परस्मैपदम् (३५७।५)।

**नारदपुराण –** मिब्बस्मसः परस्मै तु ....................।

परस्मैपदमाख्यातं शेषात् कर्तरि शाब्दिकैः।'
भूवाद्या धातवो ज्ञेयाः परस्मैपदिनः स्मृताः।
अतादयोऽष्टत्रिंशच्च परस्मैपदिनो मुने ! ॥

(५२।८१; ५३।१९-२०)।

## [ विशेष वचन ]

१. अर्थस्य विभञ्जनाद् विभक्तयः (दु० वृ०)।

२. अथशब्दः प्रश्नानन्तर्यमङ्गलाधिकारेषु वर्तमानोऽप्यानन्तर्यार्थ एव गृह्यते न्याय्यरूपत्वात् (दु० टी०)।

३. लोकवच्छास्त्रे व्यवहारः (दु० टी०)।

४. लोके तु भाविनि भूतवदुपचारः (दु० टी०)।

५. अर्थस्य वर्तमानादेर्विभञ्जनाद् विभक्तय उच्यन्ते, लोकोपचारात् (दु० टी०)।

६. न ह्यनिर्दिष्टार्था शास्त्रे प्रक्लृप्तिः (वि० प०; क० च०)।

७. सुखप्रतिपत्तिकृतप्रतिज्ञो हि भगवानिदं शास्त्रं चकार (वि० प०)।

८. वर्तमानादयोऽर्था आभिर्विभज्यन्ते इति विभक्तयः (वि० प०)।

९. मङ्गलत्वं च प्रतिबन्धकान्यस्य सतः प्रारिप्सितप्रतिबन्धकनिवृत्त्यसाधारणकारणत्वम् (क० च०)।

१०. वस्तुतस्तु शास्त्रीयसंज्ञाया लौकिकहेतुर्न प्रयोजकः (क० च०) ॥४१७।

## ४१८. नव पराण्यात्मने [३।१।२]

### [सूत्रार्थ]

कालबोधक 'वर्तमाना' आदि संज्ञाओं के १८-१८ प्रत्ययों में से परवर्ती ९-९ प्रत्ययों की आत्मनेपद संज्ञा होती है ॥४१८।

### [दु० वृ०]

अथ पराणि नव नव वचनानि आत्मनेपदसंज्ञकानि भवन्ति। पदानीति गम्यते। ते, आते, अन्ते, से, आथे, ध्वे, ए,वहे, महे। एवं सर्वत्र। आत्मनेपदप्रदेशाः– **"आत्मनेपदानि भावकर्मणोः"** (३।२।४०) इत्येवमादयः ॥४१८।

### [दु० टी०]

नव०। अत्राप्यानन्तर्यार्थोऽप्यथशब्द इत्यवीप्सोऽपि नवशब्दो वीप्सां गमयति। तेनैकैकस्यां विभक्तौ नव पराण्यात्मनेपदानीत्यर्थः। सर्वेषामात्मने **"सिजाशिषोश्चात्मने"** (३।५।१०) इति ज्ञापकाच्च। कुतः क्रियातिपत्तेरेव 'नव पराण्यात्मनेपदानि' इति चोद्यम्। पदानीति गम्यते इति। ननु च कृतायां संज्ञायां सत्याम् उत्तरपदकालगृहीतसम्बन्धेन संज्ञैकदेशो गम्यते। इह तु संज्ञाकाले एव पदशब्दो न श्रूयते इति कुतोऽवगतिः? सत्यम्। लोकप्रसिद्धेयं संज्ञा। नवसंख्यापरिच्छेदेन मन्दधियं प्रत्येकदेशोऽन्वाख्यायते। यथा भीमो भीमसेनः, सत्यभामा भामेति। किञ्च विधौ पदशब्दश्रवणादिति हृदि कृत्वाह– आत्मनेपदानीत्यादि। यथाकथञ्चिद् **व्युत्पत्तिवादी** पुनराह– आत्मपरयोर्व्याकरणाख्यायां पदे नास्ति चतुर्थ्या लोप इति पदं गम्यते परस्मैपदसाहचर्यादिति वा ॥४१८।

### [वि० प०]

नव०। इहाप्यथशब्दोऽनन्तराणां त्यादीनां द्योतकोऽनुवर्तते इति इहापि पूर्ववद् व्याख्यानम्। त्यादयश्च स्यामहिपर्यन्ता इति संज्ञिनां बहुत्वादशेषसंज्ञिपरिग्रहार्थमगृहीतवीप्सोऽपि नवशब्दोऽर्थाद् **वीप्सां** गमयति। तेन सर्वासां विभक्तीनां पराणि नव नव वचनानि आत्मनेपदानीत्यर्थः। न पुनः क्रियातिपत्तेरेव सर्वपरत्वान्नववचनानामियं संज्ञेति। किञ्च सर्वेषामात्मने सार्वधातुकेऽनुत्तमे पञ्चम्याः, **"सिजाशिषोश्चात्मने"** (३।५।१०) इति ज्ञापकादप्येतत् सिध्यति, कथमन्यथा सार्वधातुकादेरात्मनेपदव्यवहार इति। 'आत्मने' इति प्रथमाबहुवचनस्य पदशब्देन सार्धम् आदिलोप इत्यादिना लोपे सति पदम्, आत्मनेपदानीत्यर्थः। कथम् एतद्

गम्यते सूत्रे पदशब्दस्यानुपात्तत्वात्। उपात्त एव केवलं विलुप्त इत्यपि दुरुपपादनीयं नियमहेतोरभावादित्याह – पदानीति गम्यते इति। **लोके** प्रसिद्धेयं संज्ञा मन्दधियं प्रति **सुखार्थम**न्वाख्यायते इति। यथा भीमो भीमसेनः इत्यादावेकदेशेनापि समुदायो गम्यते तथापीत्यदोषः। विधौ वा पदशब्दस्य श्रवणादवगम्यते। एतदेव संज्ञायाश्च प्रयोजनं दर्शयन्नाह – **"आत्मनेपदानि भावकर्मणोः"** (३।२।४०) इत्येवमादय इति ॥४१८।

**[क० च०]**

नव०।संज्ञिनां बहुत्वादित्यादि।अथ परशब्देन **त्यादिसामान्योपस्थित्यपरशब्देन** परस्मैपदापेक्षयैव परभूतानि सर्वाण्येव वचनानि उपस्थाप्यन्ते न तु एकनववचनमात्रं संकोचे प्रमाणाभावाद् अत इह संज्ञिनां बहुत्वाद् अगृहीतवीप्सोऽपि नवशब्दो वीप्सां गमयति इत्यर्थः। ननु परस्मैपदस्याप्यसंकोचात् सर्वासां विभक्तीनां परस्मैपदसंज्ञा स्यात् ततश्च सकलपरस्मैपदापेक्षया क्रियातिपत्तेरेव परनववचनानां परत्वमित्याह- किञ्चेति। यद् वा त्यादीनां सर्वत्र प्रकृतिभूतत्वेन (संज्ञिभूतत्वेन) मुख्यत्वात् तेषामेव पराणि नव वचनानीति कथं न गृह्यन्ते इत्याह– किञ्चेति। यथा भीमो भीमसेन इति।

ननु कथमयं दृष्टान्तः, दृष्टान्तदार्ष्टान्तयोरतुल्यत्वात्। न ह्यत्र दृष्टान्तेऽप्येक-देशलोपो विवक्षितः? सत्यम्, अत्रापि बहुलत्वादेकदेशलोप इति **कुलचन्द्रः**। तन्न, अदृष्टकल्पने मानाभावात्।**वस्तुतस्तु** समुदायापेक्षया नायं दृष्टान्तः, किन्त्वेकदेशो-च्चारणेन समुदायस्याप्युपस्थितिरिति अंशमात्रे दृष्टान्तो दर्शितः इति न दोषः। ननु तत्र नामकरणकाल एव भीमसेन इति संज्ञा विहिता, तदुत्तरकाले एकदेशमादाय व्यवहार उपपद्यते इति युक्तम्। अत्र तु संज्ञाकाल एव पदशब्दो नास्ति कथमेक-देशेन समुदायो गम्यते इत्याह– विधौ वेति। **वयं** तु न हि भीम इति भीमसेन-शब्दस्यैकदेशः किन्तु यथा भीमसेन इति संज्ञा तथा भीम इत्यपि तस्य संज्ञान्तरम्। तथा च **'मेदिनी – 'भीमो भयानके रुद्रे पाण्डवे च नृपान्तरे'** इति। एतदाशङ्क्याह – विधौ वेत्यादीति ब्रूमः ॥४१८।

**[समीक्षा]**

पाणिनीय व्याकरण **में** तिप् आदि १८ प्रत्यय पढ़े गए हैं, जिन्हें 'तिङ्' प्रत्याहार नाम दिया गया है, उन्हीं १८ तिङ् प्रत्ययों में से 'त-आताम्-झ-थास्-

---

१. अमरकोशः – दारुणं **भीषणं** भीष्मं घोरं भीमं भयानकम् – (१।७।२०)।

आथाम्-ध्वम्-इट्-वहि-महिङ्' इन नौ प्रत्ययों का 'तङ्' प्रत्याहार से बोध कराया जाता है, इन्हीं की पाणिनि ने आत्मनेपद संज्ञा की है– "तङानावात्मनेपदम्" (अ० १।४।१००)। कातन्त्रकार 'वर्तमाना' आदि कालबोधक प्रत्येक संज्ञा में १८ प्रत्यय पढ़ते हैं, इन्हें 'त्यादि' कहा जाता है। इनकी संख्या १८० है, इन्हीं में से प्रत्येक नौ प्रत्ययों के बाद ९ प्रत्ययों की आत्मनेपद संज्ञा की गई है। सूत्र में केवल 'आत्मने' शब्द ही पढ़ा गया है, अतः 'आदिलोपोऽन्तलोपश्च' वचन के अनुसार यहाँ 'पद' शब्द का तथा उसमें जस् विभक्ति का लोप व्याख्याकारों द्वारा स्वीकार किया गया है। अपने लिए जिनको जाना जाता है या जिनका प्रयोग किया जाता है उन्हें आत्मनेपद कहते हैं– आत्मने स्वस्मै पद्यन्ते ज्ञायन्ते प्रयुज्यन्ते वा यानि तानि [1]**आत्मनेपदानि**। आत्मनेपद के लिए पूर्वाचार्य 'आत्मनेभाष' शब्द का प्रयोग करते थे, यह कैयट के वचन से स्पष्टतः जाना जा सकता है– "आत्मनेभाषपरस्मैभाषयोरुपसंख्यानम्" (म० भा०)। आत्मनेभाषपरस्मैभाषशब्दौ च न केषुचिद् व्याकरणेषु संज्ञात्वेन विनियुक्ताविति अलुकोऽप्रसङ्गः। ........ आत्मनेपदिनश्च धातवो वैयाकरणैरात्मनेभाषशब्देन व्यवह्रियन्ते, परस्मैपदिनः परस्मैभाषशब्देनेत्यलुक् सिद्धः" (म० भा० प्र० ६।३।७-८)। अथर्ववेदप्रातिशाख्य में इसके प्रयोग से इस कथन की सम्पुष्टि होती है– "वर्णलोपागमह्रस्वदीर्घप्लुत-आत्मनेभाषा – परस्मैभाषा अपियन्त्यपियन्ति" (४।३।७)। प्रचलित पाणिनीय धातुपाठ में आत्मनेपद के लिए आत्मनेभाष का प्रयोग प्रायः उपलब्ध होता है– "उदात्तः परस्मैभाषः। एधादय उदात्ता अनुदात्तेत आत्मनेभाषाः" (भ्वादिः, धा० सं० १, २-३७)। केवल आत्मनेभाष का ही नहीं 'आत्मनेपद' शब्द का भी व्यवहार काशकृत्स्नतन्त्र में उपलब्ध होने के कारण इस संज्ञा की भी प्राचीनता प्रमाणित होती है– "अनुदात्तङानुबन्ध आत्मनेपदम्" (का० धा० व्या०, सू० ८८)।

**अर्वाचीन व्याकरणादि ग्रन्थों में इसका प्रयोग**

**जैनेन्द्रव्याकरण** – इङानं दः (१।२।१५१)।

**हैमशब्दानुशासन** – पराणि कानानशौ चात्मनेपदम् (३।३।२०)।

**मुग्धबोधव्याकरण** – नवमः पमे ञितोऽन्यङिद्भ्यां घे (सू० ५३१)।

**अग्निपुराण** – परे नवात्मनेपदम् (३५७।५)।

**नारदपुराण** – अनुदात्तञितो धातोः क्रियाविनिमये तथा।
निविशादेस्तथा विप्र! विजानीह्यात्मनेपदम् ॥

---

१. आत्मने = आत्मार्थम् आत्मप्रयोजनं वा पद्यते ज्ञायते येन तद् आत्मनेपदम्।

एधाद्या आत्मनेभाषाः, आत्मनेभाषास्तु गुपास्त्रयः, मनुवन्वात्मनेभाषौ (५३।२०, ३२, ६५)।

**[विशेष वचन]**

१. लोकप्रसिद्धेयं संज्ञा नवसंख्यापरिच्छेदेन मन्दधियं प्रत्येकदेशोऽन्वाख्यायते (दु० टी०)।

२. लोके प्रसिद्धेयं संज्ञा मन्दधियं प्रति सुखार्थमन्वाख्यायते इति (वि० प०)।

३. वस्तुतस्तु समुदायापेक्षया नायं दृष्टान्तः, किन्त्वेकदेशोच्चारणेन समुदायस्याप्युपस्थितिरिति अंशमात्रे दृष्टान्तो दर्शितः (क० च०)।।४१८।

## ४१९. त्रीणि त्रीणि प्रथममध्यमोत्तमाः [३।१।३]

**[सूत्रार्थ]**

परस्मैपदसंज्ञक तथा आत्मनेपदसंज्ञक त्यादि ९-९ वचनों में से क्रमशः ३-३ वचनों की प्रथम-मध्यम तथा उत्तम (पुरुष) संज्ञाएँ होती है। जैसे – ति, तस्, अन्ति की प्रथमपुरुष, सि, थस्, थ की मध्यमपुरुष तथा मि, वस्, मस् की उत्तमपुरुष संज्ञा होती है।।४१९।

**[दु० वृ०]**

परस्मैपदानामात्मनेपदानां च त्रीणि त्रीणि वचनानि प्रथममध्यमोत्तमसंज्ञकानि भवन्ति यथासंख्यम्। 'ति –तस्-अन्ति' इति प्रथमः, 'सि-थस्-थ' इति मध्यमः। 'मि-वस्-मस्' इत्युत्तमः।'ते–आते–अन्ते' इति प्रथमः,'से–आथे-ध्वे' इति मध्यमः, 'ए-वहे-महे' इत्युत्तमः। एवं सर्वत्र। संज्ञाप्रदेशाः– **"नाम्नि प्रयुज्यमानेऽपि प्रथमः, युष्मदि मध्यमः, अस्मद्युत्तमः"** (३।१।५, ६, ७) इत्येवमादयः।।४१९।

**[दु० टी०]**

त्रीणि०। **वीप्सायामत्र द्विर्वचनम्, वीप्सा चात्र प्रथमादिसंज्ञागुणेनेति**। वीप्सामन्तरेण तु वचनापेक्षयापि यथासंख्यं स्यात्। तिवचनं प्रथमः तस्वचनं मध्यमः, अन्तिवचनमुत्तम इति, नैवम्। **"इजात्मने पदैः प्रथमैकवचने"** (३।२।२९) इति ज्ञापकात् परस्मैपदानामात्मनेपदानां च त्रीण्युक्ते अवीप्सोऽपि वीप्सां गमयति अनेकसंज्ञिबलात्? सत्यम्। **प्रतिपत्तिरियं गरीयसीति युक्तोऽशेषपरिग्रहाय वीप्सानिर्देशः**। यथासंख्यमिहार्थगतं यतः परस्मैपदान्यात्मनेपदानि चाष्टादश वचनानि, अतस्त्रिकाणि त्रीण्येवेति भावः। ननु कथं पुनर्व्यवहितस्य परस्मैपदस्यानुवर्तनम्? सत्यम्। इहापि अथशब्दानुवर्तनं तानि च त्यादीनि परस्मैपदात्मनेपदविभागेन

स्थितानीति यथासङ्ख्यं न विरुध्यते, न च वैषम्येणानेकसंज्ञाभिरेकस्य प्रयोजनमस्ति शास्त्रे इत्याह – परस्मैपदानामित्यादि । किञ्च **"इजात्मने पदेः प्रथमैकवचने"** (३।२।२९) इति ज्ञापकाद् व्यवहितमपि परस्मैपदमनुवर्तते । **अनुगतार्था अपि प्रथमादयः शब्दा न विशेष्यलिङ्गभाजः, पुरुषा ह्येते लोकतः सिद्धाः** । तथा च – **"युगपद्वचने परः पुरुषाणाम्"** (३।१।४) इति वक्ष्यति, अतः पुंलिङ्गनिर्देशः ॥४१९ ।

**[ वि० प० ]**

त्रीणि त्रीणि० । अत्राप्यथशब्दानुवर्तनात् त्यादिर्वर्तते । स च परस्मैपदात्मनेपदविभागेन स्थित इति । तेन व्यवहितस्यापि परस्मैपदस्यानुवर्तनमित्याह – परस्मैपदानामात्मनेपदानां चेति । त्रीणि त्रीणीति वीप्सायां द्विर्वचनम्, **वीप्सा** चात्र प्रथमादिगुणेनैव, प्रथमादयो हि नपुंसकस्य विशेषणम् भवन्तोऽपि न विशेष्यलिङ्गभाजः । **एते हि लोके पुरुषत्वेन प्रतीताः** । तथा च – **"युगपद्वचने परः पुरुषाणाम्"** (३।१।४) इति वक्ष्यति । अतः प्रथममध्यमोत्तमा इति पुंलिङ्गनिर्देशः । अर्थकृतमिह यथासङ्ख्यं न शब्दकृतमिति शब्दसाम्याभावात् । तथाहि परस्मैपदानि नव नव वचनानि प्रथममध्यमोत्तमाश्च त्रय इति कथं शब्दसाम्यमिति । अर्थकृतं तु भवत्येवेति यतस्त्रीण्येव त्रिकाणि, एवमात्मनेपदेष्वपि ॥४१९ ।

**[ क० च० ]**

त्रीणि० । परस्मैपदानामात्मनेपदानां चेति **वृत्तिः** । ननु कथमेतत् संगच्छते, यावता अनन्तरत्वादात्मनेपदस्यैवानुवृत्तिः प्राप्नोति, न तु परस्मैपदस्यापि तस्य व्यवहितत्वात्, नैवम् । **'विशेषातिदिष्टः प्रकृतं न बाधते'** (का० परि० १९) इति न्यायात् त्यादिरेवात्र प्रतीयते इत्येतदेवाह – अत्रापीति । ननु तथापि त्यादीनां त्रीणि त्रीणि प्रथममध्यमोत्तमादिसंज्ञाविशिष्टानि भवन्तीत्युक्ते एकैकस्य तितसादेः संज्ञात्रयविधानेन प्रयोजनाभावात् ति प्रथमः, तस् मध्यमः, अन्त्युत्तम इत्यादिक्रमेणैव प्रथमादिसंज्ञाः स्युरिति, नैवम् । त्रीणि त्रीणीत्यपास्य त्यादीनि प्रथममध्यमोत्तमाः इत्यादि सूत्रं विदध्यात्, एवं च यन्न कृतं तस्माल्लक्षणया त्रिशब्दस्य त्रिकमेवार्थः । यद् वा **"इजात्मने पदेः प्रथमैकवचने"** (३।२।२९) इत्यत्र यदि पूर्वयुक्त्या तेः प्रथमादिसंज्ञा स्यात् तदा एकवचनग्रहणं व्यर्थमेव स्यात् (प्रथमेति क्रियमाणे सिद्धमिति भावः) । तेन त्यादीनां त्रिकाणि त्रिकाणीत्यर्थः प्राप्तो भवतीति भावः ।

**वृत्तौ** वचनानीति यदुक्तं तदुपलक्षणमित्यर्थः । ननु यदि त्यादिरनुवर्तते तदा कथं त्यादीनामित्युक्त्वा परस्मैपदानाम् आत्मनेपदानां चेत्युक्तमित्याशङ्क्याह – स

चेत्यादि। अथ तथापि त्यादीनां त्रिकाण्यनेकानि प्रथममध्यमोत्तमाश्च त्रय इति कथं यथासंख्यमिति मनसिकृत्याह– व्यवहितेत्यादि। तथा च सति परस्मैपदात्मनेपदविभागेन स्थितानां त्रिकाणां त्रित्वावगमात् साम्यमस्तीति यथासंख्यं सुतरामेव घटते इति। ननु तथापि कथं यथासंख्यं सर्वविभक्तिगतत्वेन परस्मैपदसम्बन्धित्रिकस्यानेकत्वात् ? सत्यम्। परस्मैपदात्मनेपदविभागेन त्रिकेषु गृह्यमाणेषु वर्तमानादिभेदेनैव तानि गृह्यन्ते। त्यादीनामुपस्थितौ तासामप्युपस्थितेः।

**वस्तुतस्तु** यथासंख्यमन्तरेणापि क्रमशस्त्यादीनां त्रिकाणां प्रथममध्यमोत्तमसंज्ञाप्रवृत्तौ अभिमतसिद्धिर्भवत्येव यथासंख्यमिति यदुक्तं तत् प्रकारान्तरमेव। वीप्सा चात्रेत्यादि। ननु **यदि क्रियागुणद्रव्यैर्युगपद् व्याप्तुमिच्छा वीप्सा**, अत्र प्रथमादिगुणानां त्यादीनां सार्वत्रिकेषु न प्रत्येकं व्यापकता, नापि समुदायेन। तथाहि यथा 'ति-तस्-अन्ति' इत्यत्र प्रथमगुणेन व्याप्यते न तथा 'सि-थस्-थ' इत्यत्र, अतो नास्ति प्रत्येकं व्यापकता। तथा 'ति-तस्-अन्ति' इत्यत्र यथा प्रथमगुणेन व्याप्यते न तथा मध्यमोत्तमाभ्यामिति, नास्ति समुदायेन व्यापकता, तत्कथं व्यापकताभावाद् वीप्सा संगच्छते इति ? सत्यम्। साहित्ये द्वन्द्वस्य विधानात् साहित्यधर्माक्रान्ततया सर्वेषां प्रथममध्यमोत्तमानामुपस्थितौ त्यादीनां सार्वत्रिकेषु प्रथमादिगुणानामेकतमस्य क्रमेण व्यापकत्वेऽपि साहित्यविशिष्टत्वेन प्रथमादीनां व्यक्तिरस्त्येवेति वीप्सा न विहन्यते [सर्वेषां सार्वत्रिकेषु व्यापकत्वमुपचर्यते]। यथा 'गृहे गृहे अश्वाः' इत्यादिषु अश्वाक्रान्ततया यावद्व्यक्तीनां व्यापकत्वेनोपस्थितौ तदन्यतमव्यापकत्वेनापि सर्वासामश्वाक्रान्तव्यक्तीनां व्यापकत्वं प्रतीयत इति।

एते हीत्यादि। ननु ये हि पुरुषत्वेन प्रतीतास्तद्विशिष्टार्थवाचकाः शब्दा अपि पुंलिङ्गाः इति कथं निश्चितम्, यावता सामान्यवाचकस्य व्यक्तिशब्दस्य पुंस्त्वविशिष्टव्यक्तिवाचकत्वेऽपि स्त्रीलिङ्गत्वमिति ? सत्यम्। हि यस्मात् प्रथमादयोऽर्थाः पुरुषत्वेन पुरुषशब्दवाच्यत्वेन प्रतीताः, ये च पुरुषास्ते च पुंस्त्वधर्मविशिष्टा एव। अतस्तस्य पुरुषस्य पुंस्त्वधर्मविशिष्टत्वेन तदर्थवाचका एते प्रथमादयः शब्दाः पुंलिङ्गा एवेत्यर्थः। अथ पुरुषशब्दवाच्या इमे इति कुतो निश्चितमित्याह– तथेत्यादि **हेमकरस्याभिप्रायः**। अर्थकृतमिह यथासंख्यमित्यादि तथाहीति। ननु त्रीणि त्रीणीत्येकमेवेदं पदं प्रथममध्यमोत्तमाश्च त्रयः इति वक्तुं युज्यते तत्कथं परस्मैपदानि नव नव वचनानीत्युच्यते सूत्रे तेषामनुपात्तत्वात्, त्रीणि त्रीणीत्यस्यार्थं कथयता शब्दसाम्यं निराकृतमिति **हेमकरः**। **महान्तस्तु** अर्थकृतमिति अर्थशब्दोऽत्र समुदायपरः।

ततश्चार्थकृतं त्रिकसमुदायकृतं न शब्दकृतमिति शब्दपदेनात्र तितसादिव्यक्तिरुच्यते, ततश्च न शब्दकृतं न तितसादिव्यक्तिकृतम्, तदेव दर्शयति – तथाहीति । हेतुरत्र त्रीणि त्रीणि इति पदम्, अन्यथा त्यादीनि प्रथममध्यमोत्तमा इत्येव कृतं स्यादिति पूर्वमेव व्याख्यातम् ॥४१९।

**[ समीक्षा ]**

परस्मैपदसंज्ञक तथा आत्मनेपदसंज्ञक ९-९ प्रत्ययों में जो तीन-तीन त्रिक हैं, उनकी क्रमशः प्रथमपुरुष, मध्यमपुरुष तथा उत्तमपुरुष संज्ञा दोनों ही आचार्यों ने की है। प्रथमपुरुष का व्यवहार अन्यार्थ में, मध्यमपुरुष का युष्मदर्थ में एवं उत्तमपुरुष का अस्मदर्थ में होता है। सामान्यतया परोक्षविषय में प्रथमपुरुष का तथा प्रत्यक्ष विषय में मध्यम–उत्तमपुरुष का प्रयोग किया जाता है। पाणिनि का संज्ञाविधायक सूत्र है– "तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः" (अ० १।४।१०१)। प्रथम - मध्यम - उत्तम संज्ञाओं के साथ पुरुषशब्द की योजना लोकप्रसिद्धि तथा [1]पूर्वाचार्यकृत व्यवहार के आधार पर की जाती है। क्रियानिरूपित कर्तृत्व स्त्री तथा नपुंसक में भी रहने से इनकी योजना प्रथम-मध्यम-उत्तम के साथ क्यों नहीं की जाती। इसके समाधान में व्यपदेशभूयस्त्व को कारण बताया गया है। प्राचीन आचार्यों द्वारा इनका प्रयोग –

**निरुक्त –** तास्त्रिविधा ऋचः। परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिक्यश्च। तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य। अथ प्रत्यक्षकृता मध्यमपुरुषयोगाः। त्वमिति चैतेन सर्वनाम्ना अथाध्यात्मिक्य उत्तमपुरुषयोगाः। अहमिति चैतेन सर्वनाम्ना (७।१)।

**काशकृत्स्नधातुव्याख्यान –** धातौ साधने दिशि पुरुषे चिति तदाख्यातम् (सू० १)।

**अथर्ववेदप्रातिशाख्य –** अस्तेः प्रेषण्या मध्यमस्यैकवचनम् भूतेऽद्यतन्या मध्यमस्यैकवचनम् (२।१।११; २।२।५)।

अर्वाचीन आचार्यों द्वारा प्रयोग –

**जैनेन्द्रव्याकरण –** मिङस्त्रिशोऽस्मद्युष्मदन्याः (१।२।१५२)।

**हैमशब्दानुशासन –** त्रीणि त्रीणि अन्ययुष्मदस्मदि (३।३।१७)।

---

१. अत्र प्रथमादिषु पुरुषसंज्ञा तु प्राचीनाचार्यशास्त्रसिद्धेति बोध्यम् (सि० कौ० – बा० म० १।४।१०१)।

**अग्निपुराण** – तिप्तसन्तीति प्रथमः पुमान् ।
सिप्थस्थमध्यमनरो मिब्बस्मस् चोत्तमः पुमान् ।।
तातांझ प्रथम उक्तस्थासाथांध्वं च मध्यमः ।
उत्तम इवहिमहि ........................ ।। (३५७/५–६) ।

**[ विशेष वचन ]**

१. वीप्सायामत्र द्विर्वचनम् । वीप्सा चात्र प्रथमादिसंज्ञागुणेनेति (दु० टी०; वि० प०)।

२. प्रतिपत्तिरियं गरीयसीति युक्तोऽशेषपरिग्रहाय वीप्सानिर्देशः (दु० टी०) ।

३. पुरुषा ह्येते लोकतः सिद्धाः (दु० टी०) ।

४. एते हि लोके पुरुषत्वेन प्रतीताः (वि० प०) ।

५. यस्मात् प्रथमादयोऽर्थाः पुरुषत्वेन पुरुषशब्दवाच्यत्वेन प्रतीताः, ये च पुरुषास्ते च पुंस्त्वधर्मविशिष्टा एव । अतस्तस्य पुरुषस्य पुंस्त्वधर्मविशिष्टत्वेन तदर्थवाचका एते प्रथमादयः शब्दाः पुंल्लिङ्गा एवेत्यर्थः (क० च०) ।

६. महान्तस्तु अर्थकृतमिति अर्थशब्दोऽत्र समुदायपरः, ततश्चार्थकृतं त्रिकसमुदायकृतं न शब्दकृतमिति शब्दपदेनात्र तितसादिव्यक्तिरुच्यते । ततश्च न शब्दकृतं न तितसादिव्यक्तिकृतम् (क० च०) ।।४१९।

## ४२०. युगपद्वचने परः पुरुषाणाम् [ ३।१।४ ]

**[ सूत्रार्थ ]**

एक क्रिया वाले काल को जहाँ अनेक पुरुष कह रहे हों तो वहाँ परवर्ती पुरुष का प्रयोग होता है ।।४२०।

**[ दु० वृ० ]**

युगपदेककालार्थः । युगपद् वचने एकक्रियाकालाभिधाने पुरुषाणां मध्ये यः परः स भवति । स च त्वं चाहं च पचामः । स च त्वं चाहं चापाक्ष्म । स च त्वं चाहं च पक्ष्यामः । **वचनमतन्त्रम्** । स च त्वं च पचथः । त्वं चाहं च पचावः । युगपद्वचन इति किम् ? स पचति, त्वं पक्ष्यसि, अहमपाक्षमिति भिन्नकालोक्तौ वयमपाक्ष्मेति मा भूत् । वचनग्रहणं युगपद्विषये मा भूत् । स पचति, त्वं पचसि, अहं पचामि । पचामीत्येवं प्राप्नोति । अप्रवृत्तौ पर्याये वा प्राप्ते परिभाषेयम् ।।४२०।

**[ दु० टी० ]**

युग० । **उक्तिर्**वचनमभिधानम्, षष्ठ्यर्थोऽत्र समासे भावनीयः । अव्ययोऽयं

युगपत् समानकाल इत्याह – एकक्रियाकालाभिधान इति । क्रियायाः कालः क्रियाकालः क्रियया यः क्रोडीकृतो भूतभविष्यद्वर्तमानतया भिद्यमानः कालो गौण उच्यते, एकश्चासौ क्रियाकालश्चेति तस्याभिधानम् **एकक्रियाकालाभिधानम्** । एवं त्वं च देवदत्तश्च पचथः, अहं च देवदत्तश्च पचावः, त्यदादीनां सामान्यवचनत्वादन्यार्थाभिधानमपि । स च त्वं चाहं च वयं पचाम इति भवत्येव । अप्रवृत्तावित्यादि । **जातौ पदार्थे** सकृल्लक्ष्ये लक्षणस्य चरितार्थत्वादप्रवृत्तिरेव नान्या निवृत्तिरिति । द्रव्ये तु पदार्थव्यक्तिभेदाच्छास्त्रभेद इति व्यक्त्यन्तरशास्त्रयोरकृतार्थत्वात् पर्यायप्रसङ्ग इति युगपद्वचनं चात्र लिङ्गं परिभाषाया इति । ननूभयोः सावकाशत्वे **'पूर्वपरयोः परो विधिर्बलवान्'** (कलाप० २२८।७०) इति भवत्येद ? सत्यम् । युगपद्वचने पूर्वपरत्वविवक्षा गरीयसीति परिभाषेयम् ॥४२०।

## [वि० प०]

युगपत्० । युगपच्छब्दोऽयमव्ययस्तत्र समासे षष्ठ्यर्थो भावनीय इति शब्दान्तरेणार्थं दर्शयति – एकक्रियाकालाभिधान इति । क्रियायाः कालः क्रियाकालः क्रियया यः क्रोडीकृतो भूतभविष्यद्वर्तमानतया स क्रियाकालः । एकश्चासौ क्रियाकालश्चेति **एकक्रियाकाल**स्तस्याभिधानं तस्मिन्निति । अत्र 'अपाक्ष्म' इति पचेरद्यतनीपरस्मैपदोत्तमपुरुषस्य बहुवचनम्, सिजद्यतन्यां सिच्, अडागमः, अस्य च दीर्घः, चवर्गस्य किरसवर्णे, निमित्तात् षत्वम् । वचनमतन्त्रमिति सूत्रे लिङ्गं संख्या कालश्चातन्त्राणीति, तेन 'पुरुषाणाम्' इति यद् बहुवचनम्, तदतन्त्रमप्रधानम् । अतो द्वयोरपि पुरुषयोर्मध्ये यः परः सोऽपि भवतीत्यर्थः । अपाक्षमिति अद्यतन्या अम्, अन्यत् सकलं पूर्ववत् । उक्तिर्वचनमभिधानम् **पर्यायाः** । एकक्रियाकालस्येति कर्मणि षष्ठी । तेनैकक्रियाकाले वाच्येऽभिधेये इत्यर्थः सिद्धो भवति । अन्तरेण पुनर्वचनग्रहणं युगपदिति विषयसप्तम्यपि स्यात् । विषयश्चानभधेय इति एकक्रियाकालस्यानभिधीयमानत्वात् तत्साधनान्यपि नाभिधीयन्ते इति न तत्कृते द्विवचनबहुवचने इति, अपि तूत्सर्गसिद्धमेकवचनमेव प्राप्नोतीत्यालोच्याह – वचनग्रहणमित्यादि । अप्रवृत्तावित्यादि । इह हि **पदार्थद्वयं जातिर्व्यक्तिश्च** । तत्र जातौ पदार्थे एकमेवेदं लक्षणमिति सकृल्लक्ष्ये लक्षणस्य चरितार्थत्वात् । युगपद्वचने समस्तपुरुषप्राप्तियोग्यवाक्ये न कस्यचित् प्रवृत्तिः स्यात् ।

तथाहि प्रवर्तमानेन पुरुषेण पुरुषान्तरस्य निवृत्तिं कृत्वा प्रवर्तितव्यम् । जातौ चैकं लक्षणमन्यत्र चरितार्थं कथमन्यन्निवर्तयितुं शक्नोति, तस्मादप्रवृत्तिरेव । व्यक्तौ

पदार्थे तु प्रतिलक्ष्ये लक्षणानि भिद्यन्त इति युगपद्‌वचने सर्वेषामेव प्रवृत्तिः स्यात्, अन्यथा एतल्लक्ष्यविषयाणां लक्षणानामकृतार्थत्वादानर्थक्यमापद्येत । न चैकदा अनेकलक्षणमुपपद्यते इति, किन्तर्हि पर्यायेण स्यात्, अतः परिभाषेयं लिङ्गवती। लिङ्गं पुनरस्या युगपद्‌वचनमेव, तेन हि परः पुरुषो लिङ्ग्यते । न च वक्तव्यम् **'पूर्वपरयोः परविधिर्बलवान्'** (कलाप० २२८।७०) इति भविष्यतीति किमनेनेति? यतो युगपद्‌वचनक्रमाभिधानम्, तत्कथं पूर्वपरविवक्षेति तदनुषङ्गिणां लक्षणानां परमेवास्तीति चेत् तथापि **प्रतिपत्तिरियं गरीयसीति** ।।४२०।

**[क० च०]**

युगपत्० । ननु **परमते 'विप्रतिषेधे परं कार्यम्'** (का० परि० ६९) इति न्यायाद् यत्र त्यादिप्रत्ययस्य नामयुष्मदस्मत्कर्तृकैकक्रियैककालप्रतिपादने योग्यतास्ति, तत्रैव पुरुषत्रयप्राप्तियोग्ये परः पुरुषो विधीयते । तेन स पचति, त्वं पचसि, अहं पचामीत्यत्र भिन्नस्थानविहितानां प्रत्ययानां सर्वकर्तृकैकक्रियाकालस्याभिधाने शक्त्यभावाद् विप्रतिषेधो नास्तीति न तत्र परपुरुषप्राप्तिविषयः । **अस्मन्मते** तु क्रियाया एककालत्वबोध एव पुरुषाणां मध्ये यः परः स पुरुषो भवन्, स पचति, त्वं पचसि, अहं पचामीत्यत्रापि स्याच्चेदुच्यते – युगपद्‌वचन इति भावविहितयुडन्तेन सह कर्मणि षष्ठ्याः समासः । तच्च कर्म कर्तारमन्तरेण न संभवतीति क्रियाकालाभिधाने प्रत्ययस्यैव शक्तैर्दृष्टत्वात् त्यादिप्रत्ययेनैव कर्तावगम्यते । ततश्च यः प्रत्ययोऽनेन परिभाषितव्यः, प्रत्यासत्त्या यदि तेनैव सर्वकर्तृकक्रियाकालोऽभिधातुं शक्यते तत्रैवास्य विषय इति । तेन 'स पचति' इत्यादौ परपुरुषस्यानेककर्तृक्रियाया एककालाभिधानेऽशक्तत्वान्नास्य सूत्रस्य विषय इति । अशक्तत्वं चात्र एकपचधातोरनेककर्तृगतक्रियावाचकत्वाभावात्, तस्माद् यत्रैकेनैव धातुना नामयुष्मदस्मद्‌गतक्रियाभिधीयते, प्रत्ययेन च तस्याः क्रियायाः एककालः प्रतिपद्यते तत्रैवास्य सूत्रस्य विषय इति **निर्गलितार्थः** ।

ननु यस्मिन्नेव कर्तरि प्रथमपुरुषादिर्विधीयते तत्कर्तृकक्रियाया स एव वर्तमानादिकालं प्रथमपुरुषादिरभिधातुं शक्नोति । **"नाम्नि प्रयुज्यमाने"** (३।१।५) इत्यादिभिर्योगैः परस्परविरुद्धार्थेषु प्रथममध्यमोत्तमानां विधीयमानत्वात् । ततश्च 'स च त्वं चाहं च पचामः' इत्यादिषु नामाद्यनेककर्तृकक्रियाया एककालस्योत्तमपुरुषेणानभिधानात् कथमस्य विषय इति । न च अत एव वचनान्नामयुष्मदस्मदर्थेऽपि उत्तमपुरुषस्य विधिरिति वाच्यम्, अप्राप्तिप्रापकत्वेनास्य सूत्रस्य विधित्वापत्तेः । तथा च

सति परिभाषेयं न स्यात्, अथ मा भूदिति को दोष इति चेन्न, यावता अप्रवृत्तौ पर्याये वा प्राप्ते परिभाषेयमिति **वृत्तौ, टीकायां** तु पूर्वपरयोरिति न्यायेन सिद्धौ **वचनमिदं सुखार्थमिति** यदुक्तं तन्न संगच्छते ? सत्यम्। **"शेषात् कर्तरि परस्मैपदम्"** (३।२।४७) इति सामान्यवचनेन विहितः प्रत्ययो बहूनपि कर्तॄन् शक्नोति वक्तुम्, यथा 'देवदत्तयज्ञदत्तविष्णुमित्राः पचन्ति' इत्युक्ते एकेन प्रत्ययेनानेकेषां कर्तॄणामभिधानमिति। यद्येवं **"नाम्नि प्रयुज्यमानेऽपि प्रथमः"** (३।१।५) इत्यादि वचनमपि व्यर्थमिति चेन्न, नियमार्थत्वेन तेषां सार्थकत्वात्।

ननु यदि **"नाम्नि०"** (३।१।५) इत्यादिवचनानि नियमार्थानि तदा कथं 'स च त्वं चाहं च पचामः' इत्यत्र **"शेषात् कर्तरि"** (३।२।४७) इत्यस्य प्रसक्तिनियमव्यावृत्तिविषयत्वात्। तथाहि **नियमश्च द्विधा** सम्भवति – प्रत्ययनियम उपपदनियमश्च। तत्राद्ये नाम्न्येव प्रथम इत्युक्ते युष्मदस्मदोः **"शेषात् कर्तरि"** (३।२।४७) इत्यनेन सामान्यसूत्रेण प्राप्तोऽपि प्रथमपुरुषो नियमव्यावृत्त्या न प्रवर्तते। एवं युष्मद्येव मध्यमः इत्युक्तेऽपि नियमव्यावृत्त्या **"शेषात् कर्तरि"** (३।२।४७) इत्यादिना प्राप्तोऽपि मध्यमो नाम्नि अस्मदि च न प्रवर्तते, एवमस्मद्येव उत्तम इत्यत्रापि। तथा उपपदनियमे च **"नाम्नि प्रथमः"** (३।१।५) एवेत्युक्ते मध्यमोत्तमयोर्नाम्नि प्रसङ्ग एव नास्ति। एवं युष्मदस्मदोर्मध्यमोत्तमयोरेवेत्युक्तेऽपि ? सत्यम्। **"नाम्नि प्रयुज्यमानेऽपि प्रथमः"** (३।१।५) इत्यत्र प्रयुज्यमानग्रहणबलात् 'नाम्नि' इत्यस्य नाम्न्यर्थेऽभिधेय इत्यर्थः पर्यवस्यति, ततश्च नाम्न्यभिधीयमान एव प्रथम इत्युक्तेऽनभिधेये न भवति इति नियमव्यावृत्तिः। यथा देवदत्तेन हन्यसे त्वम् इति। एवं युष्मद्यभिधेय एव भवति (अनभिधेये न भवति) त्वया पच्यते ओदनः। एवम् अस्मद्यभिधेय एव भवति (अनभिधेये न भवति) मया पच्यते ओदनः। 'ततश्च स च त्वं चाहं च पचामः' इत्यत्र नामयुष्मदस्मत्कर्तृकाणामभिधेयत्वेन नियमव्यावृत्तेरविषयत्वात् **"शेषात् कर्तरि"** (३।२।४७) इति सामान्यवचनेन प्रत्ययविधिर्दुर्निवार एव। अभिधाननियमस्तु सर्वैरेवावश्यमङ्गीकर्तव्य एव, अन्यथा 'पाचकोऽहं व्रजामि' इत्यत्रापि नामयोगात् कदाचित् प्रथमपुरुषोऽपि स्यात्। तत्र च वक्तव्यमस्मदर्थ एव विशेष्यत्वेन मुख्यत्वादभिधीयते, न तु नामार्थस्तस्य विशेषणत्वेनाप्रधानत्वादिति।

ननु पूर्वोक्तयोरुपपदप्रत्ययनियमयोरग्रहणे को हेतुश्चेदुच्यते – अनेन विधीयमानस्य परपुरुषस्य प्रस्तुतत्वेन मुख्यत्वात् परपुरुषाश्रित एव नियमो गृह्यते न

तूपपदाश्रित इति । तथा "**नाम्नि०**" (३ । १ । ५) इत्यादिषु अभिधेये सप्तम्याः श्रुतत्वात् प्रत्ययनियमो भवन् अभिधेयाश्रित एव न केवलं नामाद्याश्रित इति **संक्षेपः**। युगपद्वचन इति किमिति **वृत्तिः** । **अस्यार्थः –** युगपद्वचनग्रहणाभावे परः पुरुषाणामिति स्थिते समस्तपुरुषप्राप्तिप्रसङ्गे परः पुरुषो भवतीति वाक्यार्थः स्यात् । ततश्च 'स च त्वं चाहं च पचामः' इत्यादिकं सिध्यत्येव, किन्तु पूर्वपरयोरित्यादिन्यायादेव पूर्वोक्तोदाहरणेषु उत्तमपुरुषस्य सिद्धत्वाद् वचनस्यानर्थकतया भिन्नकालोक्तौ विधिः स्यादित्याशङ्क्याह – स पचति, त्वं पक्ष्यसि, अहम् अपाक्षम् इत्यादि ।

**अयमाशयः –** एककाले 'स च त्वं चाहं च पचामः' इत्यादिषु परः पुरुषः सुतरां सिध्यत्येव । "**सम्प्रति वर्तमाना**" (३ । १ । ११) इत्यादिभिर्योगैः "**शेषात् कर्तरि**" (३ । २ । ४७) इत्यस्यैकवाक्यतया एकक्रियाकालप्रतीतौ विरोधे पूर्वपरयोरित्यादिन्यायात् परपुरुषस्य विधीयमानत्वात् । विरोधेऽपि 'स पचति' इत्यादिप्रयोगः सिध्यत्येव । "**सम्प्रति वर्तमाना**" (३ । १ । ११) इत्यादिभिर्योगैः "**शेषात् कर्तरि**" (३ । २ । ४७) इत्यादिनैकवाक्यतया स्वे स्वे काले प्रत्येकं कर्तरि वाच्ये वर्तमानादीनां विधीयमानत्वात् । किन्तु "**परः पुरुषाणाम्**" (३ । १ । ४) इति (त्यस्यान्यथानुपपत्त्या) भिन्नकाले परपुरुषविधायकत्वे "**शेषात् कर्तरि**" (३ । २ । ४७) इत्यनेनैव तस्यान्वये सति (एकेन धातुना प्रत्ययेन च) भिन्नकाले परवात् प्रवर्तनं साधनाभिधाने परः स्यादिति नामयुष्मदस्मदामुक्तत्वेन 'स च त्वं च अहं चापाक्ष्म' इति **दुष्टः प्रयोग** एव स्यात् । ननु तथापि **वृत्तिकृता** भिन्नकालोक्तौ 'स चत्वं चाहं चापाक्ष्म' इति वक्तुम् उचितम् । कथं वयमपाक्ष्मेत्युक्तं नामयुष्मदोरयोगेनानेन बहुवचनप्राप्तेरभावात् ? सत्यमेतत् । किन्तु त्यादीनां सामान्यवाचित्वेनास्मच्छब्दस्य नामयुष्मदस्मदर्थाभिधायकत्वात् **लाघवार्थं** कर्तृत्रितयबोधनार्थमेव वयमपाक्ष्मेत्युक्तवान् इत्यदोषः।

तथा च **स्थितिपक्षे टीकाया**मपि त्यादीनां सामान्यवाचित्वात् सामान्यार्थाभिधानमिति 'स च त्वं चाहं च पचामः' इति भवितव्यमेवेत्युक्तम् । स्थितिपक्षादन्यस्मिन् पक्षेऽयमेव विशेषः। यत्तु वयमिति भिन्नकालोक्तावपि वयमपाक्ष्मेति पदं भवतीति । नन्वस्मिन् पक्षे वर्तमानादिकालत्रितयाभिधाने परः पुरुषो भवन् वर्तमानभविष्यतोरपि परः पुरुषो भवितुमर्हति तत्कथमद्यतन्या एव परः पुरुषः प्रत्युदाहृत इति ? सत्यम् । 'स पचति, त्वं पक्ष्यसि, अहमपाक्षम्' इति कालत्रितयस्यार्थकथनवाक्ये यत्कालवाचकत्वेन यस्या विभक्तेः परपुरुषो दृष्टः, प्रत्यासत्त्या कालत्रितयाभिधानेऽपि तस्या विभक्तेरेव परः पुरुषः प्रवर्तते ।

यद् वा अग्रे वचनग्रहणस्य खण्डनाद् इह युगपद्ग्रहणं खण्ड्यते । ततश्च **"वचने परः पुरुषाणाम्"** इति स्थितेऽयमर्थो भवति । तथाहि पुरुषाणामिति कर्तरि षष्ठी तश्चानेकपुरुषप्रतिपाद्ये सति अप्राप्तस्य परपुरुषस्य वचनबलाद् विधिः स्यादिति वचनग्रहणं युगपद्विषये मा भूदिति **वृत्तिः** । ननु वचनग्रहणाभावे युगपत् परः पुरुषाणाम् इति स्थितेऽपि युगपदिति अभिधेयसप्तम्या युगपदेकक्रियाकालेऽभिधेये परः पुरुषो भवतीति परिभाषेयमुपपद्यत एवेति, किन्त्वभिधेयसप्तमीं प्रति कारणाभावाद् युगपदिति विषयसप्तम्या युगपदेकक्रियाकाले विषये पुरुषाणां मध्ये यः परः स भवतीति अप्राप्तिपूर्वको विधिरित्यपि सम्भवति, ततश्च युगपद्विषयस्यानभिधेयत्वेन नामयुष्मदस्मच्छब्दैरुक्ताः कर्तारोऽपि नाभिधेयाः स्युरिति कालसंबन्धं विना साधनाभिधान एव प्रत्ययानामसामर्थ्यात् ततो न साधनकृतं द्विवचनं बहुवचनमिति, किन्तु पुरुषाणामेककालविषये परः पुरुषो भवन् कस्मिन्नर्थे स्यादिति नियमाभावेन यत्सम्बन्धादुत्तमपुरुषप्राप्तिर्दृष्टा, अनेनापि तदर्थाभिधान एव परोऽभिधीयते । एवं सति अस्मत्कर्तर्येव प्रत्ययो न सर्वसाधनं प्रति । ततश्च 'स पचति, त्वं पचसि, अहं पचामि' इत्यत्र तेन त्वया अहं पचामीति प्रयोगः स्यादित्याशयेनैव **वृत्तिकृता** पचामीत्येवं प्राप्नोतीत्युक्तमिति **कुलचन्द्रा**भिप्रायः । विषयश्चानभिधेय इति एकक्रियाकालस्यानभिहितत्वात् तत्साधनान्यपि नाभिधीयन्त इति । न च तत्कृते द्विवचनबहुवचने, अपि तूत्सर्गसिद्धमेकवचनमेव प्रवर्तते इति **पञ्जीकृन्मते** पचामीत्येवं प्राप्नोतीति **वृत्तिग्रन्थः** कथं संगच्छते, यावता साधनानभिधाने सति **"अन् विकरणः कर्तरि"** (३।२।३२) इति कर्तरि विहिते सार्वधातुके विधीयमानोऽन्प्रत्ययो न स्यादिति **कुलचन्द्रः पञ्जीमा**क्षिपति ।

तत्रैवं युज्यते **पञ्जी**, तथाहि साधनानि बहूनि नाभिधीयन्ते अपि तु एकमेवास्मत्साधनमभिधीयत एवेति **उत्सर्गसिद्धिः**, **"अस्मद्युत्तमः"** (३।१।७) इति सामान्यवचनसिद्धमेकवचनं प्रवर्तत इति । **वस्तुतस्तु** वचनग्रहणाभावे स पचतीत्यादिषु पचित्रयवाच्यानां पचनक्रियाणां वाचकानि यानि पचित्रयाणि तेभ्यो विहिता ये प्रथममध्यमोत्तमास्ते प्रत्येकेनैव स्वीयस्वीयप्रकृतिवाच्यक्रियायाः कालं तदाश्रयसाधनं चाभिदधति स्वभावात् । न तु तत्प्रत्ययानामन्यतमेन पचित्रयवाच्यानां क्रियाणां कालः साधनं चाभिधातुं शक्यत इति । ततश्च नामयुष्मदस्मत्कर्तृकाणां वर्तमानादित्रिककालो विषयभूतो विधीयमानपुरुषवाच्ययोग्यो न भवतीति पचित्रयवाच्यक्रियाणां वर्तमानाद्येककालविषयभूतत्वेन सर्वत्रैव परः पुरुषः स्यादिति । ततश्च 'स पचति'

इत्यादिषु पचामीत्येवमादिकमेव प्राप्नोतीति। एवं च **वृत्तौ** पचामीत्येवं प्राप्नोतीति यदुक्तं तत्र सर्वत्र पचामीत्येवं प्रयोगः स्यादित्यर्थः। अस्मिन् पक्षे **पञ्जी** एवं योजनीया – तत्साधनान्यपि नाभिधीयन्ते परपुरुषेण एकसाधनानि नाभिधीयन्त इत्यर्थः, अपि तूत्सर्गसिद्धं प्रत्येकमेकवचनमेव प्रवर्तत इत्यर्थः। एकमेवेदं लक्षणमिति। जातिपुरस्कारेण लक्षणवाक्यस्य प्रवृत्तौ जातेरेकत्वादेकलक्षणमिति भावः। कथमन्यं निवर्तयितुं शक्नोतीति। अस्मिन् **जातिपक्षे** विधिः स्यादित्यर्थः।

पर्यायेण स्यादिति। यथा ब्राह्मणक्षत्रियादीन् एकस्मिन् पात्रे भोजयेत्युक्तेऽसहभुजां तेषामेकस्मिन् पात्रे एकदा भोजनासम्भवात् पर्यायेण प्रवर्तनमिति, अतः परिभाषेयमिति। ननु यदि व्यक्तिपक्षे परिभाषेयमुच्यते तदानेन परपुरुषप्रवृत्तौ सत्यां **'व्यक्तौ प्रतिलक्ष्यं लक्षणानि भिद्यन्ते'** (कलाप० २२१।५३) इति न्यायादेतल्लक्ष्यं प्रति **''नाम्नि प्रयुज्यमानेऽपि प्रथमः, युष्मदि मध्यमः''** (३।१।५, ६) इति सूत्रद्वयस्यानवकाशत्वे कः समाधिः स्यात्? सत्यमेतत्। परिभाषाकरणादेवानुमीयते एतल्लक्ष्यं प्रति नाम्नि प्रयुज्यमान इत्यादि सूत्रद्वय**माचार्येण** नारब्धमिति **न्यासः**। ननु स च त्वं चाहं चेत्यादिषु प्रयोगेष्वस्मदः परत्वात् पूर्वपरयोरित्यादिनैवोत्तमः पुरुषो भविष्यति किमनेन सूत्रेणेति मनसि कृत्वाह – न च वक्तव्यमिति। यत इति युगपद्वचनमेककालोक्तिः, अक्रमाभिधानमिति न विद्यते क्रमेणाभिधानं प्रयोगो यस्मिन् युगपद्वचन इति विग्रहः। एतदुक्तं भवति – यदि प्रयोगमादाय पूर्वपरव्यवहारः क्रियते, तदा 'अहं च त्वं च स च पचामः' इत्यादिषु परः पुरुषो भवन् नाम्नः परत्वात् प्रथमः पुरुष एव स्यात्। तदनुषङ्गिणामिति नामयुष्मदस्मत्संबन्धिनाम् इत्यर्थः। **प्रतिपत्तिरियं गरीयसीति**। सूत्रे स्थिते हि पुरुषाणामिति बहुवचनेन नाम्नीत्यादिसूत्रक्रमस्थितप्रथममध्यमोत्तमानामुपस्थापितत्वेन पुरुषाणां मध्ये परत्वविचारे सूत्रक्रमेणैव परत्वं गृह्यते इति किञ्चिद् **गौरवमि**ति ॥४२०।

**[समीक्षा]**

पाणिनि ने **''कडाराः कर्मधारये''** (अ० २।२।३८) सूत्रपर्यन्त की संज्ञाओं में एकसंज्ञाधिकार घोषित किया है – ''आकडारादेका संज्ञा'' (अ० १।४।१)। उसमें भी परवर्तिनी संज्ञा ही प्रवृत्त हो, तदर्थ ''विप्रतिषेधे परं कार्यम्'' (अ०१।४।२) सूत्र बनाया है। कातन्त्रकार ने तीनों पुरुषों के विधिसूत्र बनाने से पूर्व केवल उन्हीं के संबन्ध में यह परिभाषारूप नियम प्रस्तुत किया है कि दो या तीनों पुरुषों का जहाँ प्रयोग हुआ हो वहाँ परवर्ती पुरुष की **प्रवृत्ति** होगी, अर्थात् क्रियापद का

प्रयोग परवर्ती पुरुष के अनुसार प्रवृत्त होगा। जैसे – 'स च त्वं च अहं पचामः'। यहाँ प्रथमपुरुष का 'सः' पद, मध्यमपुरुष का 'त्वम्' पद तथा उत्तम पुरुष का 'अहम्' पद प्रयुक्त है, तीनों का ही पाकक्रिया की प्रवृत्ति से सम्बन्ध है, ऐसी स्थिति में क्रियापद का प्रयोग किस पुरुष के अनुसार हो इस विचारणा पर यह निर्णय दिया गया है। तदनुसार 'सः' के अनुसार 'पचन्ति' तथा 'त्वम्' के अनुसार 'पचथ' क्रियापद का प्रयोग साधु नहीं माना जाता, बल्कि 'अहम्' के अनुसार उत्तमपुरुष बहुवचन की क्रिया 'पचामः' ही साधु होती है। 'स च त्वं च' के प्रयोग में 'पचथः' क्रियापद समीचीन होगा।

**[विशेष वचन]**

१. वचनमतन्त्रम् (दु० वृ०)।

२. अप्रवृत्तौ पर्यायेे वा प्राप्ते परिभाषेयम् (दु० वृ०)।

३. जातौ पदार्थे सकृल्लक्ष्ये लक्षणस्य चरितार्थत्वाद् द्रव्ये तु पदार्थे व्यक्तिभेदाच्छास्त्रभेदः इति व्यक्त्यन्तरशास्त्रयोरकृतार्थत्वात् पर्यायप्रसङ्गः (दु० टी०)।

४. सूत्रे लिङ्गं संख्या कालश्चातन्त्राणीति तेन पुरुषाणामिति यद् बहुवचनं तदतन्त्रमप्रधानम्। अतो द्वयोरपि पुरुषयोर्मध्ये यः परः सोऽपि भवतीत्यर्थः (वि० प०)।

५. इह हि पदार्थद्वयं जातिर्व्यक्तिश्च, तत्र जातौ पदार्थे एकमेवेदं लक्षणमिति सकृल्लक्ष्ये लक्षणस्य चरितार्थत्वात्। ....... व्यक्तौ पदार्थे तु प्रतिलक्ष्ये लक्षणानि भिद्यन्ते इति युगपद्वचने सर्वेषामेव प्रवृत्तिः स्यात् (वि० प०)।

६. एतत्परिभाषाकरणादेवानुमीयते एतल्लक्ष्यं प्रति नाम्नि प्रयुज्यमान इत्यादिसूत्रद्वयमाचार्येण नारब्धमिति न्यासः (क० च०)।

७. प्रतिपत्तिरियं गरीयसीति (क० च०)॥४२०।

## ४२१. नाम्नि प्रयुज्यमानेऽपि प्रथमः [३।१।५]

**[सूत्रार्थ]**

युष्मद्-अस्मद् से भिन्न स्याद्यन्त पद (=नाम) के प्रयुक्त होने अथवा प्रयुक्त न होने पर भी प्रथम पुरुष का प्रयोग होता है॥४२१।

**[दु० वृ०]**

नाम्नि प्रयुज्यमानेऽप्रयुज्यमानेऽपि प्रथमः पुरुषो भवति। सः पचति, तौ पचतः, ते पचन्ति। स पचते, तौ पचेते, ते पचन्ते। एवं पच्यते घटः, पच्येते

घटौ, पच्यन्ते घटाः। अप्रयुज्यमानेऽपि – पचति, पचतः, पचन्ति। एवं सर्वत्र। प्रयुज्यमानग्रहणं किम्? धातुना युक्ते यथा स्यात्। तेन देवदत्तेन हन्यसे त्वम्, मध्यम एव युष्मद्योगात्॥४२१।

### [दु० टी०]

**नाम्नि०**। नाम्यर्थे **कर्तरि** कर्मणि प्रथमस्तावद् भवति प्रयोगेऽक्रियमाणेऽपि भवतीत्यर्थः। एतच्चोत्तरार्थम्, इह तु सामान्यवाचकाः शब्दाः प्रकरणमन्तरेण विशेषे वर्त्तितुं नोत्सहन्ते इति देवदत्तादिशब्दाः प्रयोगमर्हन्त्येव। **कश्चित्** प्रयुज्यमानग्रहणं प्रत्याचष्टे। युष्मदस्मदर्थे भवन्नपि यदानुवादकरूपेण स एवार्थः शब्देनाभिधीयते तदा प्रयुज्यत इति? सत्यम्। यत्रानूद्य विधेयं भवति तत्रेदं युक्तम्। तस्मादनुवाद-मन्तरेणापि प्रयोग इष्यते इत्याह – प्रयुज्यमान इत्यादि। ननु किमर्थमिदं यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति सामान्यविहितं दधिदानं साक्षादादिष्टेन तक्रदानेन कौण्डिन्याद् बाधितं कौण्डिन्यवर्जितेभ्योऽवतिष्ठते, तद्वदत्रापि **"युष्मदि मध्यमः, अस्मद्युत्तमः"** (३।१।५, ६) इति वचनात्? सत्यम्। अर्थनियामकावेतौ किं युष्मदस्मदोरेव मध्यमोत्तमौ उत मध्यमोत्तमावेव युष्मदस्मदोरिति विप्रतिपद्यते ततश्चाद्ये विकल्पेन प्रथमोऽपि युष्मदस्मदोर्भवितुमर्हति॥४२१।

### [वि० प०]

**नाम्नि०**।कर्तृकर्मस्वरूपे नाम्यर्थे प्रथमस्तावद् भवति अप्रयुज्यमानेऽपि नाम्नि भवतीत्यपेरर्थः। एवमुत्तरत्रापि। अप्रयुज्यमानेत्यादि। नन्वत्रापि धातुना देवदत्तस्य नाम्नोऽस्त्येव योगस्तस्य कर्तृत्वादिति चेत्? सत्यमेतत्, किन्तु गौणोऽसौ युष्मदर्थस्या-भिधीयमानत्वात् तेनैव मुख्यः सम्बन्ध इति। यद्येवं युष्मदर्थस्य सम्बन्धस्य मुख्यत्वाद् **"युष्मदि मध्यमः"** (३।१।५) इति प्रवर्तिष्यते किमनेनेति? एवमुत्तरत्रापि 'त्वया पच्यते ओदनः' इत्यत्र नामार्थस्य मुख्यत्वात् प्रथमो भविष्यति। तथा 'मया पच्यते ओदनः' इत्यत्रापि, कुतः **"अस्मद्युत्तमः"** (३।१।६) इत्यस्य प्रसङ्गः? सत्यम्? **सुखार्थमेव** प्रयुज्यमानग्रहणम् इति॥४२१।

### [क० च०]

नाम्नि०। ननु नाम्नीत्यनेन किं स्याद्यन्तशब्दः किं स्याद्यन्तार्थो वा गृह्यते। **तत्राद्ये** 'कर्तृकर्मस्वरूपे नाम्यर्थे प्रथमस्तावद् भवति' इति **टीकापञ्जी**भ्यां सहैक-वाक्यस्य **विरोधः** स्यात्, नाम्नीत्यस्य कर्तृकर्मस्वरूपेण सह सामानाधिकरण्येन निर्दिष्टत्वात्। **द्वितीये** तु प्रयुज्यमानग्रहणान्वयो न स्यात्, यावता प्रयुज्यते इति प्रयुज्यमानः प्रयोगस्तस्य च शब्दस्वरूपत्वेनार्थेन सह सामानाधिकरण्याभाव इति?

सत्यम् । उभयथाप्यदोषः । तथाहि नाम्नीत्यनेन स्याद्यन्तस्य प्रतिपादितत्वेन **टीकापञ्जिका**पङ्क्त्योर्नाम्नीत्यस्य कर्तृकर्मस्वरूपार्थेन सह सामानाधिकरण्येन नान्वयः, किन्तु वैयधिकरण्येन । तथाहि नाम्नीति भावसप्तमी, ततश्च नाम्नि प्रयुज्यमाने सति कर्तृकर्मस्वरूपार्थे प्रथमस्तावद् भवतीति अप्रयुज्यमानेऽपीत्यर्थः ।

**द्वितीये** तु प्रकर्षेण युज्यते इति प्रयुज्यमानं प्रत्ययान्तेन धातुना सह सामानाधिकरण्येनान्वितस्वरूपम् इति योगार्थस्यावश्यमङ्गीकर्तव्यत्वात्, नामवाच्यार्थेन सह प्रयुज्यमानः इत्यस्य सूत्रे सामानाधिकरण्येनान्वयो घटत एव । अस्मिन् पक्षे **पञ्जी** एवं व्याख्येया । कर्तृकर्मस्वरूपे नाम्न्यर्थे नामवाच्येऽर्थे प्रथमस्तावद् भवतीत्यनेन सूत्रार्थ उपदर्शितः । तत्रैव विशेषमाह – अप्रयुज्यमानेऽपीत्यादि **पञ्जी** । तत्र नाम्नीत्यनेन स्याद्यन्त उच्यते । ततश्च नाम्नि स्याद्यन्ते प्रयुज्यमानेऽपिशब्दादप्रयुज्यमानेऽपीत्यर्थः । प्रयुज्यमानग्रहणं किमिति **वृत्तिः** । ननु प्रयुज्यमानग्रहणं किमर्थं **"नाम्नि प्रथमः"** इत्युक्तेऽपि नाम्न्यर्थे गम्यमानेऽप्रयुज्यमाने प्रयुज्यमाने च नाम्नि अविशेषाद् भविष्यति ? सत्यम्, **'सप्तम्या निर्दिष्टे पूर्वस्य'** (का० परि० २१) इति न्यायात् परभूत एव नाम्नि पूर्वस्य प्रथमः स्यादिति । यथा 'पचति देवदत्तः' इत्यतः प्रयुज्यमानग्रहणं कृत्वा पूर्वभूतेऽपि नाम्नि परस्य प्रथमो यथा स्यादित्येतदर्थं भविष्यति । **पाणिनिना**ऽपि एतदर्थमेवोपपदग्रहणं प्रदत्तमिति **न्यासकृता**प्युक्तमिति । नैवम्, यत्र सत एव पूर्वस्य कार्यं विधीयते । तत्रैव **'सप्तम्या निर्दिष्टे पूर्वस्य'** (का० परि० २१) इत्यस्या परिभाषाया विषय इति । इह त्वसत एव प्रथमपुरुषस्य कथं पूर्वत्वं प्रतिपत्तव्यमिति सत्यमेतत् । इदं प्रयुज्यमानग्रहणं परत्रैव सफलम्, अन्यथा उक्तार्थत्वाद् युष्मदस्मच्छब्दयोः प्रयोगो न स्यादिति **कुलचन्द्र**स्याभिप्रायः ।

अस्मिन् पक्षेऽपि **वृत्तिरेवं** योज्या-प्रयुज्यमानग्रहणं किमर्थमिति, प्रयुज्यमानग्रहणस्योत्तरार्थत्वेन **किमित्यर्थः** । तत्रैव फलं दर्शयति – धातुनेत्यादि । प्रत्ययान्तेन धातुना युक्ते सामानाधिकरण्येनान्विते युष्मद्यस्मदि च प्रयुज्यमाने इत्यर्थः । तेन हेतुना 'देवदत्तेन हन्यसे त्वम्' इति त्वमित्यस्य प्रयोगः सिद्धः, अन्यथा युष्मद्योगात् मध्यम एव स्यान्न युष्मच्छब्दप्रयोग इत्यर्थः । ननु यदि प्रयुज्यमानग्रहणस्य **परसूत्रे** एवं फलं तदा तत्रैव क्रियतां किमत्र पाठेन ? सत्यम्, यदिह प्रयुज्यमानग्रहणमपात्तं तदवयवार्थस्योपस्थापनार्थम्, तेन प्रकर्षेण युज्यमानं सम्बध्यमानं प्रत्ययान्तधातुना सामानाधिकरण्यरूपमित्यर्थः सिद्धो भवति, तथा प्रयुज्यमानग्रहणं सामानाधिकरण्यार्थमिति **वररुचिः** । एतदेव मनसिकृत्याह – **पञ्जीकारो**ऽपि धातुना योगमात्रे पूर्वपक्षयित्वा सिद्धान्तयति चेत् सत्यमित्यादि । अस्मिन् पक्षे **वृत्तिरेवं**

व्याख्यातव्या। तथाहि प्रयुज्यमानग्रहणं किमिति प्रयुज्यमानग्रहणस्यान्वर्थाश्रयणेन किमित्यर्थः।

**फलं** चाह – धातुनेति युष्मद्योगान्मध्यम एव स्यान्न प्रथम इत्यर्थः। प्रयुज्यमानग्रहणं **सुखार्थ**मिति। ननु कथमिदमुच्यते यावता उक्तार्थत्वेन युष्मदस्मदोः प्रयोगः सिध्यतीत्येतदेव प्रयोजनमस्तीति। तथा च **टीकाया**मपि एतच्चोत्तरार्थमित्युक्तम् ? सत्यम्। प्रयुज्यमानग्रहणस्य **द्व्यर्थः– रूढ्यर्थो योगार्थश्च** घटते, तत्राविशेषादुभयोरेव ग्रहणं न चावयवार्थपक्षेऽपिशब्दान्वये नामादौ समानाधिकरणेऽसमानाधिकरणेऽपि प्रथमादिः स्यादिति वाच्यम्, यावता अन्वर्थाश्रयणेऽपि असमानाधिकरणे प्रथमाद्युत्पत्तौ तदाश्रयणस्याव्यावर्त्तकत्वेन वैफल्यमेव स्यात्, अवयवार्थापेक्षया रूढ्यर्थस्य शीघ्रोपस्थितत्वात् तत्रैवापिशब्दान्वयः, तेनावयवार्थमादाय **सुखार्थ**मित्युक्तम्, **रूढिपक्षे** तु उत्तरार्थमेवेति न कश्चिद् दोषः। यद् वा नाम्नीत्यादिसूत्रे नाम्नेति सहार्थे तृतीया एव निर्दिश्यताम्, ततश्च नामादियोगे प्रथमादिविधिरिति सूत्रार्थे गौणमुख्यन्यायेन मुख्ययोगग्रहणादेव देवदत्तेन हन्यसे त्वम् इत्यादिकं सर्वमुपपद्यते, किं प्रयुज्यमानग्रहणेन ? न च सहार्थे तृतीयानिर्देशेन नामादिप्रयोग एव स्यात्, न तु तदप्रयोगे इत्येतदर्थं प्रयुज्यमानेऽपीति दातव्यमिति वाच्यम्, यावता सूत्रेण सहागतः, पुत्रेण स्थूलो गोमान् इत्यादौ सहशब्दप्रयोगेऽप्रयोगेऽपि यथा तृतीया स्यात् तथात्रापि नामादिप्रयोगेऽप्रयोगेऽपि प्रथमादिपुरुषो भवतीति, नापि युष्मदस्मदर्थे मध्यमादिविधानाद् उक्तार्थत्वेन युष्मदस्मदोः प्रयोगो न प्राप्नोतीति तयोः प्रयोगार्थं प्रयुज्यमाने इति वाच्यम्, यावता युष्मदादौ गम्यमाने मध्यमादिपुरुषो भवन् कर्तृत्वकर्मत्वरूपेणैव युष्मदस्मदर्थं व्यनक्ति, न तु युष्मदस्मदर्थविशेषरूपेण (युष्मदस्मत्त्वरूपेण), अतो युष्मदस्मत्त्वप्रकारकर्तृत्वबोधाय युष्मदस्मच्छब्दप्रयोगः कार्य एव, अतो न पौनरुक्त्यम्। यथा वह्निरुष्णं चेत्यत्र वह्नित्वप्रकारेण बोधार्थं वह्निशब्दप्रयोग इति, एवं च सति सर्वत्रैव **सुखार्थ**मुपपन्नम्। यत्तु **टीकायाम्** एतच्चोत्तरार्थमित्युक्तं तत् सर्वं **कैश्चिद्** इत्यनेनाग्रिमेण सम्बन्धनीयमिति **महान्तः**॥४२१।

**[ समीक्षा ]**

प्रथम-मध्यम-उत्तमपुरुष संज्ञाएँ करने के अनन्तर दोनों ही व्याकरणों में उनके विधिसूत्र बनाए गए हैं। दोनों के विधिसूत्रों का क्रम भिन्न है। कातन्त्रव्याकरण में प्रथमपुरुष, मध्यमपुरुष तथा उत्तमपुरुष का क्रम अपनाया गया है, जबकि पाणिनि ने मध्यमपुरुष, उत्तमपुरुष एवं प्रथमपुरुष के क्रम से विधिसूत्र बनाए हैं। तदनुसार मध्यम-उत्तमपुरुषों के विषय से भिन्न विषय में प्रथमपुरुष की

प्रवृत्ति होती है– "शेषे प्रथमः" (अ० १।४।१०८)। अतः सः, तौ, ते शब्दों के उपपद में रहने पर प्रथम पुरुष में पचति, पचतः, पचन्ति क्रियापदों का प्रयोग होता है। युष्मद्–अस्मद् से भिन्न स्याद्यन्त पदों के उपपद में न रहने पर भी स्वतन्त्ररूप में 'पचति–पचतः–पचन्ति' पदों का भी प्रयोग होता है।

**[ रूपसिद्धि ]**

१–३. **सः पचति, तौ पचतः, ते पचन्ति।** पच् + अन् + ति, तस्, अन्ति। युष्मद्–अस्मद् से भिन्न स्याद्यन्त शब्द सः–तौ-ते के रहने पर प्रथम पुरुष का विधान, तदनुसार 'पच्' धातु से ति–तस्-अन्ति प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् प्रत्यय, अन्ति–प्रत्यय में 'अकारे लोपम्" (२।१।१७) से अन्–विकरण वाले अकार का लोप।

४–६. **स पचते, तौ पचेते, ते पचन्ते।** पच् + अन् + ते, आते, अन्ते। पूर्ववत् प्रक्रिया।

७–९. **पच्यते घटः, पच्येते घटौ, पच्यन्ते घटाः।** पच् + यण् + ते, आते, अन्ते। पूर्ववत् प्रक्रिया। "सार्वधातुके यण्" (३।२।३०) से यण् प्रत्यय।

**[ विशेष वचन ]**

१. एतच्चोत्तरार्थम्, इह तु सामान्यवाचकाः शब्दाः प्रकरणमन्तरेण विशेषे वर्तितुं नोत्सहन्ते (दु० टी०)।

२. सुखार्थमेव प्रयुज्यमानग्रहणमिति (वि० प०)।

३. इदं प्रयुज्यमानग्रहणं परत्रैव सफलम्, अन्यथा उक्तार्थत्वाद् युष्मदस्मच्छब्दयोः प्रयोगो न स्यादिति कुलचन्द्रस्याभिप्रायः (क० च०)।

४. टीकायामपि एतच्चोत्तरार्थमित्युक्तम्, सत्यम्। प्रयुज्यमानग्रहणस्य द्व्यर्थः– रूढ्यर्थो योगार्थश्च घटते, तत्राविशेषादुभयोरेव ग्रहणम् (क० च०)।

५. एवं च सति सर्वत्रैव सुखार्थमुपपन्नम्। यत्तु टीकायामेतच्चोत्तरार्थमित्युक्तं तत् सर्वं कैश्चिदित्यनेनाग्रिमेण संबन्धनीयमिति महान्तः (क० च०)॥४२१।

## ४२२. युष्मदि मध्यमः [ ३।१।६ ]

**[ सूत्रार्थ ]**

विशेष्यभूत 'युष्मद्' शब्द का प्रयोग होने पर अथवा न होने पर भी मध्यम पुरुष का विधान होता है॥४२२।

**[दु० वृ०]**

युष्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽपि मध्यमः पुरुषो भवति। त्वं पचसि, युवां पचथः, यूयं पचथ। अप्रयुज्यमानेऽपि पचसि, पचथः, पचथ। एवं सर्वत्र। प्रयुज्यमानग्रहणं किम् ? त्वया पच्यते ओदनः ॥४२२।

**[दु० टी०]**

युष्मदि०। शेषात् कर्तरि परस्मैपदम् आत्मनेपदानि भावकर्मणोरिति वाक्यैकदेशेनोपदिष्टानां प्रकर्षविशेषाभिधायको वाक्यावयवोऽयं तथा पूर्वोत्तरावपि योगाविति ॥४२२।

**[क० च०]**

युष्मदि०। ननु युष्मदीत्यर्थपरः शब्दपरो वा निर्देशः? आद्ये भवान् करोतीति मध्यमः स्यात्। प्रयुज्यमानग्रहणान्वयश्च न स्यात्, शब्दस्यैव प्रयोगसम्भवात्। द्वितीये तु 'परमत्वं करोषि' इत्यत्र मध्यमो न स्यात् (उपपदत्वाभावात्) न ह्यत्र युष्मच्छब्दः (उपपदम्) किन्तर्हि परमयुष्मच्छब्द इति, न चात्र तदन्तविधिरिति वाच्यम्, 'ग्रहणवता लिङ्गेन न तदन्तविधिरिति निषेधात्। अथ अस्याः परिभाषायाः अनित्यत्वाङ्गीकार इति, तथापि 'अतित्वं करोति' इत्यत्रापि मध्यमः स्यात्। न च गौणत्वादेव न भविष्यतीति वाच्यम् **'अर्थाश्रयो हि गौणमुख्यव्यवहारो न शब्दाश्रयः'** इति न्यायात्। अत्र **केचिच्छब्दपर** एव युष्मच्छब्दः, किन्तु प्रयुज्यमानग्रहणान्वयबलेन मुख्ययोगलाभ इति व्याख्यातम्। अर्थद्वारक एव शब्दानां प्रयोगो भवतीति शब्दपरत्वेऽपि अर्थोपस्थितिः, अतो गौणमुख्ययोगव्यवहारेण प्रकृष्टयोगे विधिरयम्, तथा च सति मुख्यार्थमादाय समानाधिकरणे युष्मदि प्रयुज्यमाने मध्यम इति सूत्रार्थः प्राप्तः। तेन 'परमत्वं करोषि' इत्यत्र युष्मदो मुख्यार्थत्वेन मध्यमः प्रवर्तते एव।

'अतित्वं करोति' इत्यत्र बहुव्रीहिणाऽन्यपदार्थस्य वाच्यत्वेन युष्मदो गौणत्वान्न तत्र विधिरिति। **अन्ये** तु अर्थपरोऽयं निर्देशः, तर्हि 'भवान् करोति' इत्यत्रापि मध्यमः स्यादिति चेत् ? सत्यम्, अर्थपरत्वेऽपि प्रयुज्यमानग्रहणा-(न्वयादेव) नर्थक्यभयादेव तद्वाचकशब्दप्रयोगे भविष्यति, तर्हि भवत्शब्दप्रयोगेऽपि स्यादिति पूर्व एव दोष इति चेत्, नैवम्। युष्मदर्थवाचके शब्दे गृह्यमाणे श्रुतत्वाद् युष्मच्छब्दप्रयोगे एव भविष्यतीत्याहुः। यद् वा युष्मदीत्यनुकरणसामर्थ्याद् युष्मदर्थकयुष्मच्छब्दप्रयोगे एव भविष्यति, अन्यथा त्वयीति निर्दिशेत्। [न चास्मिन् पक्षेऽनुकरणस्यान्यत् फलमस्ति।

न चास्मिन् पक्षे सूत्रे त्वयीति निर्देश एव युज्यते इति वाच्यम्, सूत्रत्वादेव तस्याप्रसङ्गात्] । ननु अर्थपरपक्षेऽपि युष्मच्छब्दप्रयोग एव विधिः स्यादिति चेत्, **'पतितं वेत्स्यसि क्षितौ'** इत्यत्र वाक्यालङ्कारे **वामनेन** कथं पदभङ्ग उक्तः, युष्मदर्थस्यासिशब्दस्य प्रयोगे वेत्सीति मध्यमाप्राप्तेः? नैवम्, असीति वाक्यालङ्कारमात्रे प्रयोगात्, तेन वेत्सीति त्वमित्यध्याहारेण साधुः, युष्मदर्थवाचकोऽसीत्यव्ययो वा । **अपरे** तु युष्मदीत्यर्थपरनिर्देशेऽपि भवच्छब्दप्रयोगे न भविष्यतीति भवदर्थस्य युष्मदर्थभिन्नत्वात् । तथाहि युष्मच्छब्देन युष्मदर्थेऽभिधीयमाने युष्मत्त्वप्रकारेणैवाभिधीयते भवच्छब्देन तु भवत्त्वप्रकारेणेति प्रकारभेदादर्थभेद इति । पर्यायता तु प्रयोगदशायां वास्तविकार्थमादाय एवेति । यथा वृक्षमहीरुहयोः पर्यायत्वेऽपि वृक्षत्वज्ञानेन महीरुहत्वप्रकारस्य न ज्ञानम् । तथा चोक्तम् –

**पर्यायता नास्त्यभिधेयमात्रे सा वस्तुसत्ता विहितैव यस्मात् ।**
**एकार्थतायामपि युष्मदर्थे भवान् करोतीति न मध्यमः स्यात् ॥**

एतत्तु नातिपेशलम् । यथा वृक्षमहीरुहज्ञाने वृक्षत्वमहीरुहत्वप्रकारयोर्भेदमुपलभामहे, तथा नात्रेति । **अपरे** तु अर्थवच्छब्दानुकरणमेवाहुः । तेन भवान् करोतीत्यत्र युष्मत्शब्दाभावान्न मध्यमः । 'अतित्वं करोति' इत्यत्र युष्मदर्थस्य गौणत्वादेव न विधिः, यस्मात् प्रधानाप्रधानन्यायेन प्रधानीभूत एव युष्मदर्थ आश्रीयते इति । 'परमत्वं करोषि' इति युष्मदर्थस्य प्रधानत्वाद् विधिः प्रवर्तते । **वस्तुतस्तु** अर्थपर एवायं निर्देशः, शब्दपरत्वे लक्षणापत्तेः । तर्हि भवच्छब्दाभिधेयेऽपि स्यात् ? सत्यम् । त्वयीति निर्देशे प्राप्ते यद् युष्मदीति निर्दिष्टं तद् युष्मदर्थविशिष्टयुष्मच्छब्द एवेति न किञ्चिदनुपपन्नम् । प्रयुज्यमानग्रहणं किमिति **वृत्तिः** । प्रयुज्यमानग्रहणस्यार्थाश्रयणेन किमित्यर्थः ॥४२२।

**[ समीक्षा ]**

द्र० – पूर्ववर्ती सूत्र की समीक्षा ।

**[ विशेष वचन ]**

१. अर्थाश्रयो हि गौणमुख्यव्यवहारो न शब्दाश्रयः (क० च०) ।

२. युष्मच्छब्देन युष्मदर्थेऽभिधीयमाने युष्मत्त्वप्रकारेणैवाभिभवच्छब्देन तु भवत्त्वप्रकारेणेति प्रकारभेदादर्थभेद इति । पर्यायता तु प्रयोगदशायां वास्तविकार्थमादायैवेति (क० च०) ।

३. पर्यायता नास्त्यभिधेयमात्रे सा वस्तुसत्ता विहितैव यस्मात् ।

एकार्थतायामपि युष्मदर्थे भवान् करोतीति न मध्यमः स्यात् ॥ (क० च०)।

४. अपरे तु अर्थवच्छब्दानुकरणमेवाहुः, तेन भवान् करोतीत्यत्र युष्मत्–शब्दाभावान्न मध्यमः (क० च०)।

**[ रूपसिद्धि ]**

१–३. **त्वं पचसि, युवां पचथः, यूयं पचथ** । पच् + अन् + सि, थस्, थ । युष्मद्–शब्दरूप 'त्वम्–युवाम्–यूयम्' के उपपद में प्रयुक्त होने से 'पच्' धातु से प्रकृत सूत्र द्वारा मध्यम पुरुष का प्रयोग, क्रमशः एकवचन में 'सि', द्विवचन में 'थस्' तथा बहुवचन में 'थ' प्रत्यय, "अन्विकरणः कर्तरि" (३।२।३२) से अन् विकरण, थस्–प्रत्ययगत सकार को "रेफसोर्विसर्जनीयः" (२।३।६३) से विसर्गादेश ॥४२२।

## ४२३. अस्मद्युत्तमः [ ३।१।७ ]

**[ सूत्रार्थ ]**

विशेष्यरूप में 'अस्मद्' शब्द के प्रयुक्त या अप्रयुक्त होने पर उत्तम पुरुष का विधान होता है ॥४२३।

**[ दु० वृ० ]**

अस्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽपि उत्तमः पुरुषो भवति । अहं पचामि, आवां पचावः, वयं पचामः । अप्रयुज्यमानेऽपि – पचामि, पचावः, पचामः । एवं सर्वत्र । अत्वं त्वं सम्पद्यते, अनहमहं सम्पद्यते । त्वद्भवति, मद्भवतीति भवितव्यमेव युष्मदस्मदोर्गौणत्वात् । त्वन्मदी तु शब्दमात्राश्रयत्वात् । एहि मन्ये रथेन यास्यसि यातस्ते पितेति स्वविषय एव मध्यमोत्तमौ ॥४२३।

**[ दु० टी० ]**

**अस्मादि०** । यदा युष्मदस्मदोश्च्व्यर्थता तदा किं त्वद्भवसि, मद्भवामीति भवितव्यम्, नेत्याह – त्वद्भवतीत्यादि । गुणादागतो **गौणः**, मुखमिव **मुख्यः**, गौण-मुख्यार्थाश्रयत्वात्तथा शब्दोऽपि व्यपदिश्यते प्रकृतेरत्र कर्तृत्वं तत्संख्यापुरुषदर्शनाद् वा । यथा तन्तवः पटीभवन्तीति, न तु विकारस्य, यथा स्वर्णपिण्डः कुण्डलानि भवतीति । परिहासे गम्यमाने मन्यतेः प्रयोगे धातोर्मध्यमः मन्यतेश्चोत्तमैकवचनं मध्यमोत्तमयोः प्राप्ताविति । तत् कथमित्याशङ्क्याह – एहीत्यादि । 'मन्ये' इति शब्दश्चाव्ययस्त्यादिप्रतिरूपकोऽपि विद्यत इति । यद्येवम्, एहि मन्यसे रथेन यास्या-

मीत्यपि प्रयोगः प्राप्नोतीति ? सत्यम्, नैवं **लौकिकी विवक्षा** दृश्यते किं प्रकारान्तरकल्पनयेति भावः ॥४२३।

## [वि० प०]

**अस्मदि०** । अत्वं त्वमित्यादि । गौणत्वं पुनर्युष्मदस्मदोर्विकारत्वात् । विकारो हि प्रकृतिमपेक्ष्य भवति इति प्रकृतेरेव प्राधान्यं प्रकृतिः पुनरयुष्मदस्मदर्थ एव । यद्येवम्, त्वन्मदोरेकत्वे इत्यादिना ज्ञापितस्त्वन्मदादेशोऽपि युष्मदस्मदोः स्थाने न स्यादित्याह – त्वन्मदी त्वित्यादि । अर्थाश्रयो हि शब्दानां गौणमुख्यव्यवहारो न शब्दस्वरूपेण यदाह – गौणमुख्ययोर्मुख्यार्थाश्रयत्वात् तथा शब्दोऽपि व्यपदिश्यते इति । न च त्वन्मदादेशविधावर्थचिन्ता कृतेति न विरुध्यते । मध्यमोत्तमयोः प्राप्तयोरुत्तममध्यमविधानार्थं **"प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च"** (अ० १।४।१०६) इति केनचित् कृतम् इति तदिह कथमित्याह – एहि इत्यादि । प्रहासलक्षणश्चार्थो यातस्ते पितेत्यादि पदान्तरसन्निधानादेव गम्यते । लोके चैकवचनमेव प्रहासे दृश्यत इति एकवच्चेति न वक्तव्यमिति । एवन्तर्हि 'एहि मन्यसे रथेन यास्यामि' इत्यपि प्रयोगः प्राप्नोति चेत् ? सत्यम् । नैवं **लौकिकी विवक्षा** विधीयते ॥४२३।

## [क० च०]

अस्मदि० । ननु युष्मदस्मदोः स्वार्थापरित्यागेनार्थान्तरप्रवृत्तौ कथं तयोर्गौणत्वात् मध्यमोत्तमौ न स्याताम् इत्युच्यते ? नैवम्, युष्मदस्मदोर्विकाररूपस्य स्वार्थस्य प्रकृतिभूतस्यायुष्मदस्मदर्थस्य विशेषणत्वेन गौणत्वान्नायं विधिरित्याशयेनाह – गौणत्वं पुनरित्यादि । **"प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च"** (अ० १।४।१०६) इति **पाणिनिः** । **अस्यार्थः** – पूर्वसूत्रान्मध्यम इत्यनुवर्तते । 'मन्य' इति सूत्रत्वात् तिब्लोपं कृत्वा यना सह निर्देशोऽयं 'मनु बोधने' इत्यस्य व्यावृत्त्यर्थः । मन्यतिरुपपदं यस्य धातोस्तस्मिन् धातौ सति परिहासे गम्यमाने तस्मान्मन्योपपदाद् धातोर्मध्यमो भवति, उपपदभूतात्तु मन्यतेश्चोत्तम इति स्वस्वविषये मध्यमोत्तमयोः सिद्धत्वादेवात्रोत्तमविषये मध्यमः, मध्यमविषये चोत्तम इति प्रतीयते । ननु यद्यस्मिन् मते स्वविषय एव मध्यमोत्तमविधिस्तदा कथं 'त्वमत्र मन्ये यदहं पयः पास्यसि सन्ततम्' इति ।

**एहि मन्ये मृगाक्षीणामहं प्रेयान् भविष्यसि ।**
**स्यात् प्रेमविषयस्तासामक्ष्णा काणो भवादृशः ॥** इति च ।

अत्र स्वविषयस्याघटनात् कथं मध्यमोत्तमयोः प्राप्तिरिति ? सत्यम् । **"त्रीणि त्रीणि०"** (३।१।३) इत्यतः प्रथमाद्यनुवृत्तौ "नामयुष्मदस्मत्सु" इत्येकयोगेनैव सिद्धौ

पृथग् योगादनुवृत्तस्यापिशब्दस्य युष्मदीत्यनेन उत्तम इत्यनेन च सम्बन्धः कार्यः, तेन युष्मदि मध्यमोऽपीति सूत्रार्थे क्वचिद् युष्मद्यपि मन्यतेरुत्तमः सिद्धः इति, एवमस्मद्युत्तमोऽपि सूत्रार्थे क्वचिन्मन्यतेरपि मध्यमः स्यादिति हृदि कृत्वैव **वृत्तावुक्तं** 'स्वविषय एव' इति ॥४२३।

**[ समीक्षा ]**

द्र० – समीक्षा, सूत्र सं० ४२१

**[ विशेष वचन ]**

१. नैवं लौकिकी विवक्षा दृश्यते किं प्रकारान्तरकल्पनयेति भावः (दु० टी०)।

२. विकारो हि प्रकृतिमपेक्ष्य भवति इति प्रकृतेरेव प्राधान्यम्, प्रकृतिः पुनर-युष्मदस्मदर्थ एव। ...... अर्थाश्रयो हि शब्दानां गौणमुख्यव्यवहारो न शब्दस्वरूपेण (वि० प०)।

**[ रूपसिद्धि ]**

१–३. **अहं पचामि, आवां पचावः, वयं पचामः**। डु पचष् पाके + अन् + मि, वस्, मस्। 'अस्मद्' के शब्दरूप अहम्, आवाम्, वयम् शब्दों के उपपद में रहने पर प्रकृत सूत्र से उत्तम पुरुष, एकवचन-द्विवचन-बहुवचन में मि-वस्-मस् प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, "अस्य वमोर्दीर्घः" (३।८।११) से अकार को दीर्घ, वस् – मस् प्रत्ययगत सकार को "रेफसोर्विसर्जनीयः" (२।३।६३) से विसर्गादेश ॥४२३।

## ४२४. अदाब्दाधौ दा [ ३।१।८ ]

**[ सूत्रार्थ ]**

'दाप्-दैप्' धातुओं को छोड़कर दा तथा धा धातु की 'दा' संज्ञा होती है ॥४२३।

**[ दु० वृ० ]**

दाप्-दैपौ वर्जयित्वा दाधावित्येतौ दासंज्ञकौ भवतः। दीयते, धीयते। अदाबिति किम्? दायन्ते व्रीहयः, निदायन्ते भाजनानि। पकारोऽयं गणे प्रतिषेधार्थ एव निर्दिश्यते ॥४२४।

**[ दु० टी० ]**

अदा०। यद्यपि दारूपाश्चत्वारो धातवो द्वौ च धारूपौ तथापि जातिमाश्रित्य द्विवचनमिति भावः। संज्ञिसमानाधिकरणेऽपि संज्ञानिर्देशे स्यादेकवचनम्, सामान्या-

श्रयणात् । न च सामान्ये सति नपुंसकलक्षणो ह्रस्वः सन्दिग्धत्वात् । येषामेतद् रूपं संभवति तदुपलक्षितास्त इह गृह्यन्ते, व्यक्तिप्रधाने सति निर्देशे दोदेङ्धेटां विकरणे संज्ञा न सिध्यति व्यक्त्यन्तरत्वात् । [ततश्च] प्रणिद्यति, प्रणिदायते, प्रणिधयतीति उपसर्गाण्णेर्दासंज्ञके णत्वं न स्यात् । तथा विकारे च प्रणिदीयते, प्रणिधीयते । ननु च दोदेङ्धेटां लाक्षणिकत्वात् कथं दासंज्ञा प्रणिदाता, प्रणिधातेति ? सत्यम् । इह दापूदैपोः पानुबन्धकरणात् **'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्'** (का० परि० ७५) इति नोपतिष्ठते । यद्येवम्, दीङोऽपि गुणवृद्धिस्थाने सनि चात्वे सति प्रसज्यते, उपादास्तेति सिचीत्वं स्याद् उपदिदासते इत्यभ्यासलोप इस्भावश्चेति, तथा प्रणिदापयति, प्रणिधापयतीत्युपसर्गाण्णेर्णत्वं चेति, नैवम् । दीङ आत्वं परनिमित्तं बहिरङ्गम्, दासंज्ञा अन्तरङ्गा (निरपेक्षत्वात्), तत्र **'असिद्धं बहिरङ्गमन्तरङ्गे'** (का० परि० ३३) इति न भवति, सन्ध्यक्षरान्तानामात्वं हि न परनिमित्तम्, 'अविकरणे' इति विषयसप्तमीत्वात् प्रसज्यस्य प्रतिषेधाद् वेति प्रणिदापयति, प्रणिधापयति इत्यत्र च अदाबिति पर्युदासाद् धात्वेकदेशस्य न भवति, **'अर्थवद्ग्रहणे नानर्थकस्य'** (का० परि० ४) इति वा । किं च श्रुतत्वाद् यत्क्रियायुक्ताः प्रादयस्तं प्रत्युपसर्गसंज्ञा सिद्धा । 'प्रणिदापयति, प्रणिधापयति' इति प्रागेव दासंज्ञा, पश्चात् पान्तत्वमिति न विरुध्यते । 'दीयते' इति 'डु दाञ् दाने' (२।८४) दाण् दाने (१।२६९) वा, 'धीयते' इति 'डु धाञ्, धेट्' (२।८५; १।२६४) वा । अदाबिति दाप् लवने (२।२३) दैप् शोधने (१।२६३), **नानुबन्धकृतमसन्ध्यक्षरान्तत्वम्'** (कलाप० २२१।४०) इति दैप आत्वं सिद्धम्, अनुबन्धः पकारोऽस्त्यनुवादः कार्यार्थ इत्याह – पकारोऽयमित्यादि ।

ननु च आब्दाधाविति कथन्न कुर्यात्, न विद्यते पकारोऽस्येति सामान्यनिर्देशेऽपि साक्षात् पकारस्याभावादनुबन्ध एव गम्यते । तदयुक्तम् – प्रणिदापयति, प्रणिधापयतीत्यत्रापि पान्तत्वात् प्रतिषेध एव स्यात्, नैवम् । प्रागेवात्र दासंज्ञा प्रवृत्ता, कथं बाधा, अनुबन्धे चरितार्थत्वात् । (नैवम्, न भविष्यति पकारो यस्येति प्रतिपद्येत) अथवा दाब् दैबिति गणे बकारपाठ एवास्ताम्, न विद्यते बकारो यस्येत्यर्थः, तथापि सन्देहः किमयं कृततृतीयः पकारः स्वभावाद् वा बकार इति । तस्माददाबिति युक्तम्, यदा तु प्रणिदापयति, प्रणिधापयतीति भविष्यत्यपि पकारे दोषं दृष्ट्वा अदाबिति बकारान्तं पठति तदा **प्रतिपठितगौरवनिरासार्थमेव** भवति ॥४२४।

## [ वि० प० ]

**अदापू०** । अदाबिति लुप्तप्रथमाद्विवचनं पदम्, दाधाविति एवं धातूनाम् एतद्

रूपं सम्भवति, तदुपलक्षितास्त्विह धातवो गृह्यन्ते इति। ते च पारिशेष्यात् डु दाञ् दाने दाण् दाने, दो अवखण्डने, देङ्-त्रैङ् पालने, धेट् पा पाने, डु धाञ्-डु भृञ् धारणपोषणयोरिति, षडेते धातवः। दासंज्ञायां सत्यां "दा-मा-गायति" (३।४।२९) इत्यादिना आकारस्येकारः। 'अथ कथम् अदाबित्युक्ते दैपो वर्जनं स्यात्, न ह्यस्य दाबिति रूपमस्ति। न चायं सन्ध्यक्षरान्तः, येनाकारे सति एतदुपपद्यते पकारान्तत्वादस्येत्याह – पकारोऽयमित्यादि। यदि पुनरयं पकारः सन्ध्यक्षरान्तत्वम् उपहन्यात् तदायमेव न कृतः स्यात्, न ह्यस्य प्रयोजनान्तरमस्तीति। तथा चाह – **'नानुबन्धकृतमसन्ध्यक्षरान्तत्वम्, नानुबन्धकृतमनेकवर्णत्वम्, नानुबन्धकृतमसारूप्यमिति'** (कलाप० २२१।४०, ३८, ३९) ।।४२४।

**[क० च०]**

**अदाप्०**। ननु अदाप इति लुप्तप्रथमैकवचनं पदम्, लुप्तप्रथमाद्विवचनं वा। अत्र **कुलचन्द्रः** – अदाबिति लुप्तप्रथमैकवचनम्, लुप्तप्रथमाद्विवचनेन नञ्तत्पुरुषे न दाप् अदाबिति दाप एकत्वाद् द्वित्वानुपपत्तेः। बहुव्रीहिपक्षेऽपि विशेषणत्वानुपपत्तेः। तथाहि न विद्यते दाप् ययोरिति वक्तुं शक्यते, नहि दाधोर्दाबस्ति किन्तु दामात्रस्येति लुप्तप्रथमाद्विवचनपक्षो न युक्तः इति **पञ्जी**माक्षिपति। तन्न, दाबित्यनेन दाप् - दैप् इति व्यक्तिद्वयोपस्थापितत्वेन द्विवचनप्रवृत्तौ बाधकाभावात्। न च अदाबिति समुदायस्य विशेषणं न घटते धास्वरूपस्य दाप्त्वाभावादिति वाच्यम्, दा इत्यनेन सम्बन्धेऽपि आनुषङ्गिकतया 'धा' इत्यनेनापि सम्बन्धस्य घटनात्, कथमन्यथा **भवन्मतेऽपि** अदाबिति प्रथमैकवचनेन धास्वरूपेण सह अदापः सम्बन्ध इति, अतोऽनया रीत्या बहुव्रीहिपक्षेऽपि न दोषः। यद्यपि न दाप् अदाप् तस्य दा अदाब्दाः स च धाश्चेति अदाब्दाधाविति **कुलचन्द्रे**णोक्तं तदप्यसङ्गतम्, सामानाधिकरण्यसम्भवे तत्पुरुषस्यानौचित्यात्। **महान्तस्तु** दापूदैपोर्व्यक्तिभेदस्य विवक्षितत्वान्नञ्तत्पुरुषस्योत्तरपदवदितिन्यायाद् दामात्रविशेषणस्यापि द्विवचनमेवोपपद्यते 'अवर्षा हेमन्ते' इत्यादिवत्। ततश्च दाप् च दैप् च दापौ न विद्येते दापौ यत्र दारूपेऽसावदाप्, अदाप् चासौ दाश्चेति **अदाब्दाः**, स च धाश्चेति अदाब्दाधाविति एकं पदम्। **वृत्तौ** तु **तात्पर्यार्थो** दर्शितः, तेन समासे द्विवचनस्य लुप्तत्वात् लुप्तप्रथमाद्विवचनं घटत एवेति ।।४२४।

**[ समीक्षा ]**

'डु दाञ् दाने, दाण् दाने, दो अवखण्डने, देङ् पालने, धेट् पाने, डु धाञ् धारणपोषणयोः' इन छह धातुओं की 'दा' संज्ञा सर्ववर्मा ने तथा 'घु' संज्ञा पाणिनि

ने की है। पाणिनि का सूत्र है– "दाधा घ्वदाप्" (अ० १।१।२०)। पाणिनि की घुसंज्ञा विशुद्धरूप से साङ्केतिक संज्ञा है, जबकि कातन्त्रकार की दासंज्ञा अन्वर्थ कही जा सकती है, क्योंकि इस संज्ञा के दो संज्ञियों में से एक दा भी समाविष्ट है। ऋक्तन्त्र में जो घुसंज्ञा का प्रयोग उपलब्ध है, वह 'दा-धा' धातुओं का बोधक नहीं है, किन्तु वह 'लघु' का एकदेश है– "युग्मं घु, उ घोर्घुनि घोषादिः" (५।३।१, २)। एकदेश के प्रयोग से संज्ञाओं का स्मरणमात्र होता है, अन्वर्थता स्वीकार नहीं की जाती। जैसा कि टीकाकार **रामानन्द** ने कहा है–"अत्र सर्वशास्त्रप्रसिद्धाः संज्ञाः प्रायेणैकदेशेनोच्यन्ते तत्तत्संज्ञास्मरणार्थम्। यथा 'स्वर्घप्लु' इति ह्रस्वदीर्घप्लुतानां ग्रहणम्" (द्र०, टे० ट० टे० सं० ग्रा०–प्र० भा०, पृ० ४)।

**अर्वाचीन आचार्यों द्वारा इसका प्रयोग–**

**चान्द्रव्याकरण–** दोऽपः (१।१।१४)।

**जैनेन्द्रव्याकरण–** दा धा भ्वपित् (१।१।२७)।

**हैमशब्दानुशासन–** अबौ दाधौ दा (३।३।५)।

**मुग्धबोधव्याकरण–** दा-धा दा (सू० ५३४)।

पाणिनीय व्यकरण की 'घु' संज्ञा को लक्ष्य करके नैषधचरित के रचनाकार श्रीहर्ष ने एक कल्पना प्रस्तुत की है कि यह कपोत पूर्व जन्म में पाणिनीय व्याकरण पढ़ता रहा था, इस समय अन्य सभी विषय तो यह भूल गया है, परन्तु पट्टिका पर बार-बार लिखकर अभ्यास करते रहने के कारण 'घु' संज्ञा को अभी तक भूल नहीं सका है और यही कारण है कि शिर हिला-हिलाकर यह प्रातःकाल 'घु-घु' शब्द किया करता है–

**दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः**
**कण्ठे शब्दौघसिद्धिक्षतबहुकठिनीशेषभूषानुयातः।**
**सर्वं विस्मृत्य दैवात् स्मृतिमुषसि गतां घोषयन् यो घुसंज्ञां**
**प्राक् संस्कारेण सम्प्रत्यपि धुवति शिरः पट्टिकापाठजेन॥**

(नै० च० १९।६२)।

सांकेतिक संज्ञाओं को हस्तचेष्टा की तरह तात्पर्यबोधिका माना जाता है।

**[ विशेष वचन ]**

१. पकारोऽयं गणे प्रतिषेधार्थ एव निर्दिश्यते (दु० वृ०)।

२. यद्यपि दारूपाश्चत्वारो धातवो द्वौ च धारूपौ, तथापि जातिमाश्रित्य द्विवचनमिति भावः (दु० टी०)।

३. अदाबिति बकारान्तं पठति तदा प्रतिपत्तिगौरवनिरासार्थमेव भवति। (दु० टी०)।

४. तथा चाह– नानुबन्धकृतमसन्ध्यक्षरान्तत्वम्, नानुबन्धकृतमनेकवर्णत्वम्, नानुबन्धकृतमसारूप्यम् इति (वि० प०)।

५. वृत्तौ तु तात्पर्यार्थो दर्शितः, तेन समासे द्विवचनस्य लुप्तत्वात् लुप्तप्रथमाद्विवचनं घटत एवेति (क० च०)।

**[ रूपसिद्धि]**

१. **दीयते** । दा + यण् + ते (कर्मवाच्य)। प्रकृत सूत्र से दासंज्ञा, वर्तमानासंज्ञक ते प्रत्यय, "सार्वधातुके यण्" (३।२।३१) से यण् "न णकारानुबन्धचेक्रीयितयोः" (३।५।७) से अगुण, "दामागायति" (३।४।२९) से आकार को ईकारादेश।

२. **धीयते** । धा + यण् + ते (कर्मवाच्य)। प्रकृत सूत्र से दासंज्ञा तथा अन्य प्रक्रिया पूर्ववत् ॥४२४।

## ४२५. क्रियाभावो धातुः [३।१।९]

**[ सूत्रार्थ ]**

'भू-पच्' आदि जो शब्द सत्ता-पाकादिरूप क्रिया का बोध कराते हैं, उनकी धातुसंज्ञा होती है ॥४२५।

**[ दु० वृ० ]**

यः शब्दः क्रियां भावयति प्रतिपादयति स धातुसंज्ञो भवति। भवति, अत्ति, जुहोति, दीव्यति, सुनोति, तुदति, रुणद्धि, तनोति, क्रीणाति, चोरयति (चिन्तयति)। क्रियते इति **क्रिया** साध्यमुच्यते, सा च पूर्वापरीभूतावयवैव। कथं तर्हि 'अस्ति, नश्यति' श्वेतते प्रासादः संयुज्यते, समवैति। सत्ता नित्यता, अभावो नाशः, श्वेतसंयोगावपि गुणौ, समवायोऽप्यर्थान्तरम्? सत्यम्, इह हि **साधनायत्तोदयं सर्व**मतस्तदधीनतया सिद्धमपि क्रियात्वेनावभासते। **क्रियाकारकव्यवहृतेर्बुद्ध्यवस्थानिबन्धनात्**। तथा **'गडि वदनैकदेशे, बिदि अवयवेऽपि'** (१।१३१, २३)। अङ्कुरो जायते इति **जन्म चाभूतप्रादुर्भाव एव**। अथवा जायते विशेषेणोपलभ्यते। अतोऽङ्कुरस्य कर्तृत्वम्। तथा चोक्तम्,

**यावत् सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते।**

**आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥** (वा० प० ३।८।१)।

धातुप्रदेशाः – "**धातोश्च हेतौ**" (३।२।१०) इत्येवमादयः ॥४२५।

**[दु० टी०]**

**क्रियाभावः**। क्रियां भावयतीति (प्राप्ये) कर्मण्यण्, हेतुविवक्षायामिन्। भवतिरयमिनन्तः स्वभावात् प्रतिपादने वर्तते। भूप्रभृतय इह क्रियाभावशब्दस्वरूपोदाहरणतया प्रतिपत्तव्याः। धातुकार्यप्रदर्शनाय त्यादयः प्रत्यया इति। क्रियते इति **क्रिया "कृञः श च"** (४।५।७७) इति कर्मणि शप्रत्ययः। सा च पूर्वापरीभूतावयवैवेति। पूर्वश्चापरश्चेति द्वन्द्वः पूर्वत्वाभिसंबन्धादपरत्वाभिसंबन्धाच्च पूर्वापरीभूता क्रियोच्यते। अक्रमरूपस्य क्रमरूपप्राप्तिश्च्विप्रत्ययेनोच्यते। न पूर्वापरौ अपूर्वापरौ वा तथाभूतावयवौ यस्याः क्रियाया इति विग्रहः। तत्र पूर्वोऽधिश्रयणादिः, अपरः उदकसेकादिः। अधिश्रयणोदकसेकतण्डुलावपनकाष्ठापकर्षणादिरूपा पचक्रिया, तथान्यां अप्यनुसर्तव्याः। यथा चञ्चुपिच्छनेत्रशिरःशिखाग्रीवोदचरणाद्यवयवो **मयूर** इति। कथमित्यादि। अस्तेर्भवत्यर्थत्वाद् भवतेश्च सत्तावाचित्वात् सत्तायाश्च नित्यत्वाद् नित्यस्य चाक्रमरूपत्वात्। यथोक्तं सदकारणवन्नित्यम् इति। अथ आख्यातपदेन साध्यमानतयाऽभिधीयमानत्वात् क्रियारूपा। सत्ता नाम पदोपात्ता तु सिद्धरूपेति। तदयुक्तम्, एकत्र सिद्धासिद्धयोर्विरोधात्। न हि पदार्थः शब्दान्तरेणाभिधीयमानो रूपमात्मीयं जहात्युपादत्ते वा रूपान्तरम्। कार्यभूतः शब्दो न च कार्यं कारणस्य भेदकम्, तस्य कारणत्वाप्रसङ्गात्। यदि च साध्यत्वात् क्रियात्वं तदा घटं करोतीति निर्वर्त्यकर्मणोऽपि क्रियात्वं स्यात्। अक्रमे च पौर्वापर्यमविद्यमानं कथं प्रतिभासते, येन तत्प्रतिभासात् सत्ता क्रिया भविष्यति, न चाविद्यमानो ज्ञेयाकारः सत्यज्ञाने प्रतिभासते।

**अभावो नाश** इति। यस्मान्न किञ्चिदसौ कथं क्रिया भवेत्, न च तस्य **पौर्वापर्यम**स्तीति भावः। यथा द्रव्यं घटादि सर्वास्ववस्थास्वक्रममेवार्थभागमवबोधयति, तथा गुणः समवायोऽपीत्यर्थः। परिहारमाह – सत्यमित्यादि। इह व्याकरणे हि यस्मात् साधनायत्तोदयम्, साधनस्य आयत्त उदयो यस्य सिद्धस्येति विग्रहः, तदधीनतया पूर्वापरीभावेनोच्यमानमित्यर्थः। बुद्ध्यवस्था चात्र निबन्धनम्, सत्तावतोऽर्थक्रियायां व्यापारवदर्थक्रियासमर्थरूपत्वाद् वस्तुनः, अन्यथा वाजिविषाणादयोऽप्यर्थाः स्युः। अतः पूर्वापरीभावेनार्थक्रियायां वर्तमानस्य क्रमव्यापारानुरोधेन सत्तापि क्रमवतीति सापि **क्रिया**। तथा चाह – महाविषयत्वात् सर्वेऽपि धातवो

भुवोऽर्थमभिदधतीति। तथा श्वेतादयः श्वेतत इत्यादौ, तथा वदनैकदेशे द्रव्येऽपि गण्ड इति। तथा बिन्दुरिति। तथा अङ्कुरो जायते इति अङ्कुरसामान्यं कर्तृ तद्विशिष्टो जन्मार्थो जायते विशेषेण प्रकाशते इत्यर्थः। अथवा अन्तस्तत्त्वनिष्पन्नः पूर्वदृष्टोऽङ्कुरः कर्ता बाह्यरूपतया तु जन्य इति।

न च भिन्नविषयता, दृश्यविकल्पितयोरेकत्वेनाध्यवसायात्। यथोक्तं दृश्यविकल्प्यावर्थावेकीकृत्य व्यवहारप्रवृत्तिरिति। प्रत्यक्षेऽपि ज्ञानाकार एव संवेद्यते, न बाह्यं स्वलक्षणं केवलं तत्सन्निधाने तदाभासं नीलादिज्ञानमुत्पद्यते। बाह्यलक्षणसंवेदने हि ज्ञानस्याग्निस्वरूपतास्वीकारे दाहादिप्रसङ्गः। **साकारं च ज्ञानं स्वप्नावस्थायां स्मरणावस्थायां च सिद्धं** तदा बाह्यात्माऽसन्निधेर्न बाह्यः साकारो बाह्यात्मानुभवादिकः स इति चेद् भवतु स त्वाकारो ज्ञानगतो न बाह्यार्थगतः, तदा तस्यासन्निधेरिति। निराकारपक्षेऽपि किमाकारं तज्ज्ञानं तदेति वक्तव्यम्। साकारपक्षेऽपि प्रतिनियताकारसंवेदनं स्यान्नान्यथा। अतो यथाध्यवसायमात्रं कारकव्यवस्था। **बौद्धेऽपि मते** यथोक्तम् – **'साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः'** (वा० प० ३।७।३) इति सद्वादे तु कारणमेव कार्यरूपेण परिणमते इति युक्तम्, कर्तृत्वमङ्कुरादेर्जन्मार्थो ह्याविर्भावः प्रागसत्त्वादिति अभूतप्रादुर्भावो जन्म च संगच्छते प्रकृतिविकारभावविवक्षायां तु च्विप्रत्ययो यथा बीजमङ्कुरीभवति कार्योत्पत्तौ चोच्छूनकारणाद्यवस्थाभेदे न क्रमोऽपि जन्मनि युज्यते न चासौ कारणगतो धर्मः, किन्तु कार्याभिमुखीभावेनैव तादवस्थ्योपलम्भात्।

**वैशेषिकादिदर्शने** तु अदृष्टप्रबोधितारम्भशक्तयः परमाणवः समवायिकारणे निमित्तकारणबलेन विकारमादधानाः कार्यद्रव्यस्य जन्मनि पौर्वापर्यं दर्शयन्तीति व्यक्तस्तत्र क्रमोपलम्भ इति। तदा दुष्यतीति विकृतभावाद्यवस्थादर्शनात् क्रमो युज्यते, एवं प्रध्वंसाभावेऽप्यदोषः। प्रागभावस्तु जन्मना व्याख्यातः, अत्यन्ताभावेऽपि प्रतिषेध्यार्थापेक्षणाद् अस्त्येव संस्पर्शादिः। इतरेतराभावेऽपि सन्निहितासन्निहितभावयोः स्पर्श एव (स्पष्ट एव) वस्तुतः संस्पर्श इति स्थितम्। ननु पच्यते पाकः इत्यादिषु कथमिह न धातुसंज्ञा भावः क्रियेत्युक्तम्? नैवम्, क्रियायाः साध्यता हि धर्मस्त्यादिवाच्य इति सिद्धता च घञादिवाच्य इति नासौ धात्वर्थो व्यतिरेकित्वादिति। तथाहि पच्यते इति सत्यपि पचौ न सिद्धतार्थः, असत्यपि पचौ पाक इति सिद्धता प्रतीयते। असत्यप्यात्मनेपदे घञादौ प्रतीयते पाक इति सत्यपि पचौ न साध्यता असत्यपि पच्यते इत्यत्र प्रतीयते सत्यात्मनेपदे अन्य एव हि प्रतिभासो लिङ्गसंख्याकारकरहितः साध्यतालक्षणस्तद्वाचकः (ततस्तु) **सिद्धतालक्षण** इति।

अथ सत्यपि धर्मातिरेके क्रियात्वमस्तीति कथन्न धातुसंज्ञा। तथा चाह– क्रियावाचकमाख्यातमिति ? सत्यम्। भावयतिना स्वभावात् शुद्धक्रियानिष्ठ एव शब्द उच्यते। यद्येवं क्रियार्थ इति कथन्न विदध्यात् क्रियैवार्थो यस्य स **क्रियार्थः** इत्यवधारणं गम्यते। यथा अप एव भक्षयतीति **अब्भक्ष** इति, अर्थग्रहणं क्रियात्वेन नियमार्थम्। अन्यथा क्रियाधातुरिति ब्रूयादिति अर्थे कार्यासम्भवात् तद्वाचिनां ग्रहणं भविष्यति। तदयुक्तम्, सत्यप्यर्थग्रहणे अन्यत्रापि प्रवर्तमानस्य धातुत्वमिति कथन्न स्यात् **प्रतिपत्तिश्च गरीयसीति** यथान्यायमेव श्रेयः। ननु यदि क्रियायां वर्तमानस्यान्यार्थत्वे सति न धातुत्वमिति नुयावादिवित्यादयो दूष्याः। एते हि क्रियार्थाः सन्तोऽन्यार्थाश्च दृश्यन्ते। **'नु स्तुतौ वितर्के च'** (२।७) निपातः। **'या प्रापणे उद्देशे च'** (२।१६) स्त्रीलिङ्गं सर्वनाम। **'वा गतिगन्धनयोर्विकल्पे च'** (२।१७) निपात इति। **'दिवु क्रीडादौ'** (३।१), व्योम्नि स्वर्गे च नामेति। नैवम्, अन्य एव हि क्रियार्थोऽन्य एव हि तत्प्रतिरूपकः इति। प्रपचतीत्यादावप्यन्वयव्यतिरेकाभ्यां पचादिरेव क्रियामाह– न प्रादिः, स च क्रियाविशेषक इति। तथाहि प्रपचतीत्यत्रादि कर्मविक्लित्तिश्च प्रतीयते पचतीत्यत्र प्रेण विना आदिकर्मत्वं न प्रतीयते, विक्लित्तिश्च प्रतीयते। एवमसत्यपि पचौ प्रपठतीत्यत्र प्रेत्यादिकर्म प्रतीयते एव न विक्लित्तिरिति। प्रतिष्ठते इत्यत्र तिष्ठतिः प्रेण विना गतिनिवृत्तौ गतावदृष्टोऽपि क्रियायां दृष्टत्वात्। अनेकार्थाश्च धातवो भवन्ति। यथा शालीन् वपति, विकिरति। केशान् वपति, छिनत्तीति विरुद्धार्थानां च शब्दानामुपलम्भात्। यथा आराद् दूरान्तिकयोरिति। प्रशब्दः पुनः क्रियायामदृष्टः आदिकर्मणि तु क्रियाविशेषणत्वेन दृष्टः इति तस्या व्यवच्छेदक एव (तस्य व्यवच्छेदक एव)। एवं 'प्रलम्बते' इत्यत्रोपसर्गादर्थान्तरावगमेऽपि लम्बिरेव क्रियाभाव इति। 'अधीते, अध्येति' इति च यद्यपि इङिकावधिं न व्यभिचरतस्तथापि शिष्टैस्तथैव प्रयोगात्, अधिस्तु तौ व्यभिचरति। तत्र योऽन्यत्रास्यार्थः– ग्रामेऽधिकृतोऽधिपतिरित्युपरिभावः स एवात्रापीति पारिशेष्यादिङिकावेव क्रियाभावौ भवतः इति। तथा ह्यधीते इत्यर्थवतां शब्दानां निःश्रेयसहेतूनां विधिपूर्वकं विशिष्टशब्दानामुपरिभूतं प्रतीयते, अध्येतीति च स्मरणं ज्ञानं ज्ञानार्थविषयमुत्तरकाले भाविपूर्वज्ञानस्योपरीति। तथा च 'इङ् अध्ययने, इक् स्मरणे' इति इङिकोरेव क्रियाभावत्वेन निर्देशः। किञ्च यदि सोपसर्गा एव समुदायाः विशिष्टां क्रियामाचक्षते तदन्वयव्यतिरेकानुविधानात् तस्या इति तदा **'संग्राम युद्धे'** (९।२१९) इति चुरादौ न पठितव्य एव स्यात्। संगतो ग्रामः संग्रामस्तं करोतीति इनि कृतेऽपि संग्रामयतीति सिध्यत्येव। तस्मादुपसर्गस्य न धातोरन्तर्भावः। यथा

'उदमनायत, अभ्यमनायत' इति **"कर्तुरायिः सलोपश्च"** (३।२।८), ह्यस्तन्यात्मनेपदम्। क्रियाभावो धातुश्चेत् तदा (प्रपरा-इत्यादीनामपि) 'अलपयति, वर्पयति, वफति, किषति' इत्यादीनामपि धातुत्वप्रसङ्ग इति ? सत्यम्। **शिष्टप्रयोगानुसारीदं लक्षणम्, शिष्टै**श्च ते न प्रयुक्ता इति एषामर्थवत्तैव नास्ति।

**अपर**स्त्वाह – धातुरिति **महतीयं संज्ञा पूर्वाचार्याणां** तदभ्युपगतार्था, अतस्तन्निवृत्तिस्तदा 'हिरुक्, पृथक्' – इत्यादीनां चाव्ययानां क्रियावाचिनां निवृत्तिरिति। एतेऽपि हि अव्ययत्वेनैव शिष्टानुशिष्टेषु प्रसिद्धाः। एवं चुलुम्पादयोऽप्यपठिता गणे धातवो भवन्तीति मतम्, भ्वादिपाठस्तु अनुबन्धसंजननार्थो गणार्थश्च **येषां** तूभयं नास्ति, तेषां तु प्रसवः इत्यादीनां **क्रियाप्रदर्शनार्थः पाठो बालहितायेति** क्रियाभाव इति किम् ? पटुर्मृदुर्नाम्यन्तलक्षणो गुणः स्याद् गुणाश्रये **कर्तरि** कर्मणि च त्यादयोऽपि स्युरिति ॥४२५।

**[वि० प०]**

क्रिया०। क्रियां भावयतीति प्राप्ये कर्मण्यण्। स्वभावाद् भवतिरयमिनन्तः प्रतिपादने वर्तते। क्रियते इति क्रियेति करोतेः **"कृञः श च"** (४।५।७७) इति शप्रत्ययः कर्मणि। सार्वधातुके यण् **"यणाशिषोर्ये"** (३।६।१३) इकारागमः। सा च **पूर्वापरीभूतावयवैवेति**। पूर्वश्चापरश्च पूर्वापरौ, अपूर्वापरौ पूर्वापरौ सम्पन्नौ **पूर्वापरीभूतौ**, तादृशाववयवौ यस्या इति विग्रहः। इहाक्रमस्य क्रमप्राप्तिश्च्विप्रत्ययेनोच्यते। तत्र पूर्वोऽवयवोऽधिश्रयणादिः, अपरश्चोदकसेकादिः पाकक्रियायाः। एवमन्यासामपि वेदितव्यम्। यदि पूर्वापरीभूतावयवा क्रिया तद्वाचकः **शब्दो** धातुरित्येतदुपजीव्याह – कथन्तर्हीति। न ह्यसादीनामर्थस्य क्रियात्वं पूर्वापरीभूतावयवस्यैवासम्भवादिति। एतदेव क्रमेणार्थं कथयन् दर्शयति – सत्ता नित्यतेत्यादि। अस्तिरयं भवत्यर्थः, भवतिश्च सत्तार्थः, **सत्ता च नित्या**, नित्यस्य चाक्रमरूपत्वात् **पौर्वापर्य**न्नास्तीति कथं तद्वाचकस्यासेर्धातुसंज्ञा ? ननु सत्ता नित्येति वक्तुमुचितम्, न तु सत्ता नित्यतेति तस्यास्तद्धर्मरूपत्वात्। अथोभयान्तापरिच्छिन्ना **वस्तुसत्ता** नित्यतेति वचनादेवमुच्यते, तदयुक्तम्, विवक्षितार्थापरिज्ञानात्। तत्र हि नित्यताया लक्षणं दर्शितम्, इह तु सत्ताया नित्यत्वं दर्शयन् क्रियात्वं प्रतिक्षिपति। यस्मात् सत्ता नित्या तस्मात् क्रिया न भवितुमर्हतीति ? सत्यम्। नित्यताधर्मयोगात् सत्ता नित्यतेति **वृत्तौ** सामानाधिकरण्यं न विरुध्यते।

**अयमर्थः** – यस्मान्नित्यतायुक्ता सत्ता तस्मान्न क्रिया भवितुमर्हतीति। अथवा सत्ताया नित्यता सत्तानित्यतेति षष्ठीलक्षणस्तत्पुरुषः। **अभावो नाश इति**। स हि

सर्वोपाख्याविरहलक्षणस्तत् कथं क्रिया भवेत्, न हि तस्य **पौर्वापर्यम**स्तीति कथं तद्वाचकस्य नशेर्धातुत्वमिति। श्वेतसंयोगावपि गुणाविति। गुणत्वाच्च पौर्वापर्यं नास्त्यनयोरिति। कथं तद्वाचकस्य श्वितेः संयुजेश्च धातुत्वमिति भावः। तथा समवायोऽपि नित्यत्वादक्रमरूपत्वाच्च क्रियातोऽत्यन्तं भिन्न एवेत्याह– समवायोऽप्यर्थान्तरमिति। तस्मान्न तद्वाचिनः समवपूर्वस्येणो धातुत्वमिति। परिहारमाह– सत्यमित्यादि। हिशब्दो यस्मादर्थे। साधनस्यायत्त उदयो यस्येति विग्रहः। यस्मा**दिह व्याकरणे साधनायत्तोदयं सर्वम्**, अतस्तदधीनतया साधनाधीनतया सिद्धमपि नित्यमपि पूर्वापरीभावेनानुच्यमानमपि क्रियात्वेनावभासते इति। सिद्धमपीति। न केवलमभावादिकमनित्यम्, नित्यमपि इत्यपिशब्दार्थः।

कथमेव गम्यते इति चेदाह– क्रियेत्यादि। बुद्ध्यवस्थैव निबन्धनं कारणं तस्मादिति। **अयमर्थः–** सत्तावतोऽर्थस्य क्रियायां **पूर्वापरीभावेन** व्यापारोपलम्भात् तद्गतसत्तापि पूर्वापरीभूता बुद्ध्या परिकल्प्यते, अतस्तन्निबन्धनस्तस्यामपि क्रियाव्यवहार इति। तथा चोक्तम्– **'साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः'** (वा० प० ३।७।३) इति। एवमभावादिष्वपीति। तथेति, **'गडि वदनैकदेशे'** (१।१३१) द्रव्येऽपि वर्तमानस्य गण्डेः पूर्ववद् धातुत्वमित्यर्थः। तेन 'गण्डः' इत्यपि सिद्धम्। तथा **'बिदि अवयवे'** (१।२३) द्रव्येऽपि वर्तमानस्य बिदेर्बिन्दुरिति। अथवा अक्रियावाचिनामपि क्रियावाचिषु मध्ये पाठस्तत्कार्यप्रतिपत्त्यर्थ एव भविष्यति। अन्यथा तेषु मध्ये पाठस्तेषामनर्थक एव स्यादिति। अङ्कुरो जायते इति कथमिदम्, तथाहि प्रादुर्भावः कर्तृत्वं चेति द्वयमिह घटनीयम्, तत्तु **दुर्घटमेव**। **प्रादुर्भावो ह्यसदुत्पत्तिः** कर्तृत्वं च सत एवेति परस्परविरुद्धयोर्द्वयोरेकं सन्धित्सतोऽन्यत् प्रच्यवत इति ? सत्यम्। अङ्कुरसामान्यं कर्तृ तद्विशिष्टा व्यक्तिः पूर्वमसती जायत इति धात्वर्थोऽपि घटते इत्याह– जन्म चेति। अथवा अन्तस्तत्त्वगृहीतः पूर्वदृष्टोऽङ्कुरः कर्ता तस्य बाह्यरूपतया जन्म चाभूतप्रादुर्भाव एवेति। न च वक्तव्यम्, अन्यः कर्ता अन्यश्च बाह्यो जायते, ततो भिन्नविषयत्वादयुक्तमिति। अन्तस्तत्त्वगृहीतस्य बाह्येनैकत्वाध्यवसायात्, तथाहि य एव मया पूर्वमध्यवसितः स एवायं दृश्यते बाह्य इति दृश्यविकल्पितयोरेकत्वेन व्यवहारो दृश्यते। तथा चोक्तम्– **'दृश्यविकल्पितावर्थावेकीकृत्य व्यवहारप्रतिपत्तिः'** इति।

**सत्कार्यवादिनां तु मते** कारणमेव कार्यरूपेण विपरिणमते इति युक्तं कर्तृत्वमङ्कुरादेः कारणावस्थायामेव कार्यस्य शक्तिरूपेण विद्यमानत्वात्। आविर्भावश्च जन्मार्थः स च पूर्वमसन्नेवेति अभूतप्रादुर्भावो जन्मापि संगच्छत एवेति। एवमङ्कुरो

भवतीति। **प्रकृतिविकारभावविवक्षायां** तु च्विप्रत्ययः, यथा बीजमङ्कुरीभवति। अथ-वेत्यादि। न खल्वत्यन्तासदुत्पत्तिः प्रादुर्भावः, अपि तु जायते विशेषेणोपलभ्यते। पत्रकाण्डादिभेदेन स्फुटीभवतीत्यर्थः। तथाहि 'प्रादुः' शब्दो प्रकाशेऽभिधानकाण्डेषु दृश्यते प्रकाशश्च सत एवेत्याह– अतोऽङ्कुरस्य कर्तृत्वमिति पूर्वापरीभावोऽपि जन्मनि पाकादिक्रियावद् विद्यते इति सर्वमनवद्यम्। तथा चोक्तम् इत्यादिना व्यक्तमेव **वृद्धमतसंवादेन** दृढयति। आश्रितं क्रमरूपं येन तदाश्रितक्रमरूपं सिद्धमसिद्धं वा तस्य भावस्तत्त्वं तस्माद् यावत् साध्यत्वेन प्रतीयते **सा क्रियेति** सम्बन्धः॥४२५।

**[क० च०]**

क्रिया०। क्रियते इति **वृत्तिः**। ननु क्रियते इति क्रिया साध्यम् उच्यते इत्युक्ते कृधातोरर्थः करणम्, आत्मनेपदार्थश्च व्याप्यम्। ततश्च 'कटं करोति' इत्यादौ करणव्याप्यत्वेन कटादेरपि क्रियात्वं स्यात् ? नैवम्। कृधातोरत्र प्रयत्नोऽर्थः, ततश्च प्रयत्नरूपं यदधिश्रयणादिकं तत् क्रियेति। एतेन प्रयत्नजन्यत्वं क्रियात्वमिति क्रिया-लक्षणमिति **कश्चित्**। तन्न, प्रयत्नजन्यस्यैव क्रियात्वे प्रयत्नस्य क्रियात्वं न स्यात्। ततश्च प्रयत्नमात्रवाचकस्य कुतो धातुत्वम् इति। तस्मात् क्रियते इति क्रियेति **वृत्तिकृता** यदुक्तं तद्व्युत्पत्तिमात्रप्रदर्शनपरम्। **वस्तुतः** क्रियालक्षणमाह– सा चेत्यादि। **अस्यायमर्थः–** अपूर्वापरौ पूर्वापरौ सम्पन्नौ पूर्वापरीभूतौ तादृशाववयवौ यस्या इति **पञ्जी**। ननु पचिवाच्याधिश्रयणादीनामाशु विनाशिनां कदाचिदपि तादृशपूर्वा-परत्वेन स्थितेरभावात् कथं च्विप्रत्ययः संगच्छते ? सत्यम्। **अवयवो हि द्विविधः** – क्रमिकावस्थितः अक्रमिकावस्थितश्च। तत्र घटादेरेकदैव सर्वावयवस्य विद्यमानत्वाद-क्रमावस्थितत्वम्, पचिवाच्याधिश्रयणादेस्तु आरोपितसमुदायस्याधिश्रयणाद्यवय-वानामाशुविनाशित्वेन क्रमावस्थितत्वम्, ततश्च यदेवावयवत्वं क्रमिकाक्रमिकयोर्वर्तते, तदेव धर्मित्वेनात्र परिकल्प्यते, तेन यदा तदेवावयवत्वम् अक्रमीभूतघटाद्यवयवं विहाय क्रमीभूताधिश्रयणाद्यवयवे वर्तते, तदा प्रकृतिविकारभावः।

न चावयवत्वस्य जातः पौर्वापर्याभावादपूर्वापरौ पूर्वापरौ सम्पन्नौ इति कथं संगच्छते इति वाच्यम्, धर्मधर्मिणोरभेदस्य विवक्षितत्वात्। यथा दीर्घीभवतीत्यत्र ह्रस्वदीर्घोभयवर्णानुगतं वर्णत्वमेकं धर्मित्वेन परिकल्प्य च्विप्रत्ययः इति। एतदेव मनसि कृत्वाह **पञ्जी** – अक्रमस्येत्यादि। एतेन पूर्वापरीभूतावयवत्वमिति क्रियालक्षणं सत्ता नित्यतेति **पञ्जी**। ननु असधातोर्भुवि पठितत्वात् कथं तस्य सत्तार्थोऽवगम्यत इत्याह– अस्तिरयमिति भवतेरर्थोऽर्थो यस्येति मध्यपदलोपी समासः। नित्यतापदेन सह सत्तापदस्य सामानाधिकरण्यं दृष्टान्तेन साधयति – अथेत्यादि। उभयान्ता-

परिच्छिन्ना उभयान्तेन आद्यन्तावधिना अपरिच्छिन्नेत्यर्थः। उपचाराश्रयणं कष्ट-मित्याह– अथवेति। स हि सर्वोपाख्याविरहलक्षण इति। **उपाख्या प्रसिद्धिः। सर्वप्रसिद्धे** विरहो यत्र तल्लक्षणस्तत्स्वरूपोऽभावः किञ्चिद् विशिष्टतयापि न प्रतीयते इत्यर्थः। यद् वा सर्वेषां स्थावरजङ्गमादीनां या उपाख्या नाम तद्विरह-लक्षणः एतेन चराचरभिन्नं वस्त्वेवं न भवतीत्य**भिप्रायः**।

नन्वेतादृशोऽप्यभावः कथं क्रिया न भवेदित्याह–नहीत्यादि।साधनस्यायत्त उदयो यस्येति। साधनस्य प्रयोक्तुरायत्तोऽधीनो ज्ञानं यस्येत्यर्थः। एतेन प्रयोक्त्रा पौर्वापर्यरूपेण सत्तादिकं गृह्यते इति भावः। ननु यदि गुणादिरपि प्रयोक्त्रा पौर्वापर्य-भावेन गृह्यते तदा श्वेतादिशब्दवत् शुक्लादिशब्दानामपि धातुत्वं स्यात् ? सत्यम्, धातुसंज्ञया आख्यातिकप्रत्ययो विधातव्यस्तेन च धात्वर्थस्य साध्यता प्रत्याय्यते, ततश्च यदुत्तरप्रत्ययेन यस्य साध्यता प्रत्याय्यते श्रुतत्वात्तस्यैव धातुसंज्ञेत्यर्थे शुक्लादिपदाद् विहितस्याख्यातिकप्रत्ययस्य स्वभावात् शुक्लगुणगतसाध्यताप्रति-पादकत्वाभावान्न तेषां धातुसंज्ञेति। यद् वा भावग्रहणबलात् क्रियामात्रवाचकस्य शब्दस्य धातुसंज्ञा इत्यर्थस्य लब्धत्वेन भूयते इत्यादौ साध्यतार्थस्यातिरिक्तत्वाद् यथा धातुसंज्ञा **टीकाकारेण** निवार्यते तथाऽत्रापि शुक्लादिपदेन सिद्धताभूतशुक्लगुणस्या-भिधीयमानत्वादिति न दोषः। एतेन पूर्वापरीभूतावयवत्वेन प्रतीयमानत्वं क्रियात्वमिति **क्रियालक्षणम्**।

ननु प्रादीनां (अन्यत्र शक्तिकल्पनाभावात्) शक्त्यन्तराभावात् प्रपचतीत्यादौ धातूपसर्गसमुदायस्यैव विशिष्टेऽर्थे शक्तिरिति समुदायस्यैव धातुसंज्ञा स्यात् ? नैवम्। अन्वयव्यतिरेकाभ्यां पचादिरेव क्रियामाह, न तु प्रादिः। प्रादिस्तु क्रिया-विशेषक इति। अन्वयव्यतिरेको यथा प्रपचतीत्यत्र आदिकर्म विक्लित्तिश्च प्रतीयते इति, पचतीत्युक्ते आदिकर्म न प्रतीयते किन्तु विक्लित्तिमात्रमिति। असत्यपि पचौ प्रादीनां प्रकर्षादिकर्मादिकं विक्लित्तिश्च न प्रतीयते इति। न चोपपदस्य पचधातोश्च प्रत्येकमर्थवत्त्वाद् विशिष्टार्थप्रतिपादकस्य प्रपचतिसमुदायस्य धातुसंज्ञा स्यादिति वाच्यम्, यस्माद् विहितप्रत्ययेन यस्यार्थस्य साध्यता प्रत्याय्यते तदर्थवाचकस्यैव धातुसंज्ञाङ्गीकारात्। यथा 'मृद्वपाक्षीत्' इत्यत्र मृदुशब्दस्य क्रियाविशेषणत्वेऽपि मृदुसमुदायस्य न धातुसंज्ञा।

ननु यत्रोपसर्गसन्निधावपि धातोर्विकल्पितार्थः प्रतीयते, तत्राधिकार्थस्य वाचको भवतु नोपसर्गः। यत्र प्रतिष्ठते इत्यत्र न क्लृप्तार्थोऽवगम्यते, किन्तु अर्थान्तरमात्रं तत्रोपसर्गसमुदायस्यैव गत्यादौ शक्तिर्युक्तेति **तत्रैकदेशस्य** निरर्थकस्य कथं

धातुसंज्ञेति ? सत्यम्, प्रेण विना गतावदृष्टोऽपि तिष्ठतिर्गत्यर्थः परिकल्प्यते इति। न च गतावपठितत्वात् कथं तिष्ठतिर्गत्यर्थः स्यादिति वाच्यम्, **'अनेकार्थाश्च धातव** इत्यङ्गीकारेण गतावप्यस्य वर्तमानत्वात्। यथा 'केशान् वपति' इत्युक्ते छिनत्तीति गम्यते, शालीन् वपतीति विकिरतीति गम्यते, नाप्येकस्यैव तिष्ठतेर्विरुद्धोभयार्थता कथं घटतामिति वाच्यम्, शब्दस्य विरुद्धार्थयोरप्युपलम्भात्। यथा **'आराद् दूरसमीपयोः'** (अ० को० ३।३।२४२) इति आरात्–शब्दस्य विरुद्धोभयार्थत्वात्। ननु 'प्रतिष्ठते' इत्यादौ प्रशब्दस्य प्रकृष्टक्रियायां दृष्टत्वात् तिष्ठतौ प्रशब्दे वा शक्तिरित्यत्र नियामकाभावात् समुदायशक्तिरेव न्याय्येति। नैवम्, प्रशब्दस्य विशेषाभिधायकत्वं न दृष्टं तिष्ठतेस्तु तद् दृष्टमिति निश्चिताभिधायक एव शक्तिः कल्प्यत इति। अथ तद्दर्शनमात्रमकिञ्चित्करम्, अन्वयव्यतिरेकाभ्यां प्रशब्दस्यैव गतौ शक्तिरिति वक्तुं युज्यते। अत एव सर्वत्रोपसर्गस्य वाचकत्वमिति **कन्दलीकारादिभिर**-प्युक्तमिति न वाच्यम्, यावता तिष्ठतेरानर्थक्ये प्रत्ययार्थान्वयो गतौ न स्यात्, **प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानां व्युत्पत्तिरिति**। तर्हि प्रशब्दोच्चारणं किमर्थमिति चेत् तस्य गतेरेव द्योतनार्थमिति धातोर्गत्यर्थाभिधायकतायां शक्तिपरिचायकत्वं प्रशब्दस्येति। एतेन सर्वत्रैव धातोः क्लृप्तानेकार्थत्वेन प्रपचतीत्यत्रापि प्रावच्छेदेन पचिनैव प्रकृष्टपचनमभिधीयते। प्रगतो नायकः 'प्रणायकः' इत्यादौ अध्याहृतगतिक्रियां प्रत्युपसर्गत्वमिति यथा प्राध्वमित्यत्र **"उपसर्गादध्वनः"** (२।६।७३-३२) इत्यत्प्रत्ययः। अन्यथा उपसर्गत्वाभावादत्प्रत्ययो न स्यादिति।

ननु कथमिकिङोर्धात्वोर्धातुसंज्ञा, यावता अनयोरधिसहितयोरेवार्थवत्त्वं न केवलयोरिति, यस्त्वनयोर्गणेऽर्थनिर्देशः समुदायार्थमवयवेऽध्यारोप्य कृतः इति **न्यासकृतोक्तं** तस्मादधिपूर्वयोरेवानयोर्धातुसंज्ञा भवितुमर्हतीति? सत्यम्, 'अधीयते, अध्येति' इति च यद्यपीङिकावधिं परित्यज्य न तिष्ठतस्तथापि शिष्टैरिङिकोरध्ययन-स्मरणयोः प्रयुक्तत्वाद् इङिकावेव क्रियाभावौ भवत इति। अधिस्त्विङिकौ परित्यज्य ग्रामेऽधिकृतो ग्रामेऽधिपतिरित्यादौ अधिकार्थमेवाचष्टे, अतोऽन्यत्राप्यधेः स एवार्थः कल्पनीयः इति कथं **समुदायशक्तिः कल्पनीया**। किञ्च यदि सोपसर्गा एव क्रियावाचकाः स्युस्तदा **'संग्राम युद्धे'** (९।२१९) इति न चुरादौ पठितः एव स्यात्, यावता संगतो ग्रामस्तं करोतीतीनि कृते संग्रामयते इति सिद्धमेव। तस्माद् गणे संग्रामशब्दपाठ एव ज्ञापयति– सोपसर्गस्य न धातुत्वमिति। अथात्मनेपदार्थमेव 'संग्राम युद्धे' इति

---

१. द्र०, समीक्षा, इसी सूत्र की।

पठितव्यम्, अन्यथा "**इनू कारितं धात्वर्थे**" (३।२।९) इतीनि कृते "**इनुञ्यजादेः**" (३।२।४५) इत्यादिनोभयपदं स्यात् कथं ज्ञापकं भविष्यति ? सत्यम्। यद्यात्मनेपदार्थ एव पाठः स्यात् तदा 'ग्राम युद्धे' इत्येव पठितं स्यात्, न च समुपसर्गादिव ग्रामधातोरिनिति नियमार्थं समुपादानं कथमात्मनेपदं भविष्यति, यावताऽन्योपसर्गसहितस्य ग्रामेः प्रयोग एव नास्ति अभिधानादिति, तथा च गणे ग्रामपाठादेव, तथा च संगतो ग्रामः संग्रामस्तं करोतीति वाक्ये कारितमुभयपदं न भविष्यति किन्त्वात्मनेपदमेव। अन्यथा आत्मनेपदार्थं ग्रामधातुपाठो व्यर्थः स्यादिति **दिक्**।

अङ्कुरसामान्यं कर्तृ तद्विशिष्टा व्यक्तिः पूर्वम् असती जायते इति **पञ्जी**। ननु अङ्कुरसामान्यस्य कर्तृत्वं प्रादुर्भावश्चेति ? सत्यम्। व्यक्तेः सामान्यविशिष्टत्वं प्रतिपादयता सामान्यविशेषात्मकं जन्मेति प्रतिपादितम्। ननु **बौद्ध**मते सामान्यं नास्ति, किन्तु ज्ञानाकार एव शब्दार्थ इति। तदुक्तम्– 'ज्ञानस्य कारणं त्वादि बाह्यं किञ्चिन्न विद्यते' इति। तस्मादङ्कुरस्य कथं कर्तृत्वमित्याह – अथवेति। अन्तस्तत्त्वगृहीत इति। अन्तर्गतत्वेन गृहीतो ज्ञानाङ्कुरः। पूर्वदृष्ट इति पूर्वं मनआदिवासनावशाद् दृष्ट इन्द्रियजनितः स एव कर्तेत्यर्थः। दृश्यविकल्पितयोरित्यादि। दृश्यो ज्ञानाकारः **पारमार्थिकः**। विकल्पितो वासनाकल्पितो बाह्यस्वरूप इत्यर्थः। **सांख्य**मतमाह– सत्कार्येत्यादि। **ते** हि 'नासदुत्पद्यते सन्न विनश्यति' इत्याहुः। **वृद्धसाङ्ख्यम**तमवलम्ब्याह – अथवेति। पूर्वापरीभावोऽपि जन्मनीति प्रसिद्धिबलादवयवादिसंयोगादिभेदेन क्रमिकत्वमिति भावः। यावत् सिद्धमित्यादि **वृत्तिः**। सिद्धं सत्तादिकमसिद्धं गुणादिकं साध्यत्वेन प्रतीयते प्रत्ययेन बोध्यते इत्यर्थः।आश्रितमुपचारादिना प्रत्ययबोधितं क्रमरूपं यत्रेति विग्रहः॥४२५।

**[समीक्षा]**

पाणिनि तथा शर्ववर्मा दोनों ही आचार्यों ने क्रियावचन शब्दों की धातुसंज्ञा की है। एतदर्थ कातन्त्रकार ने स्पष्टतया 'क्रियाभावो धातुः' सूत्र बनाया है। पाणिनि का सूत्र है– "भूवादयो धातवः" (अ० १।३।१)। इसमें साक्षात् क्रियावचन शब्द का उल्लेख नहीं है, तथापि व्याख्याबलेन क्रियावचन वाले ही 'भू-वा' आदि शब्दों की धातुसंज्ञा स्वीकार की जाती है। फलतः पृथ्वीवाचक भू की तथा विकल्पार्थक वा की धातुसंज्ञा नहीं होती। **न्यासकार जिनेन्द्रबुद्धि** ने कहा है कि आचार्य व्यवहार में लाघव के लिए संज्ञाएँ करते हैं, अतः एक अक्षर वाली ही संज्ञाएँ होनी चाहिए, नथापि पूर्वाचार्यों द्वारा स्वीकृत धातुसंज्ञा को पाणिनि ने इसीलिए अपनाया है कि पूर्वाचार्य जिस प्रकार के शब्दों की धातुसंज्ञा करते थे,

उसी प्रकार के शब्दों की धातुसंज्ञा यहाँ भी अभीष्ट है। यतः पूर्वाचार्यों ने क्रियावचन वाले शब्दों की ही धातुसंज्ञा की थी, अतः यहाँ पर भी सत्तारूप क्रिया अर्थ **को ही कहने वाले 'भू' की तथा गति-गन्धनरूप क्रियार्थक 'वा' की धातुसंज्ञा होगी,** पृथ्वीवाचक भू की तथा विकल्पार्थक वा की धातुसंज्ञा नहीं होगी – "लघ्वर्थं हि संज्ञाकरणमिच्छन्त्याचार्या इत्येकाक्षरायां संज्ञायां कर्तव्यायां महत्याः पूर्वाचार्यसंज्ञायाः यदाश्रयणं तस्यैतत् प्रयोजनम् – यथाविधानां ते धातुसंज्ञां कृतवन्तस्तथाविधानामेवैषा संज्ञा यथा स्यादिति। ते च क्रियावचनानामेव धातुसंज्ञां विहितवन्तस्तदिहापि पूर्वाचार्यसंज्ञाश्रयणात् क्रियावचनानामेव धातुसंज्ञां विधीयते। तेन 'या-वा-दिव्' इत्येवमादीनां धातुसमानशब्दानामक्रियावचनानान्न भवतीति भावः" (का० न्या० १।३।१)।

धातु उसे कहते हैं जो विविध अर्थों को धारण करे – दधाति विविधान् अर्थान् यः स धातुः। इसीलिए धातुएँ अनेकार्थक होती हैं। धातुसूत्रों में प्रधान अर्थ का ही प्रायः पाठ किया जाता है। क्षीरतरङ्गिणीकार मैत्रेयरक्षित ने कहा है –

**क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः।**
**प्रयोगतोऽनुसर्तव्या अनेकार्था हि धातवः[1] ॥**

(क्षी० त०, चु० ३९२)।

आर्चाय चन्द्रगोमी ने अपने चान्द्रधातुपाठ के अन्त में भी यह वचन उद्धृत किया है।

**पूर्वाचार्यों द्वारा धातुसंज्ञा का प्रयोग –**

**गोपथब्राह्मण** – ओङ्कारं पृच्छामः – को धातुः, किं प्रातिपदिकम्। ..... को धातुरित्यापृर्धातुरवतिमप्येके (१।१।२४, २६)।

**काशकृत्स्नधातुव्याख्यान** – धातौ साधने दिशि पुरुषे चिति तदाख्यातम्। ..... धातुभ्यः स्युः क्विबादयः (सू० १, सू० ४५)।

**बृहद्देवता** – लिङ्गं धातुं विभक्तिं च संनमेत् तत्र तत्र च ॥
यावतामेव धातूनां लिङ्गं रूढिगतं भवेत् ॥
धातुजं धातुजाज्जातम् ॥ (२।१०१, १०२, १०४)।

---

१. बह्वर्था अपि धातवो भवन्तीति (म० भा० १।३।१)।
अनेकार्थत्वाद् धातूनां तिष्ठतिरेव गतिवाचीति निर्णयः (म० भा० प्र० १।३।१)।

**अथर्ववेदप्रातिशाख्य –** गतिपूर्वो यदा धातुः क्वचित् स्यात् तद्धितोदयः (१।१।११)।

**ऋक्तन्त्र –** उपसर्गस्य धातावेकाक्षरे नामभूते इति (५।२।६)।

**नाट्यशास्त्र –** एकस्य बहूनां वा धातोर्लिङ्गस्य पदानां वा।
विभजन्त्यर्थं यस्माद् विभक्तयस्तेन ताः प्रोक्ताः॥ (१४।३०)।

**अर्वाचीन ग्रन्थों में धातुसंज्ञा का प्रयोग –**

**जैनेन्द्रव्याकरण –** भूवादयो धुः (१।२।१)।

**शाकटायनव्याकरण –** क्रियार्थो धातुः (१।१।२२)।

**हैमशब्दानुशासन –** क्रियार्थो धातुः (३।३।३)।

**मुग्धबोधव्याकरण –** भ्वादिर्धुः (सू० ११)।

**शब्दशक्तिप्रकाशिका –** निरुक्ता प्रकृतिर्द्वेधा नामधातु-प्रभेदतः।
यो यत्स्वार्थस्योत्तरस्थ-तृजर्थे बोधनक्षमः॥
स तादृशार्थकः शब्दो धातुस्त्रिविध ईरितः।
यः सुबर्थे निजार्थस्य स्वार्थे कृच्चिन्तनं विना॥
यादृशस्यान्वयाहेतुः स वा धातुस्तदर्थकः।
मूलधातुर्गणोक्तोऽसौ सौत्रः सूत्रैकदर्शितः॥
योगलभ्यार्थको धातुः प्रत्ययान्तः प्रकीर्तितः।
(का० १४, ५६, ५७, ५८)।

**नारदपुराण –** भूवाद्या धातवः प्रोक्ताः सनाद्यन्तास्तथैव च॥
फलव्यापारयोर्धातुः। ......
भूवाद्या धातवो ज्ञेयाः परस्मैपदिनः स्मृताः॥
(५२।२१, ८८; ५३।१९)।

**अग्निपुराण –** भूवाद्या धातवः स्मृताः (३५७।७)।

लोक में धातु - शब्द का व्यवहार सुवर्णादि तथा रस-रक्तादि के लिए भी होता है। ऐसी मान्यता है कि आयुर्वेदसम्मत रस-रक्त-मांस-मेदस्-अस्थि-मज्जा तथा शुक्र धातुओं के विना जैसे शरीर की स्थिति नहीं हो सकती, वैसे ही शाब्दिकाचार्यसम्मत धातुओं के विना समस्त वाङ्मय प्रतिष्ठित नहीं हो सकता। विशेषतः

यौगिक शब्दावली तो धातुओं से ही व्याप्त मानी जाती है। रूढ शब्दों की भी यथाकथंचित् व्युत्पत्ति के लिए धातुओं की कल्पना करनी ही पड़ती है।

**यत्किञ्चिद् वाङ्मयं लोके सान्वयं सम्प्रतीयते।**
**तत् सर्वं धातुभिर्व्याप्तं शरीरमिव धातुभिः॥**

(जै० व्या०, द्वि० अ०, पृ० १४९)।

नन्दिकेश्वरकाशिका की उपमन्युकृत तत्त्वविमर्शिनी टीका के अनुसार ऐन्द्र व्याकरण में सभी धातुएँ अनुबन्धविशिष्ट थीं –

"तथा चोक्तमिन्द्रेण – अन्त्यवर्णसमुद्भूता धातवः परिकीर्तिताः" (का० २)।

**[विशेष वचन]**

१. क्रियते इति क्रिया साध्यमुच्यते, सा च पूर्वापरीभूतावयवैव (दु० वृ०; दु० टी०)।

२. इह हि साधनायत्तोदयं सर्वम्, अतस्तदधीनतया सिद्धमपि क्रियात्वेनावभासते, क्रियाकारकव्यवहृतेर्बुद्ध्यवस्थानिबन्धनात् (दु० वृ०)।

३. क्रियाभावः। क्रियां भावयतीति प्राप्ये कर्मण्यण्, हेतुविवक्षायामिन्। ..... क्रियते इति क्रिया, "कृञः श च" इति कर्मणि शप्रत्ययः (दु० टी०)।

४. यथोक्तं सदकारणवन्नित्यम् (दु० टी०)।

५. तथा चाह – महाविषयत्वात् सर्वेऽपि धातवो भुवोऽर्थमभिदधतीति (दु० टी०)।

६. दृश्यविकल्प्यावर्थावेकीकृत्य व्यवहारप्रवृत्तिरिति (दु० टी०; वि० प०)।

७. सद्वादे तु कारणमेव कार्यरूपेण परिणमते इति युक्तम् (दु० टी०)।

८. अन्य एव हि क्रियार्थोऽन्य एव हि तत्प्रतिरूपक इति (दु० टी०)।

९. अनेकार्थाश्च धातवो भवन्ति (दु० टी०)।

१०. धातुरिति महतीयं संज्ञा पूर्वाचार्याणां तदभ्युपगतार्था (दु० टी०)।

११. अस्तिरयं भवत्यर्थः, भवतिश्च सत्तार्थः, सत्ता च नित्या, नित्यस्य चाक्रमरूपत्वात् पौर्वापर्यं नास्तीति (वि० प०)।

१२. बौद्धमते सामान्यं नास्ति, किन्तु ज्ञानाकार एव शब्दार्थ इति (क० च०)।

१३. दृश्यो ज्ञानाकारः पारमार्थिकः विकल्पितो वासनाकल्पितो बाह्यस्वरूप इत्यर्थः। सांख्यमतमाह – सत्कार्येत्यादि। ते हि 'नासदुत्पद्यते, सन्न विनश्यति' इत्याहुः (क० च०)।

**[ रूपसिद्धि ]**

१. **भवति** । भू + अन् + ति । सत्तारूपक्रियार्थक भू की प्रकृत सूत्र से धातु-**संज्ञा**, "शेषात् कर्तरि परस्मैपदम्" (३।२।४७) से परस्मैपदसंज्ञक प्रथमपुरुष – **एकवचन** तिप्रत्यय, "प्रत्ययः परः" से उसका धातु से पर में विधान, "अन् **विकरण**ः कर्तरि" (३।२।३२) से प्रकृति – प्रत्यय के मध्य में अन् विकरण, **न् अनुबन्ध** का प्रयोगाभाव, "अनि च विकरणे" (३।५।३) से भूगत ऊकार को **गुणादेश** ओकार, "ओ अव्" (१।२।१४) से ओकार को अवादेश ।

२. **अत्ति** । अद् + ति । अद् भक्षणे (२।१) की धातुसंज्ञा, परस्मैपदसंज्ञक **तिप्रत्यय**, अन् विकरण, उसका "अदादेर्लुग् विकरणस्य" (३।४।९२) से लुक्, "**अघोषेष्वशिटां** प्रथमः" (३।८।९) से द् को त् ।

३. **जुहोति** । हु + ति । 'हु दाने' (२।६७) की धातुसंज्ञा, ति-प्रत्यय, अन् **विकरण**, "अदादेर्लुग् विकरणस्य" (३।४।९२) से विकरण का लुक्, "जुहोत्यादीनां **सार्वधातुके**" (३।३।८) **से** हु को द्वित्व, पूर्ववर्ती हु की "पूर्वोऽभ्यासः" (३।३।४) **से** अभ्याससंज्ञा, "हो जः" (३।३।१२) से हकार को जकारादेश, "नाम्यन्त-योर्धातुविकरणयोर्गुणः" (३।५।१) से हु-गत उकार को गुणादेश ओकार ।

४. **दीव्यति** । दिव् + यन् + ति । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्ति-गतिषु' (३।१) से परस्मैपदसंज्ञक प्रथम पुरुष – एकवचन तिप्रत्यय, "दिवादेर्यन्" (३।२।३३) से यन् विकरण, न् अनुबन्ध का प्रयोगाभाव, "नामिनो र्वोरकुर्छुरो-र्व्यञ्जने" (३।८।१४) से दिव् की उपधा इकार को दीर्घादेश ।

५. **सुनोति** । षुञ् + नु + ति । "धात्वादेः षः सः" (३।८।२४) से मूर्धन्य षकार को सकारादेश, परस्मैपदसंज्ञक तिप्रत्यय, "नुः ष्वादेः" (३।२।३४) से नु विकरण, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से नु-घटित उकार को गुणादेश ओकार ।

६. **तुदति** । तुद + अन् + ति । 'तुद व्यथने' (५।१) धातु से तिप्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, न् अनुबन्ध का प्रयोगाभाव, "नाम्नश्चोपधाया लघोः" (३।५।२) से तुद्-घटित उपधासंज्ञक उकार को प्राप्त गुण का "तुदादेरनि" (३।५।२५) से निषेध ।

७. **रुणद्धि** । रुध् + न + ति । 'रुधिर् आवरणे' (६।१) धातु से तिप्रत्यय, "स्वराद् रुधादेः परो नशब्दः" (३।२।३६) से न-विकरण, "घढधभेभ्यस्तथो-

र्धोऽधः" (३।८।३) से त् को ध् "रषृवर्णेभ्यो नो णमनन्त्यः स्वरहयवकवर्गपवर्गान्तरोऽपि" (२।४।४८) से नकार को णकारादेश, "धुटां तृतीयश्चतुर्थेषु" (३।८।८) से पूर्ववर्ती धकार को दकारादेश।

८. **तनोति**। तन्+उ+ति। 'तनु विस्तारे' (७।१) धातु से तिप्रत्यय, "तनादे रुः" (३।२।३७) से उ-विकरण, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से उ-विकरण को गुण ओ।

९. **क्रीणाति**। क्री+ना+ति। 'डु क्रीञ् द्रव्यविनिमये' (८।१) धातु से परस्मैपदसंज्ञक प्रथम पुरुष–एकवचन तिप्रत्यय, "ना क्र्यादेः" (३।२।३८) से ना-विकरण, "रषृवर्णेभ्यो नो णमनन्त्यः स्वरहयवकवर्गपवर्गान्तरोऽपि" (२।४।४८) से नकार को णकारादेश।

१०. **चोरयति**। चुर्+इन्+ति। 'चुर स्तेये' (९।१) धातु से "चुरादेश्च" (३।२।११) सूत्र द्वारा इन् प्रत्यय, "नामिनश्चोपधाया लघोः" (३।५।२) से चुर्-घटित उपधा उकार को गुण ओकार, तिप्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, "अनि च विकरणे" (३।५।१) से इकार को गुण एकार तथा 'ए अय्" (१।२।१२) से ए को अयादेश ॥४२५।

## ४२६. काले [३।१।१०]

### [ सूत्रार्थ ]

यह अधिकार सूत्र है, अतः परवर्ती सूत्रों में विशेषणवाची 'सम्प्रति–भविष्यति–अतीते' शब्दों का इसके साथ अन्वय होता है ॥४२६।

### [दु० वृ०]

'काले' इति सप्तम्यन्तमनुकृतम्। 'काले' इत्यधिकृतं वेदितव्यम्। तेन साधने वर्तमानेऽतीते भविष्यति च न स्यात्। ग्रामं गतो गमिष्यति चायं देवदत्तः। रामो वनमगच्छत्। बलिरिन्द्रो भविष्यति। वर्तमानादिभिः किम् ? धातोर्विशेषणं द्रव्यस्य वेति सन्देहेऽयमधिकारः। नित्यो व्यापी सम्प्रतिभूतभविष्यत्क्रियायोगादाकाशकल्प एको द्रव्यस्थो भिद्यते कालः ॥४२६।

### [दु० टी०]

काले। काले इति सप्तम्यन्तमनुकृतमिति। यदि सप्तम्यन्तता नानुक्रियते, अर्थवशाद् विभक्तिविपरिणामोऽपि गरीयान् स्यात्। ननु कालस्य सप्तम्यन्तस्याधिकृतत्वात् कथन्तर्हि न प्रथमा ? सत्यम्। गम्यमानेनेतिशब्देनाभिहितत्वादित्याह –

काले इत्यधिकृतमिति। **कश्चिद्** आह – लुप्तप्रथमः 'काले' शब्दोऽधिक्रियते इति। ननु च **कालो हि** सर्वगतो नित्य एको निरवयवो निष्क्रियः इत्यादिभिराकारैराकाशमिव प्रतीयते, कथन्तर्हि वर्तमानादिभिर्व्यपदिश्यते ? सत्यम्। तस्य ये वर्तमानादयो व्यपदेशास्ते क्रियाद्वारा एव क्रियासु वर्तमानादिकाल उपचर्यन्ते, तस्माद् वर्तमानभूतभविष्यत्क्रियासम्बन्धात् तद्वति पदार्थे वर्तमानादयः कालशब्दाः सिद्धाः। तथा चाह –

**क्रियान्तरपरिच्छेदे प्रवृत्ता या क्रियां प्रति।**
**निर्ज्ञातपरिमाणा (लिङ्ग्यतेऽपरिमाणा) सा काल इत्यभिधीयते॥**
**गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।**
**बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥**
**मुष्टिप्रस्थसुवर्णादि मूर्तिभेदाय कल्प्यते।**
**क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका॥**
**क्रियाभेदाद् यथैकस्मिन् तक्षाद्याख्या प्रवर्तते।**
**क्रियाभेदात् तथैकस्मिन् ऋत्वाद्याख्या प्रवर्तते॥**

एवं मनसिकृत्याह – नित्यो व्यापीत्यादि।

**आदित्यग्रहताराणां परिस्पन्दमथापरे।**
**भिन्नमावृत्तिभेदेन कालं कालविदो विदुः॥**

(वा० प० ३।९।७७; ८।४; ९।२, ३२, ७६)।

अयमपि क्रियाकाल एव, किन्तु सूर्यादिपरिस्पन्दक्रियाभिः परम्परया कर्तुः क्रियायाः वर्तमानत्वादिव्यपदेशप्रतिपत्तयो गरीयस्यो भवन्ति, सूर्यादिपरिस्पन्दस्य वर्तमानत्वादतीतत्वाद् भविष्यत्त्वाच्च उदाहृताः कर्तृक्रिया अपि तथैवेत्यर्थः॥४२६।

## [वि० प०]

काले। अथ किमर्थं सप्तम्यन्तमनुक्रियते प्रथमान्त एवाधिक्रियताम् ? सत्यम्। प्रथमान्तत्वे हि वक्ष्यमाणेषु योगेषु (सम्प्रतिवर्तमानेत्यादिषु) सप्तम्या वाक्यार्थस्याघटनं स्यात्। **'अर्थवशाद् विभक्तिविपरिणामोऽपि गरीयान् पक्षः'** (का० परि० २५) इति। अस्तु तर्हि साक्षात् सप्तम्यन्ततेति चेत्, नैवम्। अधिक्रियमाणत्वात् प्रथमान्त एव युज्यते न सप्तम्यन्तो यथा कृदिति, यद्येवमधिक्रियमाणत्वात् कथन्न प्रथमा ? गम्यमानेनेतिशब्देन तदर्थस्याभिहितत्वात्। यथा गवित्ययमाहेत्यत्र गोशब्दान्न प्रथमा तथात्रापीति।

तमेव गम्यमानमितिशब्दं दर्शयति – काल इत्यधिकृतं वेदितव्यमिति । कालाधिकारस्य फलमाह – तेनेत्यादि । तेनेति हेतौ तृतीया । साधन इति प्रत्येकं सम्बध्यते – साधने वर्तमाने, साधनेऽतीते, साधने भविष्यति च कालाधिकारेण हेतुना तदेतन्न स्यादित्यर्थः ।

एतदुक्तं भवति कालाधिकारेऽस्मिन् वर्तमानादिना साधनं न विशिष्यते, तेन वर्तमाने साधने न वर्तमानादिः, अतीते च साधने न परोक्षादिः, भविष्यति साधने च न भविष्यन्त्यादिः प्रत्यय इति, अपि तु काल एव विशिष्यते । तेन वर्तमानेऽपि साधने कालस्यातीतत्वाद् भविष्यत्त्वाच्चातीते भविष्यति च विहितः प्रत्ययो जात इत्याह – ग्रामं गतो गमिष्यति चायं देवदत्त इति । अयमिति साधनस्य प्रत्यक्ष-परामृश्यमानमूर्त्तिकत्वाद् वर्तमानताम् आह । अन्यथा ह्ययमिति साधनस्य वर्तमानत्वाद् वर्तमानाया एव विषय इति भावः । तथातीतभविष्यद्विषयाणां तु प्रत्ययानाम् अतीतभविष्यत्साधनविषयत्वमेव स्यादिति दर्शयन्नाह – रामो वनमगच्छत्, बलिरिन्द्रो भविष्यति । तस्मात् कार्यः कालाधिकार इति ।

ननु वक्ष्यमाणेषु योगेषु वर्तमानादिभिर्धात्वर्थं विशेषयिष्यामः । वर्तमाने धात्वर्थे वर्तमानाद् धातोर्वर्तमानादिः, भविष्यति धात्वर्थे वर्तमानाद् धातो-र्भविष्यन्त्यादिः । अतीते धात्वर्थे वर्तमानाद् धातोः परोक्षादिः । **धात्वर्थश्च** क्रियेति तत्सम्बन्धात् कालोऽभिधीयते, तत् किमनेनेत्याह – वर्तमानादिभिरित्यादि । द्रव्यस्य विशेषणे पूर्वोक्त एव दोषः स्यादिति । नित्य इत्यादि । नित्यत्वाद् व्यापकत्वाच्चा-काशकल्प एको यद्यपि कालस्तथापि वर्तमानो भूतो भविष्यन्निति । ये च वर्तमा-नादयो व्यपदेशास्तेऽस्य क्रियाद्वारका इत्यर्थः । द्रव्यस्थ इति **कालो** हि मूर्तिमद्भिः सर्वैरेव संयुक्तः, तत्संयुक्तेषु द्रव्येषु क्रियापि समवेता । तेन संयुक्तसमवायेन क्रियागतो वर्तमानादिव्यवहारः उपचारात् काले वर्तते, यथैकस्मिन् पुरुषे क्रियाभेदादनेकसंज्ञा दृश्यन्ते तथेहापीति । तदुक्तम् –

**यथैकस्मिन् क्रियाभेदात् तक्षाद्याख्या प्रवर्तते ।**

**तथैकस्मिन् क्रियाभेदादृत्वाद्याख्या प्रवर्तते ॥** (वा० प० ३।९।३२) ।

ऋतुरादिर्यस्या वर्तमानादेराख्यायाः सा **ऋत्वादिः** सा चासौ आख्या चेति विग्रहः ॥४२६।

**[ क० च० ]**

**काले ।** काले इति सप्तम्यन्तमनुकृतम्, प्रथमार्थेऽपदमिति **साम्प्रदायिकाः ।** अनुक्रियते इति **अनुकृतमिति** कर्मणि क्तप्रत्ययः । ततश्चानुकृतशब्देनानुकार्यमेवोच्यते ।

एवं च सति काले इति सप्तम्यन्तमनुकार्यमिति अनिष्टापत्तिः स्यात्। तस्मात् काले इति सप्तम्यन्तानुकरणमिति वक्तुमुचितम्। नैवम्। 'काले' इत्यनेन सामानाधिकरण्येन नान्वयः किन्तर्हि वैयधिकरण्येन। तथाहि काले इत्यनेन सप्तम्यन्तमनुकृतम्। तेनानुक्रियतेऽनेनेति कृत्वा सूत्रनिर्दिष्टकालशब्दोऽनुकरणमिति सूचितम्।

**[ पाठान्तरम् –**

(यदाऽनुक्रियतेऽनेनेत्यनुकृतं करणे क्तप्रत्ययं कृत्वा सामानाधिकरण्येनान्वयः) **यद्येवमस्मिन्** पक्षे सप्तम्यन्तविशेषणं न संगच्छते। नात्र सप्तमी विहिता, किन्तर्हि अनुकार्यवर्णसमूहसमानरूपमनुकरणमिति ? सत्यम्। **'शब्दो नित्यः'** इति पक्षेऽनु-कार्यानुकरणयोरेकत्वाद् भेदो नास्तीति अनुकार्यस्य सप्तम्यन्तत्वादनुकरणमपि ? सप्तम्यन्त**मुपचारात्**। **वयं** तु करणे क्तप्रत्ययेऽपि सप्तम्यन्तम् इत्यनेन सहानुकृतस्य न सामानाधिकरण्यम्, किन्तु अनुक्रियतेऽनेनेत्यनुकृतं तत्र किमनुक्रियत इत्याकाङ्क्षायां सप्तम्यन्तमनुकार्यं तत् कर्म**त्वेनोपस्थित**मिति। अत्रापि न निष्ठादिष्विति निषेधात् सप्तम्यन्तशब्दान्न षष्ठीति **ब्रूमः ]**।

तर्हि तस्य च सप्तम्यन्तत्वात् कुतोऽपदत्वम् इति चेत्, न, अभिप्राया-**परिज्ञानात्**। तथाहि सूत्रे काले इति **यन्निर्दिष्टं** तदनुकरणमेव। यत्तु अनुकृतमित्युक्तं तदनुक्रियतेऽनेनेति करणे क्तस्य **विधानात्**, तर्हि अनुकरणस्य कथं सप्तम्यन्तमुच्यते, तस्य चानुकार्याभिन्नत्वात्। न च शब्दस्य नित्यत्वपक्षेऽनुकार्यानुकरणयोरैक्याद् भेदो नास्ति इत्यनुकरणं कृतमिति नार्थान्तरमिति वाच्यम्, अनुकार्यशब्दस्यापि स्वरपरत्वेन निरर्थकत्वात् सप्तम्यन्तत्वस्यानुपपत्तेः ? सत्यम्। सप्तम्यन्तप्रकृतित्वादनुकरणमपि सप्तम्यन्तमुच्यते, नाप्यनुकार्यार्थमादायानुकरणस्य नानर्थकत्वमिति वाच्यम्, अनुकार्यानुकरणयोर्भेदस्यानङ्गीकृतत्वात्। यद् वा एवं **वृत्ति**र्योज्या– 'काले' इत्यनेन सप्तम्यन्तमनुकृतमनुक्रियते सप्तम्यन्तप्रकृतिभूतस्य काले इत्यस्यानुकरणं काले इति स्वरूपमित्यर्थः।

**नन्वेवं** प्रकारेण काले इत्यनुकरणस्य निरर्थकत्वादेव लिङ्गत्वाभावात् प्रथमायाः प्राप्तिरेव नास्ति, कथं **पञ्जीकृता** गम्यमानेनेतिशब्देन तदर्थस्याभिहितत्वात् प्रथमा न वर्तते इत्युक्तम् ? सत्यम्। **नैयासिक**मते वृत्त्या पदजन्यपदार्थस्यैवान्वयबोधोप-योगित्वाद् वर्णानां स्वरूपेऽर्थे लक्षणा क्रियते ततः स्वरूपार्थमादाय एवार्थवत्त्वाल्लिङ्ग-सञ्ज्ञाया विद्यमानत्वात् प्रथमा प्रवर्तत एव, ततश्चान्वयानुरोधार्थं यः स्वरूपार्थो लक्षणया परिकल्प्यते तदर्थस्य स्वरूपार्थकेनेतिशब्देनाभिधीयमानत्वात् स्वरूपेऽर्थे लक्षणाया अभावेन वृत्त्युपस्थाप्यार्थस्याभावात् लिङ्गसंज्ञाया अभावेन प्रथमा न वर्तते

इति **पञ्जिका**पङ्क्तेराशयः। यत्तु **पञ्जीकृता** तदर्थस्याभिहितत्वादित्युक्तं तदपि प्रथमाया अपि लिङ्गार्थेऽभिधानात् स्वरूपार्थेऽपि तस्याभिधानादिति कृत्वैवेत्यदोषः।

ननु अनुकार्यानुकरणयोर्भेदपक्षेऽनुकरणस्यानुकार्यार्थस्य विद्यमानत्वेन सार्थकत्वाद् भवितुमर्हत्येव, तस्याश्च लिङ्गार्थेऽभिधानाद् अर्थोऽस्ति कथं गम्यमानेतिशब्देन तदर्थस्याभिहितत्वात् प्रथमा न वर्तते इति **पञ्जिकाकारेणो**च्यते ? सत्यम्। प्रथमाविभक्तिरित्यनेन विधीयमाना प्रथमा यत्र विशेष्यभूतो लिङ्गार्थः प्रतीयते तत्रैव भविष्यति। लिङ्गार्थस्य विशेष्यत्वं प्रथमया द्योत्यते इति प्रथमावच्छेदेनैव लिङ्गार्थस्य विशेष्यत्वेन प्रतीयते, ततश्च गम्यमानेनेतिशब्देन तदर्थस्य प्रथमद्योत्ये विशेष्यार्थस्याभिहितत्वाद् द्योतितत्वात् प्रथमा न वर्तते उक्तार्थत्वादिति शेषः। वर्तमानादिभिः किमिति **वृत्तिः**।

ननु किमर्थमिदं सूत्रं यावता तासां स्वसंज्ञाभिः कालविशेष इत्यत्र कालविशेषग्रहणात् **"सम्प्रति वर्तमाना"** (३।१।११) इत्यादिषु सामान्यकालाधिकारोऽस्तीत्यनुमीयते, सामान्यप्राप्तौ हि विशेषप्रतिपत्तिर्भवतीति, नैवम्। तदा हि **"सम्प्रति वर्तमाना"** (३।१।११) इत्यादिषु सूत्रेषु वर्तमानादिभिः कालैः किं धात्वर्थो विशिष्यते तत्साधनं वेति सन्देहः स्यात्, तस्मात् कर्तव्य एव **कालाधिकार** इति। अथ स्थितेऽपि कालाधिकारे सम्प्रति वर्तमानकाले यत् साधनं तस्मिन्नभिधेये वर्तमानादयो भवन्तीत्यर्थः कथं न स्यात्। न च तदा कालाधिकार एव व्यर्थः स्यादिति वाच्यम्, यतोऽसति कालाधिकारे विशेष्यभावात् साधनधात्वर्थयोर्विशेषकालप्रतिपत्तौ प्रत्ययः स्यात्, न साधनमात्रस्य धात्वर्थमात्रस्य वेति। विद्यमाने तु कालाधिकारे एकस्य साधनमात्रस्य क्रियाकालस्य विशेषकालप्रतिपत्तौ प्रत्ययो भवति, न तूभयोरिति। एतावतापि सूत्रस्य सार्थकत्वमिति ? नैवम्, **"सम्प्रति वर्तमाना"** (३।१।११) इत्यत्र 'काले सम्प्रति वर्तमाना' इत्येकयोगं न कृत्वा **"क्रियाभावो धातुः"** (३।१।९) इत्यस्य सान्निध्ये यद् भिन्नयोगं करोति, तद् बोधयति धातोरेव विशेषणमिति **संक्षेपः**॥४२६।

**[समीक्षा]**

पाणिनीय व्याकरण में कालाधिकार का स्वतन्त्ररूप में निर्देश नहीं किया गया है, वहाँ लट् आदि लकारों के विधान में ही वर्तमान, परोक्ष, भविष्यत् आदि कालभेदों का स्पष्ट निर्देश है, जैसे– "परोक्षे लिट्, वर्तमाने लट्" (अ० ३।२।११५, १२३) इत्यादि। अधिकार के रूप में "भूते, भविष्यति गम्यादयः" (अ० ३।२।८४; ३।३।३) आदि विशेष कालभेदों का तो उल्लेख हुआ है, सामान्य 'काल' का नहीं। कातन्त्रकार ने जो 'काले' इस सप्तम्यन्त पद का

अधिकार किया है, उससे परवर्ती "सम्प्रति वर्तमाना" (३।१।११) आदि सूत्रों में 'काले' पद का अन्वय होता है। यतः 'सम्प्रति' आदि विशेषण हैं तथा 'काले' उनका विशेष्य। अतः सम्प्रति काल में वर्तमाना विभक्ति का प्रयोग होता है- यह अर्थ निश्चित किया जाता है और इसी कारण कर्ता, कर्म आदि साधन के वर्तमान, अतीत तथा भविष्यत्कालिक होने पर वर्तमानादि विभक्तियों का प्रयोग नहीं होता है- "तेन साधने वर्तमानेऽतीते भविष्यति च न स्यात्" (दु० वृ०)।

**[विशेष वचन]**

१. नित्यो व्यापी सम्प्रतिभूतभविष्यत्क्रियायोगादाकाशकल्प एको द्रव्यस्थो भिद्यते कालः (दु० वृ०)।

२. नित्यत्वाद् व्यापकत्वाच्च आकाशकल्प एको यद्यपि कालस्तथापि वर्तमानो भूतो भविष्यन्निति। ये च वर्तमानादयो व्यपदेशास्तेऽस्य क्रियाद्वारका इत्यर्थः। द्रव्यस्थ इति कालो हि मूर्तिमद्भिः सर्वैरेव संयुक्तः, तत्संयुक्तेषु क्रियापि समवेता, तेन संयुक्तसमवायेन क्रियागतो वर्तमानादिव्यवहार उपचारात् काले वर्तते, यथैकस्मिन् पुरुषे क्रियाभेदादनेकसंज्ञा दृश्यन्ते (वि० प०)।

३. ननु किमर्थं सूत्रमिदं यावता तासां स्वसंज्ञाभिः कालविशेष इत्यत्र कालविशेषग्रहणात् "सम्प्रति वर्तमाना" (३।१।११) इत्यादिषु सामान्यकालाधिकारोऽस्तीत्यनुमीयते, सामान्यप्राप्तौ हि विशेषप्रतिपत्तिर्भवतीति, नैवम्। तदा हि "सम्प्रति वर्तमाना" (३।१।११) इत्यादिषु सूत्रेषु वर्तमानादिभिः कालैः किं धात्वर्थो विशिष्यते तत्साधनं वेति सन्देहः स्यात्, तस्मात् कर्तव्य एव कालाधिकारः इति (क० च०)।।४२६।

## ४२७. सम्प्रति वर्तमाना [३।१।११]

**[सूत्रार्थ]**

वर्तमान काल में 'वर्तमाना' विभक्ति होती है।।४२७।

**[दु० वृ०]**

**सम्प्रति काले वर्तमाना विभक्तिर्भवति। पचति, यजते। स्वसंज्ञयैव कालो विशिष्यते। संप्रतीति किम् ? तस्थुः, स्थास्यन्ति गिरयः।।४२७।**

**[दु० टी०]**

**सम्प्रति०**। स्वसंज्ञयैवेत्यादि। वर्तमानकाले वर्तमाना सिद्धेत्यर्थः। सम्प्रतिशब्दोऽयमव्ययो वर्तमानार्थ एवेति भावः। तिष्ठन्ति पर्वता इति ये सम्प्रति राजानस्तेषां

याः क्रियास्तासु वर्तमानासु यथा स्यात् । यद्येवं 'तस्थुः, स्थास्यन्ति पर्वताः' इति न प्राप्नोति, न हि तेषामतीतानागतभावोऽस्ति सदा सन्निधानात्, यद्यपि स्वतो नास्ति तथापि परतो भविष्यति सम्प्रतीत्यस्य व्यावृत्तिबलात् । **हैहयादिवंशे** ये राजानो बभूवुस्तेषां याः क्रियास्तास्वतीतासु , वर्तमानराजाद्युत्तरं ये राजानो भविष्यन्ति तेषां याः क्रियास्तासु भविष्यन्तीषु इति । **परैस्तु** सम्प्रति द्रव्यसमवेतास्वपि **क्रियासु अतीतानागतविवक्षा लौकिकीति** मन्यते ।।४२७।

## [वि० प०]

सम्प्रति० । अथ किमर्थं सम्प्रतिग्रहणम्, यावता तासां स्वसंज्ञाभिः कालविशेष इति वचनाद् वर्तमाने काले वर्तमाना सिद्धैवेति ? सत्यम्, सम्प्रति ये राजानस्तेषां याः क्रियास्तासु वर्तमानासु वर्तमाना यथा स्यात् । तिष्ठन्ति गिरय इति । तेन 'तस्थुः, स्थास्यन्ति गिरयः' इत्यपि सिद्धम् । यद्यपि तेषां गिरीणां सदा सन्निहितत्वात् स्वतोऽतीतानागतभावो नास्ति तथापि परतो भविष्यति सम्प्रतीत्यस्य व्यावृत्तिबलात् । तथाहि **हैहयादिवंश्ये** ये राजानो बभूवुस्तेषां याः क्रिया भूतवत्यस्तासामतीतत्वापेक्षया तस्थुरित्युच्यते । तथा वर्तमानराजादुत्तरे ये भविष्यन्ति राजानस्तेषां याः क्रिया भाविन्यस्तासां भविष्यत्त्वापेक्षया स्थास्यन्तीत्याह – स्वसंज्ञयैवेति । तस्थुरिति स्था + उस् । **"चण् परोक्षा०"** (३।३।७) इत्यादिना द्विर्वचने कृते **"शिट्परोऽघोषः"** (३।३।१०) इति सकारलोपः, **"द्वितीयचतुर्थयोः प्रथमतृतीयौ"** (३।३।११) इति थकारस्य तकारः, **"आलोपोऽसार्वधातुके"** (३।४।२७) इत्याकारलोपः ।।४२७।

## [क० च०]

**सम्प्रति०** । सत्यमित्यादि । ननु राजगतक्रियासु वर्तमानासु सतीषु सम्प्रतिग्रहणं विनापि वर्तमाना सिद्धैव, कथं सम्प्रतिग्रहणस्य फलमिदमुच्यते ? नैवम् । राजगतक्रियासु वर्तमानत्वमध्यारोप्यं यद् वर्तमानत्वं तद्गिरिगतस्थितिक्रियायामध्यारोप्य वर्तमाना यथा स्यादित्य**भिप्रायः** । अत एवोक्तम्-तिष्ठन्ति गिरय इति । तेनेत्यादि । परकीयक्रियागतवर्तमानत्वाध्यारोपेण वर्तमानत्वं प्रयोगदर्शनात् परकीयक्रियाया अतीतत्वं भविष्यत्त्वं गिरिगतस्थितिक्रियायामध्यारोप्यातीतभविष्यद्विभक्तयः सिद्धा इत्यर्थः । एतदेव स्फुटीकुर्वन्नाह – यद्यपीति । सम्प्रतिग्रहणस्य वैयर्थ्यप्रसङ्गादित्यर्थः । ननु कथमेतदुच्यते, यावता 'तिष्ठन्ति गिरयः' इत्यत्रैव परकीयक्रियागतवर्तमानत्वमध्यारोप्य वर्तमानाविधानेनैव सम्प्रतिग्रहणस्य सार्थकत्वम्, कथं 'तस्थुः, स्थास्यन्ति गिरयः' इत्यत्र परकीयक्रियागतमतीत्वं भविष्यत्त्वं चाध्यारोप्य भूतभविष्यद्विभक्तिविधायकं स्यादिति । न च 'तिष्ठन्ति गिरयः' इत्यत्र गिरिगतस्थितिक्रियाया

वर्तमानत्वेन वर्तमाना विभक्तिः सिद्धैव, न तदर्थं सम्प्रतिग्रहणम्, किन्तु 'तस्थुः स्थास्यन्ति गिरयः' इत्यादौ विभक्त्यन्तरप्रवृत्तिरेव तत्फलमिति वाच्यम्, यावता गिरीणामनतीतत्वेऽपि गिरिसम्बन्धिनां राज्ञां वर्तमानक्रियायां वर्तमानत्वं गिरेश्च स्थितिकियायां वर्तमानत्वमध्यारोप्य वर्तमानाविधानेनैव सम्प्रतिग्रहणस्य सार्थकत्वम्। सत्यम्, अत्रारोप्ये वर्तमाने साहजिके वर्तमानेऽपि वर्तमानाविधानादुत्तरत्रापि दृष्टपरिकल्पनावशात् साक्षात् परम्परया वा साधारणयोर्भूतभविष्यतोर्ग्रहणं भविष्यति। एवं च सति 'सम्प्रति' इत्यस्य व्यावृत्तिबलादित्यस्याः पङ्क्तेरय**माशयः**– सम्प्रतिग्रहणस्य वैयर्थ्यभयादारोपेण 'तिष्ठन्ति गिरयः' इति यत् साधितं तद् दृष्टपरिकल्पनावशादिति **साध्याहारयोजना**।

यद् वा विनापि सम्प्रतिग्रहणं वर्तमानेति पृथग्वचनादेव परम्परया वर्तमाना वर्तमानत्वाध्यारोपेऽपि सिद्धैव, अन्यथा "स्मेनातीते वर्तमाना" इत्येकमेव सूत्रं कृतं स्यात्, किं सम्प्रतिग्रहणेन। न च पृथग्वचनाभावे स्मेनातीते वर्तमानेति सूत्रेण यत्रैव स्मशब्दयोगस्तत्रैव वर्तमाना स्यान्नान्यत्रेति वाच्यम्। वर्तमानेति अन्वर्थबलेन **"शेषात् कर्तरि"** (३।२।४७) इत्यादिविधिवाक्यैरेवान्यत्र सम्भवात्, तस्मात् सम्प्रतिग्रहणमस्मिन् प्रकरणे साक्षात् परम्परया वा साधारणकालस्य ग्रहणं ज्ञापयतीति। **वस्तुतस्तु** सम्प्रतिग्रहणं वर्तमानाया एककालनियमार्थं वर्तमानकाल एव वर्तमानेति, तेनान्यासां स्वसंज्ञाविशेषणव्यभिचारात् कालान्तरेऽपि प्राप्तिरिति सूचयति। तेन ह्यस्तन्यद्यतन्योर्भूतसामान्येऽपि प्राप्तिरिति ॥४२७।

**[समीक्षा]**

पाणिनि ने वर्तमान अर्थ में लट् लकार का विधान किया है– "वर्तमाने लट्" (अ० ३।२।१२३), लट् आदि १० लकारें सांकेतिक हैं, अतः उनका निर्देश अत्यन्त कृत्रिम है, स्वाभाविक या अन्वर्थ नहीं। अर्थदृष्ट्या पाणिनि तथा कातन्त्रकार दोनों के समान निर्देश हैं, किन्तु लट् का विधान विशुद्ध कृत्रिम (यादृच्छिक) है, जबकि वर्तमाना का प्रयोग अन्वर्थ रूप में किया गया है।

**[ विशेष वचन ]**

१. परैस्तु सम्प्रति द्रव्यसमवेतास्वपि क्रियासु अतीतानागतविवक्षा लौकिकीति मन्यते (दु० टी०)।

२. हैहयादिवंशे ये राजानो बभूवुस्तेषां याः क्रिया भूतवत्यस्तासामतीतत्वापेक्षया तस्थुरित्युच्यते, तथा वर्तमानराजादुत्तरे ये भविष्यन्ति राजानस्तेषां याः क्रिया भाविन्यस्तासां भविष्यत्त्वापेक्षया स्थास्यन्तीति (वि० प०)।

**[ रूपसिद्धि ]**

१. **पचति** । पच् + अन् + ति । 'डु पचष् पाके' (१।६०३) धातु से "काले" (३।१।१०) के अधिकार में प्रकृत सूत्र से वर्तमानासंज्ञक प्रथमपुरुष तथा एक-वचन-संज्ञक ति – विभक्ति, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण तथा न्- अनुबन्ध का अप्रयोग ।

२. **यजते** । 'यज देवपूजादौ' (१।६०८) धातु से प्रकृत सूत्र द्वारा वर्तमाना ति – विभक्ति, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण तथा न् अनुबन्ध का अप्रयोग ॥४२७।

## ४२८. स्मेनातीते [३।१।१२]

**[ सूत्रार्थ ]**

'स्म' शब्द के योग में अतीत (भूत) काल में वर्तमाना विभक्ति होती है ॥४२८।

**[ दु० वृ० ]**

स्मेन शब्देन योगेऽतीते काले वर्तमाना विभक्तिर्भवति । दहति स्म त्रिपुरं हरः, इति स्म जनः कथयति । अतीतविषयाणां बाधकोऽयम् ॥४२८।

**[ दु० टी० ]**

स्मेना० । स्मशब्दोऽयमव्ययोऽतीतकालस्य द्योतकः । स्मेन योगस्तु धातोरेव, ततस्त्यादेर्विधानादिति धातुशब्दो **वृत्तौ** न प्रयुज्यते । अतीतविषयाणां बाधकोऽय-मिति । **परस्त्वाह** – भूतानद्यतने परोक्षे चापरोक्षे परोक्षा ह्यस्तन्यद्यतन्योरपवादः इति ॥४२८।

**[ क० च० ]**

स्मेन० । ननु यथा 'भाषते राघवस्तदा' इत्यत्रातीतेऽपि तदेतिशब्दप्रयोगात् तत्कालीनवर्तमानत्वमादाय "**सम्प्रति वर्तमाना**" (३।१।११) इत्यनेन वर्तमाना सिद्धा । तथा **'दहति स्म त्रिपुरं हरः'** इत्यत्रापि तत्कालीनवर्तमानत्वेनैव वर्तमाना सिध्यति किमनेनेति ? सत्यम् । स्वा**भाविकम**तीतकमपेक्ष्यातीत**वि**भक्तिरपि स्यादित्याह – अतीत-विषयाणां बाधकोऽयमि**ति । एतेन** यत्रातीतत्वमात्रप्रतीतिस्तत्रापि **स्मशब्दयोगे** वर्तमाना विभक्तिरिति **भावः । ननु** तथापि स्मशब्दे**नै**वातीतस्योक्तत्वान्न कथमतीता-भिधायिनः प्रत्ययाः **स्युरिति, नैवम्** । स्मशब्दोऽयमतीतमात्राभिधायी, ततश्च

ह्यस्तन्यद्यतनीविशेषप्रतिपत्त्यर्थं ह्यस्तन्यादयो भवितुमर्हन्तीति तद्बाधनार्थं सूत्रमिदमारभ्यते इति न दोषः इति **हेमकरः** ।।४२८।

**[समीक्षा]**

पाणिनि तथा कातन्त्रकार दोनों ही आचार्यों ने 'स्म' इस अव्यय शब्द के प्रयोग में वर्तमानकालिक विभक्ति का विधान किया है। पाणिनि का सूत्र है– "लट् स्मे" (अ० ३।२।११८)। यह ज्ञातव्य है कि पाणिनीय लट् के लिए आचार्य शर्ववर्मा ने 'वर्तमाना' का व्यवहार किया है। इसमें लट्-निर्देश कृत्रिम है और वर्तमाना का निर्देश अन्वर्थ।

**[रूपसिद्धि]**

१. **दहति** स्म त्रिपुरं हरः। दह + अन् + ति। 'दह भस्मीकरणे' (१।२४३) धातु से प्रकृत सूत्रद्वारा वर्तमाना विभक्ति ति, "अन् विकरणः कर्तरि" (३।२।३२) से प्रकृति-प्रत्यय के मध्य में 'अन्' विकरण तथा न् अनुबन्ध का प्रयोगाभाव।

२. इति स्म जनः **कथयति**। कथ + इन् + अन् + ति। 'कथ वाक्यप्रबन्धे' (९।१७४) धातु से स्वार्थ में "चुरादेश्च" (३।२।११) द्वारा इन् प्रत्यय, "अस्य च" से अकारलोप, प्रकृत सूत्र से वर्तमान काल में वर्तमानासंज्ञक ति-विभक्ति, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, "अनि च विकरणे" (३।५।३) से इन्प्रत्ययघटित इकार को गुणादेश तथा "ए अय्" (१।२।१२) से अयादेश ।।४२८।

## ४२९. परोक्षा [३।१।१३]

**[सूत्रार्थ]**

भूतकाल में परोक्षासंज्ञक विभक्ति होती है ।।४२९।

**[दु० वृ०]**

अतीते काले परोक्षा विभक्तिर्भवति। जघान कंसं किल वासुदेवः। कटं चक्रे देवदत्तः ।।४२९।

**[दु० टी०]**

परोक्षा। अक्षाणाम् अक्षेभ्यो वा परम् इति विवक्षया निपातनादत्र परशब्दस्य पूर्वनिपातोऽक्षशब्दस्य चादेरुत्वमिति ।।४२९।

**[वि० प०]**

परोक्षा। 'जघान' इति हन्, अट्, द्विर्वचनम्, हो जः, **"अभ्यासाच्च"** (३।६।३०) इति घत्वम्, **"अस्योपधायाः"** (३।६।५) इति दीर्घः। 'कटं चक्रे' इति। डु कृञ्, परोक्षायां द्विर्वचनम्, ऋवर्णस्याकारः, कवर्गस्य चवर्गः, रम् ऋवर्णः ॥४२९।

**[क० च०]**

परोक्षा। ननु परोक्षापि भूतकरणवतीत्वेन निक्षिप्यताम्, किमनेन सूत्रेणेति न देश्यम्, यस्माद् **"भूतकरणवत्यश्च"** (३।१।१४) इति सूत्रात् पूर्वमिदं सूत्रं विहितं ततो हेतोर्ह्यस्तने परोक्षे परोक्षाह्यस्तन्योः प्रवृत्तौ परत्वाद् भूतकरणवत्यश्चेत्यनेन ह्यस्तन्येव प्रवर्तते न तु परोक्षा। अथ स्वसंज्ञाबलाद् ह्यस्तन्येव भविष्यति, सूत्रमिदं न क्रियतामिति चेत् ? सत्यम्। अद्यतने परोक्षेऽद्यतन्येव यथा स्यादिति परोक्षे क्रियातिपत्तौ परत्वात् क्रियापत्तिरेव यथा स्यात्, तथात्रापि अन्वर्थबलादेव ह्यस्तन्येव भविष्यतीति चेत् तर्हि क्रियातिपत्तौ परोक्षे परत्वात् क्रियातिपत्तिरेव स्यादतः परोक्षेति वचनमिति **हेमकरः**। तन्न, भूतकरणवतीत्वेन केवलं ह्यस्तन्यद्यतनीक्रियातिपत्तीनामेव रूढत्वेन परोक्षायां निक्षेप्तुमशक्यत्वात्। स्वसंज्ञाबलादिति यदुक्तं तदप्यनुचितम्। यावता स्वसंज्ञाविशेषपरत्वव्यावर्तकत्वेन परोक्षह्यस्तने परोक्षापि भवितुमर्हतीति न केवलं ह्यस्तनीति। तस्मात् पूर्वापरव्यवहारार्थं परोक्षेति सूत्रं कर्तव्यमिति स्फुट एव **सिद्धान्तः** इति किं क्रियातिपत्तौ परोक्षे परत्वात् क्रियातिपत्तिरेव यथा स्यादिति परोक्षेति वचनमिति **हेमकरप्रलापगवेषणयेति** स्थितम् ॥४२९।

**[समीक्षा]**

आचार्य शर्ववर्मा ने अतीतकाल में परोक्षा विभक्ति का और पाणिनि ने परोक्ष अर्थ में जो लिट् लकार का विधान किया है, उसमें अर्थतः तो कोई अन्तर नहीं है परन्तु शब्दप्रयोग की दृष्टि से परोक्षा तो अन्वर्थ है, जबकि लिट् का प्रयोग अत्यन्त कृत्रिम।

**[रूपसिद्धि]**

१. **जघान** कंसं किल वासुदेवः। हन् + परोक्षा - प्रथमपुरुष - एकवचन अट्। हन् धातु से परोक्षाविभक्तिसंज्ञक एकवचन में अट् प्रत्यय, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से धातु को द्विर्वचन, अभ्याससंज्ञा "अभ्यासस्यादिर्व्यञ्जनम-

वशेष्यम्" (३।३।९) से न् का लोप, "हनेर्हेर्घिरुपधालोपे" (२।२।३२) से ह् को घ्, "हो जः" (३।३।१२) से ह् को ज् तथा उपधावृद्धि।

२. **कटं चक्रे देवदत्तः**। कृ+परोक्षा विभक्ति-ए। 'डु कृञ् करणे' (७।७) धातु से परोक्षाविभक्तिसंज्ञक प्रथमपुरुष-एकवचन ए-प्रत्यय, धातु को द्विर्वचन, अभ्याससंज्ञादि, ककार को चकार तथा ऋकार को रकारादेश ॥४२९।

## ४३०. भूतकरणवत्यश्च [३।१।१४]

### [सूत्रार्थ]

अतीत काल में ह्यस्तनी, अद्यतनी तथा क्रियातिपत्तिसंज्ञक विभक्तियाँ होती हैं ॥४३०।

### [दु० वृ०]

भूतः कालः करणं तद् विद्यते यासामिति पारिशेष्याद् ह्यस्तन्यद्यतनी-क्रियातिपत्तय एव **रूढाः**। एता भूतकरणवत्यस्तिस्रो विभक्तयोऽतीते काले भवन्ति। अकरोत्, अकार्षीत्, अकरिष्यत् ॥४३०।

### [दु० टी०]

भूत०। भूतः कालः करणमिति। भूतश्चासौ करणं चेति साधकतमत्वात् करणं कारकं भवति। वन्तुरिह संसङ्ग एव प्रक्रियावशात्। भूतकाले करणं व्युत्पादनं वा इतरेतराश्रयदोषोऽप्यत्र न शङ्क्यते **वृद्धस्**मरणात्। अत आह- **रूढा इति**। एता एव लोके भूतकरणवतीत्वेन विश्रुता इत्यर्थः। यद्यपि प्रयोगतश्चेति स्मृत्यर्थे भूतानद्यतने भविष्यन्त्यपि दृष्टा, तथापि न तस्यां रूढिरिति **अन्वर्थवादोऽयम्** ॥४३०।

### [वि० प०]

भूत०। भूतशब्दोऽतीते काले वर्तते इत्याह- भूतः कालः करणमिति। भूतश्चासौ करणं चेति। साधकतमत्वाद् भूतः कालः करणं भवति। संसङ्गे वन्तुरयं प्रक्रियावशात्। पारिशेष्यादिति। अन्यासां विभक्तीनां स्वस्मिन् स्वस्मिन् काले विहितत्वादित्यर्थः। ननु भूते विधानमन्तरेण भूतकरणवतीत्वं न सिध्यति भूतकरण-वतीत्वमन्तरेण च विधानं न संभवतीति इतरेतराश्रयदोषात् संज्ञाविधानं न स्यादित्याह- रूढा इति। न खल्विदानीं भूतकरणवती संज्ञा विधीयते येनायं प्रसङ्गः, किन्तर्हि भूतकरणवतीत्वेन **लोके** पूर्वमेव प्रसिद्धा इति विधानं न विरुध्यते। अकरोदिति कृञः, ह्यस्तन्या दिः, तनादेरुः, करोतेरिति गुणः। अकार्षीदिति **"सिजद्यतन्याम्"** (३।२।२४) इति सिच्, सिच इतीट् **"सिचि परस्मै स्वरान्तानाम्"**

(३।६।६) इति वृद्धिः। अकरिष्यदिति। **"हनृदन्तात् स्ये"** (३।६।६) इति वृद्धिः। अकरिष्यदिति।**"अड् धात्वादिर्ह्यस्तन्यद्यतनी"** (३।८।१६) इत्यादिना अडागमः॥४३०।

**[क० च०]**

भूत०। यद्यपि **''पृथिव्यादिषु भूतं स्याद् भूतः कालपिशाचयोः'** इत्यस्ति, तथापि प्रस्तावादिह कालार्थ एव गृह्यते इत्याह– भूतेत्यादि। ननु शब्दस्य **नित्यत्वपक्षे** कथं संसङ्गे वन्तुरित्युक्तं नित्यस्य करणासम्भवादित्याह– प्रक्रियावशादिति। प्रक्रियायां भूतकाले ह्यस्तन्यादीनामुत्पन्नत्वाद् भूतकालः करणम् भवतीति। ननु **'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकरः'** (द्र०, वै० भू० – प्रभा, पृ० २) इति न्यायाद् भूतकरणवतीत्यत्र कथं वन्तुप्रत्ययः ? सत्यम्, संज्ञाभूताद् भवत्येवेति **हेमकरः**। ननु मत्वर्थीयादीप्रत्यये सति संज्ञा गम्यते, नहि भूतकरणभागः संज्ञेति ? सत्यम्। संज्ञाभूतात् संज्ञास्वरूपाद्धेतोर्वन्तुर्भवत्येवेत्यर्थः। अन्यथा संज्ञैव न गम्यते इति॥४३०।

**[समीक्षा]**

भूतकाल में कातन्त्रकार ने जिन ह्यस्तनी - अद्यतनी - क्रियातिपत्तिसंज्ञक विभक्तियाँ की हैं, उनके लिए पाणिनि ने क्रमशः लङ्-लुङ्-लृङ् लकारों का विधान किया है– ''अनद्यतने लङ्, लुङ्, लिङ्निमित्ते लृङ् क्रियातिपत्तौ'' (अ० ३।२।११, ११०; ३।१३९)। इससे कातन्त्रीय **'ह्यस्तनी-अद्यतनी - क्रियातिपत्ति'**-संज्ञक विभक्तियों की अन्वर्थता तथा पाणिनीय लङ्-लुङ्-लृङ् लकारों की कृत्रिमता सिद्ध होती है।

**[रूपसिद्धि]**

१. **अकरोत्**। अट् + कृञ् + उ + दि। **'डु कृञ् करणे'** (७।७) धातु से भूतकाल में प्रकृत सूत्र से ह्यस्तनी दि - विभक्ति, **"अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु''** (३।८।१६) से धातु से पूर्व में अडागम, ''तनादेरुः'' (३।२।३७) से उ विकरण, ''करोतेः'' (३।५।४) से ऋ को गुण अर्, उ विकरण को गुण, दि-गत इकार का लोप तथा दकार को तकारादेश।

२. **अकार्षीत्**। अट् + कृञ् + सिच् + दि। कृञ् धातु से भूतकाल में प्रकृत सूत्र से अद्यतनी दि - विभक्ति, अडागम, ''सिजद्यतन्याम्'' (३।२।२४) से सिच् प्रत्यय,

---

१. युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु (अ० को० ३।३।७८)।

इडागम, "सिचि परस्मै स्वरान्तानाम्" (३।६।६) से इकार को वृद्धि, सकार को मूर्धन्य षकारादेश तथा दि-गत इकार का लोप-दकार को तकारादेश।

३. **अकरिष्यत्**। अट्+कृञ्+इट्+स्य+ति। कृञ् धातु से भूतकाल में क्रियातिपत्तिसंज्ञक विभक्ति-ति, अडागम, स्य प्रत्यय, इडागम, ति-गत इकारलोप तथा सकार को षकारादेश ॥४३०।

## ४३१. भविष्यति भविष्यन्त्याशीःश्वस्तन्यः [ ३।१।१५ ]

**[ सूत्रार्थ ]**

भविष्यत्काल में 'भविष्यन्ती – आशीः–श्वस्तनी' संज्ञक तीन विभक्तियाँ होती हैं ॥४३१।

**[ दु० वृ० ]**

भविष्यति काले भविष्यन्त्याशीःश्वस्तन्यस्तिस्रो विभक्तयो भवन्ति। कटं करिष्यति, शक्रं वध्यात्, ओदनं भोक्ता ॥४३१।

**[ वि० प० ]**

भविष्यति०। वध्यादिति **"हन्तेर्वधिराशिषि"** (३।४।८२) इति वधिरादेशः ॥४३१।

**[ समीक्षा ]**

पाणिनि ने भविष्यन्ती के लिए लृट्, आशीः के लिए आशीर्लिङ् तथा श्वस्तनी के लिए लुट् लकार का प्रयोग किया है, जो अत्यन्त कृत्रिमता का सूचक है। उनके सूत्र इस प्रकार हैं– "लृट् शेषे च, आशिषि लिङ्लोटौ, अनद्यतने लुट्" (अ० ३।३।१३, ७३, १५)।

**[ रूपसिद्धि ]**

१. **कटं करिष्यति**। कृ+इट्+स्यति। कृ धातु से प्रकृत सूत्र द्वारा भविष्यत् अर्थ की विवक्षा में भविष्यन्तीसंज्ञकस्यति विभक्ति, "हनृदन्तात् स्ये" (३।७।७) से इडागम, "नाम्यन्तयोः" (३।५।१) से ऋकार को गुणादेश तथा सकार को षकारादेश।

२. **शक्रं वध्यात्**। हन्+यात्। हन् धातु से प्रकृत सूत्र द्वारा भविष्यत् काल में आशीः विभक्ति यात्, "हन्तेर्वधिराशिषि" (३।४।८२) से हन् को वधि आदेश तथा इकार अनुबन्ध का उच्चारणाभाव।

३. **ओदनं भोक्ता**। भुज्+ता। "युजिरुजि०" (३।७।२०) से इडागम-निषेध, "नामिनश्चोपधायाः" (३।५।२) से उकार को गुण तथा "चवर्गस्य किरसवर्णे" (३।६।५५) से जकार को ककारादेश ॥४३१।

## ४३२. तासां स्वसंज्ञाभिः कालविशेषः [३।१।१६]

**[सूत्रार्थ]**

उक्त सूत्रों द्वारा जिन वर्तमाना आदि विभक्तियों का विधान किया गया है, उनका ग्रहण उन संज्ञाओं के यौगिकार्थ के अनुसार ही होता है ॥४३२।

**[दु० वृ०]**

तासां वर्तमानादीनां स्वसंज्ञाभिः कालस्य विशेषो ज्ञेयः। तेन वर्तमाने काले वर्तमानेति। वर्तते इति **वर्तमानः** प्रारम्भोऽपरिसमाप्तिः। मांसं न खादति, इह कुमाराः क्रीडन्ति, तिष्ठन्ति पर्वताः, कदा आगतोऽसि, एष आगच्छामि। कदा गमिष्यसि, एष गच्छामि। परोक्षेऽतीते काले परोक्षेति। अक्षाणां परं **परोक्षम्,** इन्द्रियाणामविषय इत्यर्थः। कथं सुप्तोऽहं किं विललाप, मत्तोऽहं किं विचचार, चित्तस्य विक्षेपात्। 'नाहं कलिङ्गं जगाम' इति गमनदोषभयात् प्रत्यक्षमप्यपह्नुते परोक्षे लोकविज्ञाते प्रयोक्तुर्दर्शनयोग्यत्वात्। परोक्षस्याविवक्षायां ह्यस्तन्यपि – अयजत्, इयाज। सतोऽपि चाविवक्षा। यथा अनुदरा कन्येति। ह्यस्तनेऽतीते काले ह्यस्तनी। ह्यो भवः कालो ह्यस्तनः। 'अद्य ह्यो वा अभुक्ष्महि' इति व्यामिश्रे सन्निधानादद्यतनी। अद्यतनेऽतीते मात्रेऽद्यतनी। अद्य भवोऽद्यतनः। आन्याय्यादुत्थानादान्यायाच्च संवेशनादहः। उभयतोऽर्धरात्रं लोकतः सिद्धम्। कथम् अमुत्रावात्सं सकलां रात्रिम्, जागरितो रात्रेरप्रभातत्वादद्यतनमिव कालं मन्यते ? यो मुहूर्तमपि सुप्तः, सोऽनद्यतनं जानन् अमुत्रावसमित्याह।

'अगमाम घोषान्, अपाम पयः' इति ह्यस्तनस्याविवक्षैव। ह्योऽगमाम घोषान् इति पदार्थह्यस्तने ह्यस्तनी न वाक्यार्थ इति मतम्। क्रियातिपत्तावतीते काले क्रियातिपत्तिरिति। एधांश्चेदलप्स्यत ओदनमपक्ष्यत। भविष्यति क्रियातिपतने भविष्यन्त्येव। भविष्यति काले भविष्यन्ती भविष्यत्कालस्य भविष्यद्विशेषणात्। अद्य श्वो वा गमिष्यतीति श्वस्तनीमपि बाधते। आशीर्युक्ते भविष्यति काले आशीः।

अनागतस्येष्टार्थस्य लाभेनाविष्करण**माशीः**, अर्थाद् भविष्यद्विषयैव, यदस्या भविष्यद्विधानं तत् **सुखप्रतिपत्त्यर्थम्**। श्वो भवः कालः श्वस्तनः स चार्थाद् भविष्यन् यदस्या भविष्यद्विधानं तत्सामान्यभविष्यत्प्रतिपत्त्यर्थम्। श्वो गमिष्यति मासेन गमिष्यतीति **पदसंस्कारात्**। अन्वर्थसंज्ञायाः प्रायोवृत्तित्वात् सङ्करः स्यादिति परिभाषेयम् ॥४३२।

## [दु० टी०]

तासाम्०। तच्छब्देन वर्तमानादयः परामृश्यन्ते अनन्तरा हि भविष्यन्त्यादयः इति स्वाश्च ताः संज्ञाश्चेति स्वसंज्ञाः, आत्मीयसंज्ञा इत्यर्थः। स्वस्य आत्मनो वा संज्ञेति करणे चेयं तृतीया। विशिष्टिर्विशेषः, विपूर्वशिष्लृ, भावे घञ्, ज्ञेय शिष्येणेति संबन्धः। कालस्येति कर्मणि षष्ठी। स्वसंज्ञया व्युत्पन्नया कालो विशेषणीय इत्यर्थः। परिभाषेयं स्वसंज्ञाभिर्लिङ्ग्यते। तेनेत्यादि। किं विशिष्टे काले वर्तमानेऽधिकृतश्च कालः प्रकृतेर्विशेषणं वर्तमाने क्रियाकाले वर्तमानाद्धातोरित्यर्थः। प्रत्यक्षेणानुमानेन वा यः कालः परिच्छिद्यमानोऽतीतोऽनागतो वा न भवति स उच्यते वर्तमानः। यद्येवं 'देवदत्तः पचति' इति पाकेनाभिनिर्वर्त्यमानफलस्य प्रागुत्पादादस्ति नास्ति वा क्रियेति नानुमातुं शक्यते लिङ्गाभावात्। सर्वदा च क्रियाऽनुमेयस्वरूपा प्रत्यक्षस्याविषयत्वात्, फलेन चानुमीयमाना क्रिया अतीतैव। नैतद् दर्शनं व्याकरणे। **सा हि द्विविधा** – परोक्षा चापरोक्षा च, तत्र याऽपरोक्षद्रव्यसमवायिनी सा परोक्षा, यथा 'वहन्ति सागराः, स्यन्दन्ते नद्यः' इति। या तु प्रत्यक्षद्रव्यसमवायिनी सा प्रत्यक्षा, यथा 'अयं पचति, पच्यते ओदनः' इति। तथा च प्रत्यक्षक्रियानिरासार्थं स्वसंज्ञया परोक्षेऽतीते इति विशेषणमुच्यते। तस्माद् वर्तमानसाधनसमवायात् क्रियापि वर्तमानाव्यपदेशिनी।

**वेदान्तवादी** त्वाह –

**अनागतमतिक्रान्तं साम्प्रतं चेति तत् त्रयम्।**
**सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते॥**

**व्यवहारवादी** पुनराह –

**क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद् विचेष्टितम्।**
**तदपेक्ष्य प्रयुञ्जीत गच्छतीति विचारयन्॥**

**दग्धा च दहनीया च दह्यमाना च दृश्यते।**
**वर्तिरिकाग्निसंयोगाद् वर्तमानो न तेऽस्ति किम्॥**

अतो **व्यवहारनिबन्धनाश्च शब्दा** इति न दोषः। 'मांसं न खादति' इत्यादि वर्तमाने पदं निष्पाद्य पश्चान्नञा सम्बन्धनीयमिति दर्शयति। प्रतिवचनेऽपि नञो विवक्षया अतीतेनात्र वचनं वचनं प्रतीत्यव्ययीभावो न च प्रत्युक्तं परिहृतमित्यर्थे पृष्टे सति वचनमिह प्रतिवचनम्। मांसं मा खादत् मांसं न खादतीत्याह। एवं घटं मा कार्षीस्त्वं न करोमि भोः, कर्तुः क्रियया कालस्यानुवृत्तेर्वर्तमानतैव विवक्षितायां समाप्तम्। तदपेक्षया भूतविवक्षापि नाकार्षीत्, नाकार्षम्। तथा नुनापि प्रतिवचने नु करोषि, न्वकार्षम्। ननुना प्रतिवचने तु नित्यं वर्तमानविवक्षा नन्वपाक्षीस्त्वम्, ननु पचामि भोः। इह 'कुमाराः क्रीडन्ति' इति बुभुक्षया निद्रया वा कुमाराणां क्रीडा वृत्ता बुद्ध्या श्वःप्रभृतिर्वर्तत एव। 'तिष्ठन्ति पर्वताः' इति, तथा नित्यप्रवृत्ताव-पीत्यर्थः। कदेत्यादि सामीप्योऽपि वर्तमानः स च भूतस्य भविष्यतश्च समीपे भवः इति **सामीप्य** उच्यते, तथा अध्वखेदादिगमनसन्निधानं च वर्तते इति भावः। यदा तु भूतभविष्यद्विवक्षा तदा यथोक्तं प्रत्यया भवन्त्येव– 'एषोऽहमागच्छम्, एषोऽहमागमम्, एषोऽहमागतः' इति। एषोऽहमागमिष्यामि, एषोऽहं गन्ताऽस्मि गमिष्यन्तमेव मां विद्धीति। तदुक्तं च–

**प्रवृत्तोपरतश्चैव वृत्ताविरत एव च।**
**नित्यप्रवृत्तः सामीप्यो वर्तमानश्चतुर्विधः॥** इति।

तथा **'वसन्तीह पुरा छात्रास्तेन स्म पुराधीयत'** इति पुराशब्दः स्वभावादतीत-कालस्य द्योतकस्तेन ज्ञापितेऽतीते काले तदा वासाध्ययनयोर्वर्तमानत्वम्। यथा भाषते राघवस्तदेति। **"स्मेनातीते"** (३।१।१२) इति विधेयमेव तत्र शब्दान्तरसन्निधानाद् अवधारितभूतविशेषस्य वर्तमानत्वं युज्यते। **'करोति स्म'** इति भूतमात्रे क्रियाया वर्तमानत्वं नोपपद्यते। अथातिक्रान्तवस्तुनि करोतीति यदा करोति तदा तस्याः क्रियाया वर्तमानत्वम्। नैवं स्मशब्देन सामर्थ्याद् भूतविशेषः प्रतिपत्तव्यो न युक्तरूप एवेति। 'ऊषुरिह पुरा छात्राः' इति परोक्षा सिद्धैव। परोक्षत्वस्याविवक्षायामेवासन्निह पुरा छात्रा इति ह्यस्तनी। अद्यतनस्यापि विवक्षायाम् अवात्सुरिह पुरा छात्रा इति अद्यतनी परोक्षेऽतीत इत्यादि। ननु च क्रिया साध्या यच्च साध्यमानं तदसद्'

इन्द्रियाणामविषयः एव किं परोक्षविशेषणेन व्यवच्छेद्याभावादिति न देश्यम्, प्रत्यक्षसाधनद्वारेण तदभिनिर्वर्त्यमानक्रियायामपि प्रत्यक्षावगमो **लोके**।

ननु च साधनान्यपि नैव प्रत्यक्षाणि तेषां शक्तिस्वभावात् शक्तेश्च कार्यानुमेयत्वात्, न ह्यशक्तं कार्यं करोतीति कार्यदर्शनेन शक्तिरनुमीयते। नैवम्, द्रव्याश्रिता हि शक्तयो द्रव्यस्य प्रत्यक्षत्वादाश्रयधर्ममाश्रितेषु शक्त्यर्थेषु असाधनेषूपचर्य्यासाधनान्यपि प्रत्यक्षाण्युच्यन्ते। तदेव साधनाश्रयं द्रव्यम्, शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वात् साधनशब्देनोच्यते। ननु चात्मसाध्यायाः क्रियायाः प्रत्यक्षत्वादुत्तमो न सिध्यतीति वितर्क्याह– कथमित्यादि। चित्तस्य विक्षेपादिति यदा व्यामूढचित्तेन व्यासक्तचित्तेन वा क्रियते या, सा हि निवृत्तिकालेऽनुपलब्धा फलेनानुमीयते, तदा तस्या अपि परोक्षतया निवृत्तिर्भवतीत्यर्थः। अत्यन्तापह्नवेऽपि परोक्षा न वक्तव्या एवेत्याह – नाहमित्यादि। अपह्नवोऽपलापः स कश्चिद् अत्यन्तं भवति यः सर्वथा अपह्नवः, कश्चिद् अनत्यन्तं य एकदेशापह्नवः। स हि वक्ता स्वयं कृतमपि कलिङ्गगमनं सनिमित्तमपि निर्निमित्तमेव प्रतिपद्यते गमनस्य दोषेण योगात् फलेनायोगाद् वा सर्वमेव न प्रतिपद्यते सर्वथापह्नुवानश्च प्रत्यक्षमप्यपह्नुते इत्यर्थः। उक्तं च –

**कृतस्यास्मरणे कर्तुरत्यन्तापह्नवेऽपि च।**
**दर्शनादेरभावेऽपि त्रिषु विद्यात् परोक्षताम्॥** इति।

परोक्ष इत्यादि दर्शनयोग्यत्वादिति शक्यदर्शनत्वाद् दर्शनविषयोऽप्यननुभूतत्वात् परोक्ष इति भावः। एतदुक्तं भवति - बहवस्तु यागं प्रत्यक्षेणैवोपलब्धवन्तः, प्रयोक्ता तु क्रियान्तरव्यासङ्गादालस्याद् दौर्मनस्याद् वा न प्रत्यक्षेणैवोपलब्धवान् इति। यस्तु कंसवधेन तुल्यकालः प्रयोक्ता स ह्यस्तनीमेव प्रयुक्तवान् - अहन् कंसं वासुदेवः इति। इतिहशश्वद्भ्यां ह्यस्तनीति न वक्तव्यम्, इतिहशश्वद्भ्यां परस्माद् धातोर्ह्यस्तनी परोक्षा च विवक्षयेति। इतिहाकरोत्, शश्वदकरोत्। इतिह चकार, शश्वच्चकार। एवं **स्मृतिवचनस्य** प्रयोगेऽपि 'स्मरसिच्छात्र ! काश्मीरेषु कटम्' इति। इतिहाकुर्म, शश्वदकुर्मेति। तथा पृच्छ्यमाने चासन्नकाले **कश्चित्** किञ्चित् पृच्छति – किमगच्छत्ताम्रलिप्तीम्, किं जगाम ताम्रलिप्तीम् ? ह्यस्तन इत्यादि। **"सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यस्तनट्"** तमादिनिपातनात्। ह्यस्तनेऽतीते परोक्षे प्रत्यक्षे च ह्यस्तन्येव न परोक्षा, न चाद्यतनीत्यर्थः। **परस्त्वनद्यतनेऽतीते** ह्यस्तनीम्, अद्यतने परोक्षे च परोक्षां विधत्ते, तद्दर्शनमाश्रित्य **कश्चिदाह** – ह्यःप्रभृतिर्भूतविशेषः, पक्षमाससंवत्सरादिकालो ह्यशब्देन

लक्ष्यते इति। तन्मतेन भूतसामान्ये ह्यस्तनीविधानमनर्थकं स्यात्। अद्य ह्यो वा इत्यादि सन्निधानादिति सन्निहितपरित्यागे व्यवहितं प्रति कारणं वाच्यमित्यर्थः। किञ्च **'उभयोः सावकाशत्वे पूर्वपरयोः परो विधिर्बलवान्'** (नागेश० ३८) इति। अद्यतन इत्यादि अव्ययलक्षणस्तनट्, अद्यतनेऽतीते परोक्षे प्रत्यक्षे चाद्यतन्येवेत्यर्थः। न्यायादनपेतो **न्याय्यः** न्याय्योत्त्थानो रात्रेरतिक्रान्तायाश्चतुर्थो यामः आगामिन्याः प्रथमो न्याय्यसंवेशन इति। संवेशनमिह शय्यारोहणं प्रतिपत्तव्यम्, अहर्दिवसः काल इत्यर्थः। उभयतोऽर्धरात्रं वेति उभयत उभयपार्श्वेऽर्धरात्रो यस्याह्नः इति विग्रहो वाशब्दो **मतान्तरे**। कथमित्यादिना वसेरद्यतनी रात्रिशेषे जागरणसन्ततौ इति न वक्तव्यमिति दर्शयति।

कश्चित् कञ्चित् पृच्छति – क्व भवानुषित इति ? तस्मै प्रतिवचनं प्रयच्छन् अद्यतनीं प्रयुङ्क्ते। अगमामेत्यादि सर्वत्र भूतसामान्यविवक्षायामद्यतनी भवत्येव। **सतोऽपि चाविवक्षा**। यथा अलोमिका एडका इति। **असतोऽपि च विवक्षा**। यथा समुद्रः कुण्डिकेति। ह्योऽगमामेत्यादि। एतदुक्तं भवति पदान्तरेणात्र ह्यस्तनः काल उक्त इति अनभिनिर्वर्त्य (अनभिनिर्वृत्तसंस्कारस्य पदस्याभिधानावस्थायामुपजायत इति न पदसंस्कारकाले आदरणीयः। क्रियातिपत्तावित्यादि। क्रियाया अतिपतनं क्रियातिपत्तिः, कुतश्चिद् वैगुण्यादनभिनिवृत्तिः, सा च भूतभविष्यद्विषया। क्रियातिपत्तावतीते इति भिन्नाधिकरण्ये विशेषणविशेष्यभावः क्रियातिपत्तिसमवायाद् वा क्रियातिपत्तिरतीत इति सामानाधिकरण्यम्।भविष्यतीत्यादि। भविष्यता **विशेषणं** भविष्यद्विशेषणं भविष्यत्कालो भविष्यत्त्वं न व्यभिचरति, यद् **विशेषणमाह** तद्बलादित्यर्थः। (तद्गुणादित्यर्थः)।

ननु पदार्थे श्वस्तने श्वस्तनी कथं वाक्यार्थे स्यादिति चेत्, नैवम्। इहापि पदार्थ एव श्वस्तनः, किन्तु व्यामिश्रप्रतिपत्त्यर्थं श्वःशब्दोच्चारणं तदपवादा श्वस्तनी प्राप्नोतीति भावः। **आशंसनमाशीः,** सा च वर्तमानकालैव विषयधर्मेण शब्दोऽपि तथोपचर्यते आशस्यमानस्य भविष्यद्विषयत्वादाशीरपि भविष्यन्तीत्याह – आशीर्युक्त इत्यादि। ननु भविष्यद्विधानं यदि न क्रियते, आशिषि श्वस्तने श्वस्तन्येव प्राप्नोति परत्वात्, नैवम्। तर्ह्याशीःपाठमेव परेण कुर्याद् एवं हृदि कृत्वाह – यदस्या इत्यादि। श्वस्तने श्वस्तन्येव यथा स्यादिति स्वसंज्ञया विशेषणम्। अन्वर्थसंज्ञाया इत्यादि वर्तमानाद्यभिसंबन्धाद् विभक्तयोऽपि वर्तमानशब्दवाच्या इति ? सत्यम्। **लोके हि व्युत्पादिता अपि संज्ञा निरन्वया दृश्यन्ते**। यथा मण्डं पिबतीति **मण्डपः**, मह्यां रौतीति **मयूर** इति ॥४३२।

[वि० प०]

तासाम्० । **चतुर्विधो वर्तमानः**, प्रारम्भापरिसमाप्तेः सर्वत्र विद्यमानत्वात् । यथोक्तम् –

**प्रवृत्तोपरतश्चैव वृत्ताविरत एव च।**
**नित्यप्रवृत्तः सामीप्यो वर्तमानश्चतुर्विधः॥** इति ।

क्रमेण दर्शयन्नाह – मांसं न खादतीत्यादि । इह वर्तमाने पदं निष्पाद्य पश्चान्नञा सम्बन्धः कार्यः । इह 'कुमाराः क्रीडन्ति' इति बुभुक्षया निद्रया वा पीडितानां कुमाराणां क्रीडा वृत्ताप्यविरतेति बुद्धौ श्वःप्रभृतेः कालस्य विद्यमानत्वात् । 'तिष्ठन्ति पर्वताः' इति पर्वतानां नित्यप्रवृत्तत्वात् । सामीप्ये दर्शयन्नाह – कदेत्यादि । समीपे भवः **सामीप्यः**, स च भूतस्य भविष्यतश्च समीपे भवन् द्विविधः । तत्र भूतसामीप्ये – कदा आगतोऽसि ? 'एष आगच्छामि' इत्यत्रागमनस्यातीतस्यापि वर्तमानत्वविवक्षा तत्कृतस्याध्वखेदादेस्तथैव विद्यमानत्वात् । भविष्यत्सामीप्ये यथा- कदा गमिष्यसि ? एष गच्छामि इति । अत्र भविष्यतोऽपि गमनस्य वर्तमानत्व-विवक्षा । तदर्थस्य सन्निधानस्य वर्तमानत्वादिति । यदा तु भूतभविष्यद्विवक्षा, तदा यथायथं प्रत्यया भवन्त्येव । यथा कदा आगतोऽसि ? एषोऽहमागच्छमिति ह्यस्तनी, एषोऽहमागमम् इत्यद्यतनी, एषोऽहमागत इति निष्ठा । कदा गमिष्यसि ? एषोऽहं गमिष्यामीति भविष्यन्ती, एषोऽहं गन्तास्मि इति श्वस्तनी, एषोऽहं गम्यासम् इति **आशीः**, एषोऽहं गामी इति णिनिः । तेन "**वर्तमानसामीप्ये वर्तमानवद् वा**" (अ० ३।३।१३१) इति न वक्तव्यं भवतीति ।

परोक्षेत्यादि । अक्षाणां परं **परोक्ष**मिति कृते समासे परशब्दस्य पूर्वनिपातोऽभिधानात्, अक्षशब्दस्य चादेरकारस्योत्वम् । ननु यदीन्द्रियाणामविषयः परोक्षः कालस्तर्हि उत्तमो न सिध्यतीति आत्मसाध्यायाः क्रियायाः प्रत्यक्षत्वाद् इत्याह – कथमित्यादि । चित्तस्य विक्षेपादिति । सा हि क्रिया स्वयं कृतापि विक्षिप्तचित्तत्वात् कर्त्रा नोपलक्षिता केवलं फलेनानुमीयते इति परोक्षैवेत्यदोषः । नाहमित्यादि । कश्चित् केनचित् पृष्टः किं भवान् कलिङ्गेषु स्थितः ? स आह – नाहं कलिङ्गं जगामेत्यादि । न केवलं कलिङ्गविषयावस्थानमपह्नुते, अपि तु कलिङ्गगमनस्य दोषसंयोगात् प्रत्यक्षमपि कलिङ्गगमनम् अपह्नुते इत्यत्यन्तापह्नवेऽपि परोक्षस्य विवक्षितत्वात् परोक्षा सिद्धैवेति अत्यन्तापह्नवे परोक्षा न वक्तव्या । तथा चोक्तम् –

**कृतस्यास्मरणे कर्तुरत्यन्तापह्नवेऽपि च।**
**दर्शनादेरभावे च त्रिषु विद्यात् परोक्षताम्॥** इति ।

परोक्ष इत्यादि। दर्शनयोग्यत्वादिति। शक्यदर्शनत्वादित्यर्थः। अयं तु परोक्षस्याविवक्षायां **हेतु**रुक्तः। एतदुक्तं भवति – बहवः प्रत्यक्षेण यागमुपलब्धवन्तः, प्रयोक्ता तु कार्यान्तरे व्यासङ्गात् प्रत्यक्षेणैव नोपलब्धवान्, अतस्तस्यासौ यागः परोक्षः, शक्यदर्शनत्वाच्च तस्याविवक्षया ह्यस्तन्यपि प्रवर्तते। अतः परोक्षे लोकविज्ञाते प्रयोक्तुर्दर्शनविषये ह्यस्तन्यपीति न वक्तव्यम् भवतीति। इयाजेति। **"परोक्षायामभ्यासस्योभयेषाम्"** (३।४।४) इति यजेरभ्यासे सम्प्रसारणमिकारः। ह्यस्तन इत्यादि। **"सायंचिरंप्राह्णेप्रागव्ययेभ्यस्तनट्"** इति तमादिनिपातनात् तनट्। 'अद्य ह्यो वाऽभुक्ष्महि' इति अशने भुजिरिति रुचादित्वादद्यतन्यामात्मनेपदोत्तमपुरुषस्य बहुवचनं महि, **"सिजद्यतन्याम्"** (३।२।२४) सिच्, **"सिजाशिषोश्चात्मने"** (३।५।१०) इत्यगुणत्वम्। अद्यतन इत्याद्यव्ययत्वात् पूर्ववत् तनट्। अतीतमात्र इति परोक्षेऽपरोक्षे चेत्यर्थः। आन्याय्यादिति। न्यायादनपेतं न्याय्यम्, अभिविधावयमाङ्, उत्त्थानं शय्यापरित्यागः, संवेशनं शय्यारोहणम्, तत्रातिक्रान्ताया रात्रेश्चतुर्थे यामे न्याय्यमुत्त्थानम्, आगामिन्याश्च प्रथमे यामे न्याय्यं संवेशनम्। तेनोत्त्थानसंवेशनोपलक्षितं प्रहरद्वयमभिव्याप्याहर्दिवसः स काल**ोऽद्यतनः**।

अथवा उत्तिष्ठन्त्यस्मिन्निति **उत्त्थानम्**, अतिक्रान्ताया रात्रेश्चतुर्थः प्रहर एवोच्यते, तथा संविशत्यस्मिन्निति **संवेशनम्**, आगामिन्या रात्रेः प्रथमः प्रहर इति, एतौ प्रहरावभिव्याप्याहरद्यतनः काल इत्यर्थः। उभयतोऽर्धरात्रं वेति। उभयतः उभये पार्श्वेऽर्धरात्रो यस्याह्न इति विग्रहः, तेनाष्टप्रहरोऽद्यतनः काल इति वाशब्देन **मतान्तरं** दर्शितम्। कथमित्यादि। 'वसेरद्यतनी रात्रिशेषे जागरणसन्ततौ' इति वक्तव्यमन्तरेण ह्यस्तन्येव स्यात्। तथाहि रात्रिशेषादतिक्रान्ताया रात्रेश्चतुर्थप्रहरलक्षणाद् यत् पूर्वभागं प्रहरत्रयलक्षणमसौ शयितः स तस्यानद्यतन एव काल इति। परिहारमाह – सकलामित्यादि। चतुर्थप्रहरलक्षणां रात्रिं कार्त्स्न्येन जागरितः। एतदुक्तं भवति – रात्रिशेषेऽतिक्रान्ताया रात्रेश्चतुर्थे यामे प्रत्युत्थितः सकलमेव रात्रिशेषं जागरितः। क्व भवान् उषितः इति केनचित् पृष्टः सन् प्रतिवचनं प्रयच्छन् रात्रेरप्रभातत्वाद् अद्यतनकालमिव मन्यते। तथा च सति अद्यतनीमेव प्रयुङ्क्ते इति। **अन्ये** तु सकलां कृत्स्नां चतुःप्रहरलक्षणां रात्रिमिति मन्यन्ते, तत्तु **वार्त्तिकेना**सङ्गतार्थमित्युपेक्षितम्। **वार्त्तिककारो** हि रात्रिशेषे जागरणसन्ततावित्याह। यो मुहूर्तमपीत्यादि। रात्रिशेष इति संबन्धः। अमुत्रावात्सम् इति वसेरद्यतन्यामम्, मध्ये सिच्, अस्य च दीर्घः। **"सस्य से सार्वधातुके तः"** (३।६।९३) इति धातुसकारस्य तकारः, अडागमः। अगमामेति। गमेरद्यतन्यामुत्तमपुरुषस्य बहुवचनम्-म,

पुषादिसूत्रेण अण्, **"अस्य वमोर्दीर्घः"** (३।८।११)। अपाम इति पिबतेः सिच्, इणस्थेत्यादिना तस्य लुक्। ह्यस्तनस्याविवक्षयैवेति, सतोऽपि चाविवक्षा यथा 'अलोमिका एडका' इति। एतेन भूतसामान्येऽपि अद्यतनविवक्षायामद्यतनी वेदितव्या। इह तर्हि ह्यस्तनकालद्योतकस्य ह्यःशब्दस्य साक्षाद् विद्यमानत्वाद् ह्यस्तनी प्राप्नोतीत्याह– ह्योऽगमामेत्यादि। पदान्तराद् ह्यस्तनः कालः प्रतीयमानो वाक्यार्थो बहिरङ्गो न **पदसंस्कारकाले** विद्यत इत्यर्थः। मतमिति **शर्ववर्मणः** सम्मतमित्यर्थः। क्रियातिपत्तावित्यादि। क्रियाया अतिपतनं **क्रियातिपत्तिः,** कुतश्चिद् वैगुण्यात् क्रियाया अनभिनिष्पत्तिः तद्विषये योऽतीतकालस्तस्मिन्नित्यर्थः। अलप्स्यतेति। लभेरात्मनेपदं स्यत्, **"अघोषेष्वशिटां प्रथमः"** (३।८।९) इति भकारस्य पकारः। अपक्ष्यदिति पचेः परस्मैपदं स्यत्, **"चवर्गस्य किरसवर्णे"** (३।६।५५) इति चकारस्य कत्वम्। भविष्यतीत्यादि। भविष्यता विशेषणं भविष्यद्विशेषणं **"भविष्यति भविष्यन्त्याशीःश्वस्तन्यः"** (३।१।१५) इति विधावुपात्तस्य भविष्यत्कालस्य भविष्यत्त्वेन व्यभिचारो नास्तीति, यत् पुनः स्वसंज्ञाबलाद् भविष्यद्विशेषणं तस्मादित्यर्थः। ननु श्वस्तनीपदार्थश्वस्तन एव भवति, अत्र तु वाक्यार्थश्वस्तने कथं स्यात्, येनैवमुच्यते ? सत्यम्, इहापि पदार्थ एव श्वस्तनः केवलं व्यामिश्रप्रतिपत्त्यर्थं श्वःशब्दोच्चारणम् अतस्तदपवादभूता श्वस्तनी प्राप्नोतीति भावः। गमिष्यतीति। **"से गमः परस्मै"** (३।७।६) इतीट्। आशीर्युक्त इत्यादि। अनागतस्येति भविष्यत इत्यर्थः। भविष्यद्विधानमिति। **"भविष्यति भविष्यन्त्याशीःश्वस्तन्यः"** (३।१।१५) इत्यनेनेत्यर्थः। ननु भविष्यद्विधानमन्तरेणाशीर्युक्ते भविष्यति श्वस्तन्येव स्यात् परत्वाद् अतस्तत्राशीरर्थमेव भविष्यद्विधानं कर्तव्यम्। कथं **सुखार्थ**मिति ? सत्यम्, तदाशिष एव परेण पाठं कुर्यादिति मन्यते। श्वो भवः इति पूर्ववत् तनट्। सामान्यभविष्यत्प्रतिपत्त्यर्थमिति। श्वःप्रभृतेः कालस्य पक्षमाससंवत्सरादिलक्षणस्य प्रतिपत्त्यर्थमित्यर्थः। कथं तर्हि श्वो गमिष्यतीत्याह – पदसंस्कारादिति। भविष्यदद्यतनादौ सामान्येन गमिष्यतीति पदं संस्कृत्य (निष्पाद्य) पश्चात् पदान्तरेण श्वःशब्दादिना योगे सिद्धमित्यर्थः। यदि तर्हि श्वःप्रभृतौ भविष्यत्काले श्वस्तनीति, किं स्वसंज्ञाविशेषणेनेति ? सत्यम्। भविष्यत्-श्वस्तने श्वस्तन्येव यथा स्यात्, नान्या विभक्तिरिति स्वसंज्ञाया विशेषणम्। यथा वर्तते इति **वर्तमानः** कालस्तत्संबन्धाद् विभक्तिरपि वर्तमाना, तथा परोक्षादयोऽपीत्यर्थः। (अन्वर्थ) संज्ञयैव कालविशेषो विज्ञास्यते, किमनेनेत्याह – अन्वर्थेत्यादि। प्रायोवृत्तित्वादिति, न पुनः सर्वत्रान्वर्थतेत्यर्थः। यस्मादुत्पादिता अपि निरन्वया दृश्यन्ते संज्ञाः। यथा मण्डं पिबतीति **मण्डपः**। **अन्ये**

**तु प्रायोवृत्तित्वादिति** एकदेशवृत्तित्वादिति मन्यन्ते। सङ्कर इति विभक्तीनां परस्परतो विषयविवेको न स्यादित्यर्थः ॥४३२।

[क० च०]

तासाम्०। स्वसंज्ञाभिः कालस्य विशेषो ज्ञेय इति **वृत्तिः**, तासां स्वसंज्ञान्वर्थैरित्यर्थः। वर्तमानस्य सामान्यलक्षणमाह – प्रारम्भ इत्यादि। **अस्यार्थः–** क्रियाद्वारा प्रकृष्ट आरम्भो यस्य कालस्य स प्रारम्भः, न विद्यते परिसमाप्तिर्यस्य सः, तथा साधयितुमारब्धो यावत् समाप्तिं नोपपद्यते तावत् स कालो वर्तमान इत्यर्थः। ननु यदि प्रारम्भस्यापरिसमाप्तेरेव वर्तमानत्वम्, तदा आकाशमस्तीति अत्र कथं वर्तमानत्वं नित्यस्य प्रारम्भत्वाभावात् ? सत्यम्। **नित्यायाः सत्ताया** अपि प्रारम्भत्वमुपचर्य्य प्रयोग इति न दोषः। यद् वा प्रारभ्यते क्रिया अस्मिन्निति प्रारम्भः कालः। नास्ति क्रियायाः परिसमाप्तिर्यस्मिन् काले सोऽपि तथा स कालो वर्तमान इत्यर्थः। यद्यत्र प्रारम्भग्रहणं नोच्यते तदा करिष्यमाणेऽपि घटे घटं करोतीति प्रयोगः स्यात्, तदानीमपि तत्क्रियाया उत्पत्स्यमानत्वेनापरिसमाप्तेर्विद्यमानत्वात्। यदि चापरिसमाप्तिग्रहणं न क्रियते तदा वैशाखादिस्थूलकाले या पाकादिक्रिया प्रारब्धा, तत्क्रियायास्तन्मासस्याभावेऽपि 'वैशाखे पचति' इति प्रयोगः स्यात्। ततश्च पदद्वयं दातव्यमिति। एतदेव प्रयोगकाले प्रागभावध्वंसरहितत्वं वर्तमानत्वमित्युद्घुष्यते। प्रवृत्तोपरतश्चेत्यादि **पञ्जी**। प्रवृत्तश्चासावुपरतश्चेति **प्रवृत्तोपरतः**।

ननु प्रवृत्त उत्पन्नः उपरतश्चातीतः, स कथं वर्तमानः ? सत्यम्, या खादनक्रिया प्रवृत्ता सा इदानीमुपरता सती प्रवर्तते। एतदुक्तं भवति – या खादनक्रिया प्रारब्धा सैव नञ्सम्बन्धादखादनावस्थायामपरिसमाप्ता सती वर्तमाना, अतः प्रारब्धापरिसमाप्तत्वं घटत एव, एतच्च सन्न विनश्यतीति **मतेनोक्तम्**। ननु मांसं न खादतीत्यस्य प्रवृत्तोपरतार्थत्व एव किं प्रमाणम्। अत्र जन्मप्रभृति न खादतीत्यर्थः कथं न स्यात् ? सत्यम्। जन्मप्रभृति यो न खादति, तत्रापि खादनक्रियामध्यारोप्यैष निषेधः, अन्यथा खादनक्रियाया अभावादेव निषेधो नोपपद्यत इति। अत उभयत्रैवारोप्य प्रवृत्तोपरतत्वस्य विद्यमानत्वान्न दोष इति। एतदेवाह – इहेत्यादीति **हेमकर**स्याभिप्रायः। **अन्ये तु** मांसं न खादतीत्यत्रारोप्य खादनक्रियायां प्रारम्भापरिसमाप्तेर्विद्यमानत्वाद् वर्तमानां निष्पाद्य नञ्सम्बन्धेनैवोपरता भविष्यतीति कृत्वा प्रवृत्तोपरतो वर्तमान इत्युच्यते, न तु यत्र वर्तमानः स एव प्रवृत्त उपरतश्चेति।

एतदेव **पञ्जी**पङ्क्तेराशय इत्याहु: । अविरता बुद्धाविति बुद्धौ अविरतत्वेनाध्यवसिता इत्यर्थ: । श्व:प्रभृते: कालस्येत्यादि श्व:प्रभृते: क्रीडाकालस्येत्यर्थ: । कदा इत्यादीति । **"वर्तमानसामीप्ये वर्तमानवद् वा"** (अ० ३।३।१३१) इति **पाणिनि:** ।

**अस्यायमर्थ:** – अत्र सामीप्यशब्द: **समीपवचन:** । अन्यथा वर्तमानस्य समीपम्, वर्तमानसामीप्यमिति युक्तार्थत्वात् समासो न स्यात्, न हि सामीप्यं वर्तमानस्य धर्म:, किन्तर्हि समीपस्येति तस्मादत एव ज्ञापकात् स्वार्थे यण् प्रत्यय: सिद्ध: । यथा चातुर्वर्ण्यम्, चातुराश्रम्यमिति । तेन वर्तमानसामीप्ये भूते भविष्यति च वर्तमानवत् प्रत्ययो भवतीति **अस्मन्मते विवक्षयैव** तत् सिद्धमित्याह – समीपे भव: **सामीप्य** इति । एतत्तु पृष्टप्रतिवचन इति **कुलचन्द्र:** (तन्मते पदान्तरसंबन्धं विना न संभवतीति), तन्नेति **महान्त:, परमते** विशेषाभावात् । 'नत्वा दुर्गेण रच्यते' इत्यादौ केवलसामीप्ये वर्तमानाविधानाच्च ।

ननु **परेण** वर्तमानस्य समीपे भूते भविष्यति च काले वर्तमाना विधीयते । **अस्मन्मते** तु भूतस्य भविष्यतश्च समीपे वर्तमान एव, तस्मिन् वर्तमाना विधीयते इत्युक्ते परेण सहार्थभेद: प्रयोजनाभावश्चेत्, सत्यम् । यो वर्तमानो भूतस्य भविष्यतश्च समीपस्तस्य वर्तमानस्य समीपो भूतो भविष्यंश्च काल इति परस्परसामीप्यदर्शनार्थमिदमुक्तम्, न त्वनेन प्रत्ययविधानस्य प्रकार: कथित इति **हेमकर**स्याभिप्राय: । **वस्तुतस्तु** भूतस्य य: शेषक्षणो भविष्यतश्च समीपे भवन्नारोपित-वर्तमानो द्विविध इत्युच्यते । ननु तथापि **परेण** सह महान् भेद: । यावता भूत-भविष्यत्काल एव परेण **वर्तमाना** विधीयते । **अस्मन्मते** भूतस्य भविष्यतश्च वर्तमानविवक्षया वर्तमाना इति ? सत्यम् । (विवक्षया) वर्तमाने पदं निष्पाद्य पश्चात् लक्षणया भूतभविष्यत्कालवृत्तिरिति न दोष: । संविधानादेरिति साम्ग्र्यादेरित्यर्थ: । ननु यदि **चतुर्विध एव वर्तमान** इत्युच्यते तदा कथं देवदत्तो भवतीत्यत्र वर्तमाना चतुर्विधस्यान्यतमस्याभावात्, तथाहि न तावत् प्रवृत्तोपरत:, नञ्योगाभावात् । न च वृत्ताविरत: एतद्भवनस्य श्व:प्रभृतौ प्रतीतेरभावात् । न च नित्यप्रवृत्तो भवनस्य सर्वकालीनत्वाभावात्, नापि सामीप्य: समीपभवत्वाभावात् । **कुलचन्द्र**मते पृष्टप्रति-वचन एव तस्य विषयत्वाच्च ? सत्यम् । एतत्प्रारम्भापरिसमाप्तेरत्रापि विद्यमानत्वात् । सामान्यमेवात्र वर्तमानत्वमिति, अत एव **पञ्जीकारेण** सर्वत्र प्रारब्धापरिसमाप्ते-र्विद्यमानत्वादित्युक्तम् ।

यद्येवं कथन्तर्हि चतुर्विध इत्युक्तं चेत् ? सत्यम् । चतुर्विधोऽपि वर्तमान इत्यत्रापिशब्दोऽध्याहर्तव्य: । **वस्तुतस्तु** गिरीणां **नित्यप्रवृत्तत्वं नास्त्येव,** उत्पत्ति-

विनाशशालित्वात्, अतो नित्यपदमत्रावश्यकमित्यवश्यमङ्गीकर्तव्यम्, तेनावश्यमेव प्रयोगसमये यः प्रवृत्तो विद्यमानः स **नित्यप्रवृत्त** इति, तथा च सति देवदत्तो भवतीत्यपि नित्यप्रवृत्ते उदाहरणमिति न चतुर्विधत्वव्याघात इति। **पाणिनिना** तु सामीप्यवर्तमाने तु "**वर्तमानसामीप्ये वर्तमानवद् वा**" (अ० ३।३।१३१) इति सूत्रस्य विद्यमानत्वाद् मांसं न खादतीत्यत्रापि मुख्यवर्तमान एव पदं निष्पाद्य पश्चान्नञ्योगाद् वृत्ताविरतनित्यप्रवृत्तभेदाद् **द्विविध एव वर्तमान** आदृतः। तथा च **भर्तृहरिः** –

**भूतः पञ्चविधः प्रोक्तो भविष्यंश्च चतुर्विधः।**
**वर्तमानो द्विधाख्यात इत्येकादशकल्पना॥**

(वा० प० ३।९।३८)।

इत्यत्र परोक्षाह्यस्तन्यद्यतनक्रियातिपत्तिभेदाद् **भूतः पञ्चविधः**, अद्यतनश्वस्तनाशंसनभेदाद् **भविष्यंश्चतुर्विधः**। चित्तस्य विक्षेपादित्यादि। ननु यत्र चित्तस्य विक्षेपो नास्ति तत्र कथं परोक्षाया उत्तमपुरुषप्राप्तिः, यथा '**व्यातेने किरणावलीमुदयनः**' इति '**चक्रे सुबन्धुः सुजनैकबन्धुः**' इति च ? सत्यम्, अत्र **वर्द्धमानः**– "**अस्त्युत्तमे वा**" इति वक्तव्यबलादपरोक्षेऽपि परोक्षा स्यादित्याचष्टे, तन्न। विक्षिप्तचित्तकर्तृकक्रियायां वक्तव्यस्य साफल्यात् कथमेतत्साधनार्थं भविष्यतीति **सिद्धान्त**स्त्वयमेव (श्रेयान्) ग्रन्थानुकूलयत्नानामनेकेषां प्रत्यक्षाणां सम्भाव्यमानार्थमनुमीयमानोऽप्रत्यक्ष एवेत्युत्तमपुरुषः प्रवर्तत इति **महान्तः**। **वयं** तु प्रत्यक्षेऽपि यत् परोक्षा विधीयते तत्प्रयोगकृता चित्तमदत्त्वावहेलयैवावगतमिति **प्रौढि**प्रतिपादनार्थमिति ब्रूमः। नाहमित्यादि। बहुलाधिकारमूलकमत्यन्तापह्नवे परोक्षम् इति **काशिकादौ** वक्तव्यम्।

**अस्यार्थः**– प्रष्टव्यस्य कलिङ्गस्थित्यादेर्यन्निमित्तं गमनादिकमपह्नुते तदत्यन्तापह्नवः, तस्मिन् गम्यमाने परोक्षेति। **तदस्मन्मते** किं वाच्यम् इत्याह– अत्यन्तापह्नव इति। **वृत्तौ** तु अपह्नुत इत्यस्य सर्वथाऽपह्नवं करोतीत्येवार्थः। ननु अश्वादिगणे **श्रीपतिना** चेद्यवन्तिकलिङ्गानां बहुवचनान्तत्वमुक्तं तत्कथं कलिङ्गमित्येकवचनमिति ? सत्यम्, आधुनिककलिङ्गाख्यग्रामविशेषपरतयात्रैकवचनान्तत्वेन निर्देश इति न दोषः। **रक्षितस्तु** कलिङ्गानिति बहुवचनान्त एव पाठो न्याय्य इत्याचष्टे। कृतस्येत्यादि। ननु कृतस्यास्मरणेऽपि दर्शनाभावो वर्तते इति किमर्थं कृतस्यास्मरण इति पृथगुपादानेन ? सत्यम्। अन्यकर्तृकस्थले दर्शनादेरभाव इति बोद्धव्यमिति। परोक्षे लोकविज्ञाते प्रयोक्तुर्दर्शनयोग्यविषये ह्यस्तन्यपीति **न्यासे** वक्तव्यमिति। अत्रापि-

शब्दात् परोक्षेत्यर्थः । तदेतन्निराकुर्वन्नाह – अत इत्यादि । ह्यस्तन इत्यादि । सायंचिरम् इत्यादि । **सायमादीनामव्ययग्रहणेनैव सिद्धे** तदुपादानं नियमार्थं तेनाप्रत्ययमान्ताव्ययानां मध्ये 'सायंचिरम्' इत्यनयोरेव तनट्, नान्येषामिति, तेन साकंसार्धमित्यादीनां न भवति, प्रत्ययानां तु भवत्येव व्यावृत्तेरभावात् । यथा इदानीन्तनमिति । नक्तन्तनमिति साहचर्यात्, तथापि सायंचिरंशब्दोऽघोषाद्यव्ययोऽन्यच्चाघोषाद्यव्ययो व्यावृत्यते । अत एव नक्तन्तनमित्य**भिधानादेव सिद्ध**मिति ।

'प्राह्णे' इति सप्तम्यन्तोपलक्षणम्, तेन 'पूर्वाह्णेतनम्' इत्यपि भवति । 'प्रगे' शब्दोऽप्येकारान्तमव्ययमिति नियम्यते । ननु **पाणिनि**मते **"भूते"** (अ० ३।२।८४) इत्यनुवृत्तौ **"अनद्यतने लङ्"** (अ० ३।२।१११) इति सूत्रेणाद्यतनभिन्नातीतकाले ह्यस्तनी विधीयते । ततश्च भूतातीतमात्रे 'अहन्७कंसम्' इत्यादिप्रयोगो भवति । **अस्मन्मते** ह्यःशब्दस्य परोक्षागतकालविषयत्वात् तत्रैव ह्यस्तनी प्राप्नोतीति कथं तत्प्रवृत्ताविति ? सत्यम्, ह्यःप्रभृतावतीतेऽपरोक्षे तत्कालीनह्यस्तनत्वविवक्षया ह्यस्तनी, परोक्षे तु परोक्षा, ह्यस्तनपरोक्षे तु ह्यस्तन्येवेति **साम्प्रदायिकाः** । अद्य ह्यो वेति वृत्तिः । ननु कथमत्र ह्यस्तन्यद्यतन्योः प्राप्तिः, यावता पदार्थह्यस्तने पदार्थाद्यतने ह्यस्तन्यद्यतन्यौ भवतः, न तु वाक्यार्थह्यस्तन्यादाविति ? सत्यम्, अद्य ह्यो वेति यदुक्तं तद् व्यामिश्रदर्शनार्थमिति ।

आन्याय्यादित्यादि । **उपचाराश्रयणं कष्टमित्याह** – अथवेति । **पक्षान्तरं** वा स्मृत्यन्तरमवलम्ब्याह – उभयत इत्यादि । **वाशब्देन** मतान्तरमिति । अष्टप्रहरलक्षणं मतान्तरमित्यर्थः । **कथमित्यादीति** । 'वसेरद्यतनी रात्रिशेषे जागरणसन्ततौ' इति **परः** । जागरणसन्ततौ **जागरणाविच्छेद इत्यर्थः** । एतत्तु बहुलाधिकारात् सिद्धमित्यर्थः । **अन्ये** तु **भाष्यकारप्रभृतय** इत्यर्थः । **रात्रिशेषे** जागरणसन्तताविति किम् ? अमुत्रावसमिति परस्य प्रत्युदाहरणमिति । **अस्मन्मते तद्वक्तव्याभावाद्** उक्तरीत्याद्यतन्येव स्यादित्याशङ्क्याह – यो मुहूर्तमपीत्यादि ।

**अयमाशयः**– रात्रिशेषे यो मुहूर्तमपि सुप्तस्तस्यां प्रभातायां रात्रौ भ्रान्त्यभावादद्यतननिश्चय एव नास्ति, यत्र भ्रान्तिस्तत्राद्यतनत्वनिश्चय इति, एवं च सति अज्ञानज्ञानाभ्यामेवोदाहरणसङ्गतौ किं सूत्रेणेति भावः । 'अगमाम घोषान्, अपाम पयः' इति **वृत्तिः** । ननु यत्र **वस्तुतो** गमनं पानं च ह्यस्तनं तत्र कथमद्यतनीत्याह – ह्यस्तनस्याविवक्षयैवेति । एडिकेति । इकारपाठोऽशुद्ध एव क्षिपकादौ **श्रीपतिना**ऽपठितत्वात्, तस्माद् एडकेति **पाठः साधुः** । एतेनेति, असतोऽपि विवक्षावशेनेत्यर्थः । न हीह **वस्तुसत्ता** शब्दसंस्कारहेतुरपि तु तद्विवक्षापीति भावः । यथा 'अभूनृप !'

इत्यत्रानद्यतनपरोक्षेऽपि अद्यतनत्वविवक्षयाऽद्यतनीति। अनागतस्येष्टार्थस्य लाभेनेत्यादिवृत्तिः।

**अयमर्थः–** अनागतस्य भविष्यत इष्टार्थस्य लाभनिमित्तं यत्प्रयोक्तुराविष्करणं तदा**शीरिति**। लाभेनेति हेतौ तृतीया, तेन 'देवदत्तस्य पुत्रलाभो भविष्यति' इत्यत्र नातिप्रसक्तिरिति। अर्थाद् भविष्यद्विषयैवेति **वृत्तिः**। ननु कथमिदमुच्यते यावता पुत्रस्ते भूयाद् इत्यादिरूपस्य आशंसनस्य क्रियास्वरूपस्य वर्तमानत्वमेव, ततश्च वर्तमानकालबाधनार्थमेव भविष्यद्विधानं भवत् कथं सुखार्थं स्यादिति ? सत्यम्, आशस्यमानस्य पुत्रभवनस्य भविष्यत्त्वात् तदाविष्करणस्याप्याशंसनस्य भविष्यत्त्वं तेनार्थादित्यस्याशस्यमानस्य भविष्यत्त्वेन भविष्यत्त्वोपचारादित्यर्थः। एतेनोपचरितया आशंसया कालस्य विशेषणमित्युक्तं भवति। ननु भविष्यद्विधानमन्तरेणेत्यादि। ननु यदि आशीर्ग्रहणं भविष्यति भविष्यन्त्याशीरित्यत्र न क्रियते, तदा किमपेक्ष्य ह्यस्तन्याः परत्वं येनाशीर्युक्ते भविष्यति श्वस्तने परत्वात् श्वस्तन्येव यथा स्याद् इत्युच्यते? सत्यम्, आशीर्ग्रहणं (सर्वथा न खण्ड्यते, किन्तु काल इत्यस्यानन्तरम् आशीरिति क्रियतां तत्र) भविष्यतीत्यादि सूत्रे न क्रियताम्, तदाशिषः **परेणैव** पाठं कुर्यादिति **सिद्धान्तपङ्क्तेः** काल इत्यस्यासन्निहितं भविष्यति भविष्यन्ती – श्वस्तन्याविति कृत्वा तदनन्तरमाशीरिति क्रियतामित्याचष्टे **कश्चित्**। सर्वमेतदनुचितम्। **'वरमक्षराधिक्यं न तु भिन्नयोगः'** इति न्यायात्।

**अपर**स्तु आशीर्ग्रहणाभावेऽपि भविष्यन्त्यपेक्षया सूत्रे श्वस्तन्याः परनिर्देशाद् आशीरपेक्षयापि श्वस्तन्याः सुतरां परत्वं सम्भवति, यतः संज्ञाविधाने श्वस्तनी परभूता भविष्यन्ती तस्या अपि विधिसूत्रे परभूता श्वस्तनीति आशिषः परभूता सुतरामेव श्वस्तनी भवतीति परत्वं घटत एवेति। अस्मिन् पक्षे आशिषः परेण पाठं कुर्यादिति। अस्य संज्ञाविधौ क्रियातिपत्तेः परेणाशिषः पाठं कुर्यादित्येवार्थ इत्याचष्टे। इदमपि नातिपेशलम्। **अन्ये** तु आशीर्ग्रहणं न खण्ड्यते किन्तु भविष्यतिपदेन यद् विधानं भविष्यदग्रहणमदत्त्वा भविष्यन्त्याशीःश्वस्तन्यः इति क्रियतामित्यर्थः।

ननु भविष्यद्विधानं विना पूर्वसूत्रादतीतानुवृत्तिः स्यादिति चेत्, न। **"भूतकरणवत्यश्च"** (३।१।१४) इत्यनेन सह **"भविष्यन्त्याशीःश्वस्तन्यः"** (३।१।१५) इत्येकयोगाकरणात्। तस्मात् स्वसंज्ञाविशेषणाद् भविष्यत्येव विधानं गम्यते किं भविष्यतिपदेन। अथ भविष्यद्ग्रहणं बाधकबाधनार्थमवश्यमङ्गीकर्तव्यम्, तत्र यदि भविष्यन्ती **सर्वबाधिके**त्युच्यते तदा श्वस्तन्याशिषौ निर्विषये स्याताम्, श्वस्तन्यास्तु सर्वपरत्वेन सर्वबाधकत्वं सिद्धमेवेति न तदर्थं भविष्यद्ग्रहणम्। अतः **पारिशेष्यात्** सूत्रे

श्रुतायाः आशिष एव बाधकबाधनार्थं भविष्यद्ग्रहणमिति व्याख्येयम्, तदभावे तु श्वस्तन्येवाशिषं बाधयित्वा परत्वात् स्यादिति **पञ्जिकाभि**प्रायः । न त्वेकस्मिन् सूत्रे पूर्वापरत्वं नास्तीति वाच्यम्, 'अद्य ह्यो वा अभुक्ष्महि' इति व्यामिश्रे परत्व-निबन्धनसिद्धान्तस्यापि **टीकायां** दर्शितत्वात् । अस्मिन् पक्षे आशिषः एव परेण पाठं कुर्यादित्यस्य भविष्यतीत्यादिविधिसूत्रे श्वस्तन्याः परेणाशिषः पाठं कुर्यादित्येवार्थ इत्याहुः । नन्वस्मिन् पक्षे भविष्यत्कालस्य भविष्यद्विशेषणादेवास्य श्वो वा गमिष्य-तीति श्वस्तनीमपि बाधत इति भविष्यन्त्याः श्वसंज्ञाविशेषणस्य तत्फलान्तरमुक्तं तत्कथं संगच्छते ? विधौ भविष्यद्ग्रहणाभावे स्वसंज्ञाविशेषणस्य भविष्यन्त्याशीः-श्वस्तनीनां भविष्यत्कालमात्रविधायकपरतयैव साफल्यात् । नैवम्, वर्तमानातीतकाल-योर्वर्तमानातीतविभक्तिभ्यामाघ्रातत्वात् तत्र परिशेषपरिप्राप्त एव भविष्यत्काल इति न काचिदनुपपत्तिरिति ।

**हेमकर**स्तु तात्पर्याद् भविष्यति या विभक्तिः सा भविष्यन्तीति व्युत्पत्त्या भविष्यन्तीपदेन भविष्यन्त्याशीश्च मन्यते । तदाशिष एव परेण पाठं कुर्यादित्य-स्याशीर्विधायकं भविष्यन्तीति परेण पाठं कुर्यादित्यर्थः ननु यदि **अन्वर्थबलादेव** आशीरपि भविष्यन्तीत्युच्यते तदा अन्वर्थस्य प्रायोवृत्त्या भविष्यन्तीपदेनाशी-र्नोच्यताम् ? नैवम्, यथा भूतकरणवतीशब्देन ह्यस्तन्यद्यतनीक्रियातिपत्तय उच्यन्ते तथा भविष्यन्तीतिपदेनापि भविष्यन्तीविभक्तिराशीर्विभक्तिश्चोच्यते स्वभावान्न पुनरन्वर्थबलादित्याह । तन्न, भविष्यन्तीपदस्य विभक्तिद्वये रूढौ प्रमाणाभावादिति । यदि तर्हि इत्यादि । ननु कथमयं पूर्वपक्षः संगच्छते, यतः स्वसंज्ञाविशेषणस्यैव तदेव फलं यत् सामान्यभविष्यत्काले ग्रहीतव्ये स्वसंज्ञाविशेषणबलेन श्वःप्रभृतयो मास-पक्षादय एव कालाः गृह्यन्ते नाद्यप्रभृतय इति ? अन्यथा स्वसंज्ञाविशेषणाभावेनाद्य-प्रभृतेरेव कालस्य ग्रहणं स्यात् ? सत्यम् । **सिद्धान्तो**ऽत्र दुर्लभः, तत्रोच्यते श्वोभव-कालस्य भविष्यत्त्वाद् यद् भविष्यद्विधानं तत्सामान्यप्रतिपत्त्यर्थम् इत्युक्तेऽपि तत्प्रकारेण सामान्यमवगम्यते, तच्च श्वस्तत्परस्तत्प्रकारेण श्वस्तनप्रकाराभावाद् अत एव **त्रिलोचनेनापि** श्वःप्रभृतेरित्युक्तम्, अतः श्वस्तनपुरस्कारेणैव श्वःप्रभृतेरेव ग्रहणं भविष्यति किं स्वसंज्ञाविशेषणेन ? सत्यम्, नैष दोषः । स्वसंज्ञाविशेषणव्यतिरेकेणापि श्वःप्रभृतावेव श्वस्तनीविधानलब्धत्वात् । तथाहि भविष्यद्विधानम् 'अद्य श्वो वा गमिष्यति' इत्यत्र श्वस्तनीबाधनार्थमित्युक्तम् । यदि स्वसंज्ञाविशेषणाभावेन श्वस्तनी सामान्यकालविषया स्यात् तदा श्वस्तनीभविष्यन्त्योरुभयोरपि सामान्यविधित्वाद् **बाध्यबाधकता** नोपपद्यते इति भविष्यन्त्या भविष्यद्विधानवैयर्थ्यभयात् श्वस्तन्या

विषयसङ्कोचः कल्प्यते – श्वःप्रवृत्तौ भविष्यति काले श्वस्तनी, सामान्यभविष्यत्काले भविष्यन्तीति।

न च भविष्यन्त्याः श्वःप्रभृतौ काले विधिः श्वस्तन्याश्च सामान्यभविष्यत्काल इति वैपरीत्यं स्यादिति वाच्यम्। यतो भविष्यन्त्याः श्वःप्रभृतिकालमात्रविषयत्वेनापवादत्वं स्यात्। तथा च सति श्वस्तनीबाधकं स्वभावादेव सिध्यतीति भविष्यन्त्या भविष्यद्विधानमनर्थकं स्यात्, तस्मान्नैव वैपरीत्याशङ्का। ननु तथापि श्वःप्रभृतावेव श्वस्तनीति कुतो लब्धम्, परश्वःप्रभृतावेव कथन्न स्याद् विनिगमनाविरहात्? नैवम्। श्वःशब्दस्य श्रुतत्वात् श्वःप्रभृतावेव विधिः कल्पनीय इति **कश्चित्**। इदन्तु न युक्तम्, श्वःशब्देन यदि श्वःप्रभृतावेव विधिः प्रत्याय्यते तदा स्वसंज्ञैव समायाता, कथं सा खण्डयितुं शक्यते इति ब्रूमः, तस्मा**च्चिन्त्यमिदं सुधीभि**रिति ॥४३२।

**[ समीक्षा ]**

कातन्त्रव्याकरण की वर्तमाना, परोक्षा आदि अन्वर्थ संज्ञाओं के लिए पाणिनि ने लट्, लिट् आदि कृत्रिम लकारों का प्रयोग किया है तथा उनके विधान के लिए **"वर्तमाने लट्, परोक्षे लिट्"** (अ० ३।२।१२३,११५) आदि सूत्र बनाए हैं, अतः पृथक् से कातन्त्रीय प्रकृत निर्देश की वहाँ कोई आवश्यकता नहीं रह जाती। इसके अतिरिक्त पाणिनीय व्याकरण में कालविषयक परिभाषाओं के लिए सूत्र बनाने की अनावश्यकता बताई गई है – "कालोपसर्जने च तुल्यम्" (अ० १।२।५७)। तदनुसार अद्यतन, अनद्यतन के विषय में प्रचलित लोक-व्यवहार को स्वीकार कर लिया जाना चाहिए।

**[ विशेष वचन ]**

१. वर्तते इति वर्तमानः, प्रारम्भोऽपरिसमाप्तिः (दु० वृ०)।

२. उभयतोऽर्धरात्रं वा लोकतः सिद्धम् (दु० वृ०)।

३. अनागतस्येष्टार्थस्य लाभेनाविष्करणमाशीः (दु० वृ०)।

४. अन्वर्थसंज्ञायाः प्रायोवृत्तित्वात् सङ्करः स्यात् (दु० वृ०)।

५. प्रत्यक्षेणानुमानेन वा यः कालः परिच्छिद्यमानोऽतीतोऽनागतो वा न भवति स उच्यते वर्तमानः (दु० टी०)।

६. आशंसनमाशीः, सा च वर्तमानकालैव विषयधर्मेण शब्दोऽपि तथोपचर्यते आशस्यमानस्य भविष्यद्विषयत्वादाशीरपि भविष्यन्ती (दु० टी०)।

७. उभयतोऽर्धरात्रं वेति। उभयत उभये पार्श्वेऽर्धरात्रो यस्याह्न इति विग्रहः। तेनाष्टप्रहरोऽद्यतनः कालः (वि० प०)।

८. वरम् अक्षराधिक्यं न तु भिन्नयोगः (क० च०)।।४३२।

## ४३३. प्रयोगतश्च [३।१।१७]

### [सूत्रार्थ]

शिष्टव्यवहार के अनुसार भी कालविशेष में वर्तमाना आदि विभक्तियों का प्रयोग होता है।।४३३।।

### [दु० वृ०]

प्रयुज्यते इति **प्रयोगः**। प्रयोगादवधेः कालस्य विशेषो ज्ञेयः। अर्थात् पदान्तर-सम्बन्धे। यावद्भुङ्क्ते ततो व्रजति, भविष्यत्तावगम्यते। भविष्यन्तीविवक्षायां तु यावच्छब्दस्याप्रयोग एव। अधीष्व माणवक! पुरा विद्योतते विद्युत्। क्षिप्रं कुरु कटम्, पुरा गच्छसि ग्रामम्। वर्तमानसामीप्यस्य तद्ग्रहणेन ग्रहणम्। पुराशब्दाद् भविष्यदवगमे सति तदा तस्य वर्तमानता। कदाकर्हियोगे वर्तमानाभविष्यन्ती-श्वस्तन्यः– कदा भुङ्क्ते, कदा भोक्ष्यते, कर्हि भोक्ता। भविष्यति परोक्षादयोऽपि– कदा बुभुजे, कदा भुक्तः, कदा भुक्तवान्। तथा किमो विभक्तिडतरडतमान्तस्य प्रयोगे लिप्सायां गम्यमानायां भविष्यत्सामान्ये– को भवतां भिक्षां ददाति, दास्यति, दाता वा। कतरो भवतां कतमो भवतां भिक्षां ददाति, दास्यति दाता वा। भूतविहिता अपि दृश्यन्ते– को भवतां पाटलिपुत्रमगच्छत्, अगमदिति वा। तथा लिप्स्यमानात् सिद्धावपि– यो भवतां भिक्षां ददाति, दास्यति, दाता वा स स्वर्गलोकं याति, यास्यति, याता वा। यो भवतां भिक्षाम् अदात् स स्वर्गलोकमगमदिति। **एवमन्येऽप्यनुसर्तव्याः**।।४३३।।

### [दु० टी०]

प्रयोगतश्च। अर्थादित्यादि। यावद् भुङ्क्ते ततो व्रजतीति वर्तमानसामीप्यस्य तद्ग्रहणेन ग्रहणात् पदाद् वा वर्तमानता गम्यते। अत्र हि स्नानादिक्रियानन्तरं भोजनम्, ततो गमनमित्यनेन क्रमेण क्रियायामभिनिर्वर्त्यमानायां भविष्यद्भोजन-मपेक्ष्य स्नानादौ वर्तमाने भाविगमनमपेक्ष्य च यावच्छब्दः प्रयुक्तस्ततः प्रभृतिर्वर्त-मानस्य (स्था) विवक्षितत्वादिति भावः। अधीष्वेत्यादि। अत्राप्यध्ययनकरणयो-र्वर्तमानत्वात् तत्समीपयोरपि विद्योतनगमनयोर्वर्तमानत्वमित्यर्थः 'पुरेत्यादि। एतदुक्तं भवति–पुराशब्दार्थो भविष्यत्कालोऽवगतो वा तस्मिन् क्रिया वर्तते इति भावः।

कदेत्यादि। **वृत्ता**वेवमुदाहरणम्। कदा भुङ्क्ते, कदा भोक्ष्यते, कर्हि भोक्तेति। एवं कदा भोक्ता, कर्हि भुङ्क्ते, कर्हि भोक्ष्यते इति स्वे विषये विवक्ष्यमाणे सति एतास्तिस्रो विभक्तयो भवन्तीत्यर्थः। लब्धुकामः पृच्छति – को भवतां भिक्षां ददातीति ? तदा लिप्साया अन्यत्रापि दृश्यन्ते भविष्यत्सामान्ये – को भवतां पाटलिपुत्रं गच्छति, गमिष्यति, गन्ता वेति ; तथा परोक्षादयोऽपि – को भवतां पाटलिपुत्रं जगाम, अगच्छत्, अगमत्, गतवान् वा। तथा लिप्स्यमानात् सिद्धावपि विवक्षितायाम् – यो भवतां भिक्षां ददाति, दास्यति, दाता वा स स्वर्गलोकं याति, यास्यति, याता वा।

लब्धुमिष्यमाणादन्नादेर्या सिद्धिः स्वर्गप्राप्तिलक्षणा तस्यां कीर्त्यमानायां पदान्तरसम्बन्धे भविष्यत्काले वर्तमानादयो वर्तन्ते इति। अत्र हि लिप्स्यमानात् स्वर्गसिद्धिमाचक्षाणो दातारं दानेन प्रोत्साहयतीत्यर्थः। तथोपाध्यायश्चेदागच्छति, आगमिष्यति, आगन्ता वा अथ त्वं छन्दोऽधीष्वेति विध्याद्यर्थनिमित्ताद् धातोर्भविष्यत्सामान्ये वर्तते उपाध्यायागमनमध्ययनविषये प्रैष्यस्य निमित्तम्। तथा ऊर्ध्वं मुहूर्ताद् उपाध्यायश्चेदागच्छति, आगमिष्यति, आगन्ता वा अथ त्वं छन्दोऽधीष्वेति। मुहूर्तादूर्ध्वम् ऊर्ध्वमुहूर्तम्, तत्र भवः कालः और्ध्वमौहूर्तिकस्तस्मिन् भविष्यति वर्तमानसमीपे वर्तते। ऊर्ध्वं मुहूर्ताद् उपाध्यायश्चेदागच्छेत्, अथ त्वं छन्दोऽधीष्वेति प्रार्थने सप्तम्यस्त्येव। प्रार्थनमाशंसनमपि ऊर्ध्वमौहूर्तिकादन्यत्रापि भाव्यमेव सप्तम्या – उपाध्यायश्चेदागच्छेद् अथ त्वं छन्दोऽधीष्वेति।

**सर्वविभक्त्यपवादा गर्हे कथं च सप्तमी।**
**भविष्यन्ती च किंवृत्ते क्रोधनश्रद्धयोरपि॥ १।**
**गर्हामाह कथन्तत्र याजयेद् वृषलम् भवान्।**
**को नाम वृषलं तत्र याजयेद् याजयिष्यति॥ २।**
**कुध्यामि श्रद्दधे नैव कतरः कतमश्च सः।**
**को नाम वृषलस्तत्र याजयेद् याजयिष्यति॥ ३।**
**किंकिलास्त्यर्थयोर्दृष्टा भविष्यन्त्यर्थयोस्तयोः।**
**लक्षणे किंकिलार्थोऽयं वृषलं याजयिष्यति॥ ४।**
**न श्रद्दधे भवांस्तत्र वृषलं याजयिष्यति।**
**अस्ति स विद्यते नाम वृषलं याजयिष्यति॥ ५।**
**सप्तमी तु तयोरेव यद्‌यदायदिजातुषु।**
**न क्षमे श्रद्दधे नाहं यदि त्वं याजयेरिति॥ ६।**

**यच्च यत्र द्वयोर्गर्हे विगर्हेऽहं क्षमे न च।**
**श्रद्दधे नैव यच्चायं वृषलं यत्र याजयेत् ॥७।**
**आश्चर्येऽपि च दृष्टेयमाश्चर्यं यच्च यत्र सः।**
**वृषलो याजयेत् तत्र एता भूते विभाषिताः॥८।**
**यस्मिन्नर्थे प्रयोगे च सप्तमी विहिता किल।**
**तस्मिन्नर्थे प्रयोगे च क्रियातिपत्तिरुच्यताम् ॥९।**
**स्मृत्युक्तौ तु भविष्यन्ती भूते वाऽयतने स्थिता।**
**स्मरसि चेति यद् वत्स! वत्स्यामोऽहं कलिङ्गके॥१०।**
**ह्यस्तनी यत्प्रयोगे तु स्मरसि वत्स! बुध्यसे।**
**यदवसाम काश्मीरे मगधे यदभुङ्क्ष्महि॥११।**
**आकाङ्क्षायामुभे स्यातां जानामि स्मर बालक।**
**अवसाम च काश्मीरे तत्रौदनमभुङ्क्ष्महि॥१२।**
**यत् काश्मीरेषु वत्स्यामः पास्यामस्तत्र यत् पयः।**
**हशश्वद्भ्यां प्रयोगे तु ह्यस्तनी नित्यमादृता॥१३।**
**अवसाम स्मरसि ह तत्र शश्वदहन्म च।**
**भविष्यन्मात्रे नित्यं स्यात् श्वस्तनी परिदेवने॥**
**इयं तु सा कथं गन्ता एवं पादौ करोति या॥१४।** ४३३।

**[वि० प०]**

प्रयोगतश्च। अर्थादित्यादि। भुङ्क्ते इत्यादेः केवलत्याद्यन्तपदाद् यथाऽयं कालविशेषोऽन्तरेणापि सूत्रारम्भं सिद्ध इति, अर्थात् पदान्तरसम्बन्ध इति गम्यते। यावद्भुङ्क्ते इत्यादि। अत्र हि स्नानादिकं वर्तमानं गम्यते। तदनन्तरभाविनो भोजनस्य भविष्यति, ततो गमनस्य चेति **"सम्प्रति वर्तमाना"** (३।१।११) इत्यनेन वर्तमाना सिद्धा। यद् वक्ष्यति वर्तमानसामीप्यस्य तद्ग्रहणेन ग्रहणमिति। तथाहि स्नानादिकमत्र वर्तमानं गम्यते इत्युक्तम्, तदनन्तरभाविनो भोजनस्य गमनस्य च तत्समीपत्वमिति युक्तम्, यावच्छब्दस्याप्रयोग एवेत्युक्तार्थत्वादित्यर्थः। अधीष्वेत्यादि। इहाप्यध्ययनकटकरणयोर्वर्तमानत्वात् तत्समीपयोर्विद्योतनगमनयोरपि तद्ग्रहणेन ग्रहणाद् वर्तमानत्वम्, अतः पूर्ववद् वर्तमानेति। अथवा पुराशब्दाद् यो भविष्यत्कालोऽवगतस्तत्र क्रिया वर्तत इति वर्तमाना न विरुध्यते। यदा 'भाषते

राघवस्तदा' इति भूतेऽपि वर्तमाना सिद्धा तत्कालक्रियायास्तस्मिन् काले वर्तमानत्वादित्याह – पुरेत्यादि । वाशब्दोऽत्र पक्षान्तरसूचकोऽध्याहर्तव्यः । तस्येति विद्योतनस्य गमनस्य च स्वपदाद् वर्तमानता गम्यते, पदान्तराद् भविष्यत्तेति । कदेत्यादि । स्वे स्वे विषये विवक्ष्यमाणा एता विभक्तयो भवन्ति पदान्तरात्तु कालविशेषः, एवमन्यत्रापीति । भूतविहिता अपि दृश्यन्ते इति भविष्यति सामान्ये इत्यनुवर्तते । तथेति किमो विभक्तीत्यादि निवृत्तम् । लिप्स्यमानाल्लब्धुमिष्यमाणाद् भक्तादेः स्वर्गप्राप्तिलक्षणां सिद्धिमाचक्षाणो दातारं दानेन प्रोत्साहयतीत्यर्थः ।

एवमित्यादि । विध्याद्यर्थस्य निमित्ते भविष्यत्यर्थे वर्तमानाद् धातोर्वर्तमानादयस्तिस्रो विभक्तयो भवन्ति । उपाध्यायश्चेद् आगच्छति अथ त्वं छन्दोऽधीष्व । उपाध्यायश्चेद् आगमिष्यति अथ त्वं व्याकरणमधीष्व । उपाध्यायश्चेदागन्ता अथ त्वं निरुक्तमधीष्वेति भविष्यदुपाध्यायागमनमध्ययनविषये प्रैष्यस्य विध्याद्यर्थस्य निमित्तम् । एवम् ऊर्ध्वमौहूर्तिकेऽपीति । मुहूर्तादूर्ध्वम् **ऊर्ध्वमुहूर्तम्**, तत्र भवः कालः ऊर्ध्वमौहूर्तिकः, क्रीतादित्वादिकण्, उत्तरपदस्य वृद्धिः । तत्र क्वचिदधिकारात् तस्मिन् भविष्यति वर्तमानादयस्तिस्रो विभक्तय इत्यर्थः । तद् यथा ऊर्ध्वमुहूर्ताद् उपाध्यायश्चेदागच्छति आगमिष्यति आगन्ता वा अथ त्वं छन्दोऽधीष्वेति । ऊर्ध्वमुहूर्तादुपाध्यायश्चेदागच्छेद् अथ त्वं छन्दोऽधीष्वेति प्रार्थने विध्यादिलक्षणा सप्तम्यस्त्येव, आशंसनस्यापि प्रार्थनरूपत्वात् । यद्येवम् ऊर्ध्वमुहूर्तादन्यत्रापि सप्तमी स्यादिति चेत् स्यादेव, प्रार्थनलक्षणायाः सप्तम्या निषेद्धुमशक्यत्वात् । यथा उपाध्यायश्चेद् आगच्छेद् अथ त्वं छन्दोऽधीष्वेति । **एवमन्येऽपि गणप्रपञ्चार्था वेदितव्या इति** ॥४३३।

**[क० च०]**

प्रयोगतश्च । प्रयोगादवधेरिति वृत्तिः पूर्वसूत्रेण स्वसंज्ञया यस्मिन् यस्मिन् काले या या विभक्तयो विहिताः शिष्टप्रयोगात् तासां विभक्तीनां तस्मादन्योऽपि कालविशेषोऽवगन्तव्य इत्यर्थः । स च कालविशेषः पदसाधनकाले यदि विवक्ष्यते तदा विभक्तेरुत्पत्तिरेव न स्यात् तस्मिन् कालविशेष तस्या विभक्तेरनभिहितत्वात् । तस्मात् स्वकीयकाल एव विभक्तिं विधाय यावदादिपदान्तरसंबन्धेन लक्षणया कालविशेषोऽवगन्तव्य इति । एतदेवाह – अर्थात् पदान्तरसंबन्धे इति **वृत्तिः**, अत एव वर्तमाने पदसाधनार्थं वर्तमानसामीप्यस्येति वक्ष्यति । न चैवं प्रकारेण प्रयोगस्य सिद्धत्वेन वचनमिदमनर्थकमिति वाच्यम् । अर्थान्तरसम्बन्धोऽपि **शिष्टप्रयोगादेव** न तु स्वेच्छयेति सूचितार्थत्वात् । यावद् भुङ्क्ते इत्यादि वृत्तिः । भविष्यदधिकारे **"यावत्**

**पुरानिपातयोर्लट्''** (अ० ३।३।४) इत्युक्तम्, तदिह न वक्तव्यमिति भावः। भविष्यन्तीत्यादि। यदि भविष्यन्ती विभक्तिर्विधातुमिष्टेत्यर्थः। ननु कथं भविष्यत्काले वर्तमानाविधानं सम्भवति तस्माद् युक्तिर्वाच्येत्याह– वर्तमानसामीप्यस्येत्यादि। वर्तमानस्याध्ययनादेर्यत् सामीप्यं विद्योतनादिकम्, तस्य भविष्यतोऽपि तद्ग्रहणेन ग्रहणमित्यर्थः। अथ यदि सामीप्यं न विवक्ष्यते तदा किं स्यादित्याह– पुराशब्दादित्यादि वृत्तिः, **पक्षान्तरं** वा। अत एव वाशब्दोऽत्र पक्षान्तरसूचकोऽध्याहर्तव्य इति **पञ्जीकृता** वक्ष्यते। पुराशब्दाद् यो भविष्यत्कालोऽवगम्यते तत्र या क्रिया वर्तते, तत्र भविष्यत्काले तस्य विद्योतनादेर्वर्तमानता विवक्ष्यते इत्यर्थः। अत्र पुरेत्युपलक्षणं यावदादिशब्दोऽपि बोद्धव्यः।

ननु केवलं भुङ्क्ते इति पदाद् यो वर्तमानकालविशेषः स एवार्थोऽनेन सूत्रेण ज्ञाप्यते इति प्रयोजनं किं न स्यादित्याह– भुङ्क्त इत्यादेरित्यादि **पञ्जी**। अर्थात् पदान्तरसम्बन्धो गम्यते इति। पदान्तरसम्बन्धे सति कालान्तरं गम्यते इति भावः। अन्तरेणेति। सूत्रारम्भं विनेत्यर्थः। ननु परेण भविष्यत्यधिकारे वर्तमानाविधानार्थं **''यावत्पुरानिपातयोर्लट्''** (अ० ३।३।४) इति सूत्रं क्रियते। तदभावादस्मन्मते कथं वर्तमाना सिद्धा, येन पदान्तरसम्बन्धे सति भविष्यत्ता गम्यते इति व्याख्यायते, अतो वर्तमानासिद्धेः प्रकारमाह – अत्रेत्यादि। यद् वक्ष्यतीति वृत्ताविति शेषः। यावच्छब्दस्याप्रयोग एवेति **वृत्तिः**। यावच्छब्दस्येत्युपलक्षणम्, पुराशब्दस्याप्युक्तार्थत्वाद् अप्रयोग इति भावः। ननु कथं श्वो भवितेत्यत्र श्वःशब्दस्य प्रयोग उक्तार्थत्वात् ? सत्यम्। कदाचिद् उक्तार्थस्यापि प्रयोग इति **'नियतप्रयोगा हि केचिदव्ययाः'** इति न दोषः। यत्र सामीप्यं न विवक्ष्यते तत्र किं स्यादित्याह – अथवेति। पक्षान्तरं वेति **वृत्तौ** च व्याख्यातम्। कदेत्यादि। श्वस्तनीभविष्यन्त्योर्विषये वर्तमानाविधायकं **''विभाषा कदाकर्ह्योः''** (अ० ३।३।५) इति **पाणिनिः**। तदभावे**ऽस्मन्मतेऽपि शिष्टप्रयोगाद्** भवतीत्याह– कदाकर्हीत्यादि **वृत्तिः**। अत्र **वृत्तौ** कदायोगे वर्तमानाभविष्यन्त्योरुदाहरणद्वयम्, कर्हियोगे तु श्वस्तन्या एकमुदाहरणम् प्रतिपत्तव्यमिति, अन्येषां तु **टीकायां** दर्शितत्वात्। भविष्यति परोक्षादयोऽपीति **वृत्तिः**।

**पर**मते भविष्यत्काले परोक्षादीनां विधानं प्रति सूत्राभावात् कथं कदाकर्हियोगे भविष्यति काले परोक्षादीनां प्रयोगो दृश्यते, तस्मात् तन्मतेऽपि **पदसंस्कारा**दनन्तरं लक्षणया कालान्तरप्रतीतिरिति वाच्यमवश्यमिति परमतं कटाक्षयन् दर्शयति– कदा बुभुजे इत्यादि वृत्तिः। तथा किमो विभक्तीत्यादिवृत्तिः, अत्र **''किंवृत्ते लिप्सायाम्''**

(अ० ३।३।६) इति **पाणिनिः** । **अस्यार्थः** – विभक्त्यन्तडतरडतमान्तः किंशब्दः किंवृत्त इति परिभाषितः । किंवृत्ते उपपदे लिप्सायां गम्यमानायां वर्तमानाभविष्यन्तीश्वस्तन्यो भवन्तीत्यर्थः । एतच्च न वक्तव्यमिति भावः । भूतविहितेत्यादि वृत्तिः । अत्रापि **परमते** सूत्राभावात् **कटाक्षार्थ**मेवेति बोध्यम् । तथा **"लिप्स्यमानसिद्धौ च"** (अ० ३।३।७) इति **परसूत्रम्**, अत्रापि लिप्स्यमानादिति पञ्चमीसमासः इष्टः, अत्र किंवृत्तार्थेऽयमारम्भः । अन्यथा किंवृत्ते लिप्सायामित्यनेनैव सिध्यतीति भावः ।

अत्रापि भूतविहितां दर्शयति 'भिक्षामदात्' इति **वृत्तिः** । एवमित्यादि **पञ्जी** । इह **"लोडर्थलक्षणे"** (अ० ३।३।८) इति **परसूत्रम्**, लोडिति पञ्चमी तदर्थस्य विध्यादेः प्रेष्यादेश्च लक्षणं निमित्तम्, यो धात्वर्थस्तत्र वर्तमानाद् धातोर्भविष्यति काले भविष्यन्तीश्वस्तन्योः पक्षे वर्तमाना भवतीत्यर्थः । एतन्न वक्तव्यम् इत्याह – विध्यर्थस्येति । अध्ययनविषय इत्यादि । प्रैष्यस्य शिष्यादेरित्यर्थः । **"लिङ् चोर्ध्वमौहूर्तिके"** (अ० ३।३।९) इति **परः** । ऊर्ध्वमौहूर्तिके भविष्यति काले सप्तम्यर्थलक्षणे वर्तमानाद्धातोः सप्तमी, चकाराद् वर्तमानादयस्तिस्रो विभक्तयः । तन्न वक्तव्यमित्याह – एवमित्यादि । सामीप्ये वर्तमान एव तिस्रो विभक्तयः सिद्धा इत्याह – तस्मिन् भविष्यतीत्यादि । अथ **परेण** ऊर्ध्वमौहूर्तिके पक्षे सप्तमी विधीयते, तदिह किं स्यादित्याह – प्रार्थन इत्यादि । ननु परेण भविष्यन्मात्रे सप्तमी विधीयते, **अस्मन्मते** तु प्रार्थन एवेत्यर्थभेदः परेण सह । नैवम्, प्रार्थनविवक्षायां सप्तमीं विधाय भविष्यन्मात्रे लक्षणा कर्तव्येति न दोषः । ननु तथाप्यर्थभेदः । परेण भविष्यति काले आशंसनेऽपि **"आशंसावचने लिङ्"** (अ० ३।३।१३४) इत्यनेन सप्तम्या विहितत्वात् ? नैवमित्याह – आशंसनस्यापि प्रार्थनरूपत्वादिति प्रार्थनत्वेन विवक्षितत्वादित्यर्थः ।।४३३।

**[ समीक्षा ]**

कातन्त्रकार ने शिष्टप्रयोग के आधार पर जिन शब्दों का साधुत्व प्रकृत सूत्र द्वारा प्रमाणित किया है, उन शब्दों में भूतादिकालविधानार्थ पाणिनि ने छह सूत्र बनाए हैं – "यावत्पुरानिपातयोर्लट्, विभाषा कदाकर्ह्योः, किंवृत्ते लिप्सायाम्, लिप्स्यमानसिद्धौ च, लोडर्थलक्षणे च, लिङ् चोर्ध्वमौहूर्तिके" (अ० ३।३।४-९) । संक्षेप करने की अनेक विधियों में से एक विधि यह भी है। इसी के परिणामस्वरूप पाणिनीय आदि पूर्ववर्ती विस्तृत व्याकरणों की अपेक्षा आचार्य शर्ववर्मा – वररुचिद्वारा प्रणीत १४०० सूत्रों वाले व्याकरण को ईषत् (कु – का) संक्षिप्त, तन्त्र = व्याकरण = कातन्त्र कहते हैं ।

## [ विशिष्ट वचन ]

१. प्रयुज्यते इति प्रयोगः। प्रयोगादवधेः कालस्य विशेषो ज्ञेयः, अर्थात् पदान्तरसंबन्धे (दु० वृ०)।

२. 'यावद्भुङ्क्ते ततो व्रजति' इति वर्तमानसामीप्यस्य तद्ग्रहणेन ग्रहणात् पदाद् वा वर्तमानता गम्यते। अत्र हि स्नानादिक्रियानन्तरं भोजनम्, ततो गमनमित्यनेन क्रमेण क्रियायामभिनिर्वर्त्यमानायां भविष्यद्भोजनमपेक्ष्य स्नानादौ वर्तमाने भाविगमनमपेक्ष्य च यावच्छब्दः प्रयुक्तस्ततः प्रभृति वर्तमानस्य विवक्षितत्वादिति भावः (दु० टी०)।

३. 'भाषते राघवस्तदा' इति भूतेऽपि वर्तमाना सिद्धा, तत्कालक्रियायास्तस्मिन् काले वर्तमानत्वात् (वि० प०)।

४. प्रयोगादवधेरिति वृत्तिः। पूर्वसूत्रेण स्वसंज्ञया यस्मिन् यस्मिन् काले या या विभक्तयो विहिताः, शिष्टप्रयोगात् तासां विभक्तीनां तस्मादन्योऽपि कालविशेषोऽवगन्तव्य इत्यर्थः (क० च०)।

५. नियतप्रयोगा हि केचिदव्ययाः (क० च०)।

६. कदेत्यादि। श्वस्तनीभविष्यन्त्योर्विषये वर्तमानाविधायकं "विभाषा कदाकर्ह्योः" (अ० ३।३।५) इति पाणिनिः। तदभावेऽस्मन्मतेऽपि शिष्टप्रयोगाद् भवति (क० च०)।

७. ननु परेण भविष्यन्मात्रे सप्तमी विधीयते, अस्मन्मते तु प्रार्थन एवेत्यर्थभेदः परेण सह। नैवम्, प्रार्थनविवक्षायां सप्तमीं विधाय भविष्यन्मात्रे लक्षणा कर्तव्येति न दोषः (क० च०)।

## [ रूपसिद्धि ]

१. **यावद्भुङ्क्ते ततो व्रजति**। यहाँ भविष्यद् अर्थ में वर्तमाना विभक्ति का प्रयोग हुआ है। भुज् + न + ते, व्रज् + अन् + ति।

२. अधीष्व माणवक! पुरा **वियोतते** विद्युत्, क्षिप्रं कुरु कटं पुरा **गच्छसि** ग्रामम्। यहाँ पर भी आसन्न भविष्य में वर्तमाना का प्रयोग। वि + द्युत् + अन् + ते, गम् + अन् + सि।

३-५. कदा **भुङ्क्ते,** कदा **भोक्ष्यते,** कर्हि **भोक्ता**। कदा शब्द के योग में वर्तमाना, भविष्यन्ती तथा श्वस्तनी विभक्तियों का प्रयोग। भुज् + न + ते, भुज् + स्यते, भुज् + ता।

६-८. कदा **बुभुजे**, कदा **भुक्तम्**, कदा **भुक्तवान्**। भविष्यद् अर्थ में परोक्षा विभक्ति आदि का प्रयोग। भुज्+ए, भुज्+क्त+सि, भुज्+क्तवतु+सि।

९-१७. को भवतां भिक्षां **ददाति, दास्यति, दाता** वा। कतरो भवतां भिक्षां **ददाति, दास्यति, दाता** वा।कतमो भवतां भिक्षां **ददाति, दास्यति, दाता** वा।किम्–शब्द के प्रयोग में वर्तमाना आदि का प्रयोग, दा+ति, दा+स्यति, दा+ता।

१८-१९. को भवतां पाटलिपुत्रम**गच्छत्, अगमदि**ति वा। किम्शब्द के प्रयोग में भूतकालिक ह्यस्तनी–अद्यतनी विभक्तियों का प्रयोग। अट्+गम्+अन्+ति, अट्+गम्+त्।

२०-२७. यो भवतां भिक्षां **ददाति, दास्यति, दाता** वा, स स्वर्गलोकं **याति, यास्यति, याता** वा। यो भवतां भिक्षा**मदात्** स स्वर्गलो**कमगमदि**ति। दा+ति, दा+स्यति, दा+ता; या+ति, या+स्यति, या+ता। अट्+दा+त्, अट्+गम्+ति ॥४३३।

## ४३४. पञ्चम्यनुमतौ [३।१।१८]

**[सूत्रार्थ]**

अनुमति अर्थ में वर्तमान धातु से पञ्चमी विभक्ति होती है ॥४३४।

**[दु० वृ०]**

कर्तुमिच्छतोऽनुज्ञा **अनुमतिः**, सा च वर्तमानभविष्यद्विषयैव। अनुमतौ वर्तमानाद्धातोः पञ्चमी भवति। एवं कुरु, कटं कुरु, तृष्णां छिन्धि, भज क्षमाम्, कुरु दयाम् ॥४३४।

**[दु० टी०]**

पञ्च०। अनुमननम**नुमतिः**। एवमादिकं कर्तुमिच्छतः कश्चिदनुज्ञां कामचारं ददातीति ॥४३४।

**[वि० प०]**

पञ्चमी०। एवं कुर्विति। डु कृञः हि, **"तनादेरुः"** (३।२।३७), **"करोतेः"** (३।५।४) इति गुणः, **"अस्योकारः सार्वधातुकेऽगुणः"** (३।४।३९) इत्यकारस्योकारः, **"उकाराच्च"** (३।४।३५) इति हिलोपः। छिन्धि इति। छिदिर्, हि। रुधादित्वान्मध्ये नशब्दः, ततो **"रुधादेर्विकरणान्तस्य लोपः"** (३।४।४०) **"हुधुड्भ्यां हेर्धिः"** (३।५।३५) ॥४३४।

**[क० च०]**

पञ्च० । कर्तुमिच्छतोऽनुज्ञाऽ**नुमति**रिति **वृत्तिः** । कामचारो **व्यापारः** । कर्तव्यताज्ञापन**मनुज्ञा** । वर्तमानभविष्यद्विहितानां बाधकमिदं सूत्रमित्युक्तम् । सा चेति **वृत्तिः** । ननु वर्तमानक्रियायाः किञ्चिद्भूतत्वात् कथमनुज्ञा संभवतीति ? सत्यम् । वर्तमानक्रियायां फलानुकूलप्रत्ययस्यासम्पूर्णत्वादनुज्ञा सिद्धैव **लोके** इत्यदोषः । तत्र एवं कुर्विति बर्तमाने एवंशब्दोऽत्र वर्तमानेव्यञ्जकः 'कटं कुरु' इति भविष्यद्विषये । 'तृष्णां छिन्धि' इत्यादि प्राचीनप्रयोगदर्शनार्थम् ॥४३४।

**[समीक्षा]**

कातन्त्रकार ने जिसके लिए पञ्चमी का प्रयोग किया है, उसके लिए पाणिनीय व्याकरण में 'लोट्' लकार का विधान है ।

इस कृत्रिमता के अतिरिक्त उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. एवं **कुरु**, कटं **कुरु**, **कुरु** दयाम् । डुकृञ् करणे + उ + हि । 'कृ' धातु से प्रकृत सूत्र द्वारा पञ्चमीविभक्तिसंज्ञक 'हि' प्रत्यय, "तनादेरुः" (३।२।३७) से उ-विकरण, "करोतेः" (३।५।४) से ऋ को गुण अर्, "अस्योकारः सार्वधातुकेऽगुणः (३।४।३९) से अकार को उकार तथा "उकाराच्च" (३।४।३५) से हि का लोप ।

२. **तृष्णां छिन्धि** । छिदिर् + न + हि - धि । प्रकृत सूत्र द्वारा पञ्चमीविभक्ति 'हि' का प्रयोग, "स्वराद् रुधादेर्न" (३।२।३६) से मध्य में 'न' विकरण, अद्-भाग का लोप तथा 'हुधुड्भ्यां हेर्धिः" (३।५।३५) से हि को धि आदेश ।

३. **भज** क्षमाम् । भज + अन् + हि । प्रकृत सूत्र से पञ्चमी विभक्ति हि, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, न् अनुबन्ध का प्रयोगाभाव तथा हि का लोप ॥४३४।

## ४३५. समर्थनाशिषोश्च [३।१।१९]

**[सूत्रार्थ]**

समर्थना तथा आशीः अर्थों में वर्तमान धातु से पञ्चमी विभक्ति होती है ॥४३५।

**[दु० वृ०]**

परैरशक्यस्य वस्तुनोऽध्यवसायः **समर्थना**, इष्टार्थस्याशंसन**माशीः** । समर्थना-

शिषोश्च वर्तमानाद्धातोः पञ्चमी भवति । पर्वतमप्युत्पाटयानि, समुद्रमपि शोषयाणीति । **कश्चिदाह** – समुद्रः शोषयितुमशक्यः, स आह – समुद्रमपि शोषयाणीति समर्थयति मतमस्य । आशिषि च – जीवतु भवान्, नन्दतु भवान् । अपि शिरसा पर्वतं भिन्द्यात्, अपि सिञ्चेन्मूलसहस्रम् इति विधौ सप्तमी । अपिशब्दोऽत्र संभावने वर्तते । प्रयोगतश्चेति सिद्धम् । ननु इष्टार्थस्याशंसनमपि **प्रार्थनमेव** ? सत्यम् । आशीर्विभक्त्या बाधिता पञ्चमी यथा स्यादिति वचनम् ॥४३५।

## [दु० टी०]

स॰म० । **अन्ये** तु समर्थने पञ्चमीं नेच्छन्तीत्याह – मतमस्येति – **दृष्टाद्यव्याकरणत्वात्** । सिद्धाप्रयोगे समर्थार्थे संभावने सप्तमीष्यते । सिद्धाप्रयोग इति किम् ? समर्थोऽयं हस्तिनं हनिष्यति । समर्थार्थ इति किम् ? विदेशस्थायी प्रायेणागमिष्यति, तथा संभावनार्थधातुप्रयोगे विभाषया । संभावयामि भुञ्जीत भवान्, भोक्ष्यते वा भवान् । प्राप्ते विभाषा । न तु यच्छब्दप्रयोगे – संभावयामि यद् भुञ्जीत भवान् । एतन्न वक्तव्यमित्युपलक्षणमाह – अपि शिरसेत्यादि । यथा उताप्योर्बाढार्थयोः प्रयोगे **प्रयोगत एव सिद्धा** । उत कुर्याद् इति, अपि कुर्यादिति ॥४३५।

## [वि० प०]

समर्थना० । **अन्ये** तु समर्थनायां पञ्चमीं नेच्छन्ति । **शर्ववर्मणा** तु दृष्टाद्यव्याकरणत्वाद् इष्टैवेत्याह – मतमस्येति । **"संभावनेऽलमिति चेत् सिद्धाप्रयोगे"** (अ० ३।३।१५४) इति **केनचिदुक्तम्** । **अस्यार्थः** – संभावने क्रियासु योग्यताध्यवसानेऽलमिति चेत् । समर्थार्थश्चेच्छब्दः सिद्धाप्रयोगो भवति । सिद्धाप्रयोगत्वं च यत्रार्थो गम्यते न च शब्दः प्रयुज्यते । तत्र सर्वविभक्त्यपवादभूता सप्तमी भवति । अलमिति किम् ? विदेशस्थायी प्रायेणागमिष्यति । सिद्धाप्रयोग इति किम् ? समर्थोऽयं हस्तिनं हनिष्यति । तदिह कथमित्याह – अपीत्यादि । सिञ्चेदिति । **'षिचिर् क्षरणे'** (५।११) सप्तमी यात्, **"मुचादेः"** (३।५।३०) इत्यादिना नकारागमः, **"याशब्दस्य च सप्तम्याः"** (३।६।६४) इति याशब्दस्येकारः । विधौ सप्तमीति । यद्यपि विध्यादिलक्षणा सप्तम्यस्त्येव तथापि पञ्चम्यपि स्यात् । पूर्वोक्तश्च विशेषो न स्यादिति, अतः **"प्रयोगतश्च"** (३।१।१७) इति सिद्धमित्युक्तम् । तथा संभावनार्थे धातावुपपदे यच्छब्दवर्जिते विभाषा प्रयोगतश्चेति सिद्धेति, तेन विभाषा धातौ संभावने वचनेऽयदीति न वक्तव्यम् भवति । यथा संभावयामि इह भुञ्जीत भवान्, संभावयामि इह भोक्ष्यते भवान् । प्राप्ते विभाषा । यच्छब्दस्य प्रयोगे तु पूर्वेण नित्यं सप्तमी – सम्भावयामि यद् भुञ्जीत भवानिति । तथा **"प्रयोगतश्च"** (३।१।१७) इति

सिद्धत्वाद् उताप्योः समर्थयोर्नित्यं सप्तमीति न वक्तव्यम् । समर्थयोरिति बाढार्थयोरित्यर्थः । ततः कुर्यात्, अपि कुर्यात् । बाढं करिष्यतीत्यर्थः । नन्वित्यादि । जीवतु भवान् इति प्रार्थनप्रकार एवायम् । यदाह **चन्द्रगोमी** – प्रार्थनं याचनमिष्टाशंसनं चेति । प्रार्थने विध्यादिलक्षणेनैवास्ति पञ्चमी, तत् किमिहाशिषि तस्या विधानेनेति **पूर्वपक्षार्थः** । **उत्तरवादी** तु मन्यते युक्तमिदं किन्तु परापि विध्यादिलक्षणा पञ्चमी आशिषि विधानात् तदपवादभूतयाशिषा विभक्त्या बाध्यते सा बाधितापि यथा स्यादिति पुनराशिषि पञ्चमी विधीयते ॥४३५।

## [क० च०]

सम० । परैरित्यादि **वृत्तिः** । परैरशक्यस्य वस्तुनः क्रियारूपस्य कर्तव्यत्वेनावसायः **समर्थने**त्यर्थः । अस्यार्थ इत्यादि । क्रियासु योग्यताध्यवसाने इति, दुष्करक्रियासु सामर्थ्यप्रकटने चेद् यदि अलं सामर्थ्यवाचकः शब्दः सिद्धाप्रयोगो भवति तदा सप्तमीति **वाक्यार्थः** । सिद्धाप्रयोगः इति । सिद्धः अप्रयोगः प्रयोगाभावो यस्येति विग्रहः । अलमिति किमिति । ननु यदि सूत्रे अलंशब्दः खण्ड्यते तदा कस्य वस्तुनः सिद्धाप्रयोग इति । न च यस्य कस्यचिदप्रयोग इति वाच्यम्, सर्वत्रैव यस्य कस्यचित् सिद्धाप्रयोगत्वेन व्यावृत्तेरभावात् ? सत्यम्, तदोपस्थितस्य संभावनावाचकस्य सिद्धाप्रयोग इति प्रतिपत्तव्यम् । अत एव विदेशस्थायी प्रायेणागमिष्यतीत्यत्र संभावनावाचकोऽपि शब्दादिर्न प्रयुक्त इति । अलमिति इतिशब्दस्य विवक्षितार्थत्वाद् अलंशब्दयोगेऽपि क्वचिद् भवतीति । यथा अलं देवदत्तो हस्तिनं हन्यादिति **वररुचिः** । प्रयोगतश्चेति सिद्धमित्युक्तमिति । ननु कथमिदं संगच्छते, यावता प्रयोगतश्चेत्यत्र तासामित्यनुवर्तते तस्य च पूर्ववस्तुपरामर्शित्वेन कथं तेन सूत्रेण सप्तमी विधीयताम्, न चेह सप्तम्याः कालविशेषोऽस्ति ? सत्यम्, इह सूत्रे यश्चकारः सः उत्तरार्थस्तेन विध्यादिषु चेत्युक्ते प्रयोगतः प्रयोगानुसारेण सप्तमी पञ्चमी चेति वाक्यार्थो गम्यते, ततश्च **वृत्तौ** प्रयोगतश्चेत्यस्य **प्रयोगानुसारादिति** बोध्यम् ॥४३५।

## [समीक्षा]

पाणिनि ने आशीः अर्थ में लिङ्–लोट् का तथा शक्नोति= समर्थना अर्थ में लिङ् लकार का प्रयोग किया है– "आशिषि लिङ्लोटौ, शकि लिङ् च" (अ० ३।३।१७३, १७२)। कातन्त्रकार ने समर्थना अर्थ में जो पञ्चमी विभक्ति का प्रयोग किया है उसके विषय में व्याख्याकारों का स्पष्टीकरण है कि शर्ववर्मा

ने पूर्वाचार्यों के व्याकरणों का अवलोकन करने के बाद ही उनके मत का समादर करने के उद्देश्य से इस मत का संग्रह किया है। इससे यह भी सिद्ध हो जाता है कि प्रायः अन्य आचार्य इस मत का समर्थन नहीं करते। पाणिनि ने "शकि लिङ् च" (अ० ३।३।१७२) कहकर लिङ् का विधान तो किया है, परन्तु लोट् (पञ्चमी) का नहीं।

**[विशेष वचन]**

१. परैरशक्यस्य वस्तुनोऽध्यवसायः समर्थना, इष्टार्थस्याशंसनमाशीः (दु० वृ०)।

२. इष्टार्थस्याशंसनमपि प्रार्थनमेव (दु० वृ०)।

३. अन्ये तु समर्थने पञ्चमीं नेच्छन्तीत्याह – मतमस्येति, दृष्टाद्यव्याकरणत्वात् (दु० टी०)।

४. अन्ये तु समर्थनायां पञ्चमीं नेच्छन्ति, शर्ववर्मणा तु दृष्टाद्यव्याकरणत्वादिष्टैवेत्याह – मतमस्येति (वि० प०)।

५. यदाह चन्द्रगोमी – प्रार्थनं याचनमिष्टाशंसनं चेति (वि० प०)।

६. परैरशक्यस्य वस्तुनः क्रियारूपस्य कर्तव्यत्वेनाध्यवसायः समर्थनेत्यर्थः (क० च०)।

**[रूपसिद्धि]**

१. पर्वतमप्यु**त्पाटयानि**। उत् + पट + इन् + आनि।

२. समुद्रमपि **शोषयाणि**। शुष् + इन् + आनि। प्रकृत सूत्र से समर्थना अर्थ की विवक्षा में पञ्चमीसंज्ञक आनि विभक्ति का प्रयोग।

३-४. **जीवतु** भवान्। जीव् + अन् + तु। **नन्दतु** भवान्। नन्द् + अन् + तु। प्रकृत सूत्र से आशीः अर्थ में पञ्चमीसंज्ञक तु-विभक्ति का प्रयोग तथा "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण का प्रयोग ॥४३५।

## ४३६. विध्यादिषु सप्तमी च [३।१।२०]

**[सूत्रार्थ]**

विध्यादि अर्थों में विद्यमान धातु से सप्तमी तथा पञ्चमी विभक्तियों का विधान होता है ॥४३६।

[दु० वृ०]

विध्यादिषु वर्तमानाद् धातोः सप्तमी भवति पञ्चमी च। **विधिरज्ञात-ज्ञापनमेव**। कटं कुर्यात्, कटं करोतु भवान्। यत्र प्रत्याख्याने प्रत्यवायस्त**न्निमन्त्रणम्**। इह भुञ्जीत, इह भुङ्क्तां भवान्। यत्र प्रत्याख्याने कामचारस्त**दामन्त्रणम्**। इहासीत, इहास्तां भवान्। सत्कारपूर्वको **व्यापारोऽध्ययनम्।** माणवकम् अध्यापयेत्, अध्यापयतु भवान्। निरूपणा **सम्प्रश्नः।** किन्नु खलु भो व्याकरणमधीयीय उत छन्दोऽधीयीय। किन्नु खलु भो व्याकरणमध्ययै उत छन्दोऽध्ययै। याच्ञा **प्रार्थना।** लभेय भिक्षाम्, देहि मे भिक्षाम्। प्रैष्यप्राप्तकालयोरपि सप्तमी पञ्चमी च स्यादेवेति मतम्। प्रेषितस्त्वं ग्रामं गच्छेः। (प्रेषितस्त्वं ग्रामं गच्छ)। प्राप्तस्ते कालः कटकरणे कटं कुर्यात्, कटं करोतु भवान्। कथं विदध्यात्, निमन्त्रयेत, आमन्त्रयेत, अधीच्छेत्, संपृच्छेत, प्रार्थयेत ? कृत्यरूपेषु विध्यादिषु तयोर्विधानात्, तदा तु प्रकृत्यर्थस्य न कर्तव्यता, तदा विदधातीत्यादयः सिद्धाः ॥४३६।

[दु० टी०]

विध्यादि०। विध्यादयो विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनानि। विध्यादिषु वर्तमानाद्धातोरिति प्रकृत्यर्थविशेषणमाह – विध्यादयोऽर्था न गम्यमाना इति भावः। यदि विध्यादिषु गम्यमानेष्वित्युच्यते तदा छात्रस्त्वामामन्त्रयते छात्रो मां निमन्त्रयते इत्यत्रापि स्यात्। विधिरज्ञातज्ञापनमेवेति। अस्मात् प्रेषणं न भिद्यते प्राप्तकालः प्राप्तावसरः अत्रापि विधिरस्ति, नहि नियोगत्वं जहातीत्याह – प्रैष्यप्राप्तकालयोरित्यादि। अधीष्टं तु भिद्यते सत्कारपूर्वकव्यापारत्वात्। यथा निमन्त्रणामन्त्रणयोर्भेद इति, न सुष्ठु प्रोक्तमेतद् विधिसम्प्रश्नप्रार्थनानि त्रय एव विध्यादयः। सुखनिबन्धनं तु **वृत्ता**वन्तर्भूतान्वाख्यानमिति। कथमित्यादि। प्रकृत्यैवोक्ता विध्यादयः कथं सप्तमी चेति देश्यम्, परिहारमाह – कृत्यरूपेष्वित्यादि। नहि कृत्यैः कार्यैर्विना प्रकृतेर्विध्याद्यभिधानसामर्थ्यमस्ति। यदा त्वित्यादि प्रकृतेरर्थस्य न कर्तव्यता तदा विदधातीति करणमात्रमेव प्रतीयते न त्वज्ञातज्ञापनम्। निमन्त्रयते इति भोजनकथनमात्रं न नियोगतः कर्तव्यता। आमन्त्रयते इति संभावनामात्रं न **कामचारः**। एवम् अधीच्छति, संपृच्छते, प्रार्थयते इति तस्मात् प्रत्ययेन धात्वर्थो व्यज्यते, स पुनः स्वेष्वर्थेषु कर्तृकर्मभावेषु प्रवर्तते न पुनर्विध्यादयः प्रत्ययार्थ-विशेषणं विध्यादिविशिष्टेषु कर्त्रादिषु धातोः सप्तमी चेति सूत्रे भावप्रत्ययानामेव

विध्यादिशब्दानां ग्रहणात्। ते च धात्वर्थविशेषणत्वात् सामान्यार्थयोगेन धातोर्विशिष्टार्थं ग्राहयन्तीति धात्वर्थविशेषणमेव युक्तम्, तद्द्वारेण च प्रत्ययार्थमपि विशेषयन्ति विधिक्रियायाः कर्ता कर्मेति धात्वर्थविशेषणमन्तरेणैषां प्रत्ययार्थविशेषणत्वं संभवतीति पञ्चमी सप्तमी परस्मैपदवद् निरन्वया संज्ञेति, इच्छाप्रकाशने प्रार्थन एव सप्तमी– कामो मे भुञ्जीत भवान्।

कथं 'कच्चिज्जीवति ते माता' प्रश्नमात्रस्य विवक्षितत्वात्। तथा इच्छार्थधातुप्रयोगे सप्तमीपञ्चम्यौ प्रार्थन एव – इच्छामि भुञ्जीत भवान् इति। 'भुङ्क्तां भवान्' इति हेतुफलयोर्विभाषया सप्तमीप्रयोगतः दक्षिणेन चेद् यायाः शकटं पर्याहरेत्, दक्षिणेन चेद् यास्यति न शकटं पर्याहरिष्यति, दक्षिणेन यानं हेतुः, अपर्याहरणं चात्र फलं यस्मिन्नर्थे सप्तमी तस्मिन्नर्थे **क्रियातिपत्तिर**पीति अभोक्ष्यत भवान् घृतेन यदि मत्समीपमासिष्यत। प्रयोगतो भूतेऽपि दृश्यते –

**अमङ्क्ष्यद् वसुधा तोये च्युतशैलेन्द्रबन्धना।**

**नारायण इव श्रीमांस्त्वं चेन्नाराधयिष्यथाः॥**इति ॥४३६।

## [वि० प०]

विध्यादि०। कुर्यादिति। **"ये च"** (३।४।३८) इति विकरणोकारस्य लोपः। यत्रेति। अङ्गीकृतस्येत्युपस्कारः। भुञ्जीतेति अशने भुजिरिति रुचादित्वादात्मनेपदम्। अध्यापयेदिति। अधिपूर्व इङ्, हेताविन्। **"स्मिजिक्रीङामिनि"** (३।४।२४) इत्याकारः, **"अर्तिह्री०"** (३।६।२२) इत्यादिना पकारागमः। अधीयेयेति। तथैवाधिपूर्व इङ्, **"स्वरादाविवर्णोवर्णान्तस्य"**(३।४।५५)इति इयादेशश्च।अध्ययै इति। पञ्चम्युत्तम ऐ, गुणः, ए अय्। प्रैष्य इत्यादि। अत्राप्यज्ञातज्ञापनलक्षणो विधिरस्तीति भावः। व्याद्युपसर्गसहितैर्धाञादिभिरेव विध्यादीनामर्थानामभिहितत्वात् सप्तमीपञ्चम्यौ न प्राप्नुत इति चोदयन्नाह – कथमित्यादि। कृत्येत्यादिना परिहरति – कृत्यरूपेष्विति। नियोगतः कर्तव्यरूपतयाभिधातुमिष्टेषु विध्यादिषु तयोर्विधानं तस्मादित्यर्थः। न च प्रकृतीनां तथाभिधानसामर्थ्यमस्तीति कथमुक्तार्थता स्यादिति। यदा त्वित्यादि। यदा पुनः प्रकृतेरर्थस्य विध्यादिलक्षणस्य न कर्तव्यता नियोगतः कार्यरूपता न विवक्ष्यते तदा वर्तमानैव। यथा विदधातीति करणमात्रं प्रतीयते न त्वज्ञातज्ञापनम्। निमन्त्रयते इति भोजनकथनमात्रं न नियोगतः कर्तव्यता।

आमन्त्रयते इति संभावनामात्रं न कामचारः। तथा अधीच्छति, संपृच्छते प्रार्थयते इति ॥४३६।

**[क० च०]**

विध्यादि०। विध्यादिष्विति गणस्यैकत्वेऽपि अवयवाश्रितं बहुवचनं साधु। विध्यादिषु वर्तमानाद्धातोरिति **वृत्तिः**। विध्यादिविशिष्टेषु वर्तमानाद्धातोरित्यर्थः। अत्रा**प्तवचनं** प्रवर्तकनिवर्तकरूपं विधिरिति **कश्चित्**। आप्तवचनव्यापारः प्रवर्तकरूप इ**त्यन्ये**। अवश्यकर्तव्यतारूप इ**त्यपरः**। फलमपूर्वमेवेति **इतरः**। स्वर्गादिफलेषु योऽनुरागः स एव विधिरि**त्येके**। इष्टसाधनता विधिरिति **मतान्तरम्**। तदुक्तम्—

**शब्दस्तद्व्यापृतिः कार्यं फलं रागश्च पञ्चमः।**

**इष्टाभ्युपायता चेति विधौ षट् प्रतिपत्तयः॥**

इत्येते षट् परस्परविरुद्धा इति व्यापकलक्षणमाह—**विधि**रज्ञातज्ञापनमिति। अज्ञातस्य व्यापारस्य कर्तव्यत्वेन ज्ञापनं विधिरित्यर्थः। अत्र 'कर्तव्यताबोधकत्वे सति' इति विशेषणं देयम्। तेन नदीकूले पञ्च दाडिमानि सन्तीत्यादौ अज्ञातज्ञापनस्य विद्यमानत्वात् सप्तमीपञ्चम्यौ न स्याताम्। कटं कुर्यादिति। इह फलार्थिनः कटकरणेऽज्ञानं तस्य चाप्तेन कर्तव्यताबोधपूर्वकज्ञापनं विधिः। तथा च कुर्यादित्यस्य मया बोधितकटकरणको भवान् इति **वाक्यार्थः**। तत्र विध्यादयः विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनानीति।**परसूत्रानु**सारेणोदाहरति— कटं कुर्यादिति। तत्र कुर्यादित्यादिना विधिमुक्त्वा निमन्त्रणमाह— यत्रेत्यादि वृत्तिः। यत्रेति भिन्नाधिकरणे सप्तमीयम्, तेनायमर्थः। यत्राज्ञातभोजनादिज्ञापनविषयेऽङ्गीकृतस्य भोजनादेः प्रत्याख्याने प्रत्यवायो भवति, तद् भोजनादिज्ञापन **निमन्त्रणमि**त्यर्थः। तथा च 'अनिन्दितेन निमन्त्रितो नोपक्रमेद् अन्यथा प्रत्यवायी स्यात्' इति **श्रुतिः**। इहेति भोक्तव्यान्नेष्टजनकर्तृकश्राद्ध इत्यर्थः।

इदानीमामन्त्रणमाह— यत्रेति। पूर्ववदिहापि भिन्नाधिकरणे सप्तमी, तथा सति यत्राज्ञातज्ञापनविषयेऽङ्गीकृतस्य भोजनादेः प्रत्याख्याने कामचारः स्वेच्छाचरणं तद् **आमन्त्रणम्**। एतेनावश्यकर्तव्यताज्ञापनं निमन्त्रणं कामचारकर्तव्यताज्ञापनमामन्त्रणमिति **निर्गलितार्थः**। इहेति इष्टजनगृह इत्यर्थः। अधीष्टमध्येषणम्, तस्य लक्षणमाह— सत्कार इत्यादि। अत्र **प्राञ्चः—** सत्कारः पूजा, व्यापारोऽध्येषणम्,

तच्चाध्यापनमेव नाध्ययनमिति। यदि सत्कारपूर्वको व्यापार एवाध्येषणं तदा शिष्यस्य व्यापार एवाध्येषणं स्यान्न गुरोरिति। तस्यान्यव्यापारासंभवादित्याहुः। तदज्ञानविजृम्भितमेव। माणवकमध्यापयेदिति **वृत्ति**विरोधात्। तस्मात् पूजापूर्वक-कर्तव्यताज्ञापनस्यैवात्राध्येषणत्वम्। अत एव **टीकायाम्** अस्यापि विधिभेदाद् विधिसम्प्रश्नप्रार्थनानां त्रयाणामेव विधित्वम्। अतो नाध्ययनस्य नाप्यध्यापनाया अध्येषणत्वम् इति ब्रूमः। एतेन **हेमकर**मतमपि निरस्तम्। निरूपणेति, परामर्श इत्यर्थः। संशयितस्यैकतरनिष्ठत्वेन निर्णेतुमिच्छा **निरूपणा**। किं किं नु भो व्याकरण-मधीयते, ततश्छन्दोऽधीय। अध्ययनस्य निरूपणमित्यर्थः। **याच्ञा** प्रार्थनेति आत्म-लाभनिमित्तं प्रेषणं मह्यं देहीति रूपं **याच्ञा** प्रार्थनेत्यर्थः। लभेय भिक्षामिति। आत्मलाभार्थं भिक्षां देहीति प्रेरयतीत्यर्थः। प्रैष्येत्यादि। **परोऽत्र** "प्रैषातिसर्गप्राप्त-कालेषु कृत्याश्च" (अ० ३।३।१६३) इति चकारेण पञ्चमीमात्रमनुवर्तयति। तदनन्तरं "सप्तमी चोर्ध्वमौहूर्तिके" (द्र०, अ० ३।३।१६४) इति व्याचष्टे। प्रैष्याद्युप-पदेष्विति। यथा प्रेषितोऽतिसृष्टो वा प्राप्तकालो वा भवान् ग्रामं गच्छतु। तथा प्रेषितो भवान् मुहूर्तादूर्ध्वं ग्रामं गच्छेत्, गच्छतु च इत्याचष्टे। तदनुसाराद् वृत्तावपि-शब्देनातिसर्गोऽपि गृह्यते। सप्तमी चेत्यत्र पञ्चम्या व्यस्तेनान्वयः, तत्र भिन्नविभक्ति-निर्देशाद् ऊर्ध्वमौहूर्तिक इत्युपस्कृत्य सप्तम्यपीति योज्यम्। अपिशब्दात् पञ्चम्या अपि समुच्चयः। तेन प्रैष्यातिसर्गप्राप्तकालेषु पञ्चमी। प्रैष्यादिविशिष्टे ऊर्ध्वमौहूर्तिके सप्तमी पञ्चमी च स्यादित्यर्थः पर्यवस्यति। प्रेषितस्त्वं ग्रामं गच्छेति पञ्चम्या एवात्रोदाहरणम्। एवमतिसृष्टस्त्वं ग्रामं गच्छ, प्राप्तकालस्त्वं ग्रामं गच्छ। अत्र सप्तम्या उदाहरणं नास्ति। प्राप्तकालस्ते कटकरण इति। अत्रोर्ध्वमुहूर्तादपि . योज्यम्। ऊर्ध्वमौहूर्त्तिके प्रेष्यातिसृष्टयोरुदाहरणं बोध्यमिति **कुलचन्द्रः**। तन्नेति **महान्तः**। अतिसर्गो हि कामाचरणानुज्ञेति **भाषावृत्तिः**। सा चानुमतिस्वरूपा, तत्र च पञ्चमी विहितैवास्ति। तस्मात्- किं पुनर्विहितातिसर्गस्य समुच्चयेनेति ऊर्ध्वमौहूर्त्तिक इत्यध्याहृत्य व्यस्तेन ग्रन्थयोजनमपि चाभिप्रायापरिज्ञानादेव। प्रैष्यप्राप्तकालयोरपि विधिसामान्यविवक्षया **पदसंस्कारेण** श्वो गमिष्यतीतिवत् सप्तमी पञ्चम्यपि स्यादेव। **पाणिने**रपि मतमेतत्, बाधकाभावात्। तथा च किन्तत्र पञ्चमीविधानेन विधिसामान्यवाचकप्रत्ययस्यैव साधुत्वादिति प्रोक्तं तैरिति। एवम् ऊर्ध्वमुहूर्तस्यापि विधिसामान्यत्वं स्वीकृतम्। एतन्मतेनैव 'प्रेषितस्त्वं ग्रामं गच्छेः' इति सप्तम्युदाहरणमपि क्वचित् पुस्तके यत् पठितं तत् संगच्छते एवेति। 'प्राप्तस्ते कालः' इत्यत्रापि ऊर्ध्वमुहूर्तादिति नाध्याहर्त-व्यमिति उक्तरीत्यैव यतः संगच्छते **वृत्ति**रिति ॥४३६।

**[ समीक्षा ]**

विधि आदि अर्थों में कातन्त्रकार ने सप्तमी-पञ्चमी विभक्तियों का विधान किया है, इसके लिए पाणिनि ने लिङ्-लोट् लकारों का प्रयोग किया है– "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्, लोट् च" (अ० ३।३।१६१, १६२)। कृत्रिमलोकव्यवहृत संज्ञाव्यवहार के अतिरिक्त और कोई अन्तर दोनों व्याकरणों में दृष्ट नहीं है।

**[ विशेष वचन ]**

१. विधिरज्ञातज्ञापनमेव। .... यत्र प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम्। ... यत्र प्रत्याख्याने कामचारस्तदामन्त्रणम्। ...... सत्कारपूर्वको व्यापारोऽध्येषणम्। .... निरूपणा सम्प्रश्नः। ...याच्ञा प्रार्थना (दु० वृ०)।

२. पञ्चमी सप्तमी परस्मैपदवन्निरन्वया संज्ञेति। इच्छाप्रकाशने प्रार्थन एव सप्तमी– कामो मे भुञ्जीत भवान्। कथम्– 'कच्चिज्जीवति ते माता' प्रश्नमात्रस्य विवक्षितत्वात् (दु० टी०)।

३. अप्राप्तवचनं प्रवर्तकनिवर्तकरूपं विधिरिति कश्चित्। आप्तवचनव्यापारः प्रवर्तकरूप इत्यन्ये। अवश्यकर्तव्यतारूपः इत्यपरः। फलमपूर्वमेवेतीतरः। स्वर्गादि-फलेषु योऽनुरागः स एव विधिरित्येके। इष्टसाधनता विधिरिति मतान्तरम्। तदुक्तम्–

शब्दस्तद्व्यापृतिः कार्यं फलं रागश्च पञ्चमः।
इष्टाभ्युपायता चेति विधौ षट् प्रतिपत्तयः॥ (क० च०)।

४. निरूपणेति। परामर्श इत्यर्थः। संशयितस्यैकतरनिष्ठत्वेन निर्णेतुमिच्छा निरूपणा। किं किं नु भो व्याकरणमधीयते, ततश्छन्दोऽधीय, अध्ययनस्य निरूपण-मित्यर्थः (क० च०)।

**[ रूपसिद्धि ]**

१. **कटं कुर्यात्**। कृ+उ+यात्। प्रकृत सूत्र से सप्तमीसंज्ञक यात्-विभक्ति, 'तनादेरुः" (३।२।३७) से उ-विकरण, ऋ के स्थान में अर्, अ को उ, तथा "ये च" (३।४।३८) से उ-विकरण का लोप।

२. **कटं करोतु**। कृ+उ+तु। प्रकृत सूत्र द्वारा पञ्चमीसंज्ञक तु-विभक्ति, ,उ-विकरण, ऋ को गुण, उ को गुण।

३-१४. **इह भुञ्जीत। इह भुङ्क्तां भवान्। इहासीत, इहास्तां भवान्।**

**माणवकमध्यापयेत्**, **अध्यापयतु भवान्**, **व्याकरणमधीयीय छन्दोऽधीयीय**, **व्याकरणमध्यै**, **छन्दोऽध्यै**, **लभेय भिक्षाम्**, **देहि मे भिक्षाम्**, **त्वं ग्रामं गच्छेः**। प्रकृत सूत्र द्वारा सप्तमी–पञ्चमीसंज्ञक विभक्तियाँ ॥४३६।

## ४३७. क्रियासमभिहारे सर्वकालेषु मध्यमैकवचनं पञ्चम्याः [३।१।२१]

### [सूत्रार्थ]

क्रियासमभिहार अर्थ में वर्तमान धातु से सभी कालों में पञ्चमीविभक्तिसंज्ञक मध्यमपुरुष – एकवचन का विधान होता है ॥४३७।

### [दु० वृ०]

क्रियायाः समभिहारः पौनःपुन्यं भृशार्थो वा। क्रियासमभिहारे वर्तमानाद्धातोः सर्वक्रियाकालेषु मध्यमैकवचनं भवति पञ्चम्याः। लुनीहि लुनीहीत्येवायं लुनाति, लुनीतः, लुनन्ति। लुनासि, लुनीथः, लुनीथ। लुनामि, लुनीवः, लुनीमः। अलुनात्, लविष्यति। अधीष्व अधीष्व इत्येवायम् अधीते अध्यैत, अध्यैष्यत्। सर्वक्रिया-कालेष्विति वचनात् संख्यादिविशेषो न गम्यते इत्यनुप्रयोगः। प्रत्यासत्तेस्तेनैव धातुना कारकेणेति **सुखार्थ**मेवेदम्। अन्यथा एवमसौ त्वरावान् यदन्यानपि प्रेरयन् क्रियां करोतीति **विवक्षया** सिध्यति। तथा लुनीत लुनीत इत्येवायं यूयं लुनीथ। अधीध्वम् अधीध्वम् इत्येवायं यूयम् अधीध्वे। तथा भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्य-पिधानमट इत्येवायम् अटतीत्यादयो **विवक्षा** ॥४३७।

### [दु० टी०]

क्रिया०। सर्वक्रियाकालेष्वित्यादि। सर्वे च ते क्रियाकालाश्चेति। संख्यादिविशेष इति एकत्वद्वित्वबहुत्वनामयुष्मदस्मदर्थकारककालविशेष इति। प्रत्यासत्तेरित्यादि। भिन्नार्थेन तावन्न भवत्यनभिसंबन्धात्। यथा लुनीहि लुनीहीत्येवायं पचतीति। धात्वन्तरेणापि समानार्थेन भवतीति। अधीष्व अधीष्वेत्येवायं पठतीति। न च कारकान्तरेण लुनीहि लुनीहीत्येवायं लूयत इति। क्रियासमभिहारे हिस्वावित्युक्ते सार्वधातुकत्वं न स्यादिति सर्वकालेषु मध्यमैकवचनं पञ्चम्या इत्युच्यते। मध्यमैक-वचनमेकार्थवाचीत्याविर्भावनेन सर्वकालेष्वित्यस्य प्रयोजनं दर्शयति। न च हिस्वान्तमिदमभिधानादव्यक्तपदार्थकं क्रियामात्रे वर्तते इत्यपि वक्तव्यम्, यस्माद् **विवक्षा गरीयसी**त्याह – **सुखार्थ**मेवेदमिति।उपलक्षणमात्रमिदमुक्तम् इत्याह – तथेत्यादि। तथेति विवक्षयेत्यर्थः। **"पञ्चम्यास्तध्वमोर्विषये सर्वकालेषु मध्यमैकवचनं विभाषया"** इति न वक्तव्यम्। तथेति क्रियासमुच्चयेऽपीत्यर्थः। एकापि क्रिया साधनस्यानेकत्वात्

साधनकृतबहुत्वानां क्रियाणां समुच्चये मध्यमैकवचनम्, स्वविषये तध्वमौ च स्यातां विभाषयेति। यदा तु समुच्चयेन सह क्रियामात्रं विवक्ष्यते तदा विधिर्नास्तीति, हिस्वौ स्वविषये वा – भ्राष्ट्रमटति, खदूरमटति, स्थाल्यपिधानमटतीत्यादयः।

ननु च समुच्चये धातोर्यावतो हिस्वादयस्तावत एवानुप्रयोगोऽपि युक्तः। कथं सामान्यार्थेन धातुनानुप्रयोग इति। ओदनं भुङ्क्ष्व, सक्तून् पिब, धानाः खाद इत्येवायमभ्यवहरति ? सत्यम्, व्यक्तौ हि व्यापारभेदः। तथाहि यो भोजनव्यापारो नासौ पानव्यापारः खादनव्यापारश्चेति। जातौ तु सर्वत्राभ्यवहारः संभवतीति न दोषः, जातेरिहाभिधानात् 'भुङ्क्ते पिबति खादति' इत्येवमनुप्रयोगमाला नाभिधीयत इति कारकभेदे क्रियाभेदात् सर्वत्र क्रियासामान्यमस्तीति भावः।।४३७।

## [वि० प०]

क्रिया०। लुनीहि लुनीहीत्यादि **आभीक्ष्ण्ये** द्विर्वचनम्। संख्यादिविशेषो न गम्यते इति सर्वक्रियाकालेषु विधीयमानत्वादव्यक्तपदार्थकत्वमेव स्यात्, अतः संख्याकालकारकनामयुष्मदस्मदर्थाभिव्यक्तये अनुप्रयोगो युक्त इति, अन्यथा हि अविदिताभिधेयविशेषतया शब्दो **लोके** प्रवृत्तेर्निवृत्तेर्वा हेतुर्भवितुमर्हतीति, अभवंश्च कथं प्रयुज्यत इति। यद्येवमनियमेन स्यादतो यथाविध्यनुप्रयोगः पूर्वस्मिन्निति वक्तव्यम्। यथाविध्यनुप्रयोग इति। **अस्यार्थः –** यस्माद्धातोर्यस्मिन् कारके पञ्चम्या विधिस्तस्यैवानुप्रयोग इत्यर्थः, तदयुक्तमित्याह – प्रत्यासत्तेरित्यादि। भिन्नार्थे धातौ तावन्न भवति, अनभिसंबन्धात्। यथा 'लुनीहि लुनीहि' इत्येवायं छिनत्तीति। तथा कारकान्तरेणापि न भवति लुनीहि लुनीहीत्येवायं लूयते इति। अतो यस्माद्धातोर्यस्मिन् कारके पञ्चमी विहिता स एव धातुस्तदेव कारकं प्रत्यासन्नम् इति कुतो धात्वन्तरेण कारकान्तरेण चानुप्रयोगप्रसङ्ग इत्यर्थः। एक इति पाठो **वृत्तौ** नास्तीति। लक्ष्यते उक्तविपर्ययेण स्वमतस्याप्यप्रतिपादितत्वात् **शास्त्रान्तरे** चादर्शनादिति।

अथ किमर्थमिदं यावता **लोकेष्वेवं विवक्षा**स्तीत्याह – **सुखार्थमि**त्यादि। उपलक्षणमात्रमिदमुक्तमित्याह – तथेति। तथैव विवक्षयेत्यर्थः। तेन 'पञ्चम्यास्तध्वमोर्विषये सर्वक्रियाकालेषु मध्यमैकवचनं विभाषया' इति न वक्तव्यम्। पक्षे पूर्ववदुदाहरणम्। तथेति क्रियासमुच्चयेऽपि **विवक्षया** विभाषयेत्यर्थः। तेन क्रियासमुच्चयेऽन्यतरस्याम् इत्यपि न वक्तव्यम्। अटतीत्यादय इति – अटति, अटतः, अटन्ति। अटसि, अटथः, अटथ। अटामि, अटावः, अटामः। पक्षे भ्राष्ट्रमटति, मठमटति, खदूरमटति, स्थाल्यपिधानमटतीत्येवायम्। अटति, अटतः, अटन्ति। एवं मध्यमोत्तमयोरपि। तथा छन्दोऽधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्येवायमधीते, अधीयाते, अधीयते। एवं

मध्यमोत्तमयोरपि । तध्वमौ च विभाषया भवतः । भाष्ट्रमटत, मठमटत, खदूरमटत, स्थाल्यपिधानमटत इत्येवायं यूयमटथ । पक्षे हिप्रत्यय एव – भ्राष्ट्रमटेत्यादि । तथा छन्दोऽधीध्वम्, व्याकरणमधीध्वम्, निरुक्तमधीध्वम् इत्येवायं यूयमधीध्वे । पक्षे स्वप्रत्यय एव – छन्दोऽधीष्वेत्यादि ।

एवमनयोरपि पक्षे छन्दोऽधीते, व्याकरणमधीते, निरुक्तमधीते इत्येवायमधीते, अधीयाते, अधीयते । एवं मध्यमोत्तमयोरपि । ननु कथमोदनं भुङ्क्ष्व, सक्तून् पिब, धानाः खाद इत्येवायमभ्यवहरतीति क्रियासमुच्चये सामान्यवचनस्यानुप्रयोगः ? यावतो धातोर्हिस्वादयस्तावान् एवानुप्रयोक्तुं युज्यते, प्रत्यासत्तेर्न्याय्यादिति । तस्मात् "**क्रियासमुच्चये सामान्यवचनस्य**" इति वक्तव्यम् ? सत्यम्, भोजनादिक्रिया हि **व्यक्तौ** भिद्यते, तथाहि याऽसौ भोजनक्रिया न सा पानक्रिया खादनक्रिया चेति । **जातौ** तु सर्वत्राभ्यवहारः संभवतीति न दोषः, जातेरिहाभिधानात् 'भुङ्क्ते, पिबति, खादति' इत्यनुप्रयोगमाला नाभिधीयत इति । ननु भ्राष्ट्रमटेत्यादावुदाहरणेऽटनक्रियाया एकत्वात् कथं क्रियासमुच्चयः, यावता भ्राष्ट्रादीनां कारकाणां बहुत्वात् कारकसमुच्चय एवायमिति ? तदयुक्तम् । कारकभेदात् क्रियापि भिद्यत इति क्रियासमुच्चयो न विरुध्यते सर्वत्राटनक्रियासामान्यमस्तीति अटतीत्यनुप्रयोगो न दुष्यतीति ॥४३७।

## [क० च०]

क्रिया० । क्रियायाः समभिहार इति **वृत्तिः** । फलावच्छिन्नक्रियाया अनेकवार-करणं **क्रियासमभिहारः** । भृशार्थो वेति फले जातेऽपि तदनुकूलक्रियाया अतिशयेन करणं **भृशार्थः** । ननु सर्वक्रियाकालेष्विति वचनात् सर्वक्रियाकाले पञ्चम्या मध्य-मैकवचनं भवद् युष्मदि मध्यमः **इत्येकवाक्यतया** यत्र युष्मदर्थस्य कर्तृत्वं तस्यैकत्वं च प्रतीयते । तत्रैव भवितुमर्हति, कथं नामयुष्मदर्थे कर्तरि द्वित्वबहुत्वे च स्यादिति । नैवम्, क्रियासमभिहारे मध्यमैकवचनमिति कृते पञ्चम्याः कालविशेषस्यानिर्देशात् सामान्येषु भूतभविष्यद्वर्तमानकालेषु भविष्यति किं सर्वकालेष्विति वचनेन ? तस्मात् सर्वकालेष्विति वचनान्नाम्नि प्रयुज्यमानेऽपीत्यादीनां बाधाऽवसीयत इति । न च विध्यादिष्वपि क्रियासमभिहारस्य घटनाद् विध्यादिनिवृत्त्यर्थमेव सर्वकाल-ग्रहणमिति वाच्यम्, विध्याद्यर्थे पञ्चम्याः पूर्वेणैव सिद्धे नैतत् सूत्रस्य वैफल्यं स्यादिति । अथैतद् वचनं विध्यादिषु क्रियासमभिहारे पञ्चम्या मध्यमैकवचनं नियमार्थं स्याद् अतः सर्वकालग्रहणं नियमव्यावृत्त्यर्थं चेत् तथापि काल इत्यनेन

नियमव्यावृत्तिसिद्धौ सर्वग्रहणाद् युष्मदि मध्यमः इत्यादीनां बाधः। विधिनियमसंभवे विधिरेवेति न्यायाद् वा, तस्मात् सर्वकालेष्विति वचनं युष्मदि मध्यमः इत्यादि-परिभाषाणां बाधनार्थमिति युक्तम्।

ननु यथा सर्वकालग्रहणसामर्थ्याद् युष्मदि मध्यमः इत्यादीनां बाधा, तथा **"शेषात् कर्तरि परस्मैपदम्"** (३।२।४७) इत्यस्यापि बाधा स्यादिति। न चोद्यं प्रत्ययार्थस्य विशेषाकाङ्क्षायां कर्तृकर्मार्थस्यैवोपस्थितत्वेनान्वयात् प्रथमोपस्थितत्वेन पूर्वासामेव परिभाषाणां सर्वकालग्रहणेन बाधौचित्याच्च, तथा च **'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते न परान्'** (व्या० परि० १०) इति। ननु तथापि द्विवचनबहु-वचनयोः कथं स्यात् तयोः केनापि सूत्रेणानभिहितत्वात्? सत्यम्। **"सम्प्रति वर्तमाना"** (३।१।११) इत्यादिविधिवाक्येषु द्वयोर्द्विवचनं बहुषु बहुवचनम् इत्यन्वर्थपुरस्कारेण द्विवचनबहुवचनयोर्लब्धत्वात् पूर्वत्वमस्त्येवेत्यदोषः। **आभीक्ष्ण्ये** द्विर्वचनमिति **पञ्जी**। ननु क्रियासमभिहारे हिस्वयोर्विधानात् क्रियासमभिहाररूपोऽ-र्थस्ताभ्यामेवाभिहित इति कथं तद्व्यञ्जकं द्विर्वचनं स्यात्। यथा 'लोलूयते' इत्यादौ समभिहारार्थविहितेन यशब्देन तदर्थस्योक्तार्थत्वाद् द्विर्वचनं न भवतीति नैवम्, **"शेषात् कर्तरि परस्मैपदम्, आत्मनेपदानि भावकर्मणोः"** (३।२।४७, ४०) इत्यनेन हि द्वयोः कर्तृकर्मविहितत्वेन क्रियासमभिहारार्थमभिधातुमशक्यत्वात्। तस्मात् **समभिहार** इति विषयसप्तमीत्वात् समभिहारार्थस्य केनाप्यनभिहितत्वात् तदभिव्यक्तये द्विर्वचनं युज्यत एव यशब्दस्य क्रियासमभिहार एव विहितत्वात्। स्वयमेव तदभिव्यक्तावसमर्थत्वात् तद्वाचकं द्विर्वचनं न स्यात्। यद्येवम् 'पुनः पुनः पचति, भृशं ज्वलति, लोलूयते' इत्यादौ पुनःशब्दादिना क्रियासमभिहारस्योक्तत्वेन क्रियाया विषयीभूतत्वादनेन सूत्रेण कारकान्तरेणेत्यर्थ इति **हेमकराशयः**। **सुखार्थ**मेवेदमिति **वृत्तिः**। सूत्रमिदं **सुखार्थमेव**। यदि सुखार्थं न स्यात् तदैतत् सूत्रं व्यर्थं स्यात्। यद् यस्मादेवमसौ त्वरावान् अन्यानपि क्रियासु प्रेरयन् क्रियां करोतीति विवक्षया सिध्यतीति भावः।

यद् वा **सुखार्थं** यद् यस्मादन्यथा प्रकारेण सिध्यतीति प्रकारमेव विवृणोति एवमित्यादि **पञ्जी**। **"क्रियासमभिहारे मध्यमैकवचनं वा तध्वमोः"** (अ० ३।४।२) इति **पाणिनिः**। तस्येयं प्रक्रिया– वर्तमानादीनां सर्वासां विभक्तीनां स्थाने पञ्चमीं विधाय तस्याः सर्वस्याः स्थाने नित्यं हिस्वादेशः। अत्र तध्वमोस्तु स्थाने विभाषया भवत इति ततश्च तध्वमोरिति। अपि तु सर्वविभक्तीनां स्थाने विहितत्वाद् विशेषप्रतिपत्त्यर्थं वर्तमानादीनां मध्यमपुरुषस्य बहुवचनेनानुप्रयोगः कर्तव्य एवास्य

तध्वमोरिति क्रियासमभिहारे विधानाभावात् क्रियाकालप्रतीतिविशेषप्रतिपत्तिकरोऽनुप्रयोगो वा कथं स्यादित्याह – उपलक्षणमिदमिति । विवक्षयेत्यर्थ इति सुखार्थप्रकारोक्तयुक्तिः इत्यर्थः । पक्षे पूर्ववदिति पूर्वोक्त – 'लुनीहि लुनीहि, अधीष्व अधीष्व' इतिवदित्यर्थः । क्रियासमुच्चये विवक्षायां विभाषेत्यर्थ इति विवक्षा चैतादृशी आदौ अटत्यादिपदं निष्पाद्य पचतिक्रियासमुच्चयविषये सर्वकालाद्यर्थप्रतीतौ लक्षणा, यदा तु पूर्वम् अटत्यादिविवक्षा नास्ति, किन्तु वर्तमानविवक्षैव तदा वर्तमानादयः सिद्धा एवेति, किं क्रियासमुच्चयेऽन्यतरस्याम् इति वचनेन इत्येत-देवाह – तेनेत्यादि । पक्ष इति द्वयोर्विकल्पपक्षे वर्तमानामुदाहरति । भ्राष्ट्रमटेत्यादि । ननु भ्राष्ट्रमटेत्यादीनाम् अटति, अटतः, अटन्ति इत्याद्यनुप्रयोगः क्रियते सर्वक्रियाकाले वर्तमानादेरविहितत्वात् । नैवम्, परसूत्रार्थापरिज्ञानात् । **परो** हि क्रियासमुच्चयेऽन्यतरस्याम् इत्यत्र पूर्वतो विकल्पार्थानुवृत्तौ यदन्यतरस्यामिति वचनं तद् व्यवस्थितविभाषार्थमिति, तेन **क्रियासमुच्चये** विभक्तीनाम् परस्मैपदात्मनेपदसम्बन्धप्रथमैकवचनं विधीयते, पक्षे तासां स्थाने पञ्चमी च विधीयते, पञ्चम्याश्च स्थाने हिस्वौ भवतः इति तद्ध्वमोः स्थाने तौ विभाषयेत्याचष्टे । **अस्मन्मते** तु स्वकीयविषये एव वर्तमानादेराद्यवचनान्तम् अटतीत्यादिपदं निष्पाद्य पश्चात् क्रियासमुच्चयविषये तत्पदलक्षणया द्विवचनाद्यर्थप्रतीतिः । तथा च सति भ्राष्ट्रमटेत्यत्रापि विशेषाभिव्यक्तयेऽनुप्रयोगो युक्तः इति । पक्षे हिप्रत्यय एवेति तकारस्य विकल्पपक्ष इत्यर्थः । पक्षे प्रत्यय एवेति ध्वम् – इत्यस्य विकल्पपक्ष इत्यर्थः । एवमनयोरपि पक्ष इति तध्वमोर्विकल्पपक्ष इत्यर्थः । (छन्दोऽधीष्व इत्यादौ उदाहृतप्रत्ययविकल्पपक्षस्यानुकृतत्वात् । ननु अन्तरभूतयोस्तध्वमोरिति युक्तम्, इङ्धातोरात्मनेपदित्वेन तप्रत्ययस्याभावात्) ।

ननु ध्वम् – इत्यस्य विकल्पपक्षे सर्ववचनार्थेषु ते – इत्याद्यवचनस्य कथम् अधीते, अधीयाते, अधीयते इत्यनुप्रयोगः, यावता ध्वम् इत्यस्य त – इत्यस्य च ध्वेस्थाने क्रियमाणत्वाद् ध्वम्प्रत्यये नैवानुप्रयोगो **भवितुमर्हति** ? सत्यम्, स्वप्रत्ययस्य विकल्पपक्षे एवानुप्रयोगः बोद्धव्यः । स तु ध्वमित्यस्य विकल्पपक्षे । यत्त्वेवमनयोरपि पक्ष इत्युक्तम् । त – प्रत्ययस्य पक्षे यदाद्यवचनं तध्वमोर्विषयेऽपि भवतीति **प्रदर्शनार्थमेव तदित्यभिप्रायः । [1]पौनःपुन्यं भृशार्थो वेति वृत्तिः । यद्यपि पदशब्दस्य**

---

1. कुत्रचित् पुस्तके पौनःपुन्यमित्यादि पाठमादायैव कविराजारम्भो दृश्यते अभिप्राय - इत्यन्तः सुविस्तृतः पाठो नास्ति ।

द्विर्वचने भिन्नपदत्वादेकपदनिबन्धनं कार्यं न प्राप्नोति, तथापि **लोकोपचाराद्** यथा द्विर्वचनं यथाभिधानं तथा एकपदनिबन्धनं कार्यमपि **बोध्यम्**। अनयोर्मध्ये पौनःपुन्यस्यैव ग्रहणमिति लक्ष्यते न तु भृशार्थस्य तत्र द्विर्वचनस्योसम्भवात्। अत एव तद्ग्रहणे वाशब्दसम्बन्धेनास्वरसः सूचित इति। अत एव **पञ्जीकृतापि** आभीक्ष्ण्ये द्विर्वचनमित्युक्तम्।

सर्वेति। कालस्यैकत्वात् सर्वत्वमसम्भवम्, किन्तु क्रियाया नानात्वेन तस्यापि नानात्वमुपचर्यत एव, अतः सर्वपदोपादानात् क्रियाशब्द आक्षिप्तः। अत एवाह – सर्वक्रियाकालेष्विति **वृत्तिः**। एवायमिति। अयमनुप्रयोगः कर्तव्य एवेत्यर्थः, अन्यथाऽसाधुत्वापत्तेरर्थानिश्चयापत्तेश्च। ननु लुनातेर्व्यञ्जनादित्वादेकस्वरत्वाच्च यशब्दः कथन्न स्यात् ततो लोलयस्वेत्येतदपि स्यात् ? अत्र **कश्चिद्** द्वौ क्रियासमभिहारे विधीयेते तत्रोक्तार्थत्वाद् यशब्दो न भवतीति प्रतिपद्यते। नैवम्, **टीकावि**रोधात्। तथाहि धातोर्यशब्द इत्यत्र **टीकायां** "ननु लुनातेर्व्यञ्जनादित्वादेकस्वरात् परो यशब्दः प्राप्नोति ? नैवं दोषः, विभाषया यशब्दस्य विधानात्। कथं तर्हि स भवान् लोलूयस्व लोलूयस्वेत्येवायं लोलूयते इति क्रियासमभिहारे पञ्चम्या मध्यमैकवचनं भवति ? सत्यम्, क्रियासमभिहारविशेषे स्वार्थे यशब्दोऽन्तरङ्गः कर्तृकर्मणोश्च हिस्वौ बहिरङ्गाविति पश्चात् प्रवर्तेते। तर्हि कथं पदस्य द्विर्वचनमिति चेद् आभीक्ष्ण्यद्योतनायेति प्रोक्तम्" इति।

**अन्यस्तु** सर्वकालमादाय विशेषसूत्रमिदम्, यशब्दस्तु क्रियासमभिहारमात्रे अतो न यशब्द इत्याचष्टे, तन्न। नहि युगपत् सर्वक्रियाकाल उच्यते किन्तु कदाचित् कश्चित् काल इति। अयमेवानुप्रयोग इति। न तु कारकान्तरेण धात्वन्तरेण वेति एवशब्दार्थः अलुनादिति सकलातीतानुप्रयोगाणामुपलक्षणमिति। एवं लविष्यतीति भविष्यदर्थानुप्रयोगाणामुपलक्षणम्। एवमन्यत्रापि बोध्यम्। **परोऽपि "क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः"** (अ० ३।४।२) इति सूत्रं कृतवान्। **अयमर्थः–** क्रियासमभिहारे वर्तमानाद्धातोः सर्वासां विभक्तीनां विषये लोट् **पञ्चमी** विधीयते, तच्च विधानं यथाक्रमं बोध्यम्। तथाहि तिस्थाने तुर्विधीयते, तस्स्थाने ताम्, अन्तिस्थाने अन्तु। एवं सर्वत्र मध्यमोत्तमाविति ततश्च लोटः स्थाने हिस्वौ विधीयेते। वा च तध्वमोरिति तध्वमोर्विषये विभाषया हिस्वौ भवतः। एतदुक्तं भवति- सर्वासां विभक्तीनां मध्यमपुरुषबहुवचनं तध्वमोर्विषयः। अत एव तध्वमोरनुप्रयोगो मध्यमपुरुषबहुवचनेनैव सर्वत्र ज्ञायते। ततश्च तध्वमोर्विषये विकल्पेन हिस्वौ भवतः इति पराभिसन्धानं **सुखार्थ**मिति। यदिदं **विवक्षा**माश्रित्य सूत्रं

**सुखार्थ**मिति, तत् पुनर्वा च तध्वमोः क्रियासमुच्चयेऽन्यतरस्यामित्यनयोः सूत्रयोर्विषयमपि विवक्षया साधयितुं (भ्रमिकामात्रमिदमिति सिध्यतीति **वृत्तिः**) **पञ्च्याम**नभिसम्बन्ध इति। न विद्यतेऽभिसम्बन्धो यस्य धात्वन्तरानुप्रयोगस्य स तथा न भवितुमर्हति इति **सोपस्कारः**। कारकान्तरेणेति कारकान्तरविहितेन प्रत्ययेनेत्यर्थः। एक इति कारकेणेत्यस्यानन्तरमित्यर्थः। उक्तविपर्ययेणेति **प्रत्यासत्तिन्यायं** विना इत्यर्थः। क्रियासमुच्चयेऽन्यतरस्यामिति। **अयमर्थः–** समुच्चीयमानक्रियावचनाद्धातोः सर्वविभक्तीनां स्थाने विभाषया पञ्चमी विधीयते, तद्विभक्तीनां स्थाने हिस्वौ क्रियेते पञ्चम्यन्तर्गततध्वमोर्विषयाणां स्थाने तु विभाषयेति पराभिसन्धानेन प्रयोगौ दर्शयितव्यौ। कथं **पञ्जीकृता** पञ्चमीविनिर्मुक्तपक्षे भ्राष्ट्रमटतीत्यादयोऽत्र प्रयोगा दर्शिता इति। नहि पक्षे विधीयमानास्त्यादयः सर्वक्रियाकालेषु भवन्ति, अपि तु स्वस्मिन्नेव काल इति। कथं पक्षे तेषामनुप्रयोगं दर्शयति। यथा 'अटति, अटतः, अटन्ति' इत्यादि। एवम् **अग्रिमग्रन्थो**ऽप्यसङ्गतः। तथा च पक्षे छन्दोऽधीते, व्याकरणमधीते, निरुक्तमधीते इत्येवायम्, अधीत इत्याद्युक्तमिति चेत्, न परमताज्ञानात्।

तथाहि **"वा च तध्वमोः"** (अ० ३।४।२) इत्यतो विभाषानुवृत्तौ क्रियासमुच्चयेऽन्यतरस्यामित्यत्र यदन्यतरस्यामिति वचनम्, तद् **व्यवस्थितविभाषार्थम्**। तेन क्रियासमुच्चये सर्वासां विभक्तीनाम् आद्यवचनं द्विवचनाद्यर्थे च पञ्चमीविकल्पपक्षे **पञ्चमी** च भवति पञ्चम्याश्च हिस्वौ भवतः, तध्वमोस्तु विभाषेत्यर्थः इति ग्रन्थो ह्येतत्परतया व्याख्येयः। तथाहि 'भ्राष्ट्रमट' इत्यादिप्रयोगस्य **वृत्ति**दर्शितानुप्रयोगस्य **शेषः** प्रथममुदाहृतः। एवमन्येषामपि प्रयोगो बोध्यः। ततश्च पञ्चमीविकल्पपक्षे कृतस्यातः (?) प्रयोगं दर्शयति – पक्ष इत्यादि। क्रियासमुच्चयत्वात् प्रयोगत्रयं दर्शितम्, अन्यस्यापि पूर्वक्रियाकालविधानादनुप्रयोगमाह – अयमित्यादि। एवमन्यासामपि प्रयोगौ ज्ञेयौ। सम्प्रति सर्वविभक्त्यात्मनेपदस्य स्थाने कृतपञ्चम्यात्मनेपदस्य स्थानेऽन्यक्रियासमुच्चये उदाहरणमाह – छन्द इत्यादि। अस्यानुप्रयोगमाह – अधीते इत्यादि। एवमन्यासामपि बोध्यम्। अस्मिन् पक्षे पञ्चमी विहिता तध्वमोः स्थाने विभाषया हिस्वौ। तध्वमोर्मध्ये तकारस्योदाहरणमाह – भ्राष्ट्रमटेत्यादि। **अस्यार्थ**माह – यूयमित्यादि। कथं थान्तेन तस्यानुप्रयोग इति चेद् यथाक्रमेण त्यादीनां पञ्चम्या आदेशे क्रियमाणे उत्तमपुरुषबहुवचनस्थाने कृतः, तथा च तस्यानुप्रयोगस्तेनैव युक्तः, एवमन्यासामपि मध्यमोत्तमबहुवचनानां तेनैवानुप्रयोगो विधेयः। एतेन **-स्थितिपक्षो** दर्शितः।

इदानीं तकारस्थाने कृतस्य हेरुदाहरणमाह – पक्ष इत्यादि। अस्यानुप्रयोगोऽटत इत्यादिरेव, अन्यथा तदर्थाप्रकाशनं स्यात्। सम्प्रति ध्वमः स्थाने कृतस्य तस्य

विकल्पमाह – तथेत्यादि । अस्यापि पूर्ववद् **व्याख्यानम्** । सम्प्रति यस्मिन् पक्षे पञ्चमी न वर्तते तस्मिन् वर्तमानयोरात्मनेपदस्य प्रथमैकवचनं प्रवर्तते । व्यवस्थितविभाषया तद् दर्शयितुमाह – अनयोरपीत्यादि । तध्वमोः पक्षे इत्यर्थः । यस्मिन् पक्षे तध्वमौ न भवतः ? सत्यम्, **शिष्यसन्देहनिरासार्थ**मिदमुक्तं न तु त्यादयः सर्वक्रियाकालेषु भवन्तीति कृत्वा । अथ किंस्वरूपः सन्देहः इति चेद् उच्यते – हिस्वौ विकल्पेन विधीयेते, अतो हिस्वविनिर्मुक्तपक्षे हिस्वयोर्विषयोऽस्ति न वेति सन्देहः । यद्यस्तिपक्षे सन्दिह्यते तदा सर्वक्रियाकालेऽप्यस्तीति प्रतीयते । अतस्तन्निरासार्थं मठमटतीत्यादि दर्शयति इति चेत् तथाप्यनुप्रयोगो न युक्त इति चेन्नायमनुप्रयोगः किन्तु अटतीत्यादौ अटतीत्यादिकं तस्याटतीत्यादिशब्दस्य स्वस्मिन्नर्थ एवानुप्रयोगो वेति दर्शितम् । एवमनयोरपीति तध्वमोर्विषये विहितयोर्हिस्वयोरपि, तथा तध्वमोरनुप्रयोगे मध्यमपुरुषबहुवचनेन तथैवानुप्रयोग इत्यर्थः । पक्षे छन्दोऽधीते इत्यादि व्याख्यातमिदम् ॥४३७।

**[ समीक्षा ]**

क्रियासमभिहार अर्थ में सभी कालों में 'हि-स्व' तथा 'त - ध्वम्' प्रत्ययों का विधान दोनों व्याकरणों में किया गया है । अन्तर केवल यह है कि कातन्त्रकार ने पञ्चमीविभक्ति के एकवचन का उल्लेख किया है, जिसमें परस्मैपदसंज्ञक 'हि' तथा आत्मनेपदसंज्ञक 'स्व' प्रत्यय का समावेश हो जाता है । 'त - ध्वम्' प्रत्ययों का विधान विवक्षानुसार किया जाता है । पाणिनि ने इनका निर्देश शब्दतः किया है – "क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः" (अ० ३।४।२)। इस प्रकार लाघव–गौरव का आकलन नहीं किया जा सकता ।

**[ विशेष वचन ]**

१. सर्वक्रियाकालेष्विति वचनात् संख्यादिविशेषो न गम्यते इत्यनुप्रयोगः। प्रत्यासत्तेस्तेनैव धातुना कारकेणेति सुखार्थमेवेदम् (दु० वृ०)।

२. न च हिस्वान्तमिदमभिधानादव्यक्तपदार्थकं क्रियामात्रे वर्तते इत्यपि वक्तव्यम्, यस्माद् विवक्षा गरीयसीत्याह - सुखार्थमेवेदमिति (दु० टी०)।

३. एकाऽपि क्रिया साधनस्यानेकत्वात् साधनकृतबहुत्वानां क्रियाणां समुच्चये मध्यमैकवचनं स्वविषये तध्वमौ च स्यातां विभाषयेति (दु० टी०)।

४. फलावच्छिन्नक्रियाया अनेकवारकरणं क्रियासमभिहारः (क० च०)।

**[ रूपसिद्धि ]**

१. **लुनीहि लुनीहि** । लूञ् + ना + ति आदि – हि । प्रकृत सूत्र से वर्तमान

आदि कालों में विहित 'ति' आदि प्रत्ययों के स्थान में 'हि' आदेश (पञ्चमी विभक्ति– मध्यमपुरुष-एकवचन), "ना क्र्यादेः" (३।२।३८) से 'ना' विकरण, "प्वादीनां ह्रस्वः" (३।६।८३) से धातु को ह्रस्व तथा आकार को ईकार।

२. **अधीष्व अधीष्व**। अधि+इङ्+ति आदि प्रत्यय–स्व। प्रकृत सूत्र से सभी कालों में प्राप्त ति-आदि प्रत्ययों के स्थान में स्व आदेश, अन् विकरण का लोप, समानलक्षण दीर्घ तथा सकार को मूर्धन्यादेश।

३. **लुनीत लुनीत**। लू+ना+त। विवक्षानुसार प्रकृत सूत्र द्वारा त-प्रत्यय, ना–विकरण, ह्रस्व तथा आकार को ईकारादेश।

४. **अधीध्वम् अधीध्वम्**। अधि+इ+अन्+ध्वम्। प्रकृत सूत्र द्वारा ध्वम्-प्रत्यय, अन्-विकरण का लोप, समानलक्षण दीर्घ ॥४३७।

## ४३८. मायोगेऽद्यतनी [३।१।२२]

### [सूत्रार्थ]

मा-शब्द के योग में धातु से अद्यतनी विभक्ति का प्रयोग होता है ॥४३८।

### [दु० वृ०]

मा-शब्देन योगे धातोरद्यतनी भवति। मा कार्षीत्। मा भवान् पाक्षीत्। कथं मा भवतु तस्य पापम्, मा करिष्यतीति ? निरनुबन्धग्रहणाद् ङानुबन्धमायोगे न स्यादिति **केचित्**। वर्तमानभविष्यद्विषयाणां बाधकोऽयम् ॥४३८।

### [दु० टी०]

मायोगे०। मा भवत्वित्यादि। इह ङानुबन्ध एव माशब्दो दृष्ट इत्यपप्रयोगः प्रतिपदोक्तग्रहणात् लाक्षणिकस्यानव्ययस्य माशब्दस्य प्रयोगे न भवति– पुत्रो मा पश्यति, पुत्रो मा छिनत्तीति अतिक्रान्ते नास्ति प्रतिषेध इत्याह – वर्तमानेत्यादि ॥४३८।

### [वि० प०]

मायोगे०। मा कार्षीदिति। **"सिचि परस्मै स्वरान्तानाम्"** (३।६।६) इति वृद्धिः। **"सिचः"** (३।६।९०) इतीट्। पचेरस्य च दीर्घः। **"न मामास्मयोगे"** (३।८।२१) इत्यडागमप्रतिषेधः। कथमित्यादि। अयं पुन**रपप्रयोग** इति मन्यते। न ह्यत्र ङानुबन्धमाशब्दो दृश्यते। अनव्ययस्य तु माशब्दस्य योगे न भवति। **लाक्षणिक**त्वात्। यथा पुत्रो मा पश्यतीति। **"त्वा मा तु द्वितीयायाम्"** (२।३।३) इति मादेशः। माशब्दः प्रतिषेधवाची प्रतिषेधश्चातीते न संभवतीत्याह – वर्तमानेत्यादि ॥४३८।

**[ क० च० ]**

मायोगे० । अयं पुनरित्यादि । **पाणिनिमते**ऽपि ङानुबन्ध एव माशब्दस्तद्योग एवायं विधिरिति दर्शनात् । प्रतिषेधश्चातीते न संभवतीति । ननु कथं 'नाहं कलिङ्गं जगाम' इत्यादौ प्रतिषेधो दृश्यते ? सत्यम् । स्वरूपकथनमात्रमिदम्, न तु मुख्यप्रतिषेधः । अतो यत्र माशब्देन मुख्यप्रतिषेधो नोच्यते, तत्र न सूत्रप्रवृत्तिः । **वस्तुतस्तु** प्रतिषेधोऽत्र वारणार्थः, वारणं पुनरनिष्पन्नकार्यं प्रत्येव घटते, न त्वतीते । तथा च "**मास्म मालं च वारणे**' (अ० को० ३।४।११) इति **कोशः** ॥४३८।

**[ समीक्षा ]**

कातन्त्र तथा पाणिनीय दोनों ही व्याकरणों में 'मा' के योग में समान निर्देश उपलब्ध हैं । लोकव्यवहार तथा कृत्रिमता की दृष्टि से कातन्त्रकार जिसे 'अद्यतनी' कहते हैं, उसके लिए पाणिनि ने लुङ् लकार का प्रयोग किया है– "माङि लुङ्" (अ० ३।३।१७५) ।

**[ रूपसिद्धि ]**

१. **मा कार्षीत्** । मा + कृ + सिच् + दि । प्रकृत सूत्र द्वारा मा-शब्द के योग में अद्यतनीसंज्ञक दि - विभक्ति, मा-योग से अडागम का निषेध, सिच् प्रत्यय, वृद्धि, दि-घटित इकार का लोप, सकार को मूर्धन्य षकार तथा दकार को तकारादेश ।

२. मा भवान् **पाक्षीत्** । प्रकृत सूत्र के नियमानुसार अद्यतनीसंज्ञक प्रथम पुरुष–एकवचन दि-प्रत्यय, मा-योग में अडागम का अभाव, सिच् प्रत्यय, वृद्धि, च् को क्, स् को ष् तथा द् को त् आदेश ।

**[ विशेष वचन ]**

१. निरनुबन्धग्रहणाद् ङानुबन्धमायोगे न स्यादिति केचित् । वर्तमानभविष्यद्-विषयाणां बाधकोऽयम् (दु० वृ०) ।

२. इह ङानुबन्ध एव माशब्दो दृष्टः इत्यपप्रयोगः, प्रतिपदोक्तग्रहणात् लाक्षणिकस्यानव्ययस्य माशब्दस्य प्रयोगे न भवति– पुत्रो मा पश्यति, पुत्रो माच्छिनत्तीति (दु० टी०) ।

३. स्वरूपकथनमात्रमिदम्, न तु मुख्यप्रतिषेधः । अतो यत्र माशब्देन मुख्यप्रतिषेधो नोच्यते तत्र न सूत्रप्रवृत्तिः । वस्तुतस्तु प्रतिषेधोऽत्र वारणार्थः । वारणं पुनरनिष्पन्नकार्यं प्रत्येव घटते, न त्वतीते (क० च०) ॥४३८।

## ४३९. मास्मयोगे ह्यस्तनी च [ ३।१।२३ ]

**[ सूत्रार्थ ]**

'मास्म' शब्द के योग में धातु से ह्यस्तनी तथा अद्यतनी विभक्तियाँ होती हैं ।।४३९।

**[ दु० वृ० ]**

मास्मशब्देन योगे धातोर्ह्यस्तनी भवति, चकाराद् अद्यतनी च। मास्म करोत्, मास्म कार्षीत्। व्यस्तेऽपीच्छन्ति **केचित्** – स्म करोन्मा। **पृथग्योगात्** केवलमायोगे न स्यात् ।।४३९।

**[ दु० टी० ]**

मास्म०।'मास्म' इत्यनेन योगो मास्मयोगः, अकृतद्वन्द्वः समुदायोऽङ्गीक्रियते। व्यस्तेऽपीत्यादि। माश्च स्मश्च मास्मौ ताभ्यां योग इति पक्षः। **पृथग्योगात्** केवलमायोगे न स्यादिति। मास्मयोगे धातोरिति संबन्धाद् ह्यस्तन्यद्यतन्योरसम्बन्धाद् यथासंख्यमपि नास्तीति भावः। अथवा मायोगे ह्यस्तन्यद्यतन्यौ स्मेन चेति विदध्यात्, प्रयोगश्च दृश्यते 'कामक्रोधौ स्म मा पुष' इति। **परोऽपि कश्चिदा**चष्टे – स्म उत्तरोऽधिको यस्मान्माशब्दादिति। **भाष्यकारेण** तु न चिन्तितमेतत्। तृतीयानिर्देशेऽतिव्यवधाने प्रतिपत्तुं शक्यत एव, योगग्रहणमिह **स्पष्टार्थम्** ।।४३९।

**[ वि०प० ]**

मास्म०। मास्मशब्दोऽयमकृतद्वन्द्वः समुदायोऽङ्गीक्रियते। 'मास्म' इत्यनेन योगो मास्मयोगः। व्यस्तेऽपीत्यादि। **ते** हि मा च स्म च मास्मौ, ताभ्यां योग इति मन्यन्ते। नन्वत्र पक्षे द्वन्द्वात् परं श्रूयमाणस्य योगशब्दस्य प्रत्येकम् अभिसम्बन्धादेकैकयोगेऽपि कथन्न भवतीत्याह – पृथग्योगादिति। अन्यथा मास्मयोगे ह्यस्तन्यद्यतन्याविति कुर्यात्। न चैवं यथासङ्ख्यप्रसङ्गो ह्यस्तन्यद्यतनीभ्यां सम्बन्धस्याविवक्षितत्वाद् मास्मयोगे धातोरिति संबन्धः। अथवा 'मायोगे ह्यस्तन्यद्यतन्यौ स्मेन च' इति विदध्यात् ।।४३९।

**[ क० च० ]**

मास्म०। **पृथग्योगात्** केवलमायोगे न स्यादिति **वृत्तिः**। अथव केवलमायोगे मा भूत्, केवलस्मयोगे कथन्न स्यात् ? नैवम्, **"स्मेनातीते"** (३।१।१२) इत्यनेन वर्तमानैवास्ति बाधिका, तदयुक्तम्। अतीतकाल एव वर्तमाना बाधिका इति मास्मशब्दसंबन्धिनः स्मशब्दस्य वारणार्थतैव, अतीते तु वारणं न घटते इत्युक्तमेव,

तस्मात् केवलस्मशब्दयोगेऽपि स्यादिति **पूर्वपक्षः** स्थित एव चेद् भ्रान्तोऽसि। माशब्दे स्थिते स्मशब्दस्य तत्सम्बन्धितां वक्तुं शक्यते। केवलस्मशब्दस्त्वतीतवचन एवेति वर्तमानैव तत्र बाधिका। **पञ्जी** – अकृतद्वन्द्व इत्यादि। 'स्ममायोगे' इत्यकरणान्नेह द्वन्द्वः, न हि मास्मशब्दोऽप्यस्तीति **वररुचिः**। अथ **विवक्षा गरीयसी**त्याह – अथवेति। इदं तु **शर्ववर्मणो** मतम्। **अन्येषान्तु मते** प्रयोगोऽपि दृश्यते। यथा 'जुगुप्सत स्मैनमदुष्टभावम्' इत्यादि ॥४३९।

**[ समीक्षा ]**

'मास्म' शब्द के प्रयोग में उभयत्र समानविधि का उल्लेख दृष्ट है। कातन्त्रकार ने अद्यतनी-ह्यस्तनी विभक्तियों का विधान किया है, जबकि पाणिनि ने लुङ् तथा लङ् लकार का – "स्मोत्तरे लङ् च" (अ० ३।३।१७६)।

**[ विशेष वचन ]**

१. पृथग्योगात् केवलमायोगे न स्यात् (दु० वृ०)।

२. भाष्यकारेण तु न चिन्तितमेतत् (दु० टी०)।

३. अतीतकाल एव वर्तमाना बाधिकेति मास्मशब्दसंबन्धिनः स्मशब्दस्य वारणार्थतैव, अतीते तु वारणं न घटते (क० च०)।

४. स्ममायोग इत्यकरणान्नेह द्वन्द्वः। न हि मास्मशब्दोऽप्यस्तीति वररुचिः (क० च०)।

५. अथ विवक्षा गरीयसीत्याह – अथवेति। इदं तु शर्ववर्मणो मतम्। अन्येषान्तु मते **प्रयोगोऽपि** दृश्यते। यथा 'जुगुप्सत स्मैनमदुष्टभावम्' इत्यादि (क० च०)।

**[ रूपसिद्धि ]**

१. **मास्म करोत्**। मास्म + कृ + उ + दि। प्रकृत सूत्र द्वारा 'मास्म' के योग में 'कृ' धातु से ह्यस्तनीसंज्ञक दि-विभक्ति का प्रयोग, उ-विकरण, ऋ तथा उ को गुण एवं दकार को तकारादेश।

२. **मास्म कार्षीत्**। मास्म + कृ + सिच् + दि। प्रकृत सूत्र द्वारा अद्यतनी विभक्ति का प्रयोग, सिच् प्रत्यय, वृद्धि, सकार को षकार तथा दकार को तकारादेश ॥४३९।

# ४४०. वर्तमाना [३।१।२४]

**[सूत्रार्थ]**

'ति-तस्-अन्ति — ए-वहे-महे' इन १८ प्रत्ययों की 'वर्तमाना' संज्ञा होती है ॥४४०।

**[दु० वृ०]**

'ति-तस्-अन्ति-सि-थस्-थ-मि-वस्-मस्-ते-आते-अन्ते-से-आथे-ध्वे-ए-वहे-महे' इमानि वचनानि वर्तमानासंज्ञकानि भवन्ति । वर्तमानाप्रदेशाः– **"सम्प्रति वर्तमाना"** (३।१।११) इत्येवमादयः ॥४४०।

**[वि० प०]**

वर्तमाना । सञ्ज्ञिसामानाधिकरण्येऽपि वर्तमानेतिसंज्ञानिर्देशस्यैकत्वादेकवचनम्, सामान्याश्रयत्वात् । सञ्ज्ञिनां बहूनां पश्चात् सम्बन्धः । अथवा ति वर्तमाना, तस् वर्तमाना, अन्ति वर्तमाना इत्यादि प्रत्येकं सम्बन्धो लुप्तप्रथमाबहुवचनो वा निर्देशः । तीत्यारभ्य महेपर्यन्तं लुप्तजस्कं पदम् । एवमन्यत्रापि ॥४४०।

**[क० च०]**

वर्तमाना । अथ **सामान्याश्रयणं कष्टमित्याह** – अथवेति । अथ प्रत्येकमभिसंबन्धे दुःखं स्यादित्याह – लुप्तेति ॥४४०।

**[समीक्षा]**

कातन्त्रव्याकरण में 'ति-तस्-अन्ति' आदि १८० प्रत्ययों की वर्तमाना आदि १० संज्ञाएँ की गई हैं, परन्तु पाणिनि ने 'तिप्-तस-झि-सिप्-थस्-थ-मिप्-वस्-मस्' इन ९ प्रत्ययों की परस्मैपद तथा 'त-आताम्-झ-थास्-आथाम-ध्वम्-इट्-वहि-महिङ्' इन ९ प्रत्ययों की आत्मनेपद संज्ञा करके 'तिप्' आदि प्रत्ययों का विधान "लस्य" (अ० ३।४।७७) सूत्र के अधिकार में दिखाया है– "लः परस्मैपदम्, तङानावात्मनेपदम्" (अ० १।४।९९, १००)। इसी प्रक्रिया के अन्तर्गत "वर्तमाने लट्, परोक्षे लिट्" (अ० ३।२।१२३, ११५) आदि सूत्रों द्वारा वर्तमान आदि अर्थों के विवक्षित होने पर लट् आदि लकारें विहित हैं।

**[विशेष वचन]**

१. अथवा ति वर्तमाना, तस् वर्तमाना, अन्ति वर्तमाना इत्यादि प्रत्येकं सम्बन्धो लुप्तप्रथमाबहुवचनो वा निर्देशः । तीत्यारभ्य महेपर्यन्तं लुप्तजस्कं पदम् (वि० प०)।

२. अथ सामान्याश्रयणं कष्टमित्याह– अथवेति (क० च०) ।।४४०।

## ४४१. सप्तमी [ ३।१।२५ ]

**[ सूत्रार्थ ]**

'यात्-याताम्-युस्' आदि १८ प्रत्ययों की 'सप्तमी' संज्ञा होती है ।।४४१।

**[ दु० वृ० ]**

'यात्-याताम्-युस्-यास्-यातम्-यात-याम्-याव-याम-ईत-ईयाताम्-ईरन्-ईथास्-ईयाथाम्-ईध्वम्-ईय-ईवहि-ईमहि' इमानि वचनानि सप्तमीसंज्ञकानि भवन्ति । सप्तमी-प्रदेशाः– **"विध्यादिषु सप्तमी च"** (३।१।२०) इत्येवमादयः ।।४४१।

**[ समीक्षा ]**

द्र० – सूत्र सं० ४४० (३।१।२४) । पाणिनीय व्याकरण में सप्तमी के लिए लिङ् लकार का प्रयोग किया गया है– "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" (अ० ३।३।१६१) ।।४४१।

## ४४२. पञ्चमी [ ३।१।२६ ]

**[ सूत्रार्थ ]**

'तु-ताम्-अन्तु' इत्यादि १८ प्रत्ययों की पञ्चमी संज्ञा होती है ।।४४२।

**[ दु० वृ० ]**

'तु-ताम्-अन्तु-हि-तम्-त-आनि-आव-आम-ताम्-आताम्-अन्ताम्-स्व-आथाम्-ध्वम्-ऐ-आवहे-आमहे' इमानि वचनानि पञ्चमीसंज्ञकानि भवन्ति । पञ्चमीप्रदेशाः– **"पञ्चम्यनुमतौ"** (३।१।१८) इत्येवमादयः ।।४४२।

**[ समीक्षा ]**

द्र० – सूत्र सं० ४४० (३।१।२४) । पाणिनि ने एतदर्थ कृत्रिम लोट् लकार का प्रयोग किया है – "लोट् च" (अ० ३।३।१६२) ।।४४२।

## ४४३. ह्यस्तनी [ ३।१।२७ ]

**[ सूत्रार्थ ]**

'दि-ताम-अन्' आदि १८ प्रत्ययों की 'ह्यस्तनी' संज्ञा होती है ।।४४३।

**[ दु० वृ० ]**

'दि-ताम्-अन्-सि-तम्-त-अम्-व-म-त-आताम्-अन्त-थास्-आथाम्-ध्वम्-इ-वहि-

पहि' इमानि वचनानि 'ह्यस्तनी'–संज्ञकानि भवन्ति। ह्यस्तनीप्रदेशाः– **"मास्मयोगे ह्यस्तनी च"** (३।१।२३) इत्येवमादयः ॥४४३।

**[ समीक्षा ]**

द्र०–सूत्र सं० ४४० (३।१।२४)। पाणिनि ने एतदर्थ 'लङ्' लकार का व्यवहार किया है– "अनद्यतने लङ्" (अ० ३।२।१११)॥४४३।

## ४४४. एवमेवाद्यतनी [३।१।२८]

**[ सूत्रार्थ ]**

'दि-ताम्-अन्' इत्यादि १८ प्रत्ययों की 'अद्यतनी' संज्ञा होती है॥४४४।

**[ दु० वृ० ]**

एवमेवाद्यतनीसंज्ञकानि भवन्ति। अद्यतनीप्रदेशाः – "मायोगेऽद्यतनी" (३।१।२२) इत्येवमादयः ॥४४४।

**[ क० च० ]**

एवम्०। ननु कथं पृथग्योगो गुरुकरणं च। ह्यस्तन्यद्यतन्यावित्येव विधीयताम् ? सत्यम्। तदा परस्मैपदात्मनेपदयोर्यथासङ्ख्यमुभयपदसंज्ञा स्यादिति **शङ्कानिरासार्थं** पृथग्योगकरणमिति **कश्चित्। अन्ये** तु युगपद् **उभयसंज्ञानिरासार्थ-मित्याहुः। विचित्रार्थमित्यपरे** ॥४४४।

**[ समीक्षा ]**

द्र० – सूत्रसं० ४४० (३।१।२४)। पाणिनि ने एतदर्थ कृत्रिम (=यादृच्छिक) 'लुङ्' शब्द का प्रयोग किया है –"लुङ्" (अ० ३।२।११०)॥४४०।

## ४४५. परोक्षा [ ३।१।२९ ]

**[ सूत्रार्थ ]**

'अट्-अतुस्-उस्' आदि १८ प्रत्ययों की 'परोक्षा' संज्ञा होती है॥४४५।

**[ दु० वृ० ]**

'अट्-अतुस्-उस्-थल्-अथुस्-अ-अट्-व-म-ए-आते-इरे-से-आथे-ध्वे-ए-वहे-महे' इमानि वचनानि परोक्षासंज्ञकानि भवन्ति। परोक्षाप्रदेशाः– "परोक्षा" (३।१।१३, २९) इत्येवमादयः ॥४४५।

**[समीक्षा]**

द्र०– सूत्रसं० ४४० (३।१।२४)। पाणिनीय व्याकरण में एतदर्थ 'लिट्' लकार का प्रयोग है– "परोक्षे लिट्" (अ० ३।२।११५)॥४४५।

## ४४६. श्वस्तनी [३।१।३०]

**[सूत्रार्थ]**

'ता-तारौ-तारस्' आदि १८ प्रत्ययों की 'श्वस्तनी' संज्ञा होती है॥४४६।

**[दु० वृ०]**

'ता-तारौ–तारस्-तासि-तास्थस्-तास्थ-तास्मि-तास्वस्-तास्मस्-ता-तारौ-तारस्- तासे-तासाथे-ताध्वे-ताहे-तास्वहे-तास्महे' इमानि वचनानि श्वस्तनीसंज्ञकानि भवन्ति। श्वस्तनीप्रदेशा:– **"भविष्यति भविष्यन्त्याशी:श्वस्तन्य:"** (३।१।१५) इत्येवमादय:॥४४६।

**[समीक्षा]**

द्र०– सूत्रसं० ४४० (३।१।२४)। उक्त के लिए पाणिनि ने 'लुट्' लकार का यादृच्छिक प्रयोग किया है– "अनद्यतने लुट्" (अ० ३।३।१५)॥४४६।

## ४४७. आशी: [३।१।३१]

**[सूत्रार्थ]**

'यात्-यास्ताम्-यासुस्' आदि १८ प्रत्ययों की 'आशी:' संज्ञा होती है॥४४७।

**[दु० वृ०]**

"यात्-यास्ताम्-यासुस्-यास्-यास्तम्-यास्त-यासम्-यास्व-यास्म-सीष्ट-सीयास्ताम्-सीरन्-सीष्ठास्-सीयास्थाम्-सीध्वम्-सीय-सीवहि-सीमहि' इमानि वचनानि आशी:-संज्ञकानि भवन्ति। आशी:प्रदेशा:– **"आशिषि च परस्मै"** (३।५।२२) इत्येवमादय:॥४४७।

**[समीक्षा]**

द्र०– सूत्र सं० ४४० (३।१।२४)। पाणिनि ने एतदर्थ आशीर्लिङ् लकार का प्रयोग किया है– "आशिषि लिङ्लोटौ" (अ० ३।३।१७३)॥४४७।

## ४४८. स्यसंहितानि त्यादीनि भविष्यन्ती [३।१।३२]

**[सूत्रार्थ]**

'स्यति-स्यत:-स्यन्ति' आदि १८ प्रत्ययों की 'भविष्यन्ती' संज्ञा होती है॥४४८।

[दु० वृ०]

'स्यति-स्यतस्-स्यन्ति-स्यसि-स्यथस्-स्यथ-स्यामि-स्यावस्-स्यामस्-स्यते-स्येते-स्यन्ते-स्यसे-स्येथे-स्यध्वे-स्ये-स्यावहे-स्यामहे'। **धातोः पराणि स्येन संहितानि त्यादीनि** भविष्यन्तीसंज्ञकानि भवन्ति। भविष्यन्तीप्रदेशाः– **"भविष्यति भविष्यन्त्याशीः-श्वस्तन्यः"** (३।१।१५) इत्येवमादयः ॥४४८।

[क० च०]

स्यसं०। इह **परिगणनं** सर्वविभक्तीनां स्यसंहितत्वनिरासार्थम्। ननु वर्तमानादिवत् संज्ञामुक्त्वा संज्ञिनिर्देशः कथं क्रियते चेत्, उत्तरत्र सूत्रे स्यसंहिता-नीत्यस्यानुवर्तनार्थम्। तदयुक्तम्, तत्रापि संज्ञानिर्देशं कृत्वा संज्ञिनो निर्दिश्यन्ताम्। एवं च सति 'स्यामि-स्यावस्' इत्यादौ स्यन्ति-स्यदित्यादौ च दीर्घस्याकारादिविधेश्च **विप्रतिपत्तिः** परिहृता भवति ? सत्यम्। **विचित्रार्थमिति**। **केचित्तु** अधातोरपि दीर्घविधिर-सन्ध्यक्षरविधिश्च ज्ञापितोऽनेनेत्याहुः। तन्न, अन्यत्र प्रयोजनाभावात्। अत्र तु पाठ-सामर्थ्यादपि दीर्घादिकं सिद्धमिति। न च विभक्त्यन्तरस्य संहिततावारणार्थः पाठ इति वाच्यम्, 'त्यादीनि' इति पदस्याकृतत्वेनैव **तन्निरस्तम्** ॥४४८।

[समीक्षा]

द्र०– सूत्र सं० ४४० (३।१।२४)। पाणिनीय व्याकरण में एतदर्थ 'लुट्' लकार का यादृच्छिक प्रयोग किया गया है– "लृट् शेषे च" (अ० ३।३।१३) ॥४४८।

## ४४९. द्यादीनि क्रियातिपत्तिः [३।१।३३]

[सूत्रार्थ]

'स्यत्-स्यताम्-स्यन्' आदि १८ प्रत्ययों की 'क्रियातिपत्ति' संज्ञा होती है ॥४४९।

[दु० वृ०]

'स्यत्-स्यताम्-स्यन्-स्यस्-स्यतम्-स्यत-स्यम्-स्याव-स्याम-स्यत-स्येताम्-स्यन्त-स्यथास्-स्येथाम्-स्यध्वम्-स्ये-स्यावहि-स्यामहि' धातोः पराणि स्येन संहितानि द्यादीनि क्रियातिपत्तिसंज्ञकानि भवन्ति। क्रियातिपत्तिप्रदेशाः– **"अड् धात्वादिर्ह्यस्तन्यद्यतनी-क्रियातिपत्तिषु"** (३।८।१६) इत्येवमादयः। एताः **पूर्वाचार्यप्रसिद्धा अन्वर्था** इह ज्ञाप्यन्ते ॥४४९।

[वि० प०]

द्यादीनि० । 'एताः' इत्यादि । **अन्वर्था** इति बाहुल्याद् उक्तम् । सप्तमीपञ्चम्यौ निरन्वये अपि संज्ञे ।।४४९।

[**समीक्षा**]

द्र० – सूत्र सं० ४४० (३।१।२४)। पाणिनि ने एतदर्थ 'लृङ्' लकार का प्रयोग किया है – "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" (अ० ३।३।१३९) ।।४४९।

## ४५०. षडाद्याः सार्वधातुकम् [३।१।३४]

[**सूत्रार्थ**]

परवर्ती छह विभक्तियों से पूर्ववर्ती अर्थात् प्रारम्भिक चार 'वर्तमाना-सप्तमी-पञ्चमी-ह्यस्तनी' विभक्तियों की सार्वधातुक संज्ञा होती है ।।४५०।

[दु० वृ०]

षण्णां विभक्तीनामाद्या वर्तमाना - सप्तमी-पञ्चमी-ह्यस्तन्यश्चतस्रो विभक्तयः सार्वधातुकसंज्ञा भवन्ति ।सार्वधातुकप्रदेशाः – "**जुहोत्यादीनां सार्वधातुके**" (३।३।८) इत्येवमादयः ।।४५०।

**।। इति दौर्गसिंह्यां वृत्तावाख्याते तृतीयाध्याये प्रथमः परस्मैपदपादः समाप्तः, शिवमस्तु ।।**

●

[दु० टी०]

षड्० । षड् आद्या यासामिति न बहुव्रीहिर्गुणप्रतिषेधेऽनुत्तमे पञ्चम्या इति वचनात् । सार्वधातुकं नपुंसकं **लोकतः** सिद्धम् । **पूर्वाचार्यसंज्ञा निरन्वयेयम्** ।।४५०।

**।। इति श्रीमद्दुर्गसिंहकृतायामाख्याततृतीयाध्यायटीकायां प्रथमः परस्मैपदपादः समाप्तः ।।**

●

[वि० प०]

षडाद्याः । षड् आद्या यासामिति यद्ययं बहुव्रीहिः स्यात् तदोत्तरासां चतसृणामेव विभक्तीनां संज्ञेति "**सर्वेषाम् आत्मने**" (३।५।१८) इत्यादौ गुण-प्रतिषेधसूत्रे अनुत्तमे पञ्चम्या इति प्रतिषेधो व्यर्थः स्यात् । न च षडिति भिन्नं पदम्, षट् च ता आद्याश्चेति कर्मधारयो वा तदा परोक्षाया अपि सार्वधातुकत्वमस्तीति सार्वधातुके गुणनिषेधस्य सिद्धत्वात् परोक्षायां च सर्वत्रात्मने इति च व्यर्थमेव स्यात् ।

अतः षष्ठीलक्षणस्तत्पुरुषः एवायमित्यालोच्याह – षण्णामिति। सार्वधातुकमिति **पूर्वाचार्यप्रसिद्धेयं संज्ञा** निरन्वया स्वभावतो नपुंसकलिङ्गमिति ॥४५०।

**॥इति श्रीमत्त्रिलोचनदासकृतायां कातन्त्रवृत्तिपञ्जिकायामाख्याते तृतीयाध्याये प्रथमः परस्मैपदपादः समाप्तः॥**

●

## [क० च०]

षडाद्या:०। षट् च ता आद्याश्चेति। ननु "दिक्संख्ये संज्ञायाम्" (अ० २।१।५०) इति नियमात् कथमत्रासंज्ञायां कर्मधारयः स्यात्? सत्यम्, **"पूर्वकाले क्त्वा"** इति ज्ञापकादनित्योऽयं नियमः। यद् वा कर्मधारयस्याग्रहणे इदमपि कारणान्तरमिति। **"परोक्षायां च"** (३।५।२०) इत्यस्य वैयर्थ्यं तु द्वित्वबहुत्वयोरित्यनेनैव सिद्धत्वादिति ॥४५०।

**॥इति विद्याभूषणाचार्यविरचितायां व्याख्यायामाख्याते तृतीयाध्याये प्रथमः परस्मैपदपादः समाप्तः॥**

●

## [समीक्षा]

सार्वधातुक संज्ञा दोनों ही व्याकरणों में की गई है। कातन्त्र में चार विभक्तियों की यह संज्ञा है, जबकि पाणिनीय व्याकरण में सामान्यतया सभी तिङ् (१८ प्रत्यय=तिप् से लेकर महिङ् तक) तथा शप् आदि शित् प्रत्ययों की सार्वधातुक संज्ञा का विधान किया गया है – "तिङ्शित् सार्वधातुकम्" (अ० ३।४।११३)। 'स्य-तास्-सिच्' प्रत्ययों के 'तिङ्-शित्' न होने से 'लृट्-लृङ्-लुट्-लुङ्' लकारें सार्वधातुकसंज्ञक नहीं रह जातीं तथा तिप् आदि के णल् आदि आदेश हो जाने के कारण लिट् लकार का भी सार्वधातुकत्व नहीं रह पाता। इस प्रकार **कातन्त्रकार का निर्देश स्पष्टार्थक तथा सरलताबोधक है। [1]काशिकावृत्ति तथा [2]न्यास**

१. आपिशलास्तु 'तुरुस्तुशम्यमः सार्वधातुकासुच्छन्दसि' इति पठन्ति (का० वृ० ७।३।९५)।

२. स्त्रीलिङ्गः सार्वधातुकाशब्दः आपिशालिना सञ्ज्ञात्वेन प्रणीतः (का० वृ० – न्यासः ७।३।९५)।

के अनुसार आचार्य आपिशलि ने इसका आकारान्त (सार्वधातुका) प्रयोग किया है, लेकिन **सुपद्मव्याकरण** के टीकाकार मकरन्द के अनुसार किसी पूर्वाचार्य द्वारा इसके नपुंसकलिङ्ग में होने की संभावना की गई है– "सार्वधातुकमिति गुरुसंज्ञा पूर्वाचार्यप्रसिद्धेह निबद्धा, अतः स्वभावतो नपुंसकलिङ्गमपि" (सु० व्या०-टी० । द्र०, टे० ट० टे० सं० ग्रा०, भाग १, पृ० ४७)।

**[ विशेष वचन ]**

१. सार्वधातुकं नपुंसकं लोकतः सिद्धम् । पूर्वाचार्यसंज्ञा निरन्वयेयम् (दु० टी०; वि० प०)।

**पूर्वाचार्यों द्वारा इस संज्ञा का व्यवहार –**

**काशकृत्स्नधातुव्याख्यान –** नामिनो गुणः सार्वधातुकार्धधातुकयोः, दानादीनां सन् सार्वधातुके, रुदादेरिः सार्वधातुके (सू० २२, ६५, ७०)।

**अथर्ववेदप्रातिशाख्य –** इति सार्वधातुके (२।४।२)।

अर्वाचीन व्याकरणों में एतदर्थ 'ग' आदि संज्ञाओं का व्यवहार किया गया है। जैसे –

**जैनेन्द्रव्याकरण –** मिङ् शिद् गः (२।४।९५)।

**हैमशब्दानुशासन –** एताः शितः (३।३।१०)।

**मुग्धबोधव्याकरण –** पञ्च रः शिच्च (सू० ५३०) ॥४५०।

**॥ इति कातन्त्रव्याकरणे तृतीये आख्याताध्याये सम्पादकीयः समीक्षात्मकः परस्मैपदाख्यः प्रथमः पादः समाप्तः ॥**



॥श्रीः॥

# अथ तृतीये आख्याताध्याये द्वितीयः प्रत्ययपादः

## ४५१. प्रत्ययः परः [३।२।१]

**[सूत्रार्थ]**

प्रथमतया विधीयमान प्रकृति से पर में प्रत्यय होता है ॥४५१।

**[दु० वृ०]**

प्रतीयते येनार्थः स **प्रत्ययः** इति **रूढिः**। प्रत्ययात् प्रथमं क्रियते इति **प्रकृतिः**। प्रकृतेः परः प्रत्ययो वेदितव्यः। वृक्षः, अश्वकः, यावकः, खट्वा, औपगवः, कारकः, जुगुप्सते, गोपायति, कर्ता, कर्तव्यः। अनियमे प्राप्ते परिभाषेयम्, विध्यङ्ग-शेषभूता वा ॥४५१।

**[दु० टी०]**

प्रत्ययः। प्रतीयते इत्यादि। प्रतिपूर्वादिणः पुंसि संज्ञायां घः, प्रत्ययतीति वा अच् प्रतययः सिद्धः। ननु प्रकृत्युपपदोपाधिविकारागमैरप्यर्थः प्रतीयते, तेषां प्रत्ययत्वात् परत्वं स्यात्, प्रकृत्युपपदयोः पक्षे वचनात्। **उपाधिर्द्विविधः**– अभिधेयतया, अनभिधेयतया च। "**हरतेर्दृतिनाथयोः पशौ**" (४।३।२६) कर्तर्यर्थे कार्यासम्भवात् तद्वाचिनोऽपि मन्यते– दृतिहरिः पशुः, नाथहरिः पशुः। "**समुदोरजः पशुषु**" (४।५।५१) इति पशुविषये समजः पशूनाम्, उदजः पशूना-मिति। नैवम्, प्रत्यय इति साध्यविभक्त्या निर्दिष्टः साध्येनैव सम्बध्यते न तु साधनेन। विकारागमयोश्च नियतदेशविषयत्वात्, अन्यथा विकारत्वम् आगमत्वं च न स्याद् अवयववर्णानामानर्थक्याद् अनिर्दिष्टार्थानामपि प्रत्ययत्वं सिद्धम्। श्रुतायाः प्रकृतेः स्वार्थस्यापवादकत्वात्, अत एव स्वार्थिका उच्यन्ते। **परिहारगौरवमिदं** दृष्ट्वा **सुखपरिहारमाह** – रूढिरित्यादि।

प्रक्रियतेऽस्यामिति वा **प्रकृतिः**। एवमुक्तं भवति – यथा प्रकृतिसंज्ञा **लोकोपचारात्** तथा प्रत्ययसंज्ञेति। परशब्दो ह्यस्त्यन्यार्थे। यथा परपुत्रः, परभार्येति। अस्ति प्राधान्ये – परेयं ब्राह्मण्यस्मिन् कुटुम्बे इति। अस्ति **इष्टवाची** – परं धाम गतः इति। अस्ति व्यवस्थायाम् – पूर्वः पर इति। इह व्यवस्थावचन एव घटते।

पूर्वापेक्षया परो भवतीत्याह – **प्रकृतेः परः इत्यादि । सा च द्विविधा – लिङ्गं धातुश्चेति ।** क्रमेणोदाहरति । प्रकृतेरवधित्वेऽपि मातुर्वत्सवत् कदाचित् पृष्ठतोऽग्रतः पार्श्वतो वा स्यादित्याह – अनियम इत्यादि । विध्यङ्गशेषभूता वेति वाशब्देन लिङ्गवती समाख्याता । एकत्र गृहीतसम्बन्धा लिङ्गवती प्रदीपवत् सर्वं शास्त्रमभिज्वलयतीति **लाघवोक्तिः** । विध्यङ्गशेषभूता योगे उपतिष्ठत इति **सुखप्रतिपत्त्यर्थं गौरवोक्ति**रिति । **बुद्धिभेदोऽयम्** – प्रत्ययत्वं लिङ्गम्, परत्वं लिङ्गमिति । प्रत्ययग्रहणं किमर्थम्, पर इत्यधिक्रियताम् इति न चोद्यम् अनादिषु दोषात् । किमेतेन पञ्चमीनिर्दिष्टत्वात् परस्य कार्यं भविष्यति, यथा "**युष्मदस्मदोः पदं पदात्**" (२।३।१) इति, नैवम् । सतस्तत्र परस्य कार्यम्, इहासत एव कथं स्वाभाविकं परत्वम् । अथ वाचनिकं तत्र परत्वम्, तथापि न दोषः । एतद्धि परस्य कार्यम्, यदासौ परः स्यात् । यत्रापि षष्ठी तत्रापि पञ्चम्याख्यायते । किन्तु **बुद्ध्याध्यासगौरवं** स्यात् ॥४५१।

## [वि० प०]

प्रत्ययः । प्रतीयत इत्यादि । प्रतिपूर्वादिणः पुंसि संज्ञायां घः । ननु यदि प्रतीयते येनार्थः स **प्रत्यय** इति तर्हि प्रकृत्युपपदोपाधिविकारागमैरप्यर्थः प्रतीयते इति तेषामपि प्रत्ययत्वं स्यात् । तथा च सति परत्वमिति । तत्र यद्यपि गुपादीनां सन्नादीनां च परस्परापेक्षया युगपत् परत्वं न संभवति तथापि पर्यायेण कदाचिद् गुपादयः परे कदाचित् सन्नादयः परे इति । **उपाधिर्द्विविधः**– अभिधेयोऽनभिधेयश्च । तत्राभिधेयो यथा – "**हरतेर्दृतिनाथयोः पशौ**" (४।३।२६) इति । दृतिहरिः पशुः, नाथहरिः पशुः । पशुर्दृतिहरिरिति न स्यात् । अनभिधेयो यथा – "**समुदोरजः पशुषु**" (४।५।५१) इति । समजः पशूनाम्, उदजः पशूनाम् । पशूनामुदज इति न स्यात् । नैतदेवम्, प्रत्यय इति साध्यविभक्त्यन्तं पदम्, अन्येन साध्यविभक्त्यन्तेन पदेनैव सम्बध्यते सादृश्यात् । प्रकृत्युपपदोपाधयस्तु सिद्धत्वात् पञ्चम्यादिकतया सिद्धविभक्त्यैव निर्दिश्यन्ते इति न तैः सार्द्धं संबन्धो भवितुमर्हतीति । अप्रधानत्वाच्च प्रकृत्यादीनामयुक्तः संबन्ध इति । **लोके** हि प्रधाने कार्यसम्प्रत्ययो दृश्यते । यथा बहुषु गच्छत्सु कोऽयं यातीति कश्चित् केनचित् पृष्टः सः आचष्टे राजेति । तत्र यः पृच्छति यश्चाचष्टे तयोरुभयोरपि प्रधाने राजन्येव कार्यसम्प्रत्ययो नाप्रधानेऽमात्यादौ । तद्वद् इहापि प्रधाने सन्नादौ कार्यसम्प्रत्ययः । प्राधान्यं पुनस्तस्य साध्यत्वादेव । प्रकृत्यादीनां तु सिद्धानां तदर्थव्यापारादप्राधान्यमिति । विकारागमयोस्तु यद्यपि साध्यविभक्तिनिर्दिष्टत्वं प्रधानत्वं च, तथापि न प्रत्ययत्वम् । न हि ताभ्यामर्थः प्रतीयते तस्य समुदायवाच्यत्वात् । अथ समुदायस्यार्थ-

वत्त्वादवयवानामपि तथोच्यते, तथापि न परत्वं तयोर्नियतदेशविषयत्वात्। तस्य चेति तकारस्य स्थाने सकारो विकारः, आगमश्च धुटः पूर्वो नुर्विधीयमानः कथमिह परो भवितुमर्हतीति स्थितम्।

अयं तु परिहारो **मन्दधियां** दुःखावह इति **सुखपरिहार**माह– **रूढिरिति**। कथमिवेत्याह– यथेति। न खलु प्रकृतिसंज्ञां प्रति परेणापि सूत्रमुक्तमिति। वृक्ष इत्यादि। व्रश्चेः सक्। कस्यायमश्वः कुत्सितो वा अश्वः अश्वकः, अज्ञाताद्यर्थे कप्रत्ययः। याव एव यावकः, तत्र बहुलत्वाद् यावादिभ्यः स्वार्थे कः। यद्येवं कथमस्य परत्वम्, न ह्यनेनार्थः प्रतीयते, येन प्रत्ययत्वे सति तदुपपद्यते इति ? सत्यम्। **अनिर्दिष्टार्थाः प्रत्यया** अपि प्रकृतेः स्वार्थमनुवादकतया प्रतिपादयन्तीति युक्तं तेषामपि प्रत्ययत्वम्। अत एव स्वार्थे विधीयमानत्वात् स्वार्थिका उच्यन्ते। खट्वेति। खटेरौणादिकत्वात् क्वन्प्रत्ययान्तात् **"स्त्रियामादा"** (२।४।४९) इति आप्रत्यये उदाहरणम्। औपगव इति। उपगोरपत्यमिति **"वाऽणपत्ये"** (२।६।१) इत्यण्, **"उवर्णस्त्वोत्वमापाद्यः"** (२।६।४६) इत्योकारः। कार्याववावावित्यादिनावादेशः। एवमन्यत्रापि। अनियम इत्यादि। प्रकृतेर्भवन् प्रत्ययो मातुर्वत्सवत् कदाचिदग्रतः पार्श्वतः पृष्ठतो वा स्यात्। अतः पर एवेति नियमार्थं परिभाषेयमिति। विध्यङ्गशेषभूता वेति वाशब्देन लिङ्गवती च कथ्यते। सा पुनरेकप्रदेशे गृहीतसम्बन्धा सकलं शास्त्रमभिज्वलयतीति, लिङ्गं पुनरस्याः प्रत्ययत्वमेवेति, तेन हि परत्वं लिङ्ग्यते। विध्यङ्गशेषभूता प्रत्येकं विधिषूपतिष्ठते इत्यत्रापि लिङ्गमस्त्येव प्रतियोगोपस्थानमात्रकृतं भेदमङ्गीकृत्य विध्यङ्गशेषभूता इत्युच्यते।

ननु किमर्थमिदमुच्यते– **"गुपूतिजूकिद्भ्यः सन्"** (३।२।२) इत्यादिष्वर्थान्तरस्याघटनाद् दिग्योगलक्षणैव पञ्चमीति। ततश्च परशब्दस्याध्याहारोऽर्थाद् भविष्यतीति। तदयुक्तम्, पूर्वशब्दस्याध्याहारस्यापि सम्भवात् सोऽपि दिक्शब्द एवेति, तर्हि **'पञ्चम्या निर्दिष्टे परस्य'** (का० परि० २२) इति भविष्यति, यत्रापि षष्ठी तत्रापि पञ्चम्येव निर्दिश्यताम्। तदप्युक्तम्, यत्र हि साक्षाद् विद्यमानस्यैव परस्य किञ्चित् कार्यं क्रियते तत्रासौ परिभाषोपतिष्ठते। यथा **"युष्मदस्मदोः पदं पदात्"** (२।३।१) इति अत्र तु सन्नादीनामसतामेव परत्वं विधीयते इति कर्तव्यमेवेदम्॥४५१।

**[क० च०]**

प्रत्ययः। ननु **पाणिनिना** प्रत्ययसंज्ञा कृता, **अस्मन्मते** किं स्याद् इत्याह– प्रतीयते इति **वृत्तिः**। अनियम इत्यादि **वृत्तिः**। ननु संज्ञासूत्रमिदं कथन्न स्यात्,

अथैवं सति किं दूषणमिति चेत्, यः परः शास्त्रविहितः स प्रत्ययसंज्ञो भवतीति सूत्रार्थे सति सन्नादीनां परत्वविधानं प्रति सूत्राभावात् कदाचित् सन्नादयः पूर्वतः कदाचित् परतः स्युः। यदा पुनः परतः स्युस्तदानीं प्रत्ययसंज्ञा स्यात्। अथ प्रत्ययसंज्ञायाः किं प्रयोजनं चेत् **"इवर्णावर्णयोर्लोपः"** (२।६।४४) इत्यादौ 'चकास्कास' इत्यादौ चास्त्येव ? सत्यम्, यदि प्रत्यय इति संज्ञा स्यात् तदा **'कार्यी निमित्तं कार्यम्'** (का० परि० ५६) इति न्यायात् परनिपात एव तस्य कृतः स्यात् तर्हि पर इति संज्ञा स्यात्। प्रयोजनं च **"समानः सवर्णे"** (१।२।१) इत्यत्र **"पूर्वपरयोः"** (१।१।२०) इत्यत्र च प्रतिपत्तव्यम्। नैवम्, संज्ञायां सत्यां परशब्दस्य स्वरूपपरत्वेन लक्षणाप्रसङ्गः स्यात्। नहि **'मुख्यार्थसम्भवे लक्षणा'** इति चेत् तर्हि कुत्रापि लक्षणया संज्ञा न स्यात्। नैवम्, **"तत्र चतुर्दश०"** (१।१।२) इत्यादौ वचनस्यानन्यगत्या संज्ञैवेति। **वस्तुतस्तु** संज्ञाप्रकरणेऽपठितत्वान्नेदं संज्ञासूत्रमिति। अथ तथापि कथमधिकारो न स्यात् तर्हि किं दूषणं चेद् अस्योत्तरोत्तरसूत्रसम्बन्धेन सन्नादयः परा भवन्ति, ते च प्रत्ययसंज्ञकाः स्युरित्यर्थे सति तद्धितानां प्रत्ययत्वं न स्यादिति ? सत्यम्। **"इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च"** (२।६।४४) इति ज्ञापकान्न दोषः। तस्मान्मुख्यानुरोधाद् विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्वाच्च न दोषः, तस्मात् परिभाषैव। **रूढिदृष्टान्त**माह – यथेति। प्रत्ययादिति प्रत्ययोत्पत्तेः प्रथममित्यर्थः। प्रशब्दोऽत्र प्रथमार्थः। प्रकृतिरिति कर्मणि क्तिप्रत्ययः। एतेन प्रकृतिसंज्ञायामपि **रूढि**रादृतेति भावः। अत एव नापीतरेतराश्रयदोषः। वृक्ष इति। ननु **"तस्मात् परा विभक्तयः"** (२।१।२) इत्यस्य विषयोऽयं कथमत्र दर्शितः ? सत्यम्, तत्र तस्माद्ग्रहणं **सुखार्थमेवे**त्युक्तम्। परग्रहणमपि लिङ्गात् परं स्यादीनामवश्यम्भावप्रतिपत्त्यर्थमेवेति तत्र व्याख्यातम्, तच्च तदैव सम्भवति। यद्यनेन सूत्रेण स्यादीनामपि परत्वं परिभाष्यते इति न दोषः। **वृत्तौ** व्रश्चेः सक् इत्यस्य वा विषयो दर्शित इति।

**पञ्जी** – संज्ञायामिति। ननु प्राचीनसंज्ञायामेव घप्रत्ययो युक्तः। इदानीन्तनसंज्ञायां कथं घः प्रवर्तताम् ? नैवम्, शब्दानां प्रवाहनित्यत्वादस्यापि प्राचीनत्वम्, तर्हि कथं सर्वनामसंज्ञायां **"पूर्वपदस्थेभ्यः संज्ञायाम्"** (कात० परि०-ण० २) इति णत्वन्न प्रवर्तते चेत् तत्रापिशब्दस्य बाहुल्यात् **क्षुभ्नादिपाठाद्** वा ज्ञापकादिति वा, न च स्वरान्तत्वादल् भवितुमर्हतीति ? नैवम्, करणे युटा बाधितत्वात्। न च 'वासरूपन्यायात्' भविष्यति, क्तयुट्तुमुखलर्थेषु तन्निषेधात्। अत एव तदपवादो घ इति। प्रकृतिरित्यादि। प्रकृतिर्व्याख्यातैव। उपपदस्य **"सप्तम्युक्तमुपपदम्"** (४।२।२) इति वक्ष्यति। विशेष्यनिष्पत्तिहेतुविशेषणमुपाधिः। स चावश्यं प्रयुज्यते

इति **कुलचन्द्रः**। योग्यं चैतद् उप समीपे व्युत्पाद्य पदस्य समीपे आधीयते अर्प्यते इति **उपाधिः**। एतेन **गीतगोविन्दे– 'नाथ हरे! सीदति राधा'** (६।१) इत्यत्र पशुशब्दप्रयोगं विनापि नाथहरिशब्दस्य पश्वर्थः केनचित् क्रियते इति। तन्नातिपेशलमिति। **वस्तुतस्तु** प्रयोग्वाच्यत्वे सति प्रयोगनियामको धर्म **उपाधिः**। एतेषां प्रत्ययत्वे सति दूषणमाह–तथा चेति। तत्र प्रकृतीनां प्रत्ययत्वे सति यद् **दूषणं** तदेवाह–तत्रेत्यादि।

ननु अनियमे प्राप्ते परिभाषेयं विधीयते। परिभाषास्थितावपि यद्यनियमो भविष्यति, तदा परिभाषया किं कृतम्, उत्तरत्र सूत्रेषूभयदिग्योगलक्षणायाः पञ्चम्या अङ्गीकारादेव नियमस्यैतादृशस्य सिद्धेः ? सत्यम्। उभयदिग्योगलक्षणायाः पञ्चम्या ग्रहणे प्रमाणाभावाद् गौरवाच्च। **न्यासकारस्तु** दोषप्रदर्शनमिदम्, न तु **सुखप्रयोजनं** दर्शितम्, सूत्रप्रयोजनं चानुकरणीभूतगुपादिभ्यः सन्नादीनां पूर्वत्वनिषेधार्थमित्याचष्टे। **वयन्तु** सूत्राभावे कदाचित् पूर्वतः कदाचित् पार्श्वत इति वक्ष्यति। अत्र पार्श्वशब्दस्य मध्यवचनत्वेन व्याख्यानं पार्श्वतः उच्चारणस्यासम्भवात्। सूत्रस्थितौ यन्मध्ये न भवति तदेव प्रयोजनमिति ब्रूमः। अथात्रोपपदोपात्त एव कथन्न कृत इति चेत् **"तत् प्राङ् नाम चेत्"** (४।२।३) इत्यनेनैव तस्याः परिभाषाया अव्याप्यत्वात्। अथ अनाम्नि अस्या परिभाषाया अव्याप्यताऽस्तीति। यथा भोक्तुमिच्छतीत्येव स्यात् न त्विच्छति भोक्तुमिति ? सत्यम्, सन्नादीनां गुपादीनामिति यदुक्तं तत्रैवादिशब्दस्य व्याप्त्या उपपदमपि बोध्यम्। अभिधेय इत्यर्थः। पशुर्दृतिहरिरिति न स्याद् इति। ननु कथमिदमुक्तं यावता दृतिहरिशब्दस्याप्यर्थप्रत्यायकत्वात् प्रत्ययत्वमस्तीति कृत्वा तस्यापि परनिपाते सति पशुर्दृतिहरिरिति भवितव्यमेव।

नैवम्, न ह्ययं दृतिहरिशब्दः प्रकृतिः, किन्तु प्रकृतिप्रत्ययसमुदाय इति। तदयुक्तम्, नहि केवलायाः प्रकृतेरेव प्रत्ययत्वनियामकः कोऽप्यस्तीति। किन्त्वर्थप्रत्यायकत्वं प्रत्ययत्वमुच्यते तच्च विद्यत एव। उच्यते– तत्र धात्वधिकारोऽस्तीति। ततश्च **"तत् प्राङ् नाम चेत्"** (४।२।३) इति वचनेन दृतिनाथशब्दयोः परो हृधातुरिति लब्धमेव, ततश्च पशोरुपाधेरिति प्रत्ययेन सहैव मुख्यः सम्बन्धः। अतस्तदपेक्षयैव पशोः प्रत्ययत्वं तस्मिंश्च सति ईकारापेक्षया पशोः परत्वे समायाते सति कुतः पशुर्दृतिहरिरिति प्रयोगः, तस्माद् युक्तमेवोक्तं **पञ्चीकृतेति**। साध्यविभक्त्यन्तमिति। साध्यो विधेयस्तस्माद् विहिता विभक्तिः **साध्यविभक्तिः**। अथ संज्ञापि साध्या तत्रापि परग्रहणान्वये सति परत्वं स्यात् ? नैवम्, विधिप्रकरणे पठित-त्वात् संज्ञया न सम्बध्यते इति। अतः **"सप्तम्युक्तमुपपदम्"** (४।२।२) इत्यत्रापि

नातिव्याप्तिः। पार्श्वत इत्यादि। मध्यत इत्यर्थः। मातुर्वत्सवदिति दृष्टान्तमवलम्ब्य पार्श्वत इत्युक्तमिति **केचित्** ॥४५१।

**[ समीक्षा ]**

कातन्त्रकार ने प्रकृति से बाद में किए जाने वाले की प्रत्यय संज्ञा की है, जबकि पाणिनि ने तृतीय-चतुर्थ-पञ्चम अध्यायों में पद का अधिकार किया है, तदनुसार उनमें निर्दिष्ट कार्य या विधि को प्रत्यय कहेंगे। परवर्ती सूत्र में उसे धातु अथवा प्रातिपदिक से पर में रखे जाने का निर्देश है– "प्रत्ययः, परश्च" (अ० ३।१।१, २)। फलतः उभयत्र समानता है।

यहाँ यह ज्ञातव्य है कि आख्यातप्रकरण में धातुओं से होने वाले प्रत्यय कातन्त्रकार ने सूत्र में नहीं गिनाए हैं। अथ च वृत्तिकार दुर्गसिंह ने उन्हें वृत्तिग्रन्थ में पढ़ा है। जैसे–

१. **वर्तमानासंज्ञक प्रत्यय** = १८ (९ + ९, पाणिनीय लट् लकार)

**(परस्मैपद)**– ति, तस्, अन्ति। सि, थस्, थ। मि, वस्, मस्।

**(आत्मनेपद)**– ते, आते, अन्ते। से, आथे, ध्वे। ए, वहे, महे।

२. **सप्तमीसंज्ञक प्रत्यय** = १८ (९ + ९, पाणिनीय विधिलिङ् लकार)

**(परस्मैपद)**– यात्, याताम्, युस्। यास्, यातम्, यात। याम्, याव, याम।

**(आत्मनेपद)**– ईत, ईयाताम्, ईरन्। ईथास्, ईयाथाम्, ईध्वम्। ईय, ईवहि, ईमहि।

३. **पञ्चमीसंज्ञक प्रत्यय** = १८ (९ + ९, पाणिनीय लोट् लकार)

**(परस्मैपद)**– तु, ताम्, अन्तु। हि, तम्, त। आनि, आव, आम।

**(आत्मनेपद)**– ताम्, आताम्, अन्ताम्। स्व, आथाम्, ध्वम्। ऐ, आवहे, आमहे।

४. **ह्यस्तनीसंज्ञक प्रत्यय** = १८ (९ + ९, पाणिनीय लङ् लकार)

**(परस्मैपद)**– दि, ताम्, अन्। सि, तम्, त। अम्, व, म।

**(आत्मनेपद)**– त, आताम्, अन्त। थास्, आथाम्, ध्वम्। ई, वहि, महि।

५. **अद्यतनीसंज्ञक प्रत्यय** = १८ (९ + ९, पाणिनीय लुङ् लकार)

**(परस्मैपद)**– दि, ताम्, अन्। सि, तम्, त। अम्, व, म।

**(आत्मनेपद)**– त, आताम्, अन्त। थास्, आथाम्, ध्वम्। ई, वहि, महि।

६. **परोक्षासंज्ञक प्रत्यय** = १८ (९ + ९, पाणिनीय लिट् लकार)

**(परस्मैपद)** अट्, अतुस्, उस् । थल्, अथुस्, अ । अट्, व, म ।

**(आत्मनेपद)** ए, आते, इरे । से, आथे, ध्वे । ए, वहे, महे ।

७. **श्वस्तनीसंज्ञक प्रत्यय** = १८ (९ + ९, पाणिनीय लुट् लकार)

**(परस्मैपद)** – ता, तारौ, तारस् । तासि, तास्थस्, तास्थ । तास्मि, तास्वस्, तास्मस्) ।

**(आत्मनेपद)** – ता, तारौ, तारस् । तासे, तासाथे, ताध्वे । ताहे, तास्वहे, तास्महे ।

८. **आशीःसंज्ञक प्रत्यय** = १८ (९ + ९, पाणिनीय आशीर्लिङ् **लकार**)

**(परस्मैपद)** – यात्, यास्ताम्, यासुस् । यास्, यास्तम्, यास्त । यासम्, यास्व, यास्म ।

**(आत्मनेपद)** – सीष्ट, सीयास्ताम्, सीरन् । सीष्ठास्, सीयास्थाम्, सीध्वम् । सीय, सीवहि, सीमहि ।

९. **भविष्यन्तीसंज्ञक प्रत्यय** = १८ (९ + ९, पाणिनीय लृट् लकार)

**(परस्मैपद)** – स्यति, स्यतस्, स्यन्ति । स्यसि, स्यथस्, स्यथ । स्यामि, स्यावस्, स्यामस् ।

**(आत्मनेपद)** – स्यते, स्येते, स्यन्ते । स्यसे, स्येथे, स्यध्वे । स्ये, स्यावहे, स्यामहे ।

१०. **क्रियातिपत्तिसंज्ञक प्रत्यय** = १८ (९ + ९, पाणिनीय लृङ् लकार)

**(परस्मैपद)** – स्यत्, स्यताम्, स्यन् । स्यस्, स्यतम्, स्यत । स्यम्, स्याव, स्याम ।

**(आत्मनेपद)** – स्यत, स्येताम्, स्यन्त । स्यथास्, स्येथाम्, स्यध्वम् । स्ये, स्यावहि, स्यामहि ।

पाणिनि ने "तिप्-तस्-झि-सिप्-थस्-थ-मिप्-वस्-मस्-त-आताम्-झ-थास्-आथाम्-ध्वम्-इड्-वहि-महिङ्" (अ० ३।४।७८) सूत्र में ९ प्रत्यय परस्मैपद-संज्ञक तथा ९ प्रत्यय आत्मनेपदसंज्ञक = कुल १८ प्रत्यय ही गिनाए हैं, परन्तु इसके बाद ३४ सूत्रों द्वारा २९ आदेश एवं पाँच आगम भी किए हैं, जो इस प्रकार हैं –

[आदेश = २९; अ० ३।४।७९-११२]

| स्थानी | आदेश | स्थानी | आदेश |
|---|---|---|---|
| १. टित् लकारस्थानिक आत्मनेपद प्रत्ययों का टिभाग | ए | १७. " " ए | आम् |
| | | १८. " " ए | व |
| | | १९. " " ए | अम् |
| २. थास् प्रत्यय | से | २०. " " ए | ऐ |
| ३. लिट्स्थानिक तप्रत्यय | एश् | (उत्तमपुरुष) | |
| ४. लिट्स्थानिक झप्रत्यय | इरेच् | २०. लेट्स्थानिक आ | ऐ |
| ५. लिट्स्थानिक तिप् | णल् | २०. " " इ | लोप |
| ६. " " तस् | अतुस् | २१. " " स् | लोप |
| ७. " " झि | उस् | (उत्तमपुरुष) | |
| ८. " " सिप् | थल् | २१. ङित्-लकारस्थानिक स् | लोप |
| ९. " " थस् | अथुस् | २२. " " इ | लोप |
| १०. " " थ | अ | २३. " " तस् | ताम् |
| ११. " " मिप् | णल् | २४. " " थस् | तम् |
| १२. " " वस् | व | २५. " " थ | त |
| १३. " " मस् | म | २६. " " मिप् | अम् |
| १४. लोट्स्थानिक इ | उ | २७. लिङ्स्थानिक झ | रन् |
| १५. " " सिप् | हि | २८. " " इट् | अत् |
| १६. " " मिप् | नि | २९. " " झि | जुस् |

[**आगम** = अ० ३।४।९२, ९४, १०२, १०३, १०७]

१. आट्। २. अट्। ३. सीयुट्। ४. यासुट्। ५. सुट्।

इस प्रकार पाणिनीय व्याकरण में गौरव तथा कातन्त्रव्याकरण में लाघव स्पष्ट परिलक्षित होता है। महाभाष्यकार आदि ने महती संज्ञा होने के कारण इसे अन्वर्थ माना है, तदनुसार अर्थबोध कराने वाले को प्रत्यय कहते हैं –

"अर्थाश्रयत्वाद् वा। अथवा अर्थाश्रयः प्रत्ययविधिः। परस्तमर्थं सम्प्रत्याययति स प्रत्ययः। किं वक्तव्यमेतत् ? न हि..............। तत्र महत्याः संज्ञायाः करणे एतत् प्रयोजनम् – अन्वर्थसंज्ञा यथा विज्ञायते। प्रत्याययतीति प्रत्ययः। प्रत्याय्यते इति प्रत्ययः" (म० भा० ३।१।१)। न्यासकार जिनेन्द्रबुद्धि ने 'प्रतियन्त्यनेनार्थान्' यह व्युत्पत्ति मानकर प्रत्यय की अन्वर्थता सिद्ध की है। अन्वर्थ होने के कारण "गुपूतिजूकिद्भ्यः सन्" (३।२।२) इत्यादि में 'गुप्' आदि प्रकृति की, "स्तम्बकर्णयो रमिजपोः" (४।३।१६) में 'स्तम्ब' आदि उपपद की "हरतेर्दृतिनाथयोः पशौ" (४।३।२६) में 'पशु' उपाधि की, "हनस्त च" (४।२।२२) इत्यादि में 'त' आदि विकार की तथा "आमि च नुः" (२।१।७२) आदि में 'नु' आगमों की प्रत्ययसंज्ञा सिद्ध नहीं हो पाती।

**पूर्वाचार्यों द्वारा व्यवहृत प्रत्ययसंज्ञा –**

**गोपथब्राह्मण –** ओङ्कारं पृच्छामः। को धातुः ? .... कः प्रत्ययः ? इत्यादि। अदर्शनं प्रत्ययस्य नाम सम्पद्यते (९।१।२४, २६)।

**काशकृत्स्नधातुव्याख्यान –** प्रत्ययोत्तरपदयोः। अन्येऽपि क्विबादयः प्रत्यया उक्ताः –

भूते भव्ये वर्तमाने भावे कर्तरि कर्मणि।
प्रयोजके गुणे योग्ये धातुभ्यः स्युः क्विबादयः॥ (सू० ३, ४५)।

**ऋक्प्रातिशाख्य –** द्विवर्णः प्रत्ययोऽन्यस्य (९।३४)।

**वाजसनेयिप्रातिशाख्य –** प्रत्ययसवर्णं मुदि शाकटायनः (३।९)।

**अथर्ववेदप्रातिशाख्य –** यकारलोपः प्रत्ययान्तरं वा, आकारान्ताच्च प्रत्ययलोपिनः (२।१।८; २।४)।

**ऋक्तन्त्र –** "व्यञ्जने"। व्यञ्जने च प्रत्यये पूर्वान्तं सस्वरं भवति।
"स्पर्शः स्वे"। स्पर्शः स्वे प्रत्यये पूर्वान्तसस्वरो भवति। (२।३।२, ५)।

**नाट्यशास्त्र –** प्रत्ययविभागजनिता प्रकर्षसंयोगसत्त्ववचनैश्च।
यस्मात् पूरयतेऽर्थान् प्रत्यय उक्तस्ततस्तस्मात्॥ (१४।२८)।

**अर्वाचीन व्याकरणग्रन्थों में प्रत्ययसंज्ञा का व्यवहार –**

**जैनेन्द्रव्याकरण –** त्यः (२।१।१)।

**शाकटायनव्याकरण –** प्रत्ययः कृतोऽषष्ठ्याः (१।१।४१)।

**हैमशब्दानुशासन** – अनन्तः पञ्चम्याः प्रत्ययः (१।१।३८)।

**मुग्धबोधव्याकरण** – परस्त्यः (सू० १८)।

**अग्निपुराण** – कृतस्त्रिष्वपि विज्ञेया भावे कर्मणि कर्तरि।
देयं ध्येयं चैव यति ण्यति कार्यं च कृत्यकाः।। (३५८।१-४)

**नारदपुराण** – अर्थवत् प्रातिपदिकं धातुप्रत्ययवर्जितम्।
प्रकृतिप्रत्ययादेशलोपागममुखैः कृतम्।। (५२।३; ५३।५८)।

**शब्दशक्तिप्रकाशिका** – यादृशार्थे प्रकृत्यन्यो निपातान्यश्च वृत्तिमान्।
स तादृशार्थे शब्दः स्यात् प्रत्ययोऽसौ चतुर्विधः।।
इतरार्थानवच्छिन्ने स्वार्थे यो बोधनक्षमः।
तिङ्ङर्थस्य निभाद्यन्यः स वा प्रत्यय उच्यते।।
(का० ९, १०)।

प्रकृति तथा प्रत्यय के अर्थवान् होने पर भी उनका स्वतन्त्र रूप में प्रयोग नहीं होता। वाक्यपदीय में भर्तृहरि ने कहा है–

**चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः।**
**प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते।।** (वा० प० २।१९४)।

प्रकृति-प्रत्यय का साथ में प्रयोग होने पर अर्थनिष्पत्ति होती है। महाकवि कालिदास ने रघुवंश में वर-वधूसमागम को प्रत्यय-प्रकृतियोग के सदृश सफल प्रयोजन वाला माना है–

**ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन् कृतार्थताम्।**
**सोऽभवद् वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः।।**
(र० वं० ११।५६)।

**[ विशेष वचन ]**

१. प्रतीयते येनार्थः स प्रत्यय इति रूढिः (दु० वृ०)।

२. एकस्थः सविता देवो यथा विश्वप्रकाशकः
तथा लिङ्गवती शास्त्रमेकस्थापि प्रदीपयेत्।।
एकापि पुंश्चली पुंसां यथैकैकं प्रयाति हि।
विध्यङ्गशेषभूता तद्विधिं प्रत्यनुगच्छति।।
प्रकृत्यादिभिन्नत्वे सत्यर्थप्रतिपादकत्वं प्रत्ययत्वम् (वं० भा०)।

३. उपाधिर्द्विविधः अभिधेयतया अनभिधेयतया च (दु० टी०)।

४. सुखपरिहारमाह – रूढिरित्यादि। प्रक्रियतेऽस्यामिति वा प्रकृतिः। एवमुक्तं भवति – यथा प्रकृतिसंज्ञा लोकोपचारात् तथा प्रत्ययसंज्ञेति (दु० टी०)।

५. एकत्र गृहीतसम्बन्धा लिङ्गवती प्रदीपवत् सर्वं शास्त्रमभिज्चलयतीति लाघवोक्तिः। विध्यङ्गशेषभूता योगे उपतिष्ठते इति सुखप्रतिपत्त्यर्थं गौरवोक्तिरिति (दु० टी०)।

६. प्राधान्यं पुनस्तस्य (प्रत्ययस्य) साध्यत्वादेव। प्रकृत्यादीनां तु सिद्धानां तदर्थव्यापारादप्राधान्यमिति। विकारागमयोस्तु यद्यपि साध्यविभक्तिनिर्दिष्टत्वं प्रधानत्वं च, तथापि न प्रत्ययत्वम्। न हि ताभ्यामर्थः प्रतीयते तस्य समुदायवाच्यत्वात् (वि० प०)।

७. अनिर्दिष्टार्थाः प्रत्यया अपि प्रकृतेः स्वार्थमनुवादकतया प्रतिपादयन्तीति युक्तं तेषामपि प्रत्ययत्वम्। अत एव स्वार्थे विधीयमानत्वात् स्वार्थिका उच्यन्ते (वि० प०)।

८. प्रत्ययादिति। प्रत्ययोत्पत्तेः प्रथमम् इत्यर्थः। प्रशब्दोऽत्र प्रथमार्थः। प्रकृतिरिति कर्मणि क्तिप्रत्ययः। एतेन प्रकृतिसंज्ञायामपि रूढिरादृतेति भावः (क० च०)।

९. वस्तुतस्तु प्रयोगवाच्यत्वे सति प्रयोगनियामको धर्म उपाधिः (क० च०)।

१०. अर्थप्रत्यायकत्वं प्रत्ययत्वमुच्यते (क० च०)॥४५१।

## ४५२. गुप्तिज्किद्भ्यः सन् [ ३।२।२ ]

### [ सूत्रार्थ ]

'गुप्-तिज्-कित्' धातुओं से पर में 'सन्' प्रत्यय स्वार्थ में होता है ॥४५२।

### [ दु० वृ० ]

गुप्तिज्किद्भ्यः सन् परो भवति स्वार्थे। जुगुप्सते माम्। तितिक्षते तपस्तापसः। विचिकित्सति मे मनः। चिकित्सत्यातुरं वैद्यः। रिपुं चिकित्सति। चिकित्स्यानि क्षेत्रे तृणानि।

**गुपो वधेश्च निन्दायां क्षमायां च तथा तिजः।**
**संशये च प्रतीकारे कितः सन्नभिधीयते॥**

अकारोच्चारणं किम्? **"स्वरादेर्द्वितीयस्य"** (३।३।२) इति द्विर्वचनार्थम्, तेनार्थान् प्रतीषिषति ॥४५२।

## [दु० टी०]

गुपूतिज्० । ननु चार्थानिर्देशे प्रकृत्यर्थ एव सन् प्राप्नोति । **'गुपू गोपनकुत्सनयोः'** (१।४६८) **'गुपू व्याकुलत्वे'** (३।७१) दैवादिकः । **'गुपू रक्षणे'** (१।१३२) असार्वधातुके विभाषितायप्रत्ययः । अथ साहचर्याद् भौवादिकस्यैव निरनुबन्धस्य ग्रहणं तर्हि गोपनेऽपि प्राप्नोति । **'तिज निशाने क्षमायां च'** (१।३४८) । **'कित निवासे रोगापनयने च'** (१।२९१) । न च वक्तव्यम् – 'जुगुप्सते, तितिक्षते, चिकित्सति' इति यतो गणे पठेदिति, अतोऽर्थविशेष ऊहितव्य इति । कथं सन्विधानं विना 'जुगुप्सुः' इत्यादौ अप्रत्ययोऽनभ्यासत्वाच्च न कथं 'जुगुप्सिषते' इत्यादौ द्विर्वचनम् । अतः 'गुपो निन्दायाम्, तिजः क्षान्तौ, कितः संशयप्रतीकारयोः' इति वक्तव्यम् । श्रुतत्वादेते प्रकृतेर्विशेषणम् – 'जुगुप्सते माम्' । निन्दतीत्यर्थः । 'तितिक्षते तपस्तापसः' । सहते इत्यर्थः । एवं 'न तितिक्षासममस्ति साधनम्' । 'विचिकित्सति मे मनः' । संशेते इत्यर्थः । यद्यपि विपूर्वात् संशयो गम्यते तथापि नासौ वेरर्थः, 'विशेषद्योतका हि उपसर्गाः' इति । 'चिकित्सति व्याधिम्' । प्रतिकुरुते अपनयतीत्यर्थः । 'रिपुं चिकित्सति' । निगृह्णातीत्यर्थः । चिकित्स्यानि क्षेत्रे तृणानि, नाशयितव्यानीत्यर्थः । निग्रहविनाशावपि प्रतीकारस्य भेदाविति ।

अन्यत्र गोपनं गोपायति, तेजनं तेजयति, सङ्केतनं संकेतयति । एषामर्थान्तरेऽपि त्यादयो नाभिधीयन्ते । अतः प्रत्युदाहृतमत्यादिभिरेव । तथा वक्ष्यमाणेऽपि निन्दादयोऽर्था न वक्तव्याः । कोऽपि हि धातुः केनापि प्रत्ययेन संबद्धः, कस्मिंश्चिदर्थविशेषे वर्तते स्वभावात् । यथा **'घृणु दीप्तौ'** (७।६) घृतमित्यादावित्याह – गुपो वधेश्चेत्यादि । अन्यत्र वधकः, वधिरत्र निन्दाप्रस्तावादुच्यते । अथ किमर्थं सनोऽकारः **"असन्ध्यक्षरयोरस्य तौ तल्लोपश्च, अस्य च लोपः"** (३।६।४०, ४९) इति विशेषवचनादस्यापहारोऽस्ति इत्याह – अकार इत्यादि । प्रतिपूर्वः **'इ गतौ'** (१।१०२) सन्, तस्य द्विर्वचनम्, नकारोऽपि विशेषणार्थः **"स्तौतीनन्तयोरेव सनि"** (३।८।२८), सनन्तस्य द्विर्वचने 'अधुक्षत्' इति सनन्तस्य न भवति ॥४५२।

## [वि० प०]

गुप्० । तिज्किद्भ्यां भौवादिकाभ्यां निरनुबन्धाभ्यां साहचर्याद् **'गुपू गोपनकुत्सनयोः'** (१।४६८) इति भौवादिकोऽपि निरनुबन्ध एव गृह्यते, न तु **'गुपू व्याकुलत्वे'** (३।७१) इति दैवादिकः । **'गुपू रक्षणे'** (१।१३२) इति भौवादिकः सानुबन्धश्च यदि पुनरयं गृहीतः स्यात् तदा असार्वधातुके विभाषितायप्रत्ययात् पक्षे सन् स्यात् । यद्येवमर्थस्यानिर्देशात् प्रकृत्यर्थ एव सन् प्रत्ययो भवन् गोपनेऽपि

प्राप्नोति, तथा **'तिज निशाने क्षमायां च'** (१।३४८) **'कित निवासे रोगापनयने च'** (१।२९१) इत्याह – गुपो वधेश्चेत्यादि एषामेष्वर्थेषु दर्शितमेव। तद् यथा – जुगुप्सते माम्, निन्दतीत्यर्थः 'तितिक्षते तपस्तापसः'। तपः सहते इत्यर्थः। विचिकित्सति मे मनः, संशेते इत्यर्थः। यद्यपि विपूर्वात् संशयो गम्यते, तथापि नासौ वेरर्थः किन्तु प्रकृतेरेव 'उपसर्गा हि द्योतकाः' इति शास्त्रात् चिकित्सत्यातुरं वैद्यः, प्रतिकुरुते रोगान् अपनयतीत्यर्थः। रिपुं चिकित्सति, निगृह्णातीत्यर्थः। चिकित्स्यानि क्षेत्रे तृणानि। विनाशयितव्यानीत्यर्थः। **"स्वराद् यः"** (४।२।१०) इति यप्रत्ययः, अस्य च लोपः इति। निग्रहविनाशावपि प्रतीकारस्य भेदाविति पृथङ् नोक्तौ। निन्दादिभ्योऽन्यत्र न भवति, गोपनं गोप इति, तेजनं तेज इति, निकेतनं निकेत इति। एषामर्थान्तरे त्यादयो नाभिधीयन्ते इति प्रत्युदाहृतम् अत्यादिभिरेव। वधिर्वक्ष्यमाणवचनस्थोऽपि निन्दाप्रस्तावादत्रोक्तः, अन्यत्र वधकः। अथ सनोऽकारः किमर्थमुपदिश्यते, यावता सार्वधातुकेऽनि विकरणे **"असन्ध्यक्षरयोरस्य तौ तल्लोपश्च"** (३।६।४०) इत्यस्त्येव। तथा असार्वधातुके अस्य च लोप इत्याह – अकारोच्चारणमित्यादि। अटपटेत्यादिपाठात् **'इ गतौ'** (१।१०२) भौवादिकः, ततः प्रतिपूर्वात् सन्। **"स्वरादेर्द्वितीयस्य"** (३।३।२) इति सनो द्विर्वचनम्, सन्यवर्णस्येतीत्वम्। अन्यथैकस्वरस्य धातोर्द्वितीयस्यावयवस्य द्विर्वचने कथम् अस्वरस्य स्यादिति भावः ॥४५२।

## [क० च०]

गुप्तिज्०। जुगुप्सते इत्यादि **वृत्तिः**। ननु केन सूत्रेण अनिट्त्वम्, येन **"सनि चानिटि"** (३।५।९) इत्यनेन गुणनिषेधः? सत्यम्। इडागमसूत्रे धात्वधिकाराद् यत्र धात्वाश्रितमसार्वधातुकं विधीयते, तत्रैवेति। अत्र गुपाद्याश्रय एव सन् प्रत्यय इति कथम् इट्प्रसङ्गः। अकारोच्चारणमित्यादि **वृत्तिः**। ननु कथमेतत् संगच्छते यावता **"चण् परोक्षा"** (३।३।७) इत्यादिसूत्रेऽन्तग्रहणं संश्चेक्रीयितयोरपि द्विर्वचनार्थमिति वृत्तावुक्तम्। तथा च "चण्परोक्षाचेक्रीयितसन्सु" इति कृते परसप्तमीयं स्यात्, न तु विषयसप्तमी। ततश्च **'सप्तम्या निर्दिष्टे पूर्वस्य'** (का० परि० २१) इति संश्चेक्रीयितयोर्निमित्तयोः पूर्वस्यैव द्विर्वचनं स्यात् न तु संश्चेक्रीयितयोरिति।

[अन्तग्रहणे तु बहुव्रीहिणा धातवो निर्दिश्यन्ते, ततः संश्चेक्रीयितान्तधातुविषयं विधीयमानं द्विर्वचनं यथासम्भवं **"स्वरादेर्द्वितीयस्य"** (३।३।२) इति संश्चेक्रीयितयोरपि भवतीति] तत्कथमकारोच्चारणं किमिति। यद्यत्राकारोच्चारणं न

स्यात् तदा कथं द्विर्वचनं स्यात्, व्यञ्जनत्वेनैकस्वरत्वाभावाच्चेत् तत्रान्तग्रहणबलादेव व्यञ्जनस्यापि द्विर्वचनं भविष्यति। नैवम्, अन्तग्रहणं यशब्दस्य द्विर्वचनेनैव चरितार्थं भविष्यति। यथा अटाट्यते इति। न च तत्र सन उपादानं व्यर्थमिति वाच्यम्, तस्य चिकीर्षतीत्यादौ चरितार्थत्वात्। [ यद् वा तत्रान्तग्रहणं प्रत्यये द्विवर्चनमिति फलम् ]। ननु कथमकारस्यैतत् फलम्, फलान्तरस्यैव सत्त्वात्। तथाहि याधातोः सनि परे द्विर्वचने 'यियास' इति स्थिते ततः कारिते कृते **"अस्य च लोपः"** (३।६।४९) इत्यकारलोपे, ततोऽपि चणि सति 'अयियासत्' इति रूपं भवति। अकृते त्वकारे **"इन्यसमानलोपोपधायाः"** (३।५।४४) इत्यादिना ह्रस्वप्रसङ्गः स्याच्चेत्, न। अकार-मकृत्वा **"गुपूतिजूकिद्भ्यः सन्"** (३।२।२) इति ऋदनुबन्धत्वं विधातव्यम् इति तदा **"न शास्वृदनुबन्धानाम्"** (३।५।४५) इति ह्रस्वनिषेधो भविष्यति। अथाकाराभावे सति पिपतिषतीत्यत्र इटो गुणः स्यात्। कृते पुनरकारे स्थानिवद्भावान्न गुण इति चेत्, नैवम्। इटष्टकारकरणान्नात्र गुणो भविष्यति **'निरनुबन्धग्रहणे न सानुबन्धस्य'** (का० परि० ४८) इति न्यायात्। यद्येवं तर्हि भेत्तीत्ति गुणो न स्यात्, इरनुबन्धत्वात्। एतीति इण्धातोश्च सानुबन्धत्वात् कथं गुणः सिध्यतीति, तस्माद् गुणविधौ निरनुबन्धेत्यादि न्यायो नास्तीति लक्ष्यते इति। तस्मादकारस्य इटो गुणाभावः फलं चेत् तर्हि इडागमसूत्रे आगमग्रहणादिटो धातुकार्यं नास्तीति व्याख्यातव्यम्। नैवम्, तस्य सुखार्थीकृतत्वादिति ? सत्यम्, अत्र स्थितेऽकारे तत्र **सुखार्थम्**। अकार-खण्डनपक्षे तु इटो धातुकार्याभावार्थं भविष्यति। तस्मादकारोच्चारणं द्विर्वचनार्थमिति यदुक्तं **वृत्तिकृता**, तद् युक्तमेव।

यद् वा अकारग्रहणस्य नेदं फलं किन्तु प्रथमकक्षायां दर्शितम्, अन्यस्थलेऽपि फलं बोद्धव्यम्। ननु चिकित्स्यानीत्यत्राकारकरणाभावात् कथं प्रत्ययः स्यात्, एतत्तु प्रयोजनमेव चेत्, न। घ्यण्प्रत्ययेन भवितव्यमिति, अकारकरणाभावे **"गुपूतिजू-किद्भ्यः सन्"** (३।२।२) इति सूत्रे कृते णकारो नियतो नास्ति। मूर्धन्यणकारानुबन्धे **"न णकारानुबन्ध०"** (३।५।७) इत्यादिना गुणप्रतिषेधः स्याच्चेत्, न। **"सनि चानिटि"** (३।५।९) इति वैयर्थ्यात्। ननु **"सनि चानिटि"** (३।५।९) इति सूत्रं नियमार्थं भवेत्। तथाहि अनिटां धातूनामगुणे कृते सन्येव नान्यत्रेति। इदमपि प्रयोजनम्, किन्तु **वृत्तौ** मुख्यप्रयोजनं दर्शितम् इति चेत्, न। विधेर्बलवत्त्वादिति।

**पञ्जी –** तिज्किद्भ्यां भौवादिकाभ्यामिति। ननु कथमेतद् यावता तिज्धातुश्चौ-रादिकोऽप्यस्ति, कितधातुश्चादादिकोऽप्यस्ति इति चेत्, एवमुच्यते – तिज्गुपोः साहचर्यात् कित्धातुरपि सविकरणभौवादिक एव गृह्यते न तु लुग्विकरण

आदादिकः **'कि कित ज्ञाने'** (२।७६) इति। अनिनन्तनिर्देशात् तिज्धातुर्भौवादिक एव गृह्यते, न तु चौरादिकः। अथोभयग्रहणार्थमनिनन्तनिर्देश इति चेत्, कितगुपो-र्भौवादिकयोः साहचर्यात् तिजपि भौवादिक एव। यद् वा साहचर्यादित्यस्यैक-गणपठितत्वादित्येवार्थः। एकगणनिर्दिष्टानां ग्रहणसम्भवे भिन्नगणनिर्दिष्टानां ग्रहणं न युक्तम्, यथा रामलक्ष्मणाविति। एषामर्थान्तरेऽपीत्यादि। सामान्यतस्त्यादीनाम-नभिधानमित्यर्थः। लक्ष्यवशात् तस्य प्रयोग इष्ट एवेत्याह– तथा जनिवध्योश्चेत्य-त्रावधीति वक्ष्यति। तथा गोपनार्थस्यापि **"कङ्कणझणत्कारं च किं गोपसे"** इति, **"माऽवधिष्टां जटायुषम्"** इति च। अट पट इत्यादि। न हि इण्धातो रूपमिदम् **"सनीणिङोर्गमिः"** (३।४।८६) इति गम्यादेशे 'जिगमिषति' इत्येव तस्य भवतीति **कश्चित्**। तन्न, यावता 'अर्थान् प्रतीषिषति' इत्यत्र पदार्थानधिगन्तुमिच्छतीत्यर्थः कर्तव्यः। ततश्च बोधने इण्धातोः सनि गमिरादेशो नास्त्यनभिधानात्। तथा च **"इणो गमिरबोधने"** (अ० २।४।४६) इति **पाणिनिः**। तर्हि कथम् अट पटेत्युक्तम् इण्धातोः कोऽपराध इति चेद्, उच्यते– इण्धातोर्बोधने **वृत्ति**र्नास्तीत्येतत् सर्वं **"सनीणिङोर्गमिः"** (३।४।८६) इत्यत्र **वृत्तिपञ्जीकृद्भ्या**मुक्तम् ॥४५२।

**[ समीक्षा ]**

'गुप् गोपने, तिज निशाने, कित निवासे' (१।४६८; ३४८, २९१) धातुओं से निन्दा, क्षमा, व्याधिप्रतीकार अर्थों में सन् प्रत्यय का विधान पाणिनि तथा शर्ववर्मा ने समानरूप में ही किया है। पाणिनि का भी यही सूत्र है– "गुप्तिज्-किद्भ्यः सन्" (अ० ३।१।५)। किस धातु से किस अर्थ में यह सन् प्रत्यय इष्ट है– एतदर्थ वृत्तिकार दुर्गसिंह ने इस प्रकार स्पष्टीकरण किया है–

**गुपो वधेश्च निन्दायां क्षमायां च तथा तिजः।**
**संशये च प्रतीकारे कितः सन्नभिधीयते॥**

इनसे भिन्न अर्थों में 'आय्' आदि प्रत्यय होने पर 'गोपायति, तेजयति, सङ्केतयति' शब्दरूप सिद्ध होते हैं।

**[ विशेष वचन ]**

१. 'जुगुप्सते, तितिक्षते, चिकित्सति' इति यतो गणे पठेदिति अतोऽर्थविशेष ऊहितव्यः इति (दु० टी०)।

२. तिज्किद्भ्यां भौवादिकाभ्यां निरनुबन्धाभ्यां साहचर्याद् 'गुप् गोपन-कुत्सनयोः' (१।४६८) इति भौवादिकोऽपि निरनुबन्ध एव गृह्यते, न तु 'गुप्

**व्याकुलत्वे**'(३।७१) इति दैवादिकः, 'गुपू रक्षणे' (१।१३२) इति भौवादिकः सानुबन्धश्च। यदि पुनरयं गृहीतः स्यात् तदा असार्वधातुके विभाषितायप्रत्ययात् पक्षे सन् स्यात् (वि० प०)।

३. उपसर्गा हि द्योतका इति शास्त्रात् (वि० प०)।

४. एकगणनिर्दिष्टानां ग्रहणसम्भवे भिन्नगणनिर्दिष्टानां ग्रहणं न युक्तम् (क० च०)।

**[ रूपसिद्धि ]**

१. **जुगुप्सते** माम्। गुप्+सन्+ते। 'गुप् गोपनकुत्सनयोः' (१।४६८) धातु से प्रकृत सूत्र द्वारा 'सन्' प्रत्यय, उसका "प्रत्ययः परः" (३।२।१) के नियमानुसार गुप् धातु से पर में प्रयोग, "सनि चानिटि" (३।५।९) से गुणाभाव, "द्विर्वचन-मनभ्यासस्य" (३।३।१) के अधिकार में "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से गुप् धातु को द्वित्व, 'पूर्वोऽभ्यासः" (३।३।४) से पूर्ववर्ती गुप् की अभ्याससंज्ञा "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) से 'गु' का शेष तथा प् का लोप (गु गुप् स), "कवर्गस्य चवर्गः" (३।३।१३) से ग् को ज् आदेश, "ते धातवः" (३।२।१६) से 'जुगुप्स' की धातुसंज्ञा, "पूर्ववत् सनन्तात्" (३।२।४६) से वर्तमानासंज्ञक प्रथमपुरुष – एकवचन प्रत्यय – ते, "अन् विकरणः कर्तरि" (३।२।३२) से 'अन्' विकरण, न् अनुबन्ध का प्रयोगाभाव, "असन्ध्य-क्षरयोरस्य तौ तल्लोपश्च" (३।६।४०) से सन्-प्रत्ययघटित अकार के स्थान में अकारादेश तथा निमित्तभूत अन्विकरण वाले अकार का लोप।

२. **तितिक्षते** तपस्तापसः। तिज्+सन्+ते। 'तिज निशाने क्षमायां च' (१।३४८) धातु से क्षमा अर्थ में प्रकृत सूत्र द्वारा सन् प्रत्यय, अनिट्त्व, द्वित्व, अभ्याससंज्ञा, अभ्यासकार्य "चवर्गस्य किरसवर्णे" (३।६।५५) से ज् को क् तथा "निमित्तात् प्रत्ययविकारागमस्थः सः षत्वम्" (३।८।२६) से स् को ष्, क्–ष्संयोग से क्ष्।

३-४. **विचिकित्सति** मे मनः। **चिकित्सत्यातुरं** वैद्यः। वि+कित+सन्+ति। 'कित् निवासे रोगापनयने च' (१।२९१) धातु से प्रकृत सूत्र द्वारा सन् प्रत्यय, द्वित्वादि, "कवर्गस्य चवर्गः" (३।३।१३) से क् को च् आदेश, धातुसंज्ञा, तिप्रत्यय, अन्-विकरणादि कार्य ॥४५२।

## ४५३. मानूवधूदानूशान्भ्यो दीर्घश्चाभ्यासस्य [ ३।२।३ ]

### [ सूत्रार्थ ]

मान्, वध्, दान तथा शान धातुओं से स्वार्थ में सन् प्रत्यय तथा अभ्यासगत इकार को दीर्घ आदेश होता है ।।४५३।

### [ दु० वृ० ]

मानादिभ्यः सन् परो भवति स्वार्थे, दीर्घश्चैषामभ्यासस्येतो भवति । मीमांसते, बीभत्सते, दीदांसते, शीशांसते । अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते । कथम् अवदानम्, निशानम् इति ? द्यतेः स्यतेश्च युटा सिद्धम् । चौरादिकेन– मानः, मानयति । दान्–शान् उभयम्, कित् परस्मै ।।४५३।

### [ दु० टी० ]

मान० । **मान पूजायाम्** (१।४६९), **वध बन्धने** (९।१५), **दान अवखण्डने** (१।६०१), **शान तेजने** (१।६०२) । ननु स्वरस्य दीर्घोऽयम्, अभ्यासस्यावशेषे सति कथमित्त्वं न बाधते, दीर्घत्वे च कृते **"सन्यवर्णस्य"** (३।३।२६) इतीत्त्वं नास्ति । **'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते'** (का० परि० ४७) इति न्यायादित्याह– अभ्यासस्येत्यादि । तथा चैनमर्थं ज्ञापयितुमन्नागमस्येति वक्ष्यति 'वनीवच्यते' इत्यादौ न्वागमे कृते कुतो दीर्घप्रसङ्गोऽन्तस्याभावात् । कथमित्यादि । अवदानादिपदसिद्धये दानशानोर्युटि सन् वा न विहितः इति चोदयन् परिहारमाह– द्यतेरित्यादि । **'दो अवखण्डने, शो तनूकरणे'** (३।२२,१९) आभ्यामन्यत्रापीति कर्तरि युट् । न चार्थभेदोऽनेकार्थत्वाद् धातूनामिति । चौरादिकेनेति । मानो जिज्ञासायामेव सन् सिद्धः । मान पूजायामिति चुरादौ परस्मैपदी, ततोऽल्, घुषिर् विशब्दने इति विशब्दनप्रतिषेधेनानित्यत्वज्ञापनादिन् वास्ति ? सत्यम्, वधादिसाहचर्याद् भौवादिकस्य मान इह ग्रहणम्, तस्मान्मानवधदानशान्भ्यो जिज्ञासावैरूप्यार्जवनिशानेष्विति न वक्तव्यम्, यतोऽभिधानव्यवस्थाप्युक्तैव । मानवधदानशान्भ्यः इत ईच्चेति कथं न कुर्यात् ? श्रुतत्वाद् एषाम् अभ्यासेकारस्यैव ईकार इत्यवसीयते, सन उत्पत्ति-सन्नियोगेन नास्ति वचनात् क्रम एव । अथोत्तरत्र पिपतिषतीति इटो दीर्घः स्यात् श्रुतस्य सन इकार इति सिद्धान्तेऽपि कथं चिचीषति, चुकोषिषतीत्यत्र दीर्घश्चा-भ्यासस्य न भवति ? नैवम्, तुमन्तस्य धातोरभ्यासस्येति सम्बन्धो नोपपद्यते । दान्शानुभयं कित् परस्मै इति दान्-शान् उभयपदी, कित् परस्मैपदीत्यर्थः । शेषा गुप्तिज्मान्वध आत्मनेपदिन इति । न चैतेभ्यः प्राक् सनः आत्मनेपदं दृश्यते ।

अनुदात्तानुबन्धप्रतिज्ञानसमार्थ्यात् समुदायादात्मनेपदम् अवयवे वा कृतं लिङ्गं समुदायविशेषकम् अवय़वे कार्याभावात् ।

**अन्य** आह – निशाने तिज एवात्मनेपदं दृश्यते, तदा तेजते इति चरितार्थत्वात् कथं लिङ्गम् ? सत्यम्, क्षमायां चानुदात्तानुबन्धलिङ्गसामर्थ्यादिति भावः । कथं 'जुगुप्स' इति समुदायं योऽवयवो न व्यभिचरति तत्र लिङ्गमिदं व्यभिचरति । गोः सक्थनि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकं न गोमण्डलस्येति ॥४५३।

[वि० प०]

मान० । अभ्यासस्येत इति । "**सन्यवर्णस्य**" (३।३।२६) इतीत्त्वे सतीकारो विद्यत इति भावः ।बीभत्सते इति ।"**तृतीयादेर्घढभान्तस्य०**"(३।६।१००)इत्यादिना बकारस्य भकारः। ननु कथम् अभ्यासस्येत इत्युक्तम्, यावता अपवादत्वादवर्णावस्थायामेव दीर्घो भवितुमर्हतीत्याह – अभ्यासस्येत्यादि । अयं चार्थो "**दीर्घोऽनागमस्य**" (३।३।२९) इत्यत्रानागमग्रहणेन ज्ञापयिष्यते । दान्शान्भ्यां सनो विभाषा न विहितेति दर्शयन्नाह – कथमित्यादि । '**दो अवखण्डने**' (३।२२), '**शो तनूकरणे**' (३।१९), आभ्यां "**कृत्ययुटोऽन्यत्रापि**" (४।५।९२) इति कर्तरि वचनाद् युट् । अनेकार्थत्वाद् धातूनामर्थभेदोऽपि न विद्यते । चौरादिकेन मान इति, चुरादाविनन्तात् "**स्वरवृद्ध०**" (४।५।४१) इत्यादिना अल् । कथमेतद् यावता सामान्यनिर्देशाच्चौरादिकादपि सन् स्यात् । न च वक्तव्यम् इनन्तोऽसावनिनन्तश्चेह निर्दिष्ट इति । यस्माद् घुषिर् विशब्दने इति विशब्दनप्रतिषेधाद् विकल्पेनन्ताश्चुरादयः इति वक्ष्यति, ततोऽनिनन्तपक्षे स्यादेव ? सत्यम् । तथापि भौवादिकैर्वधादिभिः साहचर्याद् भौवादिकस्यैव मानो ग्रहणमिति । दानित्यादि । विशेषास्तु गुपूतिज्मान्वध आत्मनेपदिन इत्यर्थादुक्तम् । ननु कथमात्मनेपदं भविष्यति तद्धि पूर्ववत् सनन्तादित्यनेन सम्भवति, न च तस्यात्र व्यापारोऽस्ति नित्यं सनन्तत्वेन सनः पूर्वमात्मनेपदस्यादर्शनात् । एवं तर्हि अनुदात्तानुबन्धप्रतिज्ञासामर्थ्येन रुचादित्वात् सना व्यवधानेऽप्यात्मनेपदं भविष्यति, अन्यथा अमीषां गुपादीनामनुदात्तानुबन्धः प्रतिज्ञातोऽनर्थकः स्यादिति भावः ॥४५३।

[क० च०]

मान० । उत्तरसूत्रे वाशब्दस्य सन्विधिमपेक्ष्य व्यवस्थितविभाषाङ्गीक्रियते, तेन दान्शान्भ्यां दाननिशानयोः पक्षेऽच्प्रत्ययोऽपीति **पाणिन्यनुसारिणो** वदन्ति, तदिह न वाच्यम् इत्याशयेनाह – कथमिति **वृत्तिः । परस्तु** भौवादिकात्मनेपदिनः पूजा-

विषये जिज्ञासायां सन् विधीयते, चौरादिकस्य तु मानः 'मानयति' इति साधयति। इह तु सामान्यस्य मानधातोर्निर्देशाच्चौरादिकादपि सन् स्यात् ? नैवमित्याह– चौरादिकेनेति **वृत्तिः**। अत्र **पञ्जीकृता** साहचर्यं व्याख्यातम्।

ननु पूर्वसूत्रेऽत्र सूत्रे च क्वचिदात्मनेपदं क्वचित् परस्मैपदं च कथं दर्शितम्, **"शेषात् कर्तरि परस्मैपदम्"** (३।२।४७) इति परस्मैपदमेव स्यादित्याह– **'दान-शान्'-उभयम्**। किं परस्मै इति **वृत्तिः**। कितिरुभयपदीति **हरिस्वामी**, तेन चिकित्सते इति च मन्यते इति **उपाध्यायसर्वस्वः**। **वर्धमानोपाध्यायो**ऽपि **खण्डनप्रकाशे** चिकित्सते इति पाठः साधुरित्याचष्टे। **मुरारिप्रयोगेऽपि – 'न बालतां हन्तुमनाशिचकित्सते'** इति दृश्यते। **वस्तुतस्तु** अन्तर्भूतेनर्थस्य कितः कर्मकर्तृविवक्षया रुचादिवचनादात्मनेपदमिति। **पञ्जी** – दीर्घो भवितुमर्हतीति। नन्वलं पूर्वपक्षेण, यावता अवर्णावस्थायां दीर्घत्वेऽपि पश्चात् **"सन्यवर्णस्य"** (३।३।२६) इत्यनेन पुनरपि दीर्घेण भवितव्यमिति। नैवम्, **'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते'** (का० परि० ४७) इति न्यायादवर्णावस्थायां यो दीर्घस्तस्यैव स्थितिरिति गाढ एव **पूर्वपक्ष** इति। अयं चार्थ इत्यादि। तथाहि 'वनीवच्यते' इत्यादौ **"वन्चिस्रन्सि०"** (३।३।३०) इत्यादिनाऽपवादत्वान्नागमे सति अभ्यासस्य ह्रस्वान्तत्वाभावादेव दीर्घो न भविष्यति, किं **"दीर्घोऽनागमस्य"** (३।३।२९) इत्यत्रानागमग्रहणेन तस्मादनागमग्रहणं बोधयति – अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते इति। एतेन **'क्वचिदपवादविषये उत्सर्गस्यापि समावेशः'** (पुरु० परि० ११५) इति स्थितम्। विशब्दनप्रतिषेधादिति। **"अर्त्तीणघसैकस्वरातम्"** (४।६।७६) इत्यतः **"क्षुभिवाहि०"** (४।६।९३) इत्यादावेकस्वराधिकारोऽनुवर्तते। ततश्च विशब्दनार्थस्य घुषेश्चुरादित्वेनेनन्तत्वादनेकस्वरत्वाद् इड् न भविष्यति, किं विशब्दनिषेधेनेति। तस्मादत एव निषेधात् कियन्तश्चुरादयो विकल्पेनन्ता इति भावः ॥४५३।

**[ समीक्षा ]**

'मान पूजायाम् (१।४६९), बध बन्धने (१।४७०), दान अवखण्डने (१।६०१), शान तेजने' (१।६०२) धातुओं से स्वार्थ में सन् प्रत्यय तथा अभ्यासगत इकार को दीर्घादेश का विधान दोनों ही व्याकरणों में समानरूप से किया गया है। पाणिनि का सूत्र है – "मान्-वध्-दान्-शान्भ्यो दीर्घश्चाभ्यासस्य" (अ० ३।१।६)। इससे 'मीमांसते, बीभत्सते, दीदांसते, शीशांसते' इत्यादि प्रयोगों का साधुत्व उपपन्न होता है। स्वार्थ में निर्दिष्ट होने पर भी सन् प्रत्यय अर्थविशेष में ही अभीष्ट है – मान् धातु से जिज्ञासा अर्थ में, वध धातु से वैरूप्य अर्थ में, दान् धातु से आर्जव

अर्थ में तथा शान् धातु से निशान अर्थ में। पाणिनीय व्याकरण में इसके लिए वार्तिक सूत्र उपलब्ध हैं – "मानेर्जिज्ञासायाम्, वधेर्वैरूप्ये, दानेरार्जवे, शानेर्निशाने" (का० वृ० ३।१।६)। कातन्त्र में इन वार्तिकों की व्यवस्था नहीं है, अतः व्याख्याकारों ने कहा है कि 'वध' धातु के साहचर्य से मान धातु भी भौवादिक ही ली जाएगी, चौरादिक नहीं। इस प्रकार भ्वादिगण की मान धातु वस्तुतः जिज्ञासार्थक पढ़नी चाहिए, परन्तु उपलब्ध धातुपाठ में इसे भी पूजार्थक ही पढ़ा गया है। व्याख्याकारों के अनुसार पूजार्थ में चौरादिक मान धातु से 'मानयति, मानः' आदि शब्द बनते हैं। फलतः किसी में भी उत्कर्ष या अपकर्ष नहीं कहा जा सकता है।

**[विशेष वचन]**

१. अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते (दु० वृ०)।

२. वधादिसाहचर्याद् भौवादिकस्य मान इह ग्रहणम्, तस्मात् "मान्वध्दान्शान्भ्यो जिज्ञासावैरूप्यार्जवनिशानेषु" इति न वक्तव्यम्, यतोऽभिधानव्यवस्थाप्युक्तैव (दु० टी०)।

३. तथापि भौवादिकैर्वधादिभिः साहचर्याद् भौवादिकस्यैव मानो ग्रहणमिति (वि० प०)।

४. कितिरुभयपदीति हरिस्वामी। तेन चिकित्सते इति च मन्यते इत्युपाध्यायसर्वस्वः। वर्धमानोपाध्यायोऽपि खण्डनप्रकाशे चिकित्सते इति पाठः साधुरित्याचष्टे। मुरारिप्रयोगेऽपि 'न बालतां हन्तुमनाश्चिकित्सते' इति दृश्यते। वस्तुतस्तु अन्तर्भूतेनर्थस्य कितः कर्मकर्तृविवक्षया रुचादिवचनादात्मनेपदमिति (क० च०)।

**[ रूपसिद्धि ]**

१. **मीमांसते।** मान् + सन् + ते। 'मान पूजायाम्' (१।४६९) धातु से स्वार्थ में प्रकृत सूत्र द्वारा सन् प्रत्यय, द्विर्वचनादि, अभ्यासगत 'मा' का शेष-न् का लोप, "ह्रस्वः" (३।३।१५) से ह्रस्व, "सन्यवर्णस्य" (३।३।२६) से अकार को इकार, प्रकृत सूत्र द्वारा ह्रस्व इकार को दीर्घ आदेश, "मनोरनुस्वारो धुटि" (२।४।४४) से न् को अनुस्वार, 'मीमांस' की धातुसंज्ञा, ते प्रत्यय, अन् विकरण, सन्प्रत्ययगत अकार को अकार तथा अकार का लोप।

२. **बीभत्सते।** बध् + सन् + ते। 'बध बन्धने' (१।४७०) धातु से स्वार्थ में प्रकृत सूत्र द्वारा सन् प्रत्यय, द्विर्वचनादि, 'ब' का शेष-ध् का लोप, इत्त्व, दीर्घ, "तृतीयादेर्घढ०" (३।६।१००) इत्यादि से ब् को भ्, "अघोषेष्वशिटां प्रथमः"

(३।८।९) से ध् को त्, 'बीभत्स' की धातुसंज्ञा, वर्तमानासंज्ञक – आत्मनेपद– प्रथम पुरुष – एकवचन 'ते' प्रत्यय, अन्विकरण, अकार को अकार तथा उसका लोप।

३. **दीदांसते।** दान् + सन् + ते। 'दान् अवखण्डने' (१।६०१) धातु से स्वार्थ में प्रकृत सूत्र द्वारा सन् प्रत्यय, द्विर्वचनादि, आकार को ह्रस्व, इत्त्व, दीर्घ, न् को अनुस्वार, 'दीदांस' की धातु संज्ञा तथा विभक्तिकार्य।

४. **शीशांसते।** शान् + सन् + ते। 'शान तेजने' (१।६०२) धातु से स्वार्थ मे प्रकृत सूत्र द्वारा सन् प्रत्यय, द्विर्वचनादि, आकार को ह्रस्व, इत्त्व, दीर्घ, न् को अनुस्वार, 'शीशांस' की धातुसंज्ञा एवं विभक्तिकार्य ॥४५३।

## ४५४. धातोर्वा तुमन्तादिच्छतिनैककर्तृकात् [३।२।४]

**[सूत्रार्थ]**

इच्छार्थ-धातु के साथ समानकर्तृक तुमन्त धातु से पर में सन् प्रत्यय विकल्प से प्रवृत्त होता है ॥४५४।

**[दु० वृ०]**

वा तुमन्तो यस्येति विग्रहः। वा तुमन्ताद्धातोरिच्छतिनैककर्तृकात् सन् परो भवति। कर्तुमिच्छति चिकीर्षति। भोक्तुमिच्छति बुभुक्षते। सना द्योतितत्वादिषेर-प्रयोगः। **केचित् "सनि चानिटि"** (३।५।९) इति ज्ञापकात् तुम्विषयादित्याहुः। धातोरिति किम् ? प्राचिकीर्षत्। तुमन्तादिति किम् ? भोजनमिच्छति। इच्छायामिति सिद्धे एककर्तृकादिति स्पष्टार्थम्। इच्छासनन्तात् सन्न भवति, स्वात्मनि क्रिया-विरोधात्। कथं नदीकूलं पिपतिषति, श्वा मुमूर्षति ? यथा वाक्यं तथेदं **विवक्षयेति** मतम् ॥४५४।

**[दु० टी०]**

धातोः०। वा तुमन्तो यस्येति। अन्तशब्दोऽत्र समीपवचनः, सन् भवन् वचनात् तुमः पर एवावसीयते। यद्यपि तुम्-धातोरुपलक्षणं तथापि प्रकृत्यंशमापतति तुमो धातुनाभिसंबन्धात्। यदि वा **"सनि चानिटि"** (३।५।९) इत्यत्र गुणनिषेधात् **"स्वरान्तानां सनि"** (३।८।१२) इति दीर्घविधानाच्च तुमः पूर्व इति **"ते धातवः"** (३।२।१६) इति वचनात् सनः पूर्वे वर्तमानादयः, तुमस्तु स्थितिः स्यात्। तस्मात् तुमो लुग् वक्तव्यो नेति भावः। सना द्योतितत्वादुपपदार्थः स्वयमेव निवर्तते तुम् इत्याह – सना द्योतितत्वादित्यादि।

यद्येवं वावचनमनर्थकं **वृत्तिवाक्ययोः** खलु स्वभावसिद्धत्वात् ? सत्यम् । वाक्यविषये वृत्तिरारभ्यमाणा वाक्यं निवर्तयेदिति । इच्छतेरन्यत्र तदर्थे तुम्प्रयोगस्यासम्भवात् । **कश्चिद्** आह – वा तुमन्तादिति । तुमन्तेन पदेन वाशब्दस्यात्र सम्बन्धः, तेन बुद्धिसम्प्रधारणया कृञः प्रकृत्यवस्थायामेव सन्निति इच्छतीत्यत्र उपपदं न प्रयुज्यते, इच्छार्थविवक्षायामेव सन्, तदा तु इच्छायामिति कथं न विदध्याद् वाग्रहणमपि न कर्तव्यमेव स्यात्, कर्तुमिच्छतीति वाक्यस्य पृथक्पदेनाभिधानात्, किन्तु **प्रतिपत्तिरियं गरीयसीति** इच्छतिनेति विदध्यात् । तस्मात् पूर्व एव पक्षो ज्यायान् । इषु इच्छायामिति तुदादौ (५।७०), इच्छा च कान्तिरुच्यते ।**'इष आभीक्ष्ण्ये'** इति क्रैय्यादिकस्य (८।४५) निरसनं छत्वनिर्देशात् । इह तर्हि प्राप्नोति पुत्रं द्रष्टुमन्विच्छतीति **"वुण्तुमौ क्रियायां क्रियार्थायाम्"**(४।४।६९) इति तुम्, न दोषः । यथाश्रुतपरिग्रहादनुपूर्वोऽन्वेषणायां वर्तते । किञ्च **"इच्छार्थेष्वेककर्तृकेषु"** (४।५।१०६) इति विहितस्य तुमो ग्रहणमिह तत्करणस्य सम्भवात् । इच्छा च कान्तिक्रियस्यैव निपातनम् अन्यत्रैषा इष्टिरिति **"कीर्तीषोः क्तिश्च"**(४।५।८६) इति विधानात् ।कर्तुमिच्छति कामयते अभिलषतीत्यर्थः । धातुग्रहणं किमर्थं तद्विशेषणं तुमन्तादित्यप्यनर्थकः । न च नाम्नः स्यात्, एकः समानः कर्ता यस्येति, अर्थात् क्रियैव, ततः कार्यासम्भवात् तद्वाचिनः स्यात् । यस्य कर्तुर्द्वे क्रिये साध्ये अभेदादित्यर्थः ।अथ भावान्तोऽपि क्वचित् कृदेककर्तृके आसनमिच्छतीति । नन्वत्र यिना भवितव्यम्, यत्र यिन्नास्ति सोऽस्य विषयो मान्ताव्ययकृत् कर्तुमिच्छतीति, नात्र बाधा भिन्नविषयत्वात् । प्रकृत्यवस्थायां यिन्वाक्ये सन् विधीयते कुर्वन्निच्छतीति वा प्राप्नोति, तर्हि तुमन्ताद् इत्यास्ताम् ? सत्यम्, धातुग्रहणं धातुपरिमाणार्थम् । तेन सोपसर्गान्न भवतीत्याह – धातोरित्यादि । ननु च धातोस्तुम् विहितस्तदादेस्तदन्तस्य च ग्रहणं तद्विधानाभावात् तदविनाभावात् तेन तुमन्तस्य सनन्तस्य धातुसंज्ञोपसर्गरहितस्यैवेत्युपसर्गात् परोऽड् भविष्यति ? सत्यम् । **मन्दधियां बोधार्थमिति** धातुग्रहणम् ।

किञ्च धातुमाश्रित्य यदसार्वधातुकं तस्यादेरिडिति व्याख्यास्यति । यदीह धातुग्रहणं न स्याद् यथा जुगुप्सते इत्यादाविड् न भवति, तथा आशिश्रयिषत इत्यादावपीति । अन्तग्रहणं किमर्थं तुमः सन्नादेशश्चेद् आस्ताम्, सिद्धं यत् साध्यम् । न च तदुपपदस्य स्थितिः स्यात् तदादेशत्वात् सन इति । अथैककर्तृकग्रहणसामर्थ्याद् धात्वन्ते सना द्योतितत्वं सिद्धं तदादेशेऽपीति । ननु इच्छतिना भोक्तुं शक्नोतीत्युपपदान्तरं व्यावर्त्यते । तर्हि तदन्तविशेषणतया आदेशतया वा **प्रतिपत्तिगौरवं** स्यादिति । कथं चिकीर्षितुमिच्छतीति वाक्यमेवेत्याह – इच्छासनन्तादित्यादि आत्मीये आत्मनि क्रिया यतो विरुध्यते । नहि संभवोऽस्ति कस्यचित् स्वं स्कन्धमारोढुं तद्वदिहापि जातौ पदार्थे

एकत्वादिच्छासनः स्वात्मनि प्रकृतिविधिभावोऽनुपपन्नः। एकमेवेदं वाक्यम्। न हि इच्छासनो विधानकाले इच्छासनन्तप्रकृतिरस्ति। अथवा सनन्तात् करोत्यर्थान्तर्भूतेच्छार्थाद् यावान् पुनरिच्छतिर्विवक्ष्यते स पूर्वोत्पन्नेनैव सनाभिधातुं शक्यते। इदमेव सनः स्वरूपं यत् प्रकृतिरूपापन्न एव स्वार्थमभिधत्ते इति। इह तु भवत्येव जुगुप्सिषते। नाशङ्कायां सन् वक्तव्य इत्याह– नदीत्यादि। यथा कटं चिकीर्षुं रज्जुकीलपूलपाणिं दृष्ट्वा हीच्छा गम्यते। तथा कूलस्यापि अचतनस्य लोष्ट्राः शीर्यन्ते भेदाश्च जायन्ते इति प्रवृत्तित इहापीच्छा प्रतिपद्यत इति। **को हि नाम लौकिकीं विवक्षामतिवर्तते।** तथा शुनश्चेतनावतोऽपि मरणविषया न संभवति इत्यपि न चोद्यमेव। **अन्य** आह– उपमानाद् वा पिपतिषतीव मुमूर्षतीव। इवशब्दो हि केनचित् सादृश्यसामान्योद्देशेन वर्तते। यथा गौर्वाहीकः। तथेहापि कूलस्य पुरुषस्य च पातसामान्यमस्ती**त्युपचारः। साध्यापि क्रिया** यथा विशेषणविशेष्यादीन् सम्बन्धविशेषान् प्रतिपद्यते तथोपमानतामिति ॥४५४।

## [वि० प०]

धातोः। वा तुमन्त इत्यादि। ननु कस्यापि धातोस्तुम् न विकल्पितस्तत्कथमिदमुच्यते ? तथाहि "**इच्छार्थेष्वेककर्तृकेषु तुम्**" (४।५।१०६) इति विहितस्य तुम इह ग्रहणं तदर्थस्य सम्भवात्, न च तत्र विकल्पोऽस्तीति ? सत्यम्। अत एव वावचनाद् विभाषया तुमनुमीयते। तेन प्रकृत्यवस्थायामेव धातोरिच्छार्थे बुद्ध्या सम्प्रधारिते सन् प्रत्यय इति। एतेन **परमत**मादर्शितम्। अस्य तु मते वाशब्देन सन एव सम्बन्धः। तुमन्तात् सन् वा भवतीति। एतत्तु पश्चाद् वक्ष्यति। कर्तुमिच्छति चिकीर्षतीति तुमन्तात् सन्। सना द्योतित इच्छतेरर्थ इति उक्तार्थत्वादिषेरप्रयोगः। तदप्रयोगे च तन्निमित्तस्तमपि निवर्तते इति तन्निवृत्तौ गुणस्यापि तन्निमित्तस्य निवृत्तिरिति धातोः स्वरूपेणावस्थानम्। ततो "**नाम्यन्तानामनिटाम्**" (३।५।१७) इति सनोऽगुणत्वात् "**स्वरान्तानां सनि**" (३।८।१२) इति दीर्घत्वे "**ॠदन्तस्येरगुणे**" (३।५।४२) इति इर्। "**नामिनो र्वोः**" (३।८।१४) इत्यादिना दीर्घः। द्विर्वचनं ह्रस्वः, कवर्गस्य चवर्गः।

एवं बुभुक्षते इति "**सनि चानिटि**" (३।५।९) इति अत्रागुणत्वमस्ति। सनेत्यादि। एतेन तुमन्तात् सन्, तुमश्च लोपमन्तरेणापि स्थितिरेव स्यात्। अतस्तुमो लुग् वक्तव्यः इति चोद्यं च निरस्तमिति भावः। **केचिदि**त्यादि। यदि साक्षात् तुमन्तादयं सन् प्रत्ययः स्यात् तदा तुमि धातोः प्रागेव गुणो वृत्त इति कथं गुणनिषेधार्थं "**सनि चानिटि**" (३।५।९) इति वचनं घटते इति भावः। अत एव वा तुमन्तो यस्येति विग्रहः। वाशब्दस्य तुमन्तेन पदेन सम्बन्ध इति सूत्रार्थे मतान्तरमाविर्भावयतीति। अथ धातोरिति तुमन्तादिति च तद्विशेषणं किमर्थम्। नाम्नो मा भूदिति चेत् तदयुक्तम्। इच्छतिना

एकः समानः कर्ता यस्येति विग्रहे, अर्थात् क्रियालक्षणोऽर्थः प्रतीयते, न ह्यक्रियायाः कर्ता सम्भवति, अर्थे च कार्यासंभवात् तद्वाचिनो धातोरेव सन् भविष्यति। नैवम्, भोजनमिच्छति इत्यत्रापि स्यात्। अयमपि भावे कृदन्तः। इच्छतिनैककर्तृक इति। तदप्ययुक्तम्। अपवादत्वादिह यिन्प्रत्यय एवास्ति बाधकः। भोजनीयतीति। तस्माद् यत्र यिन्नास्ति तत्र व्यवस्थितवास्मरणेन सोऽस्य विषयः– मान्ताव्ययकृत्। तद् यथा कर्तुमिच्छतीति। अथ यिन् प्रकृत्यवस्थायां विधीयते, वाक्ये च सन् प्रत्ययः। ततो भिन्नविषयत्वात् कथं यिनो बाधकत्वमिति चेत्, तदयुक्तम्। यिन्नपि हि कर्मणो विधीयते। कर्म च क्रियापेक्षमिति तस्यापि वाक्य एव विधानमिति कथं भिन्नविषयता, नहि भोजनमिच्छति भोक्तुमिच्छतीति इच्छार्थोपाधिके वाक्ये सन्-यिनोर्विधानभेदं पश्यामः। येन सन् वाक्ये विधीयते, यिंश्च प्रकृत्यवस्थायामित्युच्यते ? सत्यमेतत्। किन्तु कुर्वन्निच्छतीति वाक्ये प्राप्नोति। तस्मादेतन्निवृत्त्यर्थं क्रियमाणं तुमन्तग्रहणं भोजनमिच्छतीत्यादिकमपि व्यावर्तयतीति। धातुग्रहणमपि धातुपरिमाणार्थम्। तेन सोपसर्गसमुदायस्य न भवतीत्याह– धातोरित्यादि। यदि पुनः सोपसर्गसमुदायात् सन् प्रत्ययः स्यात् तदा **"ते धातवः"** (३।२।१६) इति समुदायस्य धातुसंज्ञा स्यात्। ततो धातोरादिरडागमो भवन् प्रशब्दात् पूर्वमेव प्राप्नोति, न धातोः।

ननु धातोस्तुम्प्रत्ययो विधीयते, न तु सोपसर्गसमुदायात्। अतो धातुरुपसर्गरहित एव तुमन्त इति उच्यते। तुमन्तात् सन् भवन् कथं सोपसर्गसमुदायाद् भवितुमर्हतीति ? सत्यम्। **सुखार्थमेव** धातुग्रहणम्। अन्यथा प्रकर्तुमैच्छदिति वाक्ये सनो विधाने सोपसर्गस्यैव धातुत्वं **मन्दधियः** प्रतिपद्येरन्निति। किञ्च धातुसंज्ञामाश्रित्य यदसार्वधातुकं तस्यापीडागमं वक्ष्यति। अतो यदि धातुग्रहणं न कृतं स्यात्, तदा यथा जुगुप्सते इत्यादिष्विडागमो न भवति, तथा शिश्रयिषतीत्यादिष्वपि न भवति। अस्यापि सनस्तुमन्तमाश्रित्य भवतो धातुसंज्ञाश्रितत्वानुपपत्तेरिति। ननु चिकीर्षितुमिच्छतीति वाक्ये सनन्तात् पुनः कथं सन् न भवतीत्याह– इच्छासनन्तादित्यादि। स्वशब्द आत्मीयपर्यायः। स्वश्चासावात्मा चेति **स्वात्मा** तस्मिन्निति।

**अयमर्थः–** जातौ पदार्थे एक एवायमिच्छासन्प्रत्ययः, न चैकस्मिन् प्रकृतित्वं प्रत्ययत्वं च युज्यते, विरोधात्। प्रकृतिर्हि निष्पन्ना प्रत्ययोत्पत्तौ कारणं भवति, न चेह इच्छासनो विधानकाले, इच्छासनन्ता निष्पन्ना प्रकृतिरस्तीति तस्य तद्विधानस्यैकत्वात्। यथा कश्चित् सुशिक्षितोऽपि नटपटुः स्वस्कन्धमारोढुं न शक्नोति, तथेहापीति। यत्र तु भिन्नविषयत्वान्न विरोधः, तत्र भवत्येव। यथा जुगुप्सितुमिच्छतीत्यादि वाक्ये जुगुप्सिषते, मीमांसिषते इत्यादीति। 'आशङ्कायामुपसंख्यानम्' इति **कश्चित्,** तदिह

न वक्तव्यमित्याह – नदीत्यादि। इवन्तर्द्धेत्यादिना पतेरिड् वा। पतितुमिच्छति मर्तुमिच्छतीति यथा वाक्यं तथेदं पिपतिषतीत्यर्थः। वाक्यमेव तर्हि कथमित्याह – **विवक्षयेति।** एतदुक्तं भवति – यथा काशादिकं दधानं पुरुषं दृष्ट्वा इच्छा गम्यते कटमेव कर्तुमिच्छतीति तद्वदचेतनस्यापि नदीकूलस्य लोष्ट्राणि शीर्यन्ते भिदाश्च जायन्ते इति दर्शनादिच्छा गम्यते – नदी कूलं पतितुमिच्छतीति। तथा शुनः सचेतनस्यापि मरणेच्छा न संभवतीति न देश्यम्, तस्याप्यस्थिचर्मविशेषतया मर्तुमिच्छतीति **लोके विवक्षादर्शनात्।** ननु तुमन्तादिच्छतिनैककर्तृकादिति एतावतैव सन् भवति, ततस्तुमं प्रत्येव यतितव्यं तस्यैव सनुत्पत्तेर्निमित्तत्वात्। तत् किमिदमुच्यते, यथा वाक्यं तथेदमिति ? सत्यम्। एवं योज्यते **वृत्तिः – भवन्मते** वाक्यं तर्हि कथम्, न हि तुमं प्रति भवतो वाक्यमस्तीति ? सत्यम्। **विवक्षया वाक्यमिति परः।** एवं तर्हि यथा **भवन्मते वाक्यम्,** तथात्रापि **विवक्षयेदं वाक्यम्।** ततश्च सन् प्रत्यय इत्यदोषः ॥४५४।

**[क० च०]**

धातोः। ननु समानकर्तृकत्वं क्रियाया एव घटते न तु धातोः। अथ धातुशब्द एवार्थपरः,तर्हि कथमर्थस्य तुमन्तत्वमिति, परस्परविरोधात् सनो विध्यनुपपत्तिः ? सत्यम्। अर्थस्यैककर्तृकत्वात् तद्वाचको धातुरपि एककर्तृक उच्यते, अर्थधर्ममादायोपचारात्। धात्वर्थस्येच्छा कर्मत्वे सत्येव विधिरयम्,॰तेन स्थातुं गृहमिच्छतीत्यर्थे गृहं तिष्ठासतीति प्रयोगो न स्यात्, इच्छार्थान्वयेन (इच्छासनन्वयेन तुमन्तस्य) व्याप्यत्वाभावात्। किन्तु गृहे स्थातुमिच्छतीत्यर्थे गृहे तिष्ठासति इत्येव प्रयोगः स्यादिति चेदेवमपि स्यात् चेत्, न। अभिप्रायापरिज्ञानात्। तथाहि तुमन्तप्रकृत्या सह सन एकार्थीभावात् कर्मान्तरान्वयानुपपत्तेः कुतः सनर्थभूतायाः इच्छायाः कर्म गृहं भवितुमर्हतीति **महान्तः।** तदसङ्गतमिव लक्ष्यते, यदि तुमन्तेन सह कर्मान्तरानन्वयः, कथं तदा कटस्य चिकीर्षा इत्यादि प्रयोगः स्यात्, नहि सना सह कटस्यानन्वये सति कटस्य कर्मत्वं भवितुमर्हतीति।

अथ करोतेर्व्याप्यत्वेन कटस्य कर्मत्वमिति चेत्, न। तदा कटमिति द्वितीयैव प्राप्नोति, न तु षष्ठीति। यावता सनन्तसमुदायस्यैव कृदन्तत्वं तदन्वयेनैव कर्तृकर्मणोरित्यस्य विषय इति, तस्मादेकार्थीभावेऽपि **'गुणीभूतापि क्रिया साधनसम्बन्धमनुभवति'** इति न्यायात् कर्मान्तरेणाप्यन्वयः। कथमन्यथा 'पुत्रीयति माणवकम्' इत्यत्र माणवकस्य कर्मत्वमिति ब्रूमः। ननु सूत्रे एकग्रहणात् कटं कर्तुं देवदत्ताविच्छतः इत्यत्र सन् न स्यात्, अत एव **पाणिनिना "समानकर्तृकादिच्छार्थे"** (अ० ३।१।७) इति सूत्रं कृतं चेद् **अस्मन्मतेऽ**प्येकशब्दः समानार्थक इति। सना द्योतितत्वादिति **वृत्तिः,** उक्तार्थत्वा-

दित्यर्थः । ननु कथम् इषेरप्रयोगः, येन तुमपि निवर्तते । न हीच्छार्थे सन् विधीयते, अपि तु इच्छतिना समानकर्तृकात् तुमन्तादिति, ततश्चेच्छति चिकर्तुं सतीत्यनिष्टरूपं स्यात् ? सत्यम् । **"यस्मै दित्सा"** (२।४।१०) इति ज्ञापकाद् यिन्वद् इच्छार्थे सन्नपि विधीयते इति **पञ्जी । "सनि चानिटि"** (३।५।९) इति । ननु कथमिदं ज्ञापकं यत्र तुम् नास्ति, तत्रैव तस्य चरितार्थत्वात्, यथा जुगुप्सते इत्यादि ? सत्यम् । **"सनि चानिटि"** (३।५।९) इत्यत्रानिड्ग्रहणं व्यर्थम् । न हि गुपादीनामिडस्ति येनानिटीत्युच्यते तस्मादनिड्ग्रहणात् तुम्विषयात् सन् स्यादिति । सूत्रार्थ इति । विप्रतिपन्नं प्रत्याह – किञ्चेति । वक्ष्यतीति **"तृतीयादेर्घढधभान्तस्य"** (३।६।१००) इत्यत इडागमसूत्रे धातोरित्यधिकारादिति शेषः । 'जुगुप्सते' इत्यादौ धातुसंज्ञाश्रितो न सन्प्रत्ययः, किन्तु गुपाद्याश्रित इति । तथा शिश्रयिषतीत्यादि । अथ **"सनि चानिटि"** (३।५।९) इति ज्ञापकादिड् भविष्यति चेत्, नैवम् । तस्मादेव ज्ञापकाज्जुगुप्सते इत्यादावतिप्रसङ्गात् । **व्यक्तिपक्ष**मवलम्ब्य पूर्वपक्षयति – नन्वित्यादि । **जातिपक्ष**मवलम्ब्य समाधत्ते – स्वशब्देत्यादि । 'क्वचिज्जातिः क्वचिद् व्यक्तिः' इति तु लक्ष्यवशादेव मन्तव्यम् । तथा च,

**मत्वर्थादपि मत्वर्थः शैषिकादपि शैषिकः ।**
**सरूपप्रत्ययो नेष्टः सनन्तात् संश्च नेष्यते ॥**इति ।

**अयमर्थः –** मत्वर्थात् सरूपमत्वर्थप्रत्ययो नेष्टः । यथा दण्डोऽस्यास्तीति **दण्डवान्,** पुनर्दण्डवानस्यास्तीति न वन्तुप्रत्यय इति । विरूपप्रत्ययस्तु भवत्येवेति । दण्डवानस्यास्तीति (दण्डी अस्यास्तीति) दण्डिमती शाला । अपत्यादिभ्योऽदूरे च इति पर्यन्तेभ्यो योऽर्थः, स **शेषः पाणिनितन्त्रे** प्रसिद्धः, तत्र भवः प्रत्ययः शैषिकः । यथा शालायां भवः शालीयः, शालीये भवः इत्यर्थे पुनरीयो न भवति । विरूपस्तु भवत्येव, यथा अहिच्छत्रस्यापत्यम् आहिच्छत्रिः । तस्मादीयः आहिच्छत्रीयः, तथा सनन्तादपि सरूप इति सम्बध्यते । तत्र यद्यपि सनः समानरूपस्य व्यभिचारो नास्ति, तथापि विशेषणसामर्थ्यादत्र सारूप्यमाश्रीयते, तेनेच्छासनन्तात् सन्न भवति । अन्यत्र तु भवत्येवेत्याह – यत्रेत्यादि । **'आशङ्कायामुपसंख्यानम्'** (वा०) इति । योगविभागादियमिष्टसिद्धिरिति **पाणिनीयाः ।** अहमाशङ्के नदीकूलं पतितुमिच्छतीत्यर्थः ॥४५४।

**[ समीक्षा ]**

इच्छा अर्थ में धातु से सन् प्रत्यय का विधान दोनों ही आचार्यों ने किया है । पाणिनि का सूत्र है – **"धातोः कर्मणः समानकर्तृकादिच्छायां वा"** (अ०३।१।७) । अतः कर्तुमिच्छति अर्थ में 'चिकीर्षति' हर्तुमिच्छति अर्थ में 'जिहीर्षति' शब्द सिद्ध होते हैं ।

[ विशेष वचन ]

१. इच्छायामिति सिद्धे एककर्तृकादिति स्पष्टार्थम् (दु० वृ०)।

२. इच्छासनन्तात् सन्न भवति स्वात्मनि क्रियाविरोधात् (दु० वृ०)।

३. वृत्तिवाक्ययोः खलु स्वभावसिद्धत्वात् (दु० टी०)।

४. मन्दधियां बोधार्थमिति धातुग्रहणम् (दु० टी०)।

५. को हि नाम लौकिकीं विवक्षामतिवर्तते, तथा शुनश्चेतनावतोऽपि मरणविषया न सम्भवति (दु० टी०)।

६. सुखार्थमेव धातुग्रहणम्। अन्यथा प्रकर्तुमैच्छदिति वाक्ये सनो विधाने सोपसर्गस्यैव धातुत्वं मन्दधियः प्रतिपद्येरन्निति (वि० प०)।

७. विवक्षया वाक्यमिति परः। एवं तर्हि यथा भवन्मते वाक्यम्, तथात्रापि विवक्षयेदं वाक्यम्, ततश्च सन्प्रत्यय इत्यदोषः (वि० प०)।

८. अर्थस्यैककर्तृकत्वात् तद्वाचको धातुरपि एककर्तृक उच्यते अर्थधर्ममादायोपचारात् (क० च०)।

९. अस्मन्मतेऽप्येकशब्दः समानार्थक इति (क० च०)।

१०. जातिपक्षमवलम्ब्य समाधत्ते – स्वशब्देत्यादि। क्वचिज्जातिः क्वचिद् व्यक्तिरिति तु लक्ष्यवशादेव मन्तव्यम् (क० च०)।

११. आशङ्कायामुपसङ्ख्यानम् इति योगविभागादियमिष्टसिद्धिरिति पाणिनीयाः (क० च०)।

[ रूपसिद्धि ]

१. **चिकीर्षति।** कर्तुमिच्छति। कृ + सन् + इति। 'डु कृञ् करणे' (७।७) धातु से इच्छा अर्थ में प्रकृत सूत्र द्वारा सन् प्रत्यय, न् अनुबन्ध का प्रयोगाभाव, "इडागमोऽसार्वधातुके" (३।७।१) से इडागम की प्राप्ति, "ऋतोऽवृङ्वृञः" (३।७।१६) से उसका निषेध, "स्वरान्तानां सनि दीर्घः" (३।८।१२) से ऋ को दीर्घ, "सनि चानिटि" (३।५।९) से अगुण, "ॠदन्तस्येरगुणे" (३।५।४२) से ॠ को इर्, "द्विर्वचनमनभ्यासस्य०" (३।३।१) के अधिकार में, "चण्परोक्षा" (३।३।७) से 'किर्' का द्वित्व, "पूर्वोऽभ्यासः" (३।३।४) ने अभ्याससंज्ञा, "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) ने आदि व्यञ्जन 'कि' का शेष, "कवर्गस्य चवर्गः" (३।३।१३) से क् के स्थान में च्, "नामिनो र्वोः" (३।८।१४) से कि–गत इकार को दीर्घ, "निमित्तात्०" (३।८।२६) से सकार को षकारादेश,

'चिकीर्ष' की "ते धातवः" (३।२।१६) से धातुसंज्ञा, "पूर्ववत् सनन्तात्" (३।२।४६) से ति प्रत्यय, "अन् विकरणः" (३।२।३२) से अन् विकरण, "असन्ध्यक्षरयो०" (३।६।४०) से चिकीर्ष-गत अकार को अकार तथा निमित्तभूत अन् के अकार का लोप।

२. **बुभुक्षते।** भोक्तुमिच्छति। भुज् + सन् + ते। 'भुज् पालनाभ्यवहारयोः' (६।१४) धातु से इच्छार्थ में प्रकृत सूत्र से सन् प्रत्यय, न् अनुबन्ध का प्रयोगाभाव, "युजिरुजि०" (३।७।२०) इत्यादि से अनिट्, "सनि चानिटि" (३।५।९) से अगुण, द्विर्वचन, अभ्याससंज्ञा, आदि व्यञ्जन का शेष, "द्वितीयचतुर्थयोः" (३।३।११) से भ् को ब्, "चवर्गस्य किरसवर्णे (३।६।५५) से ज् को क्, स् को ष्, 'बुभुक्ष' की "ते धातवः" (३।२।१६) से धातुसंज्ञा, ते-प्रत्यय तथा अन् विकरण ॥४५४।

## ४५५. नाम्न आत्मेच्छायां यिन् [३।२।५]

**[सूत्रार्थ]**

आत्म – इच्छा अर्थ में नाम पद से यिन् प्रत्यय होता है ॥४५५।

**[दु० वृ०]**

नाम्न आत्मेच्छायामर्थे यिन् परो भवति। पुत्रमिच्छति **पुत्रीयति**। एवं घटीयति। आत्मशब्दोऽत्राध्यात्मवचन एव **मन्दधियां सुखार्थः**। भ्रातुः पुत्रमिच्छति, आत्मनः पुत्रमिच्छति, महान्तं पुत्रमिच्छतीति [1]सापेक्षत्वात्। भ्रातृपुत्रीयतीति युक्तार्थत्वात्। इच्छया नाम्नः सम्बन्धाद् दात्रेणेच्छतीत्यकर्मणो न स्यात् सापेक्षत्वाद् वा। व्यवस्थित-वास्मरणान्मान्ताव्ययाभ्यां न स्यात् किमिच्छति, स्वरिच्छति ॥४५५।

**[दु० टी०]**

नाम्नः। आत्मन इच्छा **आत्मेच्छा।** अथात्मग्रहणं किमर्थम्, यदन्तर्व्यापारपुरुष-वचनोऽयं स्यात् तदेच्छाया आत्मसमवायाद् विशेषणवैयर्थ्यम्, परात्मनश्चानिवृत्तिः। अथ परनिवृत्तिवचनो वा आत्मेच्छायां यथा स्यात्, परेच्छायां मा भूदिति। तदापि भ्रातुः पुत्रमिच्छतीत्यत्र यिन्प्रसङ्गः। **कश्चित्** सिद्धान्तयति। एषणम् इच्छा, आत्मन

---

१. ननु चैत्रस्य गुरुकुलमित्यादाविव भ्रातुःपुत्रीयति, आत्मनः पुत्रीयति। आत्मनः पुत्रीयतीत्यादौ पुत्रादावात्मप्रभृतेः प्रतियोगिविधयाऽन्वयस्य शिष्टतया कुतो न यिन्? सत्यम्। यिनः प्रकृतिभूतस्य नाम्नो यत् प्रवृत्तिनिमित्तं तेन रूपेण प्रकृत्यर्थस्येच्छाविषयत्वं यिन्प्रत्ययेनाभिधीयते। तेन आत्मपुत्रत्वस्य प्रकृत्यर्थप्रवृत्तिनिमित्तत्वाभावेन तद्रूपेण पुत्रस्येच्छाविषयतायां यिन् प्रत्ययो न भवितुमर्हति। एवं दुःखत्वेन दुःखस्य इच्छाविषयत्वाभावाद् दुःखमिच्छतीत्यादावपि न यिन् प्रयुज्यते इति **न्यायालङ्काराः** [सं० – टि०]।

इति कर्तरि षष्ठी, न ह्यकर्तरीच्छा वर्तते इति । नाम्नः इच्छा । सम्बन्धश्चेद् वचनाद् असम्बन्धेऽपि समासो गमकत्वात् । आत्मनीच्छा **आत्मेच्छा** वा सप्तमीसमासः, आत्मसंबन्धिनि पुत्रादाविच्छायां नाम्नो यिन्निति । भ्रात्राद्यपेक्षमाणो हि पुत्रादिशब्दो यिना सहैकार्थीभावमुपगन्तुमसमर्थः । तद् यथा – सापेक्षोऽयं गृहादिषु न समर्थः केनचित् सह किञ्चित् कर्तुमिति सापेक्षत्वमसामर्थ्यस्य हेतुत्वेनोपदिष्टम्, तस्मान्नास्ति **वृत्ति**रिति ।

**अन्य** आह – 'अघ**मिच्छति**, दुःखमिच्छति' इति स्वपदापेक्षायां सामर्थ्यमस्ति । न चानिष्टं कश्चित् स्वकी**यमि**च्छति परस्येत्यर्थः । नैवं भवितव्यं सापेक्षतयैव । यदि चात्र सापेक्षत्वेऽपि स्यात् तदात्मनः पुत्रीयतीत्यपि स्यात् । न च शक्यं वक्तुमुत्पाद्यमानेन यिना आत्मार्थस्याविर्भूतत्वादात्मनोऽप्रयोगः इति प्रकृतिसमानाधिकरणस्यैव विशेषणस्य वृत्त्यन्तर्भावदर्शनात् । यथा अपूपाः पण्यमस्या **अपूपिकेति** । न तु भिन्नार्थस्य देवदत्तस्य गुरोः कुलं देवदत्तस्य गुरुकुलमिति देवदत्तपदं प्रयुज्यते एव स्वाम्यन्तरव्यवच्छेदकत्वात् तथेहाप्यात्मार्थस्य परव्युदासकत्वेनाश्रितस्यान्तर्भावो न युक्तः । कथन्तर्हि पुत्रस्यात्मीयभावावगम इति । लोकस्येच्छात्मविषयैवान्यस्य राजादेरश्रुतत्वाद् अप्रस्तुतत्वाच्च परविषया पुनर्नान्तरेण तद्वाचिशब्दप्रयोगमित्याह – आत्मशब्द इत्यादि । आत्मग्रहणेन विना श्रुतस्यैव नाम्नः इच्छया संबन्धात् कृर्तवाचिनोऽपि नाम्नः स्याद् देवदत्तः इच्छतीति । आत्मग्रहणेन तु सति आत्मना कर्त्रा नाम्नः कर्मण इत्यर्थः सिद्धो भवति । एवं सति करणादपि भवतीत्याह – इच्छयेत्यादि । सापेक्षं वेति कर्मपदापेक्षणादसामर्थ्यमिति **पक्षान्तरम्** । नामग्रहणं वाक्यनिवृत्त्यर्थम्, **वाक्यैकदेशोऽपि वाक्यम् इत्युपचारादि**त्यादिनापि विना न प्राप्नोतीति **पदसमुदायो वाक्य**मिति मतम् ॥४५५।

## [ वि० प० ]

नाम्नः । पुत्रीयतीति । "**यिन्यवर्णस्य**" (३।४।७८) इतीत्त्वम् । आत्मन इच्छा आत्मेच्छा । आत्मशब्दोऽन्तर्व्यापारपुरुषवचनः परप्रतियोगिवचनश्च संभवति । तत्र यद्याद्यस्यैव ग्रहणं स्यात् तदेच्छाया आत्मगुणत्वेन व्यभिचारासंभवादात्मन इच्छा आत्मेच्छेति विशेषणमनर्थकं स्याद् व्यवच्छेद्याभावात् । न ह्यनात्मन इच्छा संभवतीति परात्मनो निवृत्तिश्च न स्याद् अतो द्वितीयस्य ग्रहणमित्याह – आत्मशब्द इत्यादि । आत्मन्यधि **अध्यात्ममि**ति कारकार्थेऽव्ययीभावे सति अनन्तेति राजादिवचनाददत् । तद् वक्तीत्यध्यात्मवचनः । परनिवृत्तिवचनोऽयमात्मशब्द आत्मेच्छायां भवति, परेच्छायां न भवतीत्यर्थः ।यद्येवम्, किमात्मग्रहणेनेति, अन्यस्य देवदत्तादेरश्रुतत्वादेषितुरेवात्मसंबन्धिनीच्छा गम्यते इत्याह – **मन्दधियां सुखार्थ** इति । अन्यथा "**नाम्न इच्छायाम्**" इति सूत्रे

सति श्रुतस्यैव नाम्नः इच्छाक्रियाभिसंबन्धात् कर्तृवाचिनोऽपि नाम्नो यिन् स्यात् – देवदत्त इच्छतीति। आत्मग्रहणे तु आत्मन इति कर्तरि षष्ठी, कर्तृत्वं च सन्निधानादिच्छाक्रियाया एव, तेनात्मना कर्त्रा नाम्न इष्यमाणात् कर्मण इत्यर्थः सिद्धो भवति। भ्रातुरित्यादि।

नन्वात्मनः पुत्रमिच्छतीत्यत्रापि सापेक्षत्वाद् यदि यिन्प्रत्ययो न स्यात् तदा पुत्रस्य कथम् आत्मीयत्वावगमः ? सत्यम्। आत्मविषयैव लोकस्येच्छा न परविषया, सा च तद्वाचिशब्दप्रयोगमन्तरेणापि प्रतीयते। अथ दुःखमिच्छति, अघमिच्छतीति कथं यिन्न भवति, न ह्यत्र किञ्चिदपेक्षते ? सत्यम्। इहापि सापेक्षत्वमस्त्येव। **न हि कश्चिद् आत्मनो दुःखमिच्छति।** अर्थात् परस्यैवेत्यपेक्षते इत्यदोषः। आत्मन इति कर्तरि षष्ठी। नाम्नश्चेष्यमाणात् कर्मण इत्युक्तमेवेत्याह – इच्छयेत्यादि। अथवा दात्रेणेच्छतीति व्रीहींश्छेत्तुमिति कर्मपदमिहापेक्षते। अतः सापेक्षत्वादसामर्थ्यमिति **पक्षान्तरं** दर्शयति – सापेक्षं वेति ॥४५५।

[ क० च० ]

नाम्नः। ननु **"सुपः कर्मणः क्यच्"** (३।१।८) इति **परसूत्रम्,** तदभावेऽस्मन्मते करणादपि कथन्न स्यादित्याह – इच्छया नाम्न इत्यादि **वृत्तिः।** एतेनेच्छायाः सकर्मकत्वात् कर्माकाङ्क्षायां यस्मान्नाम्नो यिन् विधातव्यस्तस्यैव कर्मत्वं बोध्यम्। तेनेष्यमाणान्नाम्नो यिन् प्रत्ययो भवतीत्यर्थो लब्धः। ननु यदि इच्छया नाम्नः संबन्ध इत्युच्यते तथा कथमात्मेच्छा इत्यत्र समासः स्यात्। नाम्नः सापेक्षत्वेनात्मशब्देन सहेच्छाशब्दस्यासम्बन्धात् ? सत्यम्, **अभिधानात्** क्वचिदसम्बन्धेऽपि समासः। यथा 'असूर्यम्पश्या राजदाराः' इति। सापेक्षं वेति **पक्षान्तरमिति टीका। पञ्जी –** यद्यपि **'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च'** इत्यात्मशब्दो नानार्थः। तथापीह ब्रह्मवर्ष्मणोरेव ग्रहणं संभवतीत्याह – आत्मशब्द इत्यादि। अन्तः अन्तरे व्यापारः कार्यं सुखादिकं यस्य स तथा, पश्चात् पुरुषशब्देन कर्मधारयः। परप्रतियोगी शरीरलक्षणः। अथ शरीरमात्रेच्छा न सम्भवति मृतशरीरे व्यभिचाराच्चेद् अत्रापि आत्मविशिष्ट इति विशेषणं देयम्। **सुखार्थमिति।** अथ दुःखमेव किमित्याशयेन विवृणोति – अन्यथेति। यद्यात्मग्रहणं **सुखार्थं** न क्रियते इत्यर्थः। अथ देवदत्त इच्छतीत्यत्र यिनोऽप्रवृत्तिरेवात्मग्रहणस्य फलम्। तदा कथं **सुखार्थ**मिति चेदिदमुच्यते, तदा सापेक्षत्वादेव कर्तृभूतान्नाम्नः कर्मणोऽपेक्षया न भविष्यतीति **सिद्धान्तो** देयः। ननु यिन्विधौ युक्तार्थस्य

कः प्रसङ्गः, न हि युक्तार्थग्रहणं सूत्रेऽस्ति न वा सापेक्षे न भवतीति सूत्रं वर्तते ? सत्यम् । पदस्य प्रत्ययेन सह योगे युक्तार्थताऽस्ति इति । न च सापेक्षेऽपि प्रत्ययोऽनभिधानात् ॥४५५।

**[ समीक्षा ]**

कातन्त्रकार ने **इच्छा** अर्थ में नाम (स्याद्यन्तपद) से यिन् प्रत्यय करके 'पुत्रीयति, घटीयति' आदि शब्द सिद्ध किए हैं। पाणिनीय व्याकरण में इसके लिये क्यच् प्रत्यय का विधान है– "सुप आत्मनः क्यच्" (अ० ३।१।८)। क्यच् प्रत्यय करने पर "क्यचि च" (अ० ७।४।३३) सूत्र से ईकारादेश करना पड़ता है। कातन्त्र व्याकरण में इत्त्व एवं "नाम्यन्तानां यणायियिन्नाशीश्च्विचेक्रीयितेषु ये दीर्घः" (३।४।७०) से दीर्घ आदेश करने की आवश्यकता होती है। फलतः किसी में भी गौरव-लाघव नहीं कहा जा सकता।

**[ विशेष वचन ]**

१. आत्मशब्दोऽत्राध्यात्मवचन एव मन्दधियां सुखार्थः (दु० वृ०)।

२. इच्छया नाम्नः सम्बन्धाद् दात्रेणेच्छतीत्यकर्मणो न स्यात् सापेक्षत्वाद् वा। व्यवस्थितवास्मरणान्मान्ताव्ययाभ्यां न स्यात् – किमिच्छति, स्वरिच्छति (दु० वृ०)।

३. एषणम् इच्छा, आत्मनः इति कर्तरि षष्ठी न ह्यकर्तरीच्छा वर्तते इति। नाम्नः इच्छासम्बन्धश्चेद् वचनादसम्बन्धेऽपि समासो गमकत्वाद् (दु० टी०)।

४. न च शक्यं वक्तुमुत्पाद्यमानेन यिना आत्मार्थस्याविर्भूतत्वाद् आत्मनोऽप्रयोग इति प्रकृतिसमानाधिकरणस्यैव विशेषणस्य वृत्त्यन्तर्भावदर्शनात् (दु० टी०)

५. आत्मविषयैव लोकस्येच्छा न परविषया, सा च तद्वाचिशब्दप्रयोगमन्तरेणापि प्रतीयते (वि० प०)।

६. अभिधानात् क्वचिदसम्बन्धेऽपि समासः, यथा 'असूर्यम्पश्या राजदाराः' इति (क० च०)।

७. पदस्य प्रत्ययेन सह योगे युक्तार्थतास्तीति न च सापेक्षेऽपि प्रत्ययोऽनभिधानात् (क० च०)।

८. आत्मजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेत्।
कृतिजन्या भवेच्चेष्टा तज्जन्यैव क्रियोच्यते ॥ (वं० भा०)।

९. युक्तार्थघटकीभूतपदातिरिक्तपदसम्बन्धित्वं सापेक्षत्वम् (वं० भा०)।

**[ रूपसिद्धि ]**

१. **पुत्रीयति ।** पुत्रमिच्छति । पुत्रम् + यिन् + ति । 'आत्मेच्छा' अर्थ में 'पुत्रम्' इस स्याद्यन्त नाम - पद से प्रकृत सूत्र द्वारा यिन् प्रत्यय, इ-न् अनुबन्धों का प्रयोगाभाव, समास, "तत्स्था लोप्या विभक्तयः" (२।५।२) से द्वितीया विभक्ति, अम् का लोप, "यिन्यवर्णस्य" (३।४।७८) से इत्त्व, "ते धातवः" (३।२।१६) से धातु संज्ञा, ति – प्रत्यय, अन् विकरण तथा "नाम्यन्तानां यणायि०" (३।४।७०) से इत्त्व को दीर्घ आदेश ।

२. **घटीयति ।** घटम् आत्मनः इच्छति । घटम् + यिन् + ति । पूर्ववत् प्रक्रिया ।।४५५।

## ४५६. काम्य च [३।२।६]

**[ सूत्रार्थ ]**

आत्मेच्छा अर्थ में नाम पद से काम्य एवं यिन् प्रत्यय होते हैं ।।४५६।

**[ दु० वृ० ]**

नाम्न आत्मेच्छायामर्थे काम्यः परो भवति, चकाराद् यिंश्च । एतच्चोत्तरार्थमेवानन्तरः काम्यो मा भूदिति । पुत्रमिच्छति पुत्रकाम्यति ।इदंकाम्यति, स्वःकाम्यति ।।४५६।

**[ दु० टी० ]**

काम्य० । काम्येत्यविभक्तिकनिर्देशो **मन्दमतिबोधार्थः** । अन्यथा सकारान्त इत्यपि प्रतिपद्येत । यिंश्चेत्यादि । यिन् काम्य चेत्यर्थः । चकारसम्बन्धस्य काम्यस्याप्राधान्यादानन्तर्येऽपि सत्यनुवृत्तिर्न भवतीत्यर्थः । अत एव यिन्काम्याविति नैकयोगः । इष्टं च सिध्यति यिन् काम्य चेति प्रश्लेषनिर्देशेनेति । विपर्ययनिर्देशेन चकारः प्रत्याख्यातुं शक्यत एव, किन्तु **विचित्रा हि सूत्रस्य कृतिर्बोधजननीति** ।।४५६।

**[ क० च० ]**

काम्य० । न हि ककारोऽनुबन्धः प्रयोजनाभावात् । न हि यज्धातोः क्विपि कृते संप्रसारणम्, यथा उपयट् काम्यतीति । तत्र सूत्रे यजाद्याश्रितस्यैव यणादेर्ग्रहणात् । न ह्यत्र यजिमाश्रित्य काम्यो विहितः इति **न्यासः**, धातोर्विधीयमानं संप्रसारणम्, धात्वाश्रितप्रत्यय एव भवतीति **रक्षितः** । अथ इदंकाम्यति-स्वःकाम्यतीत्यादावेव काम्यस्य विषयः स्यात् । पुत्रकाम्यतीत्यादौ तु यिनो विषयबाधे किं प्रयोजनम्, नैवम् । नाम्नः आत्मेच्छायाम् इत्यनुवृत्तौ कथं काम्यस्य विषयः संकुचित इति वाधिकाराद् व्याप्तिर्लभ्यते । यद्यप्यस्मिन् सूत्रे **पञ्जी**पाठो नास्ति, तथापि क्वचित् पुस्तके **पञ्ज्यां**

टीका लिखितास्तीति। सैव व्याख्यायते – काम्येत्यविभक्तिनिर्देश इति। एतेन काम्यप्रत्ययोऽकारान्तः सूचितः इति अकारस्य फलमग्रे व्याख्यास्यते।

ननु **वृत्तौ** चकाराद् यिंश्चेत्युक्तं ततश्चानुकृष्टं नोत्तरत्रेति न्यायादुत्तरसूत्रे यिनो निवृत्तिः स्यादित्याशङ्क्याह – यिन् काम्य चेत्यादि। तर्हि चकाराद् यिंश्चेति **वृत्तिः** कथं संगच्छते ? सत्यम्। एवमुच्यते – चकाराद् विना काम्य इति सूत्रे कृते **'कार्यं कार्येण हन्यते'** (कलाप० २२०।२५) इति न्यायाद् यिनोऽनुवृत्तिर्न स्यात्। काम्य चेति कृते तु न केवलं यिन् काम्य चेत्यर्थो लभ्यते। अतः काम्यसन्बन्धोऽपि चकारो यिनोऽनुवृत्तावपि हेतुरित्याशयेनोक्तम् – चकाराद् यिंश्चेति। यदि पुनश्चकारेण सह यिन् संबध्यते तदा चकार एव व्यर्थः स्यात्, न ह्यत्र सूत्रे यिनः प्रयोजनमिति पूर्वसूत्रेणैव सिद्धः स्यात्। नापि परसूत्रे प्रयोजनं चानुकृष्टत्वात् तत्रानुवृत्तेरभावात्। तस्माच्चकार-बलादेव काम्येनैव संबन्धो न तु यिनेति। अत एवेत्युत्तरत्र यिनोऽनुवृत्तिहेतोरित्यर्थः। इष्टं चेत्यादि। न केवलमुत्तरत्र उभयोरनुवृत्त्यर्थमेव भिन्नयोगः। किन्तु इदंकाम्यतीत्यस्य सिद्ध्यर्थमेवेति। अन्यथा एकयोगे सति सन्नियोगशिष्टत्वाद् यथा मान्ताव्ययाभ्यां यिन् न स्यात् तथा आभ्यामपि काम्यप्रत्ययोऽपि न भवेत्। इदं तु **कुव्याख्यानम्।** यतो मान्ताव्ययभिन्नस्थाने यिनो विधानं व्यवस्थितवाऽधिकाराद् एतच्चैकयोगेऽपि संभवतीति भावः। तस्मादयमेव **पङ्क्तेराशयः – पाणिनिना** यिनः स्थाने क्यच् विहितः, आयि-प्रत्ययस्थाने क्यङ्, अतोऽकारान्तोऽयम् प्रत्ययस्तेन धनमिच्छतीति तमन्यः प्रयुङ्क्ते स्म इत्यर्थे अदधनीयद्-इत्यादिषु सन्वद्भावह्रस्वौ न भवतः, **अतोऽस्मन्मते** व्यञ्जनान्ता-देव काम्यशब्दात् सेर्लोपः अभिन्नं चेति पदम्, अव्ययस्यानेकार्थत्वाद् यिन्प्रत्ययेनापि संबध्यते चकारः, तदन्तविधिना अशब्दः अकारान्तवाचकः, तेन काम्य यिंश्चादन्तो भवतीति प्रश्लेषव्याख्यानाद् इष्टसिद्धिरिति। तथा यिन्काम्यप्रत्ययस्यादन्तत्वे सति अपुपुत्रकामदित्यादौ **"यिन्यसमान०"** (३।४।७८) इत्यादिना न ह्रस्वादिकमिति। विपर्यय इति। नाम्नः आत्मेच्छायां काम्य इत्येकं सूत्रम्, यिनित्यपरम्, ततश्चकारः प्रत्याख्यातुं शक्यते एव। यदिह विचित्रा हि सूत्रस्य कृतिस्तत्प्रश्लेषकरणभूतेन बोधं जनयतीति यिनोऽप्यकारान्तत्वं बोध्यमिति पङ्क्तिसङ्गतिः। एवमग्रिमसूत्रद्वयेऽपि अदन्तश्चेति संबन्धनीयम्। न च **पाणिनिना** विरोधः, अत एव **"यस्यानवि"** (३।६।४८) इत्यस्य **टीकायाम् "आत्मेच्छायां यिन्, कर्तुरायिः सलोपश्च"** (३।२।५,८) इति अकारः पठितव्यः इति यदुक्तं तत्रापि एषैव **युक्तिः** ॥४५६।

**[ समीक्षा ]**

'आत्मनः पुत्रमिच्छति' इस अर्थ में 'पुत्रकाम्यति' जैसे शब्दों के साधनार्थ

कातन्त्रकार ने काम्य प्रत्यय तथा पाणिनि ने काम्यच् प्रत्यय का विधान किया है। पाणिनि का सूत्र है – "काम्यच्च" (अ० ३।१।९)। पाणिनीय व्याकरण में चकार अनुबन्ध की योजना "चितः" (अ० ६।१।१६३) सूत्र से अन्तोदात्तविधान के लिए की जाती है। अतः उभयत्र कोई गौरव–लाघव नहीं कहा जा सकता है।

**[ विशेष वचन ]**

१. एतच्चोत्तरार्थमेवानन्तरः काम्यो मा भूदिति (दु० वृ०)।

२. काम्येत्यविभक्तिकनिर्देशो मन्दमतिबोधार्थः (दु० टी०)।

३. विपर्ययनिर्देशेन चकारः प्रत्याख्यातुं शक्यत एव, किन्तु विचित्रा हि सूत्रस्य कृतिर्बोधजननीति (दु०टी०)।

४. न हि ककारोऽनुबन्धः, प्रयोजनाभावात् (क० च०)।

५. यदिह सूत्रस्य विचित्रा कृतिस्तत् प्रश्लेषकरणभूतेन बोधं जनयतीति यिनोऽप्यकारान्तत्वं बोध्यमिति पङ्क्तिसङ्गतिः (क० च०)।

**[ रूपसिद्धि ]**

१. **पुत्रकाम्यति**। आत्मनः पुत्रमिच्छति। पुत्रम् + काम्य + ति। 'पुत्रम्' इस स्याद्यन्त पद से प्रकृत सूत्र द्वारा काम्य प्रत्यय, "ते धातवः" (३।२।१६) से 'पुत्रकाम्य' की धातुसंज्ञा, तिप्रत्यय तथा अन् विकरण।

२-३. **इदंकाम्यति**। इदमात्मन इच्छति। इदम् + काम्य + ति। **स्वःकाम्यति**। स्वः आत्मन इच्छति। स्वः + काम्य + ति। पूर्ववत् प्रक्रिया ॥४५६।

## ४५७. उपमानादाचारे [ ३।२।७ ]

**[ सूत्रार्थ ]**

उपमानवाची नाम पद से उत्तर में आचार अर्थ के विवक्षित होने पर यिन् प्रत्यय होता है ॥४५७।

**[ दु० वृ० ]**

उपमानान्नाम्न आचारेऽभिधेये यिन् परो भवति। पुत्रमिवाचरति **पुत्रीयति** माणवकम्। माणवकाद् विशेषे द्वितीया नोक्तार्थेति। आधारादपि स्यात्, निरपेक्षत्वात्। कुट्यामिवाचरति – कुटीयति प्रासादे ॥४५७।

**[ दु० टी० ]**

उप०। उपमीयते**ऽनेनेत्युपमानम्**। आचारणम् **आचारः**। ननु श्रुतस्येहाचरण-

क्रियया सम्बन्धो भवन् कर्तुरपि स्यात्। पितेवाचरत्युपाध्यायः शिष्यमिति ? नैवम्, अपेक्षितकर्मकत्वात्। तर्हि कर्मणोऽपि कथं बहिरङ्गापेक्षणात् ? सत्यम्। यस्यां वृत्तावव्यवहिते कर्तृकर्मणी तत्र प्रत्ययः इति। अर्थात् पूर्वं कर्म इति प्रकृतिः प्रत्ययवाच्यः कर्ता इति न दुष्यति, **अभिधानाद्** व्यवस्थितवाधिकाराच्चेति। पुत्रे यदाचरणं मिष्टान्नपानदानादि प्रसिद्धं तदाचरणेन माणवक उपमीयते। **वृत्तौ** तु यिनैव द्योतितत्वादिवशब्दो निवर्तते उपमानवचनात् पुत्रशब्दात् तद्विशिष्टाचरणे यिनो विधानादुपमानोपमेयभावस्य निवृत्तत्वाच्च। निवृत्तेऽपीवशब्देनोपमेयपुत्रशब्दस्य वृत्तिरूपमेयेन सकर्मकत्वमित्याह – माणवकादित्यादि। अन्यथा श्येन इवाचरति श्येनायते इति उपमेयकर्तृसामान्यस्यानेनाभिधानं स्यात्। आधारोऽपि कर्मतया विवक्ष्यते चेद् अनुप्रयोगे कुट्यामिति सप्तमी न स्याद् अतः कर्मण आधारविवक्षा **साध्यसाधनभावस्येष्टत्वादि**त्याह – आधारादित्यादि। पुत्रेणेवाचरति भवतेति करणान्न भवति। नहि कर्मान्तरेण करणत्वमुपपद्यते इति सापेक्षता। नकारो **"यिन्यवर्णस्य"** (३।४।७८) इति विशेषणार्थः। इकार **उच्चारणार्थः**॥४५७।

**[ वि० प० ]**

उप०। माणवकादित्यादि। पुत्रमिवाचरतीति वाक्ये सामान्यमेवोपमेयं कर्म प्रतीयते न तु विशिष्टम्, अतो विशिष्टकर्मद्योतिका द्वितीया कथमुक्तार्थेति भावः। न चोपमानादुपमेयकर्मविशेषापेक्षया यिनो विधिरस्तीति। पुत्रमिवाचरति माणवकमिति सापेक्षत्वाद् आधारादित्यादि। न खल्विह कर्माधिकारोऽस्ति किन्तु सापेक्षत्वात् करणादेर्न भवतीत्युक्तम्। यत्र तु निरपेक्षता तत्राधारादपि केन निवार्यते। अथवा आधारस्यापि कर्मत्वं विवक्ष्यते – कुटीमिवाचरतीति। कथन्तर्हि प्रासादे इत्यनुप्रयोगे सप्तमीति चेत् तदा आधारस्यापि विवक्षितत्वमिति ॥४५७।

**[ क० च० ]**

उपमा०। प्रसिद्धस्य साधर्म्याद् अप्रसिद्धस्य साधनम् उपमानमित्युपमानलक्षणम्। अथ उपमिति**रुपमान**मिति भावलक्षणस्य ग्रहणम्। उपमीयते येन यद् वा **तदुपमान**मिति करणसाधनस्य कर्मसाधनस्य वा ग्रहणम् ? न तावद् भावसाधनस्य ग्रहणम् उपमितेरित्यकरणात्। नापि कर्मसाधनस्य, तत्रोपमानशब्दस्योपमेये प्रसिद्धत्वात्। तस्मात् करणसाधनस्य ग्रहणम् **आम्नायात्**। आचरणमाचारः। स चात्र मननस्वरूपः, अत एवास्य सकर्मकत्वम्। तेन पुत्रीयति छात्रमित्यादौ पुत्रमिवाचरति छात्रमित्यर्थः। उत्तरसूत्रे तु चेष्टावचन एवायं धातुस्तेनाकर्मक एव, अत्राभिधानमेव नियामकम्। ननु पुत्रमिवाचरतीति पुत्रशब्दात् कथं द्वितीया। यावता इवशब्दस्य

सादृश्यसम्बन्धेन पुत्रशब्दात् षष्ठ्येव युज्यते । ततश्च पुत्रस्य सदृशं माणवकं मन्यते इत्यर्थो लभ्यते ? सत्यम् । पुत्रशब्देनैव लक्षणया पुत्रसदृश उच्यते । इवशब्दस्तु द्योतकः । ततश्च युक्तार्थत्वेनैवेवशब्दार्थस्य द्योतितत्वात् पुत्रीयतीत्यादाविवशब्दस्याप्रयोगः । यथा शस्त्रीव श्यामा शस्त्रीश्यामा । अथ यदि पुत्रशब्देन पुत्रसदृश उच्यते तदा पुत्रशब्दस्यापि उपमेयवृत्तितैव । तत्कथम् उपमानान्नाम्नो यिन् परो भवतीति **वृत्तिः** सङ्गच्छते चेद् ? उपमानादित्यनेनोपमानशब्दवाच्यादुपमेयादिति लक्षणयोच्यते । यद्येवम्, उपमेयवृत्त्युपमानशब्दादुक्ता द्वितीया विभक्तिस्तयैवोपमेयस्य कर्मताबोधात् कथं माणवकशब्दाद् द्वितीयेति पूर्वपक्षं समाधातुं माणवकादित्यादि वृत्तिः । अथ तर्हि 'कटः क्रियते' इत्यत्राप्यात्मनेपदस्य सामान्यकर्मणि विहितत्वाद् विशेषस्य कटस्य कर्मत्वप्रतिपादनार्थं कटशब्दाद् द्वितीया तिष्ठतु । तदुक्तम्,

**अथ सामान्यवाचित्वाद् विशेषश्चेन्न गम्यते ।**

**क्रियते कट इत्यादौ द्वितीया किं न जायते ॥**

सत्यम्, सामान्यस्यापि विशेषसन्निधौ विशेषवाचकत्वं दृश्यते । यथा ब्राह्मणो भार्गवनामेति । अतः सामान्यकर्मणि प्रत्यये सामानाधिकरण्येन सान्निध्याद् विशेषस्याप्युक्तार्थतेति । तर्हि पुत्रीयतीत्यनेनापि माणवकसान्निध्याद् उक्तार्थता स्यात् । नैवम्, नहि कर्मणि यिन् विधीयते, येन कर्मण उक्तार्थता विधीयेत । अतः केनात्र माणवकस्य कर्मणः उक्तार्थता क्रियते इति **सिद्धान्तः** ।।४५७।

**[ समीक्षा ]**

'पुत्रमिवाचरति छात्रम्' इस अर्थ में 'पुत्रीयति छात्रम्' आदि प्रयोगों के साधनार्थ पाणिनि तथा शर्ववर्मा दोनों ही आचार्यों ने अपनी अपनी प्रक्रिया के अनुसार प्रत्ययों का निर्देश किया है । कातन्त्रकार के 'यिन्' प्रत्यय तथा पाणिनि के 'क्यच्' प्रत्यय में अनुबन्धों की पर्याप्त भिन्नता होते हुए भी कार्य में समानता ही देखी जाती है । कातन्त्रकार ने 'यिन्' प्रत्यय में 'इ–न्' को अनुबन्ध रखा है, जबकि पाणिनि ने 'क्यच्' प्रत्यय में क्-च् को । फलतः कातन्त्र में 'य्' अकारान्त न होकर व्यञ्जनान्त ही शेष रह पाता है, परन्तु पाणिनि के अनुसार 'य' यह अकारान्त । प्रक्रिया की दृष्टि से पाणिनीय व्याकरण में शप् प्रत्यय के न होने से अकारान्त 'य' के ही शेष रहने पर रूपसिद्धि हो पाती है, जबकि कातन्त्रीय प्रक्रिया के अनुसार विकरण 'अन्' की प्रवृत्ति होने के कारण व्यञ्जनान्त य् के भी शेष रहने पर रूपसिद्धि के लिए कोई अतिरिक्त विधान नहीं करना पड़ता है । अतः किसी एक में गौरव-लाघव सिद्ध नहीं किया जा सकता है ।

**[ विशेष वचन ]**

१. आधारादपि स्यात्, निरपेक्षत्वात् । कुट्यामिवाचरति कुटीयति प्रासादे (दु० वृ०) ।

२. यस्यां वृत्तावव्यवहिते कर्तृकर्मणी तत्र प्रत्यय इति । अर्थात् पूर्वं कर्म इति प्रकृतिः; प्रत्ययवाच्यः कर्तेति न दुष्यति, अभिधानाद् व्यवस्थितवाधिकाराच्चेति (दु० टी०) ।

३. अथवा आधारस्यापि कर्मत्वं विवक्ष्यते कुटीमिवाचरतीति । कथन्तर्हि प्रासादे इत्यनुप्रयोगे सप्तमीति चेत् तदा आधारस्यापि विवक्षितत्वमिति (वि० प०) ।

४. सामान्यस्यापि विशेषसन्निधौ विशेषवाचकत्वं दृश्यते । यथा ब्राह्मणो भार्गवनामेति । अतः सामान्यकर्मणि प्रत्यये सामानाधिकरण्येन सान्निध्याद् विशेषस्याप्युक्तार्थतेति (क० च०) ।

**[ रूपसिद्धि ]**

१. **पुत्रीयति** माणवकम् । पुत्रमिवाचरति माणवकम् । पुत्र + यिन् + अन् + ति । 'आचरति' अर्थ में प्रकृत सूत्र द्वारा यिन् प्रत्यय, इ-न् अनुबन्धों का प्रयोगाभाव, समास, विभक्तिलोप, इत्त्व, दीर्घ, धातुसंज्ञा, ति-प्रत्यय तथा अन् विकरण ।

२. **कुटीयति** प्रासादे । कुट्यामिवाचरति प्रासादे । कुट्याम् + यिन् + अन् + ति । पूर्ववत् प्रक्रिया ।।४५७।

## ४५८. कर्तुरायिः सलोपश्च [ ३।२।८ ]

**[ सूत्रार्थ ]**

कर्तृभूत उपमानवाची स्याद्यन्त पद से उत्तर आचार अर्थ में आयि प्रत्यय तथा यथासम्भव सकारलोप भी होता है ।।४५८।

**[ दु० वृ० ]**

कर्तुरुपमानान्नाम्नः आचारेऽभिधेये आयिः परो भवति, यथासम्भवं सलोपश्च । श्येन इवाचरति श्येनायते । एवं सारसायते । ओजायते, अप्सरायते, पयायते, पयस्यते । **वाशब्दस्येष्टार्थत्वात्** । आयेश्च लोपः । गर्दभ इवाचरति – गर्दभति अश्व इति [1]मतम् । कथं 'गल्भते, क्लीबते, होडते' ? एते आत्मनेपदिनः, प्रत्ययान्तत्वाद् आमिष्यत एव ।

---

१. गर्दभति अश्वतीति मतमिति क्वचित् पाठः । गर्दभति अश्व इति मतमिति पाठ एव समीचीनो मन्यते । 'ओजसोऽप्सरसः' इति कारिकायां 'न चाश्वो गर्दभत्यपि' इति पाठात् (सं० टि०) ।

**ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया।**
**आयिलोपश्च विज्ञेयो न चाश्वो गर्दभत्यपि ॥**

तथा च्व्यर्थे भृशादेस्तसोर्लोपश्चेति। अभृशो भृशो भवति भृशायते। एवम् उन्मनायते, दुर्मनायते। बेहत् – बेहायते। शश्वत् – शश्वायते। वावचनाच्च्विरपि– भृशीभवति। अभृशो यो भृशो भवति स भृश इवाचरति। सादृश्यादभेदो वस्तुन इति मतम्। **तलोपेष्टिरिति**।

तथा डाज्लोहितादिभ्यश्च्व्यर्थे – पटपटायति, पटपटायते। एवं लोहितायति, लोहितायते। यजादिषु पाठ इष्यते। कष्टाय कर्मणे क्रामति कष्टायते। एवं पापायते, कक्षायते, शत्रायते, गहनायते। पापवृत्तिभ्योऽन्यत्र न भवति। कष्टाय तपसे क्रामति। रोमंन्थं वर्तयति रोमन्थायते गौः। हनुचलन एव। इह न स्यात् – कीटो रोमन्थं वर्तयति। बाष्पमुद्वमति – बाष्पायते। एवम् ऊष्मायते, फेनायते। सुखादीनि वेदयते – सुखं वेदयते सुखायते। एवं दुःखायते। शब्दादीनि करोति – शब्दं करोति शब्दायते। एवं वैरायते, कलहायते। नमस्तपोवरिवसस्तु यिन् – नमस्करोति नमस्यति देवान्। एवं तपस्यति शत्रून्, वरिवस्यति गुरून्। चित्रङ् आश्चर्ये। आश्चर्यं चित्रं करोति चित्रीयते। कण्ड्वादिभ्यो यण्। कण्डूञ् – कण्डूं करोति कण्डूयति, कण्डूयते। महीङ्-महीयते **इत्यादयोऽप्यनुसर्तव्याः**। एवं सर्वं वाशब्देन बहुलार्थेन वा सिद्धम् ॥४५८।

**[दु० टी०]**

कर्तु०। श्रुतया आचारक्रियया कर्तृत्वम् आय्यन्तादुपमेयकर्तृसामान्ये आत्मनेपदं काकादिपदसामानाधिकरण्येनोपमेयकर्तृविशेषोऽवसीयते। सलोपश्चेति। **अन्वाचय-शिष्टोऽयं चकारः**, यस्मादनपेक्ष्यायिर्विधीयते, सलोपस्त्वायिमपेक्षते चार्थयोगात् सलोपे कर्तव्ये, अर्थात् कर्तुरिति षष्ठी तत्सान्तत्वेन विशिष्यते, श्येनस्य कर्तुर्यदाचरणं तद्वत् काकस्यानुतिष्ठतः। श्येनायते इति प्रसिद्धिः। श्येनमिवात्मानमाचरति काक इत्यभेदात् कर्तृसम्बन्धिन उपमानात् कर्मण इति **परपक्षस्तु** दुष्ट एव। यथा कश्चिच्छ्येनमाचरति, तद्वत् काकः आत्मानमाचरतीति अत्रापि स्यात्। अथैक एव काको द्विधा विवक्ष्यते – कर्मतया कर्तृतया च। किमनेन यत्नेनेति। आयेश्च लोप इत्यत्र समाधिः सेति कृतषष्ठीलोपं पदं तेनायेश्च लोप इत्यपि सम्बन्धो भवति। मतम् मतान्तरमेतत्। गल्भक्लीबहोडानां च रुचाद्याश्रयणादात्मनेपदम् – 'गल्भांचक्रे' इत्याम्प्रत्ययश्च सिद्धो भवति। यदाह – गल्भक्लीबहोडेभ्य **इत्येके**। सर्वप्रातिपदिकेभ्य **इत्यपरे**।

इह तु आयिलोपदर्शनं नादृतम्, यच्च गल्भते इत्यादि। **'गल्भ आधार्ष्ट्ये, क्लीबृ मदे, हेड्ट होड्ट अनादरे'** (१।३९६, ३८७, ३७४)। आत्मनेपदिनः स्वभावादेवान्तर्भूतोपमानोपमेयवचनाः। 'गल्भायते, क्लीबायते, होडायते' इति च पचाद्यजन्तादायिर्भवति, यदीह **सर्व**प्रातिपदिकेभ्य इति मतमाचष्टे तर्हि **"ते धातवः"** (३।२।१६) इत्यनेनैषां **धातुसंज्ञा** सिद्धा। आय्यन्तत्वाद् व्यर्थ एव गणपाठो रूढत्वात्। यच्च 'गल्भाञ्चक्रे' इति। गल्भनं गल्भा **"गुरोश्च निष्ठासेटः"** (४।५।८१) इति अप्रत्ययः, ततो द्वितीयायां 'गल्भाञ्चकार' इत्यपि प्राप्नोति। **मतान्तरेऽपि** कथन्न भवति स्वरार्थं क्लीबादिधातुषु पठ्यमानेषु तथा आय्यन्तत्वमपीति भावः। **वाशब्दस्येष्टार्थत्वादि**ति हेतुं वर्णयन्नाह– ओजसोऽप्सरसः इत्यादि। 'न चाश्वो गर्दभत्यपि' इत्यादि नञ्योगेऽपि विवक्षया भवतीत्यर्थः। अथवा न च प्रयोगः अश्वो गर्दभतीति मतं निरस्यति।

**ओजसोऽप्सरसो नित्यमन्यस्यान्ये विभाषया।**
**एके त्वप्सरसो नित्यं सलोपस्मृतिमास्थिताः॥**

तदा 'सरायते, सरस्यते' इति भवितव्यम्। **एके** त्वप्सरसो नित्यमिति। ओजायते–ओजस्यते इति भवितव्यम्। तत्रापि तद्वदित्यर्थे वर्तमानादेव ओजसः ओजस्वीवाचरतीति विग्रहः। आचारक्रियाया अन्यत्रापि इ**त्यन्ये**। ओजस्वी भवति ओजायते। तथा च्व्यर्थ इत्यादि। च्व्यर्थोऽभूततद्भावः। कर्तुरिति वचनाद् भवत्यर्थ एव अभृशं भृशं करोतीत्यत्र न भवति च्व्यन्तेभ्योऽपि नैव च्विनैवोक्तार्थत्वात्।

**भृशादिः**– भृश, शीघ्र, चपल, पण्डित, उत्सुक, उल्मुक, उन्मनस्, अभिमनस्, सुमनस्, दुर्मनस्, अमनस्, वर्चस्, ओजस्, चेतस्, बेहत्, रेफत्, शश्वत्, शुचि, अङ्गिरस्, निल, मद्र, फेन, हरित्, मन्द। तथा पूर्ववद् आचारेऽर्थे आयिर्भवतीत्यर्थः। अभृशः सन् केनचित् भृशसादृश्येनोपमीयते च्व्यर्थवादिनाप्यध्यारोपणपक्षे यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेश इति सोऽप्यभूततद्भाव इति प्रतिपत्तव्यम्। अथ प्रकृतिविपरीतो यदर्थात्मा सम्पद्यते व्यवस्थितस्यैव गुणान्तरसंबन्धात् स परिणामोऽभूततद्भाव उच्यते। एवमपि अभृशो भृशगुणसन्निधानाद् भृश इति बुद्धेरेव भेद इत्याह-भृश इत्यादि। गणेऽस्मिन् तकारसकारावेव व्यञ्जने, तत्र सलोपः सिध्यतीत्याह– **तलोपेष्टिरिति**। वर्णनाशोऽपि दृश्यते**ऽभिधानादिति भावः**। तदादिभिः समस्तादपि मनःशब्दादेवायिर्न समुदायान्नाम्न इति वचनात्। तेन सुमनायते, सुमनाय्य गतः। स्वमिमनायिषत इति अडागमयवादेशद्विर्वचनेषु न दोषः। संग्राममयतेरेव समादेरिति नियमाद् वा।

ननु कथं नियमः। **'संग्राम युद्धे'** (९।२१९) इति चुरादौ आत्मनेपदार्थः पाठः, तर्हि केवल एव पठितव्यः। यथा इक इङ्श्च केवलपाठे सति 'अध्येति-अधीते' इति अधिना योगः। एवमस्यापि समा योगो भविष्यतीति भावः। **कश्चिद्** आह – आयिमुत्पाद्य पश्चादुपसर्गेण योग इति। तदा अनुन्मन उन्मन इवाचरतीति मनसः कर्तृत्वे आयिः स्यान्न पुरुषस्य कर्तृत्वे अदुर्मना दुर्मना इवाचरतीति। किं चेह चरिरयमाङा सह निर्दिष्टः कथं चोपसर्गान्तरेण पुनर्योग इ**त्यपपक्ष एव**। अभेदेऽपि डाजूलोहितादीत्यादि – पटत् पटत् भवति पटपटाभवति। **आभीक्ष्ण्ये** द्विर्वचनम्। ततोऽव्यक्तानुकरणादनेकस्वरादनितौ डाच्, अभ्यासे तलोपः, तमादिनिपातनस्येष्ट-प्रकृतित्वात्। अपटपटाभूतः पटपटेवाचरतीत्यर्थः। अपटपटा पटपटभवतीति **च्विवादी** पुनराह – च्व्यर्थे भवतिना योगे डाच् उक्तेऽपि भवत्यर्थे डाजन्तादायिर्वचन-प्रामाण्यादिति। उभयपदस्य च निमित्तमाह – यजादिष्वित्यादि। एवं वर्मायति-वर्मायते। अनिद्रावान् निद्रावानिवाचरति निद्रायति, करुणायति, कृपणायति। निद्रादिभ्यस्तद्वति वर्तमानेभ्य आयिरभिधीयते। **एक** आह – अपौराणश्च लोहितादिपाठ इति। **अन्य** आह–डाजूलोहिताभ्याम् इति युक्तम्। आदिग्रहणस्य प्रयोजनं देवा ज्ञातुमर्हन्तीति **आकृतिगणो**ऽयमिति वदन् सन् मरुमरीचिकादिभि-रुदकघटं पूरयतीति। कष्टादिभ्यः पापवृत्तिभ्यश्चतुर्थ्यन्तेभ्यः क्रमणेऽर्थे आयिर्न वक्तव्यः। कष्टादयस्तद्वतीह वर्तन्ते। यो हि कष्टाय कर्मणे क्रामति स कष्टवान् इवाचरतीति प्रवर्तते इति सिद्धं तत्साधर्म्यात्। परस्य क्रमणमपि प्रवर्तनमेव न पादविहरणम्। कष्टाय तपसे क्रामतीति प्रथमान्ततैव न घटते इति भावः। एवं रोमन्थवर्तने रोमन्थाय प्रकृत्यन्तरं वर्तनं श्लक्ष्णीकरणम्, यथा कुङ्कुमं वर्तयतीति। हनुचलन एवेति हनुर्वदनैकदेशस्तस्य चलनम्। इहेत्यादि। रोमन्थशब्दः स्वभावाद-क्रियावचनो नास्य धातुसंज्ञेत्यर्थः। कीटो रोमन्थं वर्तयति, वर्तुलीकरोतीत्यर्थः। तत्राभ्यवहृतस्य तस्य पुनराकृष्य चर्वणं प्रतीयते। इह तु उद्गीर्णमवगीर्णं वा **रोमन्थाख्यं द्रव्यमिति**। किं रोमन्थं वर्तयति, किं हनुचलन इति सूत्रेण। एवं बाष्प-मुद्वमति मुञ्चतीत्यर्थः, किं बाष्पोष्मफेनम् उद्वमतीति सूत्रेण। धूममुद्वमतीत्यर्थेऽपि **केचिद्** 'धूमायन्त इवाश्लिष्टाः' इति।

सुखादीनि वेदयते इति। वेदनं वेदस्तं करोतीति वेदयते जानातीत्यर्थः। अस्यां क्रियायां सुखादयो धातव इति – सुखाय दुःखाय तृप्राय कृच्छ्राय अस्राय अस्त्राय अनीकाय करुणाय कृपणाय हलाय सोढाय प्रतीपाय। सुखं वेदयते प्रसाधको देवदत्तस्येति सुखशब्दोऽयमक्रियावचन इति नास्य धातुसंज्ञा। प्रसाधको मण्डयिता,

सोऽपि प्रसाध्यम् उत्फुल्ललोचनादियुक्तं दृष्ट्वा सुखमस्योत्पन्नमिति जानात्येव। विशेषस्तु एतावान् प्रसाध्यः प्रत्यक्षेण प्रसाधको लिङ्गेनेति निरपेक्षत्वात् कर्तृवेदनायामेवेति, किं परिहारेण। शब्दादीनि करोतीति शब्दादिक्रियायां शब्दादयो धातव इति। 'शब्दाय, वैराय, कलहाय, अभ्राय, कण्ठाय, मेघाय, सुदिनाय, दुर्दिनाय, नीहाराय, अटाटाय, अट्टाय, शीकराय, कोटाय, पोटाय, सोटाय, पुष्टाय, तुष्टाय, वेलाय, युद्धाय, ओघाय, रोगाय, समूहाय, प्रह्वाय'। एते स्वभावादात्मनेपदिनः।

शब्दादिभ्यो नामभ्यः करोत्यर्थे इन् भवत्येव। शब्दयति वैरयतीति। नमस्तपोवरिवसस्तु यिन्निति न वक्तव्यम् इति भावः। नमस्यधातुः पूजायाम्, तपस्यधातुः सन्तापादौ, वरिवस्यधातुः परिचर्यायाम्। यद्यपि नमस्यतिशब्दे नमःशब्दोऽस्ति तथाप्यनर्थकः। अर्थद्वारकश्च पदस्य पदान्तरेण सम्बन्धः। किञ्चानव्ययोऽयम्, कथन्तर्हि नमस्करोति देवानित्यत्र द्वितीया। अत्रापि नमस्करोतीत्यनेन सम्बन्धो देवशब्दस्य न तु नमःशब्देनेति। न तत्र योगशब्दोऽर्थयोगप्रतिपत्त्यर्थः, किन्तर्हि पर्याय एव द्रष्टव्यः। किञ्च **'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'** (का० परि० ५९) इति कारकनिमित्ता हि विभक्तयोऽन्तरङ्गाः, उपपदनिमित्तास्तु पदान्तरापेक्षणाद् बहिरङ्गाः। यस्तु नम आदिभ्यो यिनमिच्छति नमः करोति नमःशब्दम् मुच्चारयतीत्यत्रैतन्मते पूजायामिति वक्तव्यं स्यात्। शब्दं करोतीति शब्दमुच्चारयतीत्यनभिधानं वा आश्रयितव्यम्। **'चित्रङ् आश्चर्ये'** इति ङानुबन्ध आत्मनेपदार्थोऽवयवलिङ्गत्वान्न वक्तव्यमिति भावः। विस्मयक्रियायां चित्रीयङ् धातुः। **"कण्ड्वादिभ्यो यण्"** इति न वक्तव्यमिति भावः। कण्ड्वादिक्रियायां कण्डूयञ्प्रभृतयो धातवः। कण्डूयञ्, मन्तूयञ्, वल्गूयञ्, असूयञ्, हृणीयङ्, महीयङ्, वैयञ्, नायञ्, वैट्य, नाट्य, तिरस्य, इरस्य, इरज्य, उरस्य, उषस्य, तन्तस्य, भिषज्य, भिक्षुष्य, लेट्य, लोट्य, एलाय, केलाय, खेलाय, दोलाय, मेधाय, कुसुभ्य, मगध्य, इषुध्य, स्वास्थ्य, दुःख्य, सुख्य, सपर्य्य, अरपर्य्य, अगद्य, समय्य, तुरण्य, भुरण्य। ननु च कुसुभ्यादयोऽकारान्ता विषयसप्तमीत्वाद् अस्य च लोपे सति व्यञ्जनाद् विहितस्य यणो यस्य लोपो भवति – कुसुभिता। धातुपाठे तु यथा ईर्ष्यिता तथा कुसुभ्यिता, मगध्यिता इत्यनिष्टरूपं स्यात्। नैवम्, तत्र व्यवस्थितवाधिकाराद् व्यञ्जनाद् विहितस्यापि लोपो व्याख्यायते। **मतान्तरं** व्याचष्टे – एतत् सर्वं वेत्यादि। अधिकृतेन वाशब्देन करोत्यर्थे यण्प्रत्ययो भवति। **णकारो गुणप्रतिषेधार्थः**।

कण्ड्वादयो नामान्येव यणमन्तरेण प्रयोगदर्शनात् – कण्डूर्मन्तुर्वन्तुरिति। न च धातुत्वे सत्येवं प्रयुज्यते, यणन्तेभ्यः एतानि रूपाणि क्विपि भविष्यन्तीत्यप्ययुक्तम्,

कर्तरि क्विपो विधानात् । कण्डूरिति वेदनामात्रं प्रतीयते न कर्ता, मन्तुर्वन्तुरिति यणि दीर्घत्वे क्वावपि दीर्घश्रवणं स्यात् । अथ निमित्ताभावाद् दीर्घनिवृत्तिरिष्यते, ततोऽन्तः प्रसज्येत कण्ड्वा-कण्डू इति, अत्र धातुत्वाद् वादेशः स्यात् । नैवम्, दृशिग्रहणं तत्र प्रयोगानुसारार्थमिति क्विप् नोपपद्यते । अतो धातवश्चेत्येके पाठविकल्पोपदर्शनेनोभयथापि ग्रहीतव्यम् इत्यादर्शयन्ति । एवं सति पूर्वपक्षोऽपि शुद्ध इति । तथा च **भर्तृहरि**राह – पुत्रीयपुत्रकाम्यादयः सुबन्तोपादानाः क्रियार्था धातवो जीवत्यादिवत्तिरोहितसाध्यसाधनभावप्रविभागाः, नहि भवति प्राणान् जीवतीति यथाकथञ्चिद् व्युत्पाद्यन्ते । इह तु यिन्-काम्यादीनाम् विधानात् नामधातुषु यथेष्टं द्विर्वचनम् – **"धात्वादेः षः सः, णो नः"** (३।८।२४, २५) इति च न भवतीति प्रतिपत्त्यर्थम् ॥४५८।

**[ वि० प० ]**

कर्तुः । सलोपश्चेति चकारस्यान्वाचयशिष्टत्वात् तदभावेऽप्यायिरिति दर्शयति – श्येनायते इति, आय्यन्ताच्चेत्यात्मनेपदम् । वर्णान्तस्य विधिरिति न्यायान्मध्यसकारस्य लोपो न भवति । सारसायते, ओजायते इति । ओजःशब्दस्तद्वति पुरुषे वर्तते, ओज इवाचरति ओजस्वीवाचरतीत्यर्थः । पयसः कथं विभाषया सलोपः इति हेतुमाह– वाशब्दस्येष्टार्थत्वादिति, **"धातोर्वा तुमन्तात्"** (३।२।४) इत्यतो वाशब्दोऽनुवर्तते, स च सलोपेन संबध्यते, ततः क्वचिद् विकल्पः क्वचिन्नित्यः सलोप इत्यर्थः । आयेश्च लोप इति । कथमेतत् ? सत्यम्, सेति लुप्तषष्ठीकं पदम् । **तेनायमर्थः** – सलोपश्चेति चकारादायेश्च लोप; सर्वप्रातिपदिकेभ्यो विभाषया आयिलोपः इति सम्बन्धः । मतमिति, मतान्तरमित्यर्थः । **अपरे** तु गल्भक्लीबहोडेभ्यः इति मन्यन्ते, गल्भ इवाचरतीति गल्भते । एवं क्लीबते, होडते इत्याह – गल्भ इत्यादि । एते कृतायिलोपाः सन्तो रुचाद्याश्रयणाद् आत्मनेपदिनः गल्भाञ्चक्रे इत्यादावाम्प्रत्ययश्चेष्यमाणः प्रत्ययान्तत्वात् सिद्धो भवतीत्याह – प्रत्ययान्तत्वाद् आमिष्यते एवेति ।

अत्र पुनरायिलोपदर्शनं नादृतमेव, यच्च गल्भते इत्यादि तच्च 'गल्भ आधाष्ट्र्ये, क्लीबृ मदे, हेड्र होड्र अनादरे' इत्येतैरात्मनेपदिभिः सिद्धम्, एते च स्वभावादन्तर्भूतोपमानोपमेयभावा इत्यर्थोऽपि न भिद्यते, पचाद्यजन्तेभ्यश्चैतेभ्यः आयिरस्तीति गल्भायते इत्यादयोऽपि सिद्धा इति । यत् पुनर्गल्भाञ्चक्रे इति, तत्र गल्भनं गल्भा **"गुरोश्च निष्ठासेटः"** (४।५।८१) इति अ-प्रत्ययः । **"स्त्रियामादा"** (२।४।४९) ततश्चक्रे इति सम्बन्धात् कर्मणि द्वितीया, तर्हि गल्भाञ्चकारेति स्यादिति चेत्, न । अनेन क्रमेण मतान्तरेऽपि परस्मैपदं कथन्न भवति, न

ह्यमीषां धातूनाम् अ-प्रत्ययो नास्तीति यदि चानभिधानम् परो ब्रूयात्, अत्रापि तदस्तीति सर्वमनवद्यम्। पूर्वोक्तमेवार्थम् अनुष्टुभा संक्षिपन्नाह– ओजसोऽप्सरस इत्यादि। न चाश्वो गर्दभत्यपि इति। नाश्वो गर्दभतीति नञ्प्रयोगेऽपि **विवक्षया** भवतीत्यर्थः। अथवा अश्वो गर्दभतीति। न च लुप्तायिप्रत्ययाभिधानमस्तीति मतं प्रतिक्षिपति। तथा च्व्यर्थ इत्यादि। च्व्यर्थोऽभूततद्भावः। स च कर्तुरिति वचनाद् भवत्यर्थ एव गम्यते इति। अतोऽभृशं भृशं करोतीत्यत्र कर्मणो न भवति। तत्र **भृशादिः–** भृश, शीघ्र, चपल, पण्डित, उत्सुक, उन्मनस्, अभिमनस्, सुमनस्, दुर्मनस्, वर्चस्, चेतस्, भ्रमत्, तेजस्, ओजस्, सुरजस्, अजरस्, बेहत्, रेहत्, रोहत्, शश्वत्, शुचि, अङ्गिरस्, अन्तर, नील, मद्र, फेन, हरित, मन्द। तथेति पूर्ववद् आचारार्थे एवायमायिर्न तु **यत्नान्तरं** कर्तव्यम्। वस्त्वभेदं दर्शयितुमाह– अभृश इत्यादि।

ननु अभूततद्भावो हि च्व्यर्थः, स चावस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरापत्तिः। यथा शुक्लीभवति वस्त्रमिति कथं तद्वदुच्यते। उपमानं तु धर्मान्तरस्याध्यारोपेण भवति। यथा 'अग्निर्माणवकः' इति गौणत्वमुच्यते, तत् कथं च्व्यर्थस्याचारार्थेनाभेद इत्याह– सादृश्यादिति। एतदुक्तं भवति। न खलु अत्यन्ताभेदोऽभिधातुमिष्यते, किन्तर्हि अभृश एव भृशो भवति, अभृश एव भृश इवाचरति। भृशसदृश एवोभयत्रापि भृशगुणसन्निधानादेव व्यवहार इति। सादृश्यादभेदः प्रवर्तते, विशेषस्त्वेतावान्– च्व्यर्थे वस्त्वेव तथा जातमाचारार्थे च बुद्ध्या रोपितमिति बुद्धिरेव भिद्यते, न तु वस्तु। भृशशब्दप्रवृत्तौ यत् कारणं तस्यैकत्वादिति। मतमिति **शर्ववर्मणः** सम्मतमित्यर्थः। ननु सकारलोपोऽस्त्येव, तकारस्य लोपः कथमित्याह– तलोपेष्टिरिति। **अभिधाना**दिह वर्णनाशो वेदितव्यः इति भावः।

डाज्लोहितेत्यादि। डाच्प्रत्ययान्तेभ्यो लोहितादिभ्यश्च्व्यर्थे, तथा पूर्ववदाचारार्थे आयिरित्यर्थः। अपटत् पटद् भवति पटपटायते, पटपटायति। डाच्यव्यक्तानुकरणस्येत्याभीक्ष्ण्ये डाज्विषये द्विर्वचनम्, ततोऽव्यक्तानुकरणादनेकस्वरादनितौ डाच्, ततोऽभ्यासतलोपश्च तमादित्वात्। डानुबन्धेऽन्त्यस्वरादिलोपोऽस्त्येव, तत **आचारार्थविवक्षायाम्** आयिप्रत्ययः, आय्यन्तादात्मनेपदमेव स्यात्, उभयपदं चेष्यते, तेन डाज्लोहितादिभ्यस्तत् कथमित्याह– यजादिष्वित्यादि। लोहितादेराकृतिगणत्वाद् (लोहित, चरित, नील, फेन, मद्र, हरित, दाह, मन्द) वर्मायति – वर्मायते। एवम् अनिद्रावान् भवति निद्रावान् इवाचरति-निद्रायति - निद्रायते। तथा करुणायति-करुणायते। कृपणायति-कृपणायते। निद्रादिभ्यस्तद्वति वर्तमानेभ्य एव आयिर-

भिधीयते । कष्टायेत्यादि । अत्राप्याचारार्थे आयिरिति, इह कष्टादयः शब्दास्तद्वति मन्तव्याः । ततो यो हि कष्टाय कर्मणे क्रामति स कष्टवानिवाचरति प्रवर्तते इति नार्थो भिद्यते । परस्यापि क्रमणं प्रवर्तनमेव न तु पादविहरणमिति भावः । **वृत्तौ** तु **परमतानुवादः** कृतस्तस्मात् कष्टादिभ्यः पापवृत्तिभ्यश्चतुर्थ्यन्तेभ्यः क्रमणेऽर्थे आयिर्न वक्तव्य इत्यर्थः । कष्टाय तपसे क्रामतीति कष्टशब्दोऽयं तद्वति पुरुषे वर्तते तेनाचारार्थोऽपि न घटते इति भावः । रोमन्थमित्यादि । इह रोमन्थवर्तने रोमन्थाय-धातुः, वर्तनं श्लक्ष्णीकरणम् । यथा कुङ्कुमं वर्तयति ।

रोमन्थायते गौरिति । यदभ्यवहृतं तत् पुनराकृष्य चर्वयतीत्यर्थः । हनुचलन एवेति हनुर्वदनैकदेशस्तस्य चलन एव भवति । इह न स्यात् – कीटो रोमन्थं वर्तयतीति । उद्गीर्य बहिस्त्यक्तमवगीर्णं वा पृष्ठान्तेन निर्गतं रोमन्थाख्यं द्रव्यं वर्तयति । गुटिकां करोतीत्यर्थः । तेनात्र हनुचलनं न विद्यते पूर्वत्र तु विद्यते चर्वणस्य हनुचलनार्थकत्वादिति । तेन रोमन्थं वर्तयति हनुचलन इति सूत्रं न वक्तव्यम् । अस्मिन्नर्थे रोमन्थायधातोः समर्थितत्वादिति । तथा बाष्पमुद्वमतीत्यर्थे बाष्पायधातुः । एवमिति ऊष्माणमुद्वमतीति फेनमुद्वमतीति । धूममुद्वमतीत्यर्थेऽपि केनचिद् धूमाय – धातुरिष्यते । तथा 'धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव संहताः' इति ।

सुखादीनीत्यादि । सुखाद्यनुभवनक्रियायां **सुखायादयो धातव** इत्यर्थः । 'सुखाय, दुःखाय, तृप्ताय, अस्राय, आस्राय, अलीकाय, करुणाय, हलाय, सोढाय, प्रतीपाय, कृच्छ्राय, कृपणाय । शब्दादीनीत्यादि । इहापि शब्दादिकरणक्रियायां शब्दायादयो धातव इति । 'शब्दाय, वैराय, कलहाय, अभ्राय, कण्वाय, कण्ठाय, सुदिनाय, दुर्दिनाय, नीहाराय, अटाटाय, अष्टाय, श्रीकराय, शीकराय, कोटाय, पोटाय, अश्वाय, स्फोटाय, सोटाय, पूज्याय, उद्वाय, वेगाय, मेघाय, पृष्ठाय, अह्नाय, युद्धाय, रोगाय' । एते रोमन्थादयो धातवो रुचाद्याश्रयणादात्मनेपदिनः । नम इत्यादि । अत्रापि नमस्यधातुः पूजायाम्, तपस्यधातुः सन्तापादौ, वरिवस्यधातुः परिचर्यायामित्यर्थः । चित्रङ् आश्चर्ये इति ङकार आत्मनेपदार्थः । विस्मयक्रियायां चित्रीयङ् - धातुरित्यर्थः । कण्ड्वादिभ्यो यण्णिति । एतदपि न वक्तव्यम्, कण्ड्वादिक्रियायां कण्डूयञ्प्रभृतयो धातव इति ।

'कण्डूयञ्, मन्तूयञ्, मण्डूयञ्, मन्तूय, असूयञ्, कलीयङ्, महीयङ्, ऋणीयञ्, हृणीयङ्, वल्गूयञ्, वैयञ्, नायञ्, वेट्य, नट्य, नाट्य, तिरस्य, इरस्य, इरज्य, इर्य्यञ्, उरस्य, उपस्य, भुरण्य, तन्तस्य, लोट्य, लेट्य, एलाय, केलाय, खेलाय, लाट्य, मेधाय, कुसुभ्य, मगध्य, इषुध्य, सुख्य, दुःख्य, समर्य, अरर्य, आर्य,

भरण्य, तुरण्य, भुरण्य, नीचस्य, पम्पश्य, भिषज्य, चुरण्य, गद्गद्य, इल्य, लेख्य, लेखाय, लिट्य, लाट्य, रेखाय, अगद्य, द्रव्यस्य, पयस्य, सम्भूयस्य, अम्बर्य्य, सम्बर्य्य'। एतदित्यादि। एतेन रोमन्थादिभ्यो नामगणेभ्योऽसावसौ प्रत्ययो वाशब्दात् तत्र तत्रार्थे भवतीति मतं दर्शयति ॥ ४५८।

**[ क० च० ]**

कर्तुः। ननु कर्तृभूतान्नाम्न आयिर्विधीयते। नहि आयेः प्रकृतेः कर्तृत्वं प्रतीयते किन्त्वन्यस्य। तथाहि 'श्येनायते काकः' इत्यत्र काकस्यैव कर्तृत्वं प्रतीयते न श्येनस्येति ? सत्यम्। उपमानभूतात् कर्तुरायिरित्युक्तेऽयमेवार्थः। तथाहि यत्कर्तृक आचारे अन्य उपमीयते तस्मादायिर्भवतीति। एवं च सति श्येनो यथाचरति तथा काक आचरतीत्यर्थो बोद्धव्यः। **वस्तुतस्तु** कर्तुरिति सम्बन्धे षष्ठी न तु पञ्चमी। ततश्चाचारेऽभिधेये यः कर्ता तस्य यदुपमानं तस्मादायिर्भवतीति ब्रूमः। न चोपमानादित्यनेन सामानाधिकरण्येनान्वयसंभवात् कर्तुरिति पञ्चम्येवेति वाच्यम्, **विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्वात्**।

ननु आयेराकारकरणं किमर्थम्, यावता कृतस्यापि नामिव्यञ्जनान्ताद् इत्यनेन लोपो भविष्यति। तर्हि अकारान्ताद् दीर्घश्रवणार्थं यथा श्येनायते इति चेत् तर्हि नाम्यन्तानामित्यत्र नाम्यन्तग्रहणं न क्रियतां ततश्चाकारान्तस्यापि दीर्घे सति श्येनायते इत्यादिकं भविष्यति तत्रापि नाम्यन्तग्रहणं यथासम्भवदर्शनार्थम् इति **वृत्तिकृताप्युक्तम्**, न तु कार्यार्थमिति। न च आय्यन्ताच्चेत्यत्राय्यन्ताच्चेति कृतेऽविशेषाद् यिनोऽपि ग्रहणं भविष्यति इति वाच्यम्। **'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य'** (व्या० परि० ५२) इति न्यायात् **"नाम्यन्तानां यणायि०"** (३।४।७०) इत्यादौ यिन उपादानाच्च ? सत्यम्। आकारकरणात् क्वचिद् व्यञ्जनान्तादपि आकारश्रुतिर्भवति। यथा 'शरदायते, प्रावृषायते' इति **वररुचिः**। न च व्यञ्जनान्तादाप्रत्ययेऽपि **शास्त्रकारस्येष्टत्वात्** तत् सिद्धमिति वाच्यम्। तस्य पाक्षिकत्वेन तदभावपक्षेऽनिष्टं स्यात्। **वस्तुतस्तु** विचित्रार्थ एवाकारः। अत एव **पाणिनितन्त्रे** न दृश्यते। अथ यिङिति क्रियताम्, तथा च ङकारस्यात्मनेपदित्वाद् आय्यन्ताच्चेत्यपि न कृतं स्यादिति चेत्, सूत्रं विनाऽन्तग्रहणस्य यत् फलं दरिद्रतीत्यादौ तत् कथं स्याच्चेत्, न **स्वमतम्**। अथ **परमतमपि शिष्यबोधनार्थं** स्फुटीकर्तव्यम्। तर्हि रुचाद्याश्रयणाद् भविष्यति चेत् कष्टं स्यादिति। गर्दभतीति **वृत्तिः**। अत्रायिविषये **"सर्वप्रातिपदिकेभ्यः क्विप्"** इति **काशिका**। तर्हि **अस्मन्मते** कथं क्विबन्तादायिश्चेदुच्यते। अत्र आयिविषयेऽकारान्तगल्भक्लीबहोडेभ्यः क्विप् इति **काशिका** एषामदन्तानां पकारानुबन्धत्वं करोति क्विबन्तेभ्य

आत्मनेपदार्थम् । अत एव तद्वदत्रापि कल्प्यते । अप्सरस इत्यादि **वृत्तिः** । यद्यपि **'स्त्रियां बहुष्वप्सरसः'** ( १।१।५२ ) इति **अमर**स्तथापि एकाप्सरोविवक्षया एकवचनमिति **कुलचन्द्रः** ।

**वयं** तु शब्दानुकरणादेकवचनमिति ब्रूमः । यथा चतुर इति । तथा च्व्यर्थ इति **वृत्तिः** । अत्र **''भृशादिभ्यो भुव्यर्थे च्वेर्लोपो हलश्च''** (अ० ३।१।१२) इति **परसूत्रम्** । **अस्यार्थः**– भुवनं भूस्तस्मिन् भुवि तदर्थे भृशादिभ्य आयिर्भवति, अन्तस्य व्यञ्जनस्य च लोपः । अच्वेरिति च्विवर्जितेभ्यो भृशादिभ्य इत्यर्थः । भृशादिविशेषणत्वेऽप्येकवचनं **''विभक्तीनाममपञ्चम्याः''** (२।४।१) इतिवद् अच्वेरिति पर्युदासवृत्त्या च्व्यर्थसदृशस्य भृशादेरित्यर्थः । सादृश्यं चाभूततद्भावत्वादर्थकृतमेवेति **न्यासः** । ''डाज्लोहितादिभ्यः'' इति **वृत्तिः** । **परेणा**प्यत्र ''डाज्लोहितादिभ्य उभयम्'' इत्युभयपदविधानार्थम् आयिविषये डाज् ज्ञाप्यते । **''कष्टाय क्रमणे''** (अ० ३।१।१४) इति **पाणिनिः** । 'सुपः' इति पञ्चम्यन्ता प्रकृतिरनुवर्तते । **अयमर्थः**– कष्टार्थं यत्प्रातिपदिकम्, ततः क्रमणेऽर्थे आयिर्भवतीत्यर्थः । क्रमणं चात्र प्रवर्तनम्, कष्टायेति सामान्येन निर्देशात् शत्रकक्षकृच्छ्रगहनेभ्योऽपि स्यात् । तथा चात्र **श्लोकः**– **'तादर्थ्य एवात्र भवेच्चतुर्थी कष्टाय यत् क्रामति कर्मणे तु'** इति **भाषावृत्तिः । वृत्तौ** तु ''कष्टाय कर्मणे'' इति **परमता**नुवादनं क्रामतीति वाक्यम् । परदर्शनम् अत्रापि कष्टायेति संबन्धनीयम् । **केचित्तु** ''कष्टाय कर्मणे'' पठन्ति, स च सुगम एव । रोमन्थमिति वृत्तिः । **''कर्मणो रोमन्थतपोभ्यां वर्तिचरोः''** (अ ३।१।१५) इति **पाणिनिः** । उभयसामानाधिकरण्ये पूर्ववत् कर्मण इत्येकवचनम् । अस्मादेव निर्देशाद् वर्तेरिनन्तादपि युविषये क्तिः । चरणं चर्, सम्पदादित्वात् क्विप् । व्यवस्थितवास्मरणाद् वर्तनमिह हनुचलनमेव गृह्यते । बाष्पमुद्वमतीति **वृत्तिः** । अथात्र **''बाष्पोष्मभ्यामुद्वमने''** (अ० ३।१।१६) इति **पाणिनिः** । उद्वमनशब्दोऽत्र क्रियावचनः, कर्मण इत्यनुवृत्तिः । न हि क्रियां विना कर्मत्वं भवतीति **न्यासः** । चकाराधिकारात् फेनाच्चेति **न्यासः** । सुखादीनीति **वृत्तिः** । **''सुखादिभ्यः कर्तृवेदनायाम्''** (अ० ३।१।१८) इति **पाणिनिः** । कर्तृपदादात्मसुखवेदनायामेवेति **न्यासः** । शब्दादीनि करोतीति **वृत्तिः** । तत्र **''शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे''** (अ० ३।१।१७) इति **पाणिनिः** । करणशब्दोऽत्र क्रियावचनः, कर्मणः इत्यनुवृत्तिः, न हि क्रियां विना कर्मत्वं युज्यते इति **न्यासः** । नमस्तप इत्यादि वृत्तिः । **''नमो वरिवश्चित्रङः क्यङ्''** (अ० ३।१।१९) इति **पाणिनिः** । करण इत्याद्यनुवर्तते शब्दशक्तिस्वभावात् कर्मविशेषो लभ्यते । तेन पूजापरिचर्याश्चर्येष्वेवाभिधानम्, यथासूत्रं विना बहुव्रीहेर्मत्वर्थ एव **न्यासः** । तप-

सश्चरत्यर्थे आयिप्रत्ययार्थं सूत्रं रोमन्थायते इत्यत्रोक्तमेव। तत्र **"आय्यन्ताच्च"** (३।२।४४) इत्यात्मनेपदे प्राप्ते परस्मैपदार्थं वक्तव्यमिति **काशिका**। कण्ड्वेत्यादि **वृत्तिः**। **"कण्ड्वादिभ्यो यक्"** (अ० ३।१।२७) इति पाणिनिः। करण इति वर्तते।

**पञ्जी** – अन्वाचयशिष्टेति। व्याख्यानादन्वाचयशिष्टोऽयं चकारः इति **रक्षितः**। व्याप्तिन्यायादिति **अन्ये**। नामिव्यञ्जनान्तादिति **महान्तः**। अन्यथा यदि यत्रायिस्तत्रैव लोपस्तदा कथं नामिव्यञ्जनान्तादायेरादिलोपप्रसङ्गः इति भावः। वर्णान्तस्येत्यादि। ननु कर्तुरित्यनेन पञ्चम्यन्तेन सह सलोप इत्यस्यासम्बन्धाद् वर्णान्तस्येति परिभाषायाः अप्रवेशाद् यत्र कुत्रापि स्थितस्य सकारस्य लोपः स्यात्? सत्यम्। कर्तुरिति विभक्तिविपरिणामे सति षष्ठ्यन्तविपरिणामस्य कर्तृभूतस्य नाम्न एव सलोपः इत्यर्थे सति सम्बन्धोपपत्तौ **'वर्णान्तस्य विधिः'** (का० परि० ५) इति परिभाषाविषयोऽस्त्येवेति न दोषः। ननु 'सारसायते' इत्यादौ अकारस्य दीर्घत्वे सति परनिमित्तादेश इति न्यायात् सान्तत्वमस्त्येव, तस्मात् सलोप एव स्यात्? **'स्वरादेशः परनिमित्तिकः पूर्वविधिं प्रति स्थानिवत्'** (का० परि० ९) इति न्यायादकारोऽस्त्येव। न च **"न पदान्त०"** (का० परि० १०) इत्यादिना दीर्घविधिं प्रति न स्थानिवदिति वाच्यम्, नञोऽनित्यत्वात्। तथा च सति **'असिद्धं बहिरङ्गम्'** (का० परि० ३३) इत्यादिनाऽसिद्धवद्भावोऽपि वक्तुं शक्यते इति।

**वस्तुतस्तु "ओजसोऽप्सर०"** इत्यादिनात्र सलोपो नास्तीति व्याख्यास्यते। अतो विद्वस्यते इत्यत्र नास्ति सलोप इति ब्रूमः। ओजस इत्यादि। अतोऽन्यत्र सलोपो नास्तीति विकल्पनित्ययोर्नियतविषयत्वात्। एवं सति 'विदुष्यमाणः' इत्यादिप्रयोग उपपन्न इति। पचाद्यजिति। अन्यथा **"नामिव्यञ्जनान्तादा"** (३।६।४२) इत्यादिना आयेरादिलोपे अनिष्टापत्तिः। यत्पुनरित्यादि। ननु **परमते** 'गल्भाञ्चक्रे देवदत्तेन' इति भावेऽपि भवति। भवदीययुक्त्या तु गल्भादिशब्दस्य सकर्मकत्वात् कथं भावे? सत्यम्। 'मासान् पच्यते' इतिवत् सकर्मकादपि धातोर्भावे प्रत्ययो भवतीति। यदि पुनः 'भावाख्यातं ध्रौव्याद्' इति मतमाश्रीयते, तदानभिधानाद् न भवतीति वाच्यम्। गल्भाञ्चकार इति, एवं गल्भाञ्चक्रे इति कर्मण्यपि प्रत्ययो न भवति। **वस्तुतस्तु** गल्भाञ्चकार, गल्भाञ्चक्रे देवदत्तेनेति प्रयोगो भवत्येव। पाणिनिनापि अपूर्वगल्भस्यैव सूत्रे पाठात्, किन्तु अवगल्भाञ्चक्रे इत्यादि प्रयोगो न भवतीति ब्रूमः। **पञ्जी-टीकयोर**पि तात्पर्यं व्याख्येयम्।

**कण्ड्वादिभ्यः इति**। कण्डूयञ् गात्रविघर्षणे वर्तते। मन्तूयङ् वैमनस्ये। वल्गूयञ् सौन्दर्यपूजनयोः। तथा च **'वल्गूयन्तीं विलोक्य त्वां स्त्री न वल्गूयतीह'**।

असूयञ् मन उपतापे अक्षमायां वा । हृणीयङ् क्रोशनलज्जयोः । तथा च – 'हृणीयते वीरवती न भूमिः' । महीयङ् पूजायाम् । तथा च 'महीयमाना भवतातिमात्रम्' । लेट्‌य लोट्‌य धौर्त्त्ये पूर्वभावे स्वप्ने च । इरस्य तिरस्य उरस्य परितापे परिचरणे । भिषज्य चिकित्सायाम् । एलाय केलाय खेलाय लोट्‌य लेट्‌य लेख्य उन्मादने कुत्सायाञ्च । कुसुभ्य, मगध्य परिवेष्टने याच्ञायाञ्च । सुख्य दुःख्य तत्क्रियायाम् । इषुध्य शरधारणे अवगाहने च । चरण्य वरण्य गतौ । तुरण्य त्वरायाम् । चुरण्य चौर्य्ये । क्लिश्य खेदे । 'क्लिश्यन्नपि हि मेधावी' इति ।

**अथ पाणिनिसम्मताः कण्डूयादिधातवः** – १. कण्डूयञ् गात्रविघर्षणे । कण्डूयति, कण्डूयते । २. मन्तूय अपराधे, रोषे इत्येके । मन्तूयति । **चन्द्र**स्तु ञितमाह – मन्तूयति, मन्तूयते । ३. वल्गूय पूजामाधुर्ययोः । वल्गूयति ।४. असूय उपतापे । असूयति । असूयञ् इत्येके । असूयति, असूयते । ५. लेट्‌य लोट्‌य धौर्त्त्ये पूर्वभावे स्वप्ने च, दीप्तावित्येके । लेट्‌यति, लोट्‌यति । लेलाय दीप्तौ । लेलायति । ६. इरस्य इरज्य इर्य्यञ् ईर्ष्यायाम् । इरस्यति, इरज्यति । ईर्य्यति, ईर्य्यते । ७. उषस्य प्रभातीभावे । उषस्यति । ८. वेद्य धौर्त्त्ये स्वप्ने च । वेद्यति । ९. मेधाय आशुग्रहणे । मेधायति । १०. कुसुभ्य क्षेपे । कुसुभ्यति । ११. मगध्य परिवेष्टने । मगध्यति । नीच्य दास्ये इत्यन्ये । नीच्यति । १२. तन्तस्य पम्पश्य दुःखे । तन्तस्यति, पम्पश्यति । १३. सुख्य दुःख्य तत्क्रियायाम् । सुख्यति, दुःख्यति । सुखं दुःखञ्चानुभवतीत्यर्थः । १४. सपर्य पूजायाम् । सपर्यति । १५. अरर्य्य आराकर्मणि । अरर्य्यति । १६. भिषज्य चिकित्सायाम् । भिषज्यति । १७. भिष्णज्य उपसेवायाम् । भिष्णज्यति । १८. इषुध्य शरधारणे । इषुध्यति । १९.चरण्य वरण्य गतौ । चरण्यति, वरण्यति । २०. चुरण्य चौर्य्ये । चुरण्यति । २१. तुरण्य त्वरायाम् । तुरण्यति । २२. भुरण्य धारणपोषणयोः । भुरण्यति ।२३. गद्गद्य वाक्स्खलने । गद्गद्यति ।२४. एलाय केलाय खेलाय विलासे । एलायति, केलायति, खेलायति । २५. लेखाय स्खलने च । लेखायति । अदन्तोऽयम् इत्यन्ये । लेख्यति । २६. लिट्‌य अल्पकुत्सनयोः । लिट्‌यति । २७. लाट्‌य जीवने । लाट्‌यति । २८. हृणीयङ् रोषणे लज्जायाञ्च । हृणीयते । २९. महीयङ् पूजायाम् । महीयते । पूजां लभते इत्यर्थः । ३०. रेखाय श्लाघासादनयोः । रेखायति । ३१. द्रवस्य परितापचरणयोः ।द्रवस्यति ।३२. तिरस्य अन्तर्धौ ।तिरस्यति ।३३. अगद्य नीरोगत्वे । अगद्यति । ३४. उरस्य बलार्थे । उरस्यति, बलवान् भवतीत्यर्थः । ३५. तरण्य गतौ । तरण्यति । ३६. पयस्य प्रसृतौ । पयस्यति । ३७. सम्भूयस्य प्रभूतभावे । सम्भूयस्यति । ३८. अम्बर्य्य सम्बर्य्य संवरणे । अम्बर्य्यति, सम्बर्य्यति । **आकृतिगणोऽयम्** ॥४५८॥

**[ समीक्षा ]**

'श्येन इवाचरति, पुष्करमिवाचरति, अप्सरा इवाचरति' इत्यादि विग्रह में 'श्येनायते-पुष्करायते-अप्सरायते' आदि शब्दों के साधनार्थ कातन्त्रकार ने आयि प्रत्यय-सलोप तथा पाणिनि ने क्यङ् प्रत्यय-सलोप का विधान किया है। पाणिनि का सूत्र है– "कर्तुः क्यङ् सलोपश्च" (अ० ३।१।११)। 'श्येनायते – अप्सरायते' आदि प्रयोगों में 'य' से पूर्ववर्ती अकार को पाणिनीय व्याकरण में दीर्घ आदेश करना पड़ता है। कातन्त्रकार ने प्रत्यय में ही दीर्घ आकार को पढ़ा है, लेकिन प्रक्रिया के अनुसार यहाँ भी दीर्घ तो करना ही पड़ता है। अतः उभयत्र समानता ही है। व्याख्याकारों ने भाषावृत्तिकार –रक्षित-पाणिनि आदि आचार्यों के विविध मत दिखाए हैं। कलापचन्द्रकार ने पाणिनिसम्मत जो कण्ड्वादिपाठ प्रस्तुत किया है, वह मूलपाठ से पर्याप्त भिन्न होने के कारण समीक्षणीय है।

**[ विशेष वचन ]**

१. ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया।
आयिलोपश्च विज्ञेयो न चाश्वो गर्दभत्यपि ।।(दु० वृ०)।

२. एतत् सर्वं वाशब्देन बहुलार्थेन वा सिद्धम् ।। (दु० वृ०)।

३. अन्वाचयशिष्टोऽयं चकारः। यस्मादनपेक्ष्य आयिर्विधीयते सलोपस्त्वायिमपेक्षते। चार्थयोगात् सलोपे कर्तव्ये, अर्थात् कर्तुरिति षष्ठी तत्सान्तत्वेन विशिष्यते। श्येनस्य कर्तुर्यदाचरणं तद्वत् काकस्यानुतिष्ठतः श्येनायते इति प्रसिद्धिः (दु० टी०)।

४. अथ प्रकृतिविपरीतो यदर्थात्मा सम्पद्यते व्यवस्थितस्यैव गुणान्तरसम्बन्धात् स परिणामोऽभूततद्भाव उच्यते (दु० टी०)।

५. परस्य क्रमणमपि प्रवर्तनमेव न पादविहरणम्। कष्टाय तपसे क्रामतीति प्रथमान्ततैव न घटते इति भावः। (दु० टी०)।

६. उपपदविभक्तेः कारकविभक्तिर्बलीयसीति कारकनिमित्ता हि विभक्तयोऽन्तरङ्गाः, उपपदनिमित्तास्तु पदान्तरापेक्षणाद् बहिरङ्गाः (दु० टी०)।

७. सलोपश्चेति चकारस्यान्वाचयशिष्टत्वात् तदभावेऽप्यायिरिति दर्शयति – श्येनायते इति (वि० प०)।

८. एते च स्वभावादन्तर्भूतोपमानोपमेयभावा इत्यर्थोऽपि न भिद्यते (वि० प०)।

९. रोमन्थायते गौरिति । यदभ्यवहृतं तत् पुनराकृष्य चर्वयतीत्यर्थः । हनुचलन एवेति हनुर्वदनैकदेशस्तस्य चलन एव भवति । इह न स्यात् – 'कीटो रोमन्थं वर्तयति' इत्युद्‌गीर्य बहिस्त्यक्तमवगीर्णं वा पृष्ठान्तेन निर्गतं रोमन्थाख्यं द्रव्यं वर्तयति, गुटिकां करोतीत्यर्थः । तेनात्र हनुचलनं न विद्यते पूर्वत्र तु विद्यते एव चर्वणस्य हनुचलनार्थकत्वाद् इति । तेन 'रोमन्थं वर्तयति हनुचलने' इति सूत्रं न वक्तव्यम् (वि० प०) ।

१०. विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्वात् (क० च०) ।

११. आकारकरणात् क्वचिद् व्यञ्जनान्तादपि आकारश्रुतिर्भवति । यथा 'शरदायते, प्रावृषायते' इति वररुचिः । न च व्यञ्जनान्ताद् आप्रत्ययेऽपि शास्त्रकारस्येष्टत्वात् तत् सिद्धमिति वाच्यम् । तस्य पाक्षिकत्वेन तदभावपक्षेऽनिष्टं स्यात् । वस्तुतस्तु विचित्रार्थ एवाकारः, अत एव पाणिनितन्त्रे न दृश्यते (क० च०) ।

१२. पञ्जी – अन्वाचयशिष्टेति । व्याख्यानादन्वाचयशिष्टोऽयं चकारः इति रक्षितः, व्याप्तिन्यायादित्यन्ये, नामिव्यञ्जनान्तादिति महान्तः (क० च०) ।

**[ रूपसिद्धि ]**

१. **श्येनायते** । श्येन इवाचरति । श्येन + आयि + ते । 'आचरति' अर्थ में उपमानवाची 'श्येन' शब्द से प्रकृत सूत्र द्वारा आयि प्रत्यय, 'इ' अनुबन्ध का प्रयोगाभाव, समास, विभक्तिलोप, "समानः सवर्णे दीर्घीभवति परश्च लोपम्" (१।२।१) से नकारोत्तरवर्ती अकार को दीर्घपरवर्ती आकार का लोप, "ते धातवः" (३।२।१६) से 'श्येनाय्' की धातुसंज्ञा, "आय्यन्ताच्च" (३।२।४४) से प्रथम पुरुष-एकवचन (वर्तमाना) ते विभक्ति, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण तथा न् अनुबन्ध का प्रयोगाभाव ।

२. **सारसायते** । सारस इवाचरति । सारस + आयि + ते । पूर्ववत् प्रक्रिया ।

३-५. **ओजायते** । ओज इवाचरति । ओजस् + आयि + ते । **अप्सरायते** । अप्सरा इवाचरति । अप्सरस् + आयि + ते । **पयायते – पयस्यते** । पय इवाचरति । पयस् + आयि + ते । 'आचरति' अर्थ में प्रकृत सूत्र द्वारा आयि प्रत्यय तथा सलोप । पयस् शब्द से सलोप वैकल्पिक एवं विभक्ति कार्य । सलोपाभाव पक्ष में 'पयस्यते' रूप ।

६. **गर्दभति** । गर्दभ इवाचरति । गर्दभ + आयि + ति । प्रकृत सूत्र द्वारा आयि-प्रत्यय तथा उसका लोप ।

७-९. **भृशायते** । अभृशो भृशो भवति । भृश + आयि + ते । **उन्मनायते** । अनुन्मना उन्मना भवति । उन्मनस् + आयि + ते । **दुर्मनायते** । अदुर्मना दुर्मना भवति । दुर्मनस् + आयि + ते । च्व्यर्थ में प्रकृत सूत्र द्वारा आयि प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ।

१०-११. **बेहायते** । अबेहत् बेहद् भवति । बेहत् + आयि + ते । **शश्वायते** । अशश्वत् शश्वद् भवति । शश्वत् + आयि + ते । उभयत्र तलोप तथा अन्य प्रक्रिया पूर्ववत् ।

१२-१८. **पटपटायते** । अपटपटा पटपटा भवति । पटपटा + आयि + ते । **लोहितायते** । अलोहितो लोहितो भवति । लोहित + आयि + ते । **कष्टायते** । कष्टाय कर्मणे क्रामति । कष्ट + आयि + ते । **पापायते** । पापाय कर्मणे क्रामति । पाप + आयि + ते । **कक्षायते** । कक्षाय कर्मणे क्रामति । कक्ष + आयि + ते । **शत्रायते** । शत्रुकर्मणे क्रामति । शत्रु + आयि + ते । **गहनायते** ।गहनकर्मणे क्रामति । गहन + आयि + ते । च्व्यर्थ तथा क्रामति अर्थ में आयि प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ।

१९-२७. **रोमन्थायते** । रोमन्थं वर्तयति । रोमन्थ + आयि + ते । **बाष्पायते** । बाष्पमुद्वमति । बाष्प + आयि + ते । **ऊष्मायते** । ऊष्माणमुद्वमति । ऊष्मन् + आयि + ते । **फेनायते** । फेनमुद्वमति । फेन + आयि + ते । **सुखायते** । सुखं वेदयते । सुख + आयि + ते । **दुःखायते** । दुःखं वेदयते । दुःख + आयि + ते । **शब्दायते** । शब्दं करोति । शब्द + आयि + ते । **वैरायते** । वैरं करोति । वैर + आयि + ते । **कलहायते** । कलहं करोति । कलह + आयि + ते । भिन्न भिन्न अर्थों में प्रकृत सूत्र द्वारा आयि प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ॥४५८।

## ४५९. इन् कारितं धात्वर्थे [ ३।२।९ ]

### [ सूत्रार्थ ]

क्रिया अर्थ में नाम (स्याद्यन्त) पद से पर में 'इन्' प्रत्यय होता है तथा उसकी 'कारित' संज्ञा भी होती है ॥४५९।

### [ दु० वृ० ]

धात्वर्थः **क्रिया** । नाम्नः इन् परो भवति धात्वर्थे, स च कारितसंज्ञकः । हलिं कलिं गृह्णाति – हलयति, कलयति । एवं कृतयति, त्वचयति, वर्णयति । तूस्तानि विहन्ति-वितूस्तयति । वस्त्रं समाच्छादयति – संवस्त्रयति । वर्मणा संनह्यति संवर्मयति । चूर्णैरवध्वंसते अवचूर्णयति । तत् करोति तदाचष्टे । मुण्डं करोति

मुण्डयति ।एवं मिश्रयति, श्लक्ष्णयति, लवणयति, सूत्रयति ।पयो व्रतयति ।पयो भुङ्क्ते इति गम्यते । वृषलान्नं व्रतयति । न भुङ्क्ते इत्यर्थः । सत्यमाचष्टे सत्यापयति। एवम् अर्थापयति, वेदापयति ।प्रियमाचष्टे प्रापयति ।आबागमश्च ।तेनातिक्रामति ।हस्तिना अतिक्रामति अतिहस्तयति । कर्तृकरणार्थे । वीणया उपगायति उपवीणयति । तूलैरव-कुष्णाति अवतूलयति । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति । कदाचिद् दर्शने । रूपं पश्यति निरूपयति ।

**बहुलमेतन्निदर्शनम्** ।तथा इनङ् अङ्गनिरसनेऽपि । हस्तौ निरस्यति हस्तयते । पादौ निरस्यति पादयते । एवम् पुच्छमुत्क्षिपति उत्पुच्छयते गौः । पुच्छं परिक्षिपति परिपुच्छयते । भाण्डानि समाचिनोति संभाण्डयते वणिक्। चीवरं संमार्जयति परिदधाति वा संचीवरयते भिक्षुः । **दिङ्मात्रम्** इदम् **गणकारवचनादप्यूह्यम्** ।।४५९।

## [दु० टी०]

इन् कारि० । यद्यपि धातवो भ्वादयस्तेषामर्थाः सत्तादयस्तथापि यस्मान्नाम्नो यस्मिन् धात्वर्थे इन् दृश्यते तस्मात् तस्मिन्नेव भवति, अभिधानाद् वाधिकारस्य बहुलार्थत्वाद् वा । एवमिति । कृतवर्णत्वचोऽपि गृह्णात्यर्थ एवेति भावः । एवं तूस्तानि विहन्ति वितूस्तयति । तूस्तान्युद्धरति उत्तूस्तयति । केशान् विजटीकरोतीत्यर्थः । वस्त्रात् करणादपि । वस्त्रेण समाच्छादयति संवस्त्रयति । चूर्णैरवकिरति अवचूर्णयति । मुण्डं बलीवर्दं करोतीति उभयधर्मविधाने न भवति । श्लक्ष्णं करोतीति अनुवादे न भवति । व्रतं करोतीति व्रतयति । सत्यापयतीति सत्यार्थवेदानामन्त आप् तु कारित एवेति चुरादिगणसूत्रम् । आख्यानमाचष्टे इति वाक्यमेव । कर्तुर्यदुपकारकं तस्मिन् वर्तमानान्नाम्न इत्यर्थः । इन्द्रियमपि विशिष्टं करणम् इति कर्तृग्रहणं तेनातिक्रामतीति हेतावपि प्रतिपत्तव्यम् । तथा इनङ् अङ्गनिरसनेऽपि चुरादौ गणसूत्रमित्यर्थः । धात्वर्थे इन् सिद्धः स ङानुबन्धो भवतीत्यर्थः । तेन कारितसंज्ञाप्यस्य सिद्धेति कारितलोपो भवति । हस्त्यते देवदत्तेन, पाद्यते देवदत्तेनेति भाव एव प्रतीयते । युक्तार्थे सति यथा पुत्रीय्यते छात्रेण, श्येनाय्यते काकेनेति । निरसनेऽपीत्यपिशब्दो बहुलार्थस्तेन पुच्छादुत्क्षेपणे भवति । भाण्डात् समाचयने । चीवरात् संमार्जन-परिधानयोः । **कारितमिति पूर्वाचार्यसंज्ञा सुखावबोधार्था** ।।४५९।

## [वि० प०]

इन्० । इहाविशेषनिर्देशेऽपि यस्मान्नाम्नो यस्मिन् धात्वर्थे इन् दृश्यते, तस्मात् तस्मिन्नेव भवत्यभिधानात् । अधिकृतस्य वाशब्दस्य बहुलार्थत्वाद् वेति दर्शयन्नाह-

हलिमित्यादि । अत एव बहुलमेतन्निदर्शनमिति वक्ष्यति । इनि लिङ्गस्येत्यादिनाऽन्त्यस्वरादिलोपः । एवमिति । कृतादिभ्यो गृह्णातीत्यर्थ एवेति भावः । वितूस्तयतीति । केशान् विजटीकरोतीत्यर्थः । आबागमश्चेति । सत्यार्थवेदानामन्त आप् तु कारित एवेति चुरादिवचनादाप् । यथा प्रियमाचष्टे इति विग्रहे कारिते सति **"प्रियस्थिरस्फिरोरुगुरुबहुल०"** (अ० ८।४।१५७) इत्यादिना प्रियशब्दस्य प्रादेशे सति एकस्वराणामदन्तानां चेत्याप् । कर्तृकरणार्थ इति । कर्तुः करणं कर्तृकरणम्, तदेवार्थस्तस्मिन्निति । करणं हि कर्तुरेव भवति । यदिह कर्तृग्रहणं तदिन्द्रियमपि विशिष्टं करणं तत्र मा भूद् इत्येतदर्थम् । अन्यथा चक्षुषा पश्यतीति एतदर्थे चक्षयतीति प्रयोगः स्यादिति भावः । अभिषेणयतीति । स्थासेनिसेधतीत्यादिना षत्वम् । तथा "इनङ् अङ्गनिरसनेऽपि" इति चुरादौ गणसूत्रमित्यर्थः । धात्वर्थे सिद्धे इन् प्रत्ययस्तस्य ङानुबन्धत्वमनेन विधीयते इत्यर्थः । तेनास्य कारितव्यपदेशः सिद्धो भवति । **"अङ्गनिरसनेऽपि"** इत्यपिशब्दो बहुलार्थ इत्याह– एवमिति । भाण्डानि समाचिनोतीति राशीकरोतीत्यर्थः । चीवरं संमार्जयतीति । **अन्ये** तु चीवरादर्जने परिधाने चेति **मतान्तरं** पश्यन्तश्चीवरं संमार्जयतीति पाठं न मन्यन्ते । **दिङ्मात्रमि**त्यादि । चुरादौ "श्वेताश्वाश्वतर०" इत्यादिगणसूत्रादप्यूहनीयमित्यर्थः ।।४५९।

**[क० च०]**

इन्० । अत्र **परः "मुण्डमिश्रश्लक्ष्णलवणसूत्रव्रतवस्त्रहलिकलिकृतहस्तेभ्यो णिच्"** (अ० ३।१।२१) इति सूत्रमेकम्, तथा **"सत्यापूशब्दरूपवीणातूलश्लोकसेनालोमत्वच्वर्णचर्मचूर्णचुरादिभ्यश्च"** (अ० ३।१।२५) इत्यपरं सूत्रं ब्रूते । न ह्यत्रार्थनियमोऽस्ति तेन करणे इत्यनुवृत्त्या क्रियासामान्यमेव प्रतीयते, किन्तु केवलं शब्दशक्तिस्वभावाद् अर्थविशेषो बोध्यः । **अस्मन्मते**ऽपि तदेवेत्याह– हलिं कलिमिति **वृत्तिः** । महद्धलं हलिरुच्यते । हलिकली कामधेनू अर्थबाहुल्यादिति **वृद्धाः** । तूस्तेति **वृत्तिः** । तूस्तं हलिः । वितूस्तयति पन्थानं राजेति **भाषावृत्तिः** । **कातन्त्रप्रदीपे** तु जटावचनस्तूस्तशब्दः प्रदर्शितः । तदनुसारेण **पञ्जीकृता** व्याख्यातम्– केशान् विजटीकरोतीति । पयो व्रतयतीति **वृत्तिः** । व्रतशब्दोऽयं भोजने तन्निवृत्तौ च वर्तते । तथा च व्रताद् भोजने तन्निवृत्तौ चेति **काशिका** । कदाचिद् दर्शन इति **वृत्तिः** । गणसूत्रमिदम् । अत्र अनन्तराच्चित्रशब्दात् कदाचिद् दर्शनयोरर्थयोरित्यर्थः । यथा चित्रयति चित्रम् । कदाचिद् आलेख्यं करोतीत्यर्थः । तथा निरूपयति रूपं पश्यतीत्यर्थः । **वृत्तौ** रूपान्निदर्शने इति **जयादित्य**मतेन सह स्वमतमेकीकृत्यैकमेवोदाहरणं प्रदत्तम् । बहुलमिति वृत्तिः । निदर्शनमुदाहरणं सूत्रैः संग्रहीतुमशक्यमित्यर्थः । एवं पुच्छमुत्क्षिपति इति

**वृत्तिः**।"पुच्छभाण्डचीवराण्णिङ्"(अ० ३।१।२०)इति **परः**।एवं करिभिरवबध्नाति अवकरयति। दात्रेण लुनाति दात्रयति। असिना छिनत्ति असयति। परशुना छिनत्ति परशयति इति **धातुवृत्तिः**। पञ्जी – यत् कर्तृग्रहणं तदिन्द्रियं विशिष्टं करणं तत्र मा भूदिति। तर्हि कथं मनसा अतिक्रामतीत्यर्थे अभिमनयति इति प्रयोगः? सत्यम्। कर्तृकरणार्थ इत्यनेनैव 'उपवीणयति' इत्यादिकं सर्वं सिध्यति, यत् पुनस्तेनातिक्रामतीति अपरसूत्रम्। तदतिमनयतीति साधनार्थमिति **हेमकरः**। तन्न, इन्द्रियस्यापि मनसः कर्तृकरणार्थाविरोधात्। यत्तु तेनातिक्रामतीत्युक्तम्, तद् हेत्वर्थविवक्षायामपि यथा स्यादिति। सहार्थेऽपि न भवति, **अनभिधानात्**॥४५९।

**[ समीक्षा ]**

'सत्यमाचष्टे सत्यापयति, प्रियमाचष्टे प्रापयति, कुर्वन्तं प्रयुङ्क्ते कारयति, पचन्तं प्रयुङ्क्ते पाचयति, चोरयति, चिन्तयति' आदि शब्दों के साधनार्थ कातन्त्रकार ने इन् प्रत्यय तथा पाणिनि ने णिच् प्रत्यय किया है। एतदर्थ दोनों ही व्याकरणों में ३-३ सूत्र पढ़े गए हैं। अर्थनिर्देश की दृष्टि से कातन्त्र का वर्गीकरण अधिक समीचीन है। पाणिनि ने दो सूत्रों में २२ शब्द पढ़े हैं। उनसे विविध अर्थों में णिच् प्रत्यय करके नामधातुएँ बनाई गई हैं– "मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्, सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्"(अ० ३।१।२१, २५)। कातन्त्रकार ने इस इन् प्रत्यय की कारित संज्ञा भी की है, परन्तु पाणिनि ने णिच् प्रत्यय की कोई भी संज्ञा नहीं की है। व्याख्याकारों ने भिन्न-भिन्न शब्दों से विविध अर्थों का निर्देश किया है।

**[ विशेष वचन ]**

१. पयो व्रतयति। पयो भुङ्क्ते इति गम्यते। वृषलान्नं व्रतयति। न भुङ्क्ते इत्यर्थः (दु० वृ०)।

२. दिङ्मात्रमिदम्, गणकारवचनादप्यूह्यम् (दु० वृ०)।

३. यद्यपि धातवो भ्वादयस्तेषामर्थाः सत्तादयस्तथापि यस्मान्नाम्नो यस्मिन् धात्वर्थे इन् दृश्यते तस्मात् तस्मिन्नेव भवति, अभिधानात्, वाधिकारस्य बाहुलार्थत्वाद् वा (दु० टी०)।

४. कर्तुर्यदुपकारकं तस्मिन् वर्तमानान्नाम्न इत्यर्थः। इन्द्रियमपि विशिष्टं करणमिति कर्तृग्रहणम्, तेनातिक्रामतीति हेतावपि प्रतिपत्तव्यम् (दु० टी०)।

५. कारितमिति पूर्वाचार्यसंज्ञा सुखावबोधार्था (दु० टी०)।

६. इहाविशेषनिर्देशेऽपि यस्मान्नाम्नो यस्मिन् धात्वर्थे इन् दृश्यते, तस्मात् तस्मिन्नेव भवति, अभिधानात् (वि० प०)।

७. तूस्तं धूलिः। वितूस्तयति पन्थानं राजेति भाषावृत्तिः। कातन्त्रप्रदीपे तु जटावचनस्तूस्तशब्दः प्रदर्शितः, तदनुसारेण पञ्जीकृता व्याख्यातम् – केशान् विजटीकरोतीति (क० च०)

८. बहुलमिति वृत्तिः। निदर्शनमुदाहरणम्, सूत्रैः संग्रहीतुम् अशक्यमित्यर्थः (क० च०)।

**[ रूपसिद्धि ]**

१. **हलयति**। हलिं गृह्णाति। हलि + इन् + अन् + ति। प्रकृत सूत्र द्वारा इन् प्रत्यय, न् अनुबन्ध का प्रयोगाभाव, "इनि लिङ्गस्यानेका०" (३।२।१२) इत्यादि 'हलि' शब्दस्थ इकार का लोप, "ते धातवः" (३।२।१६) से 'हलि' की धातुसंज्ञा, "शेषात् कर्तरि परस्मैपदम्" (३।२।४७) से वर्तमान में प्रथमपुरुष-एकवचन 'ति' विभक्ति, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, "नाम्यन्तयोर्धातु०" (३।५।१) इत्यादि से 'हलि' धातुस्थ इकार को गुण तथा "ए अय्" (१।२।१२) से एकार को अयादेश।

२-५. **कलयति**। कलिं गृह्णाति। कलि + इन् + अन् + ति। **कृतयति**। कृतं गृह्णाति। कृत + इन् + अन् +ति। **त्वचयति**। त्वचं गृह्णाति। त्वच् + इन् + अन् + ति। **वर्णयति**। वर्णं गृह्णाति। वर्ण + इन् + अन् + ति। पूर्ववत् प्रक्रिया।

६-३१. **वितूस्तयति**। तूस्तानि विहन्ति। वितूस्त + इन् + अन् + ति। **संवस्त्रयति**। वस्त्रं समाच्छादयति। संवस्त्र + इन् +अन् + ति। **संवर्मयति**। वर्मणा संनह्यति।संवर्मन् + इन् + अन् + ति। **अवचूर्णयति**।चूर्णैरवध्वंसते।अवचूर्ण + इन् + अन् + ति। **मुण्डयति**। मुण्डं करोति। मुण्ड + इन् + अन् +ति। **मिश्रयति**। मिश्रं करोति। **श्लक्ष्णयति**। श्लक्ष्णं करोति। **लवणयति**। लवणं करोति। **सूत्रयति**। सूत्रं करोति। **पयो व्रतयति**। व्रतं करोति (पयो भुङ्क्ते इति गम्यते)। वृषलान्नं **व्रतयति** (न भुङ्क्ते इत्यर्थः)। **सत्यापयति**। सत्यमाचष्टे। सत्य + आप् + इन् + अन् + ति। **अर्थापयति**। अर्थमाचष्टे। अर्थ + आप् + इन् + अन् + ति। **वेदापयति**। वेदमाचष्टे। वेद + आप् + इन् + अन् + ति।**प्रापयति**।प्रियमाचष्टे। प्रिय – प्र + आप् + इन् + अन् + ति। **अतिहस्तयति**। हस्तिना अतिक्रामति। अतिहस्तिन् + इन् + अन् + ति। **उपवीणयति**। वीणयोपगायति। **अवतूलयति**। तूलैरवकुष्णाति। **उपश्लोकयति**। श्लोकै-

रुपस्तौति। **अभिषेणयति**। सेनया अभियाति। **निरूपयति**। रूपं पश्यति। **हस्तयते**। हस्तौ निरस्यति। **पादयते**। पादौ निरस्यति। **उत्पुच्छयते**। पुच्छमुत्क्षिपति। **परिपुच्छयते**। पुच्छं परिक्षिपति। **संभाण्डयते** वणिक्। भाण्डानि समाचिनोति। **संचीवरयते** भिक्षुः। चीवरं संमार्जयति परिदधाति वा। प्रकृत सूत्र द्वारा विविध अर्थों में इन् प्रत्यय तथा अन्य प्रक्रिया प्रायः पूर्ववत् ॥४५९।

## ४६०. धातोश्च हेतौ [३।२।१०]

### [सूत्रार्थ]

हेतुरूप कर्ता के व्यापार को कहने वाली धातु से पर में इन् प्रत्यय होता है तथा उसकी कारित संज्ञा भी होती है ॥४६०।

### [दु० वृ०]

हेतुशब्देन हेतुकर्तृव्यापारोऽर्थाद् गम्यते। धात्वर्थं वर्तयन्त्य**न्ये**। हेतुकर्तृव्यापारे वर्तमानाद् धातोश्चेन् परो भवति, स च कारितसंज्ञकः। कुर्वन्तं प्रयुङ्क्ते कारयति। **पचन्तं प्रयुङ्क्ते** पाचयति। तथा – भिक्षा वासयति। कारीषोऽध्यापयति। तथा **कथकः** कंसं घातयति। सीतां हारयति। राजानमागमयति। तथा च किं गतेन, हतः कंस इति **लोकविवक्षा**। तथा रात्रिं विवासयति। विपूर्वो वसिरतिक्रमे वर्तते। **उज्जयिन्याः** प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयति। तथा पुष्येण चन्द्रं योजयति ॥४६०।

### [दु० टी०]

धातोः। फलसाधनयोग्यः पदार्थो लोके **हेतु**रुच्यते। तस्य ग्रहणेऽध्ययनेन वसतीत्यत्रापि स्यात्। तस्मात् "कारयति यः स हेतुश्च" इत्यस्य ग्रहणम्। कथमेतदिति क्रियाभावो हि धातुः, सर्वैव क्रिया हेतुमती। हेतुग्रहणमनर्थकम्, व्यवच्छेद्याभावात्, "**चुरादेश्च**" (३।२।११) इति पृथग्योगाच्च। चुरादयोऽपि हि धातव एवेत्याह – हेतुशब्देनेत्यादि। हेतुव्यापारः प्रेषणाध्येषणादिलक्षण इत्याह – अर्थादिति अर्थवशात्। न हि धातुः साधने वर्तितुम् उत्सहते। निमित्तमात्रं वा हेतुरिति कारकहेतोः शेषहेतोश्च ग्रहणम्। 'अन्नेन वसति' इत्यादौ तृतीययैव हेत्वर्थस्य द्योतितत्वाद् इन् न स्यात्। प्रकृत्यर्थविशेषणेऽप्युक्तः करोति प्रेषितः करोतीत्यत्र न भवति, स्वशब्देनोक्तत्वात् किमिना द्योत्यते। तर्हि 'पाचयत्योदनं देवदत्तो यज्ञदत्तेन' इति द्वयोः कर्त्रोरेकेन पदेनाभिधानं प्राप्नोति। 'गमितो ग्रामं देवदत्तो यज्ञदत्तेन' इत्यव्यतिरिक्तो गत्यर्थ इति कर्तरि क्तः प्राप्नोति। 'व्यतिभेदयते' इत्यव्यतिरिक्तो

हिंसार्थ इति ''न गतिहिंसार्थेभ्यः'' इति प्रतिषेधः प्राप्नोति ? सत्यम् । यथा प्रत्ययार्थविशेषणे प्रधानाप्रधानन्यायस्तद्वदिहापि, कथमन्यथा कर्तृभेदो यदि क्रियाभेदो नास्तीति। यस्य यत्नोऽस्ति स प्रधानकर्ता अन्यश्चाप्रधानमिति । औपश्लेषिकमधिकरणं वा, हेतुनोपश्लिष्टाद् धातोरिति ।

धात्वर्थं वर्तय**न्त्यन्ये** इति । **''इन् कारितं धात्वर्थे''** (३।२।९) इत्यतो धात्वर्थ इति वर्तते, हेतौ यो धात्वर्थस्तस्मिन् अभिधेये प्रेषणाध्येषणलक्षणे इन् भवति। प्रत्ययार्थविशेषणेऽपि 'ग्रामं गमयति, ग्रामाय गमयति' इति व्यतिरिक्तो गत्यर्थ इति गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ प्राप्नुतः। अभिषावयतीति व्यतिरिक्तः सुनोत्यर्थः इति सुनोतेरुपसर्गात् षत्वं न प्राप्नोतीति । एधो दकस्योपस्कारयतीति व्यतिरिक्तः करोत्यर्थ इति ''करोतेः प्रतियत्ने'' (२।४।३९) इति षष्ठी न प्राप्नोति ? सत्यम् । नासावेवं प्रेष्यते गच्छति । नासावेवं प्रेष्यते सुन्विति । किं तर्हि उपसर्गविशिष्टां क्रियां प्रति असौ प्रेष्यते अभिषुष्विति । नासावेवं प्रेष्यते कुरुष्वेति । किं तर्हि एधो दकस्योपस्कुरुष्व इति । यदि **''धातेश्च हेतौ''** (३।२।१०) इत्यर्थे इन् विधीयते निर्विशेषणं तदा विभक्तिर्न स्यात, इनैव हेतुकर्तुरभिधानात् । अथ संख्यापुरुषकालाभिधानायोत्पद्यते तथापि कर्मणि भावे च दुष्यति– कार्यते कटः, कारणा, पाचनेति । पञ्चभिर्हलैः कर्षतीति नात्र कृषिर्विलेखने, किन्तर्हि प्रतिविधाने उप्तबीजस्य बलीवर्दैः प्रतिविधानं करोतीत्यर्थः। 'राजा यजते, याजकाः याजयन्ति' इति कथं विपर्ययः। नैष दोषः, नावश्यं यजिर्हविःप्रक्षेपण एव वर्तते, किन्तर्हि हेतुत्यागेऽपि । तथा च लोके अहो यजते इत्युच्यते, याजकाश्च प्रयोजयन्तीति । आख्यानमात्रात् कृदन्तात् तदाचष्टे इतीन्, कृल्लुक् प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकमिति वक्तव्यम् । कंसवधमाचष्टे, कंसं घातयति, राजागमनमाचष्टे– राजानमागमयतीति । आख्यानमाचष्टे इति वाक्यमेव । दृश्यार्थायां च प्रवृत्तौ । मृगरमणमाचष्टे– मृगान् रमयतीति। आलोपश्च कालात्यन्तसंयोगे मर्यादायाम् । आरात्रिविवासमाचष्टे– रात्रिं विवासयति । चित्रीकरणे च प्राप्त्यर्थे । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयति– सूर्यमुद्गमयतीति ।

नक्षत्रयोगे जानात्यर्थे–पुष्येण चन्द्रयोगं जानाति, पुष्येण चन्द्रं योजयति । एतानि न वक्तव्यानीत्याह–तथेत्यादि । निमित्तभावेन स्थिता भिक्षा कारीषश्च हेतुरित्युक्तमेव कारके । तथाहि नावश्यं स एव वस्तुं प्रयुङ्क्ते य आह उष्यतामिति, तूष्णीमासीनोऽपि यस्तथा प्रत्याययति सोऽपि वस्तुं प्रयुङ्क्ते एव । एवमभिनयेन कथकः कथयति येन कंसवधाय बलिबन्धनाय च नारायणं प्रयुङ्क्त इति । तथा च परेषां

प्रत्ययनं यत्कालभेदेनाद्यापि लोके व्यवहार इति तत्र यः शब्दप्रतिपाद्योऽर्थस्तत्रापि तावद्धेतुत्वमस्ति किं पुनर्यत्र ते सौचनिकाः प्रत्यक्षं कंसं घातयन्ति, बलिं च बन्धयन्ति, तत्र हेतुत्वं न स्यात् । चित्रेषु च यथोदीर्णा निपाताः प्रहाराश्च दृश्यन्ते कंसाकर्षश्चेति । स तथा आचक्षाणः कथकोऽयम् । एवं रात्रिं विवस्तुं प्रयुङ्क्ते इति प्रतीयते । तथा त्वरितम् उज्जयिन्याः सकाशात् प्रस्थितो माहिष्मतीं गच्छति, येनास्य तत्र सूर्योदयो भवति । तेनैव परेषां प्रतीतिः । सूर्यमुद्गन्तुं प्रयुङ्क्ते समागतोऽयमधुनोद्गच्छति च सूर्यः । एवमसौ **गणक**स्तत्परः पुष्येण चन्द्रस्य योगमाख्यातुं पिण्डयति निर्णयति, येनैवं परेषां प्रतीतिः – पुष्येण चन्द्रो योजितोऽनेन वर्तते (उपकरणादिकं सज्जीकुरुते)। पृच्छतु मां भवान्, अनुयुङ्क्तां मां भवान् इति पञ्चम्यैवोक्तार्थत्वात् प्रेषणस्येन् न भवति । छात्रं प्रयुङ्क्ते इति युजिनैवोक्तत्वादिति ।।४६०।

**[वि० प०]**

धातोः । **लोके** फलसाधनयोग्यः पदार्थो **हेतु**रुच्यते । शास्त्रे च **"कारयति यः स हेतुश्च"** (२।४।१५) इति । अत्र यदि लौकिकहेतोर्ग्रहणं स्यात् तदा अध्ययनेन वसतीत्यत्रापि स्यात् । अस्त्वेवं विशेषाभावाच्चेत् तदयुक्तम्, हेतुग्रहणा-नर्थक्यप्रसङ्गात् । क्रियाभावो हि धातुः, क्रिया च साध्यरूपा, यच्च साध्यम्, तद् हेतुमन्तरेण न संभवतीति । **सर्वैव क्रिया हेतुमती** । ततो हेतुग्रहणेन किमिह व्यवच्छिद्यते, चुरादेश्चेति वचनाच्च । चुरादयो हि धातवस्तदर्थोऽपि क्रियालक्षण एव । क्रिया च साध्यरूपा, साध्यरूपत्वान्न हेतुव्यभिचारिणीत्यनेनैव सिद्धम्, तस्मात् कारयति यः स हेतुश्चेति । अस्य च द्रव्यत्वात् तत्र न धातुर्वर्तते इति । अर्थात् तद्व्यापार एव प्रतीयते इत्याह – हेतुशब्देनेत्यादि । हेतुव्यापारश्च प्रेषणाध्येषणादि-लक्षणः ।

धात्वर्थं वर्तयन्त्य**न्ये** इति । हेतौ यो धात्वर्थस्तस्मिन्नित्यर्थः । ननु भिक्षादीनाम-चेतनत्वात् प्रयोजकत्वं नास्ति तत् कथमत्र इन् प्रत्यय इत्याह – तथेत्यादि । नहि स एव वस्तुं प्रयुङ्क्ते य आह – उष्यतामिति । किन्तु तूष्णीं व्यवतिष्ठमानोऽपि यस्तथा प्रतिपादयति सोऽपि वस्तुं प्रयुङ्क्त एवेति न खल्वसौ मौनी वसेति वचनमनुच्चारयन् वसनक्रियानुकूलं च पीठादिकं प्रयच्छन् प्रयोजको न भवतीति, तस्माच्चेतनत्वमकिञ्चित्करमेव । **भिक्षा** च प्रचुरतरव्यञ्जनवती लभ्यमाना वासानुकूलं तृप्तिविशेषमादधाना कथन्न प्रयोजिकेति । तथा कारीषोऽपि निर्वातवह्निप्रज्वलितोऽ-ध्ययनविरोधिशीतादिकम् अपनयन् अध्ययनानुकूलं सामर्थ्यमुपजनयतीति युक्तम् । तस्यापि प्रयोजकत्वम् । तथा चोक्तम्,

**प्रेषणाध्येषणे कुर्वंस्तत् समर्थानि वाऽऽचरन्।**
**कर्तैव विहितः शास्त्रे हेतुसंज्ञां प्रपद्यते॥**

(वा० प० ३।७।१२५) इति।

तत्समर्थानीति। तस्मिन् वासादौ समर्थानि योग्यान्यनुकूलानि तृप्तिविशेषादीनि आचरन् सम्पादयन् भिक्षादिकोऽप्यर्थो हेतुरिति भावः। अध्यापयतीति। अधिपूर्व इङ् अध्ययने **"स्मिजिक्रीङाम् इनि"** (३।४।२४) इत्यात्वम्। **"अर्तिह्री०"** (३।६।२२) इत्यादिना पकारागमः। आख्यानमात्रात् कृदन्तात् तदाचष्टे इतीन्, कृल्लुक्, प्रकृतेः प्रत्यापत्तिः, प्रकृतिवच्च कारकम् इति वक्तव्यम्। **अस्यार्थः** – यत् किञ्चिद् आख्यायते तदाख्यानमात्रम् – कंसवधादि। सीताहरणादि राजागमनादिकं वा। तस्मात् कृदन्तात् तदाचष्टे इतीन्, कृल्लुक्, प्रकृतेः प्रत्यापत्तिः प्रकृतेः पुनरावृत्तिः। कारकं च प्रकृतिवद् भवति। अनिनन्तायाः कृत्प्रकृतेर्यादृशं कारकमभूत्, इनन्ताया अपि तादृशम् इत्यर्थः। तद् यथा हननं वध इति हन्तेर्वधिश्चेत्यलि वध्यादेशः। कंसस्य वधः कंसवधः इति कर्मणि षष्ठ्याः समासे च कृते कंसंवधमाचष्टे इतीन्। अल्प्रत्ययस्य लुक्, हन्तेश्च स्वरूपेणावस्थानम्, कंसस्य च कर्मत्वम्। तदेतन्न वक्तव्यमित्याह – तथेत्यादि। तथा हेत्वर्थविवक्षायामेव हन्तेरिन्नित्यर्थः।

एवमभिनयेनासौ **कथकः** कथां कथयति, येन कालभेदेऽपि परेषां प्रतीतिर्भवति – कंसं हन्तुं नारायणः कथकः प्रयुङ्क्ते इति। तथाहि **वक्तारो** वदन्ति – गच्छ त्वं हन्यते कंसः। **अपरो** वदति किं गतेन ? हतः कंस इति। एतदेवाह – तथा चेति। घातयतीति। **"हस्य हन्तेर्घिरिनिचोः"** (३।६।२८) इति घत्वम्। **"अस्योपधायाः"** (३।६।५) इत्यादिना दीर्घत्वम्, **"हन्तेस्तः"** (३।६।२७) इति नकारस्य तत्त्वम्। हारयतीति। हरतेरिन्, नामिनो वृद्धिः। एवं राजानमागमयतीति आङ्पूर्वाद् गमेरिन्। कंसवधमाचष्टे, सीताहरणमाचष्टे, राजागमनमाचष्टे इत्यादिवाक्ये त्विन्प्रत्ययो नाभिधीयते। "आलोपश्च कालात्यन्तसंयोगे मर्यादायाम्" इत्यपि न वक्तव्यम्।

**अस्यार्थः** – मर्यादायां य आङ्, तस्य लोपश्चकारात् पूर्ववद् इन्प्रत्ययादि कार्यं च। कालात्यन्तसंयोगे कृत्स्नस्य कालस्य व्याप्तौ गम्यमानायामिति। आरात्रिविवासमाचष्टे इतीन्। अत्र रात्रिशब्दो रात्रिसंबन्धिनीषु क्रियासु वर्तते। वसिरपि विपूर्वोऽतिक्रमे वर्तते। विवसनं विवास इति भावे घञ्। रात्रेर्विवासो रात्रिविवासः। आरात्रिविवासाद् आरात्रिविवासमिति। पश्चाद् आङो मर्यादायाम् अव्ययीभावः। **तदयमर्थः** – अस्तमयात् प्रभृतेर्याः प्रवृत्ताः क्रियाः यावदतिक्रान्ता रात्रिस्ताः साकल्येन

कथयति। रात्रिं विवासयतीति। अत्र विवसिरतिक्रमे। रात्रिः कर्त्री ततः कृतो लुक्यपि **"प्रकृतिवच्च कारकम्"** इत्यतिदेशात् कर्तृत्वमेव प्राप्तम्, कर्मत्वं तु ग्रामं गमयतीतिवद् गतिबुद्धीत्यादिना विपूर्वस्य वसेर्गत्यर्थत्वादिति। तदपि न वक्तव्यमित्याह– तथेति। स तथा कात्स्न्येन रात्रिसहचरितां क्रियाम् आप्रभातमाचक्षाणः कथको रात्रिं विवस्तुं प्रयुङ्क्ते इति हेत्वर्थविवक्षायामेव सिद्धमित्यर्थः।

उज्जयिन्या इत्यादि। अत्रापि तथा त्वरितम् उज्जयिन्याः सकाशात् प्रस्थितो माहिष्मतीं गच्छति, येनास्य तत्र सूर्योदयो भवति, तेनैव परेषां प्रतीतिः। सूर्यमुद्गन्तुमयं प्रयुङ्क्ते। समागतोऽहमिदानीम् उद्गच्छ सूर्येति हेत्वर्थे एवेन्प्रत्ययः। तस्माच्चित्रीकरणे प्राप्त्यर्थ इति न वक्तव्यम्। चित्रीकरणम् आश्चर्यम्, तच्चेत् प्राप्त्यर्थविषयं भवति, प्राप्तिकृतं भवतीत्यर्थः। उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयति। सूर्यमुद्गमयतीति। उज्जयिन्या हि माहिष्मती दूरदेश इति तावता देशस्याल्पेन कालेन प्राप्तत्वाद् आश्चर्यमिति। एवं नक्षत्रयोगे जानात्यर्थ इति वक्तव्यम्। पुष्येण चन्द्रस्य योगं जानाति, पुष्येण चन्द्रस्य योगं योजयतीत्यर्थः। यत एवमसौ **दैवज्ञः** पुष्येण चन्द्रस्य योगं जानाति (गणयति), तेनैव लोकस्य प्रतीतिः। पुष्येण चन्द्रोऽनेन योजित इति। तथा च **लौकिकव्यवहारः** कदा पुष्येण चन्द्रो योजयितव्यो भवतेत्याह– तथेति। पुष्येण चन्द्रो युनक्ति। तं प्रयुङ्क्ते योजयतीत्यर्थः ॥४६०।

**[क० च०]**

धातोः। हेतुग्रहणानर्थक्यप्रसङ्गादिति। ननु हेतुग्रहणस्य कथम् आनर्थक्यप्रसङ्ग इत्याह– क्रियाभावो हीत्यादि। किमिह व्यवच्छिद्यते इति। ननु कथमेवमुच्यते, यावता हेतुशब्दसामर्थ्याद् हेतुशब्दप्रयोगो यदा क्रियते तदैव प्रत्ययो भविष्यतीति। यथा अन्नस्य हेतोर्वसतीत्याशङ्क्याह– चुरादेश्चेति।

**अयमर्थः**– चुरादितो हि प्रत्ययः स्वार्थे विधीयते तत्र यद्यनेनैव स्वार्थे विधीयते किन्तेनेति ? ननु चुरादेश्चेति वचनं यत्र हेतुशब्दप्रयोगो नास्ति, तदर्थं भविष्यति। यथा चोरयति देवदत्तः ? सत्यम्। शास्त्रसंकेतितं परित्यज्य लौकिकहेतुग्रहणे प्रमाणं वाच्यं स्यात्। तथा च **पाणिनीयाः** पठन्ति– **'कृत्रिमाकृत्रिमयोः कृत्रिम एव कार्यसम्प्रत्ययः'** (व्या० परि० ६) इति। एतत्तु वचनाच्चेति चकारेण सूच्यते। धात्वर्थं वर्तयन्त्य**न्ये** इति। **अन्ये** इत्यन्ये, नास्माकं मतमिति सूच्यते। यावता यदि धात्वर्थो वर्तते तदा हेतुभूतो यो धात्वर्थस्तस्मिन् प्रत्यय इत्यर्थे सति भिक्षा वासयतीत्यत्रैव स्यात्, न देवदत्तः पाठयतीत्यत्र प्राप्नोति। अथ **विशेषणविशेष्यभावस्य प्रयोक्तु-**

**रायत्तत्वाद्** व्यधिकरणतयार्थः पर्यवस्यति। एतदेवाह – हेतौ यो धात्वर्थ इति चेत्, तथापि गौरवं तदनुवर्तनं विनापि साध्यस्य सिद्धेरिति।

**वयं** तु हेतौ यो धात्वर्थस्तस्मिन् वर्तमानाद्धातोरित्युक्ते भिक्षा वासयतीत्यादौ भिक्षधातोरेव प्रत्ययः इत्यपि सन्देहः स्याद् इति अस्वरसबीजं ब्रूमः। कंसस्य कर्मत्वमिति, ननु कथमेतत्। कंसस्य कर्मत्वेऽपि कथं द्वितीया कृत्प्रकृतेर्यादृशं कारकम्, इनन्ताया अपि तादृशस्योक्तत्वात् षष्ठी प्राप्नोतीति तत् समासः। किं च राजानमागमयतीति। अत्र कृत्प्रकृतौ राजा कर्ता, इनन्तायां सत्यां ध्रौव्यगति-शब्देत्यादिना कर्म कथं स्यात्? सत्यम्। प्रकृतिवच्च कारकम् इत्युक्तावपि **"गति-बुद्धि०"** (अ० १।४।५२) इत्यादिना प्राप्तं कर्मत्वादिकं न बाध्यते, प्रकृतिभाव-स्यान्यथोपपत्तौ बाधानौचित्यात्। तर्हि प्रकृतिभावेन किं कृतमिति चेदुच्यते – कृल्लुगित्यनेन कृत्प्रत्ययस्य लुप्तत्वादेव **'लुग्लोपे न प्रत्ययकृतम्'** (कलाप० २२२, ६९) इति न्यायात् पुनः षष्ठ्यादि कार्यं न भविष्यति। प्रकृतिप्रत्यापत्तिग्रहणाच्च धातोः स्वरूपेणावस्थानात् समासनिवृत्तिर्भविष्यति। तथा च यत् कारकस्य प्रकृतिभावो विधीयते तदिदमेव बोधयति। तथाहि कंसवधादिशब्दादिनि कृते समुदायस्यैव धातुसंज्ञत्वात् तत्पूर्वमेवाडागमद्विर्वचनादिकार्यं स्यात्। तदा च 'कंसमजीघनत्, राजानमजीगमत्' इत्यादिकं न सिध्यति। प्रकृतिवद्भावात् पुनः कारकस्य कारकत्व-मेव न तु धात्ववयवत्वमिति। चकारात् प्रयोगानुसारेणान्यत्रापि स्वार्थे इन् भवति। तथाहि – **'दशवर्षसहस्राणि रामो राज्यमचीकरत्'** (वा० रा० १।१।९७) इति। तथा **'दशास्यं घातयित्वा तु रामो यास्यति मन्दिरम्'** इति **वररुचिः**। **अन्ये** तु **"हन्त्यर्थाश्च"** इत्यत्र चकाराद् **गणान्तरपठिता अपि धातवश्चुरादौ वेदितव्या** इत्याहुः॥४६०।

**[ समीक्षा ]**

'कुर्वन्तं प्रयुङ्क्ते' अर्थ में 'कारयति' तथा 'पचन्तं प्रयुङ्क्ते' अर्थ में 'पाचयति' आदि शब्दों के साधनार्थ कातन्त्रकार ने धातु से इन् प्रत्यय तथा पाणिनि ने णिच् प्रत्यय का विधान किया है – "हेतुमति च" (अ० ३।१।२६)। अनुबन्धों की योजना उभयत्र अपने-अपने व्याकरण के अनुसार की गई है। अतः उभयत्र समानता ही दृष्ट होती है।

**[ विशेष वचन ]**

१. तथा च किं गतेन, हतः कंस इति लोकविवक्षा (दु० वृ०)।

२. फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते, तस्य ग्रहणेऽध्ययनेन वसतीत्यत्रापि स्यात्, तस्मात् कारयति यः स हेतुश्चेत्यस्य ग्रहणम् (दु० टी०)।

३. यथा प्रत्ययार्थविशेषणे प्रधानाप्रधानन्यायस्तद्वदिहापि। कथमन्यथा कर्तृभेदः, यदि क्रियाभेदो नास्तीति। यस्य यत्नोऽस्ति स प्रधानकर्ता अन्यश्चाप्रधानम् इति (दु० टी०)।

४. लोके फलसाधनयोग्यः पदार्थो हेतुरुच्यते। शास्त्रे च "कारयति यः स हेतुश्च" (२।४।१५) इति (वि० प०)।

५. क्रियाभावो हि धातुः, क्रिया च साध्यरूपा। यच्च साध्यम्, तद् हेतुमन्तरेण न संभवतीति। सर्वैव क्रिया हेतुमती, ततो हेतुग्रहणेन किमिह व्यवच्छिद्यते, चुरादेश्चेति वचनाच्च (वि० प०)।

६. ननु भिक्षादीनामचेतनत्वात् प्रयोजकत्वं नास्ति। तत् कथमत्र इन् प्रत्यय इत्याह– तथेत्यादि। न हि स एव वस्तुं प्रयुङ्क्ते य आह– उष्यतामिति। किन्तर्हि तूष्णीं व्यवतिष्ठमानोऽपि यस्तथा प्रतिपादयति, सोऽपि वस्तुं प्रयुङ्क्ते एवेति। न खल्वसौ मौनी वसेति वचनमनुच्चारयन् वसनक्रियानुकूलं च पीठादिकं प्रयच्छन् प्रयोजको न भवतीति। तस्माच्चेतनत्वमकिञ्चित्करमेव। भिक्षा च प्रचुरतरव्यञ्जनवती लभ्यमाना वासानुकूलं तृप्तिविशेषमादधाना कथन्न प्रयोजिकेति (वि० प०)।

७. यत एवमसौ दैवज्ञः पुष्येण चन्द्रस्य योगं जानाति (गणयति), तेनैव लोकस्य प्रतीतिः– पुष्येण चन्द्रोऽनेन योजित इति। तथा च लोकव्यवहारः (वि० प०)।

८. अथ विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्वाद् व्यधिकरणतयार्थः पर्यवस्यति (क० च०)।

९. चकारात् प्रयोगानुसारेणान्यत्रापि स्वार्थे इन् भवति। तथाहि– 'दशवर्षसहस्राणि रामो राज्यमकारयत्' इति। तथा च 'दशास्यं घातयित्वा तु रामो यास्यति मन्दिरम्' इति वररुचिः। अन्ये तु 'हन्त्यर्थाश्च' इत्यत्र चकाराद् गणान्तरपठिता अपि धातवश्चुरादौ वेदितव्या इत्याहुः (क० च०)।

**[ रूपसिद्धि ]**

१. **कारयति**। कुर्वन्तं प्रयुङ्क्ते। कृ+इन्+अन्+ति। 'डु कृञ् करणे' (७।७) धातु से हेत्वर्थ में प्रकृत सूत्र द्वारा इन् प्रत्यय, न् अनुबन्ध का प्रयोगाभाव, "अस्योपधाया वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से ऋ को वृद्धि आर्, "ते धातवः" (३।२।१६) से 'कारि' की धातु संज्ञा, "इनञ्यजादेरुभयम्" (३।२।४५) से परस्मैपदसंज्ञक प्रथमपुरुष – एकवचन 'ति' प्रत्यय, "अन् विकरणः

कर्तरि" (३।२।३२) से अन् विकरण, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से इ को गुण ए तथा "ए अय्" (१।२।१२) से अयादेश।

२-१०. **पाचयति**। पचन्तं प्रयुङ्क्ते। पच् + इन् + अन् + ति। भिक्षा **वासयति**। वसन्तं प्रयुङ्क्ते। वस् + इन् + अन् + ति। कारीषोऽ**ध्यापयति**। अधीयानं प्रयुङ्क्ते। अधि + इङ् + इन् + अन् + ति। कथकः कंसं **घातयति**। कंसवधमाचष्टे। हन् + इन् + अन् + ति। सीतां **हारयति**। सीताहरणमाचष्टे। हृ + इन् + अन् + ति। राजान**मागमयति**। राजागमनमाचष्टे। आङ् + गम् + इन् + अन् + ति। रात्रिं **विवासयति**। आरात्रि विवासमाचष्टे। वि + वस् + इन् + अन् + ति। उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्य**मुद्गमयति**। सूर्योद्गमनमाचष्टे। उद् + गम् + इन् + अन् + ति। पुष्येण चन्द्रं **योजयति**। पुष्येण चन्द्रयोगं जानाति। युज् + इन् + अन् + ति ॥४६०।

## ४६१. चुरादेश्च [३।२।११]

### [सूत्रार्थ]

'चुर्' इत्यादि धातुओं से स्वार्थ में इन् प्रत्यय होता है और उसकी कारित संज्ञा भी होती है ॥४६१।

### [दु० वृ०]

चुर् इत्येवमादिभ्यश्चेन् परो भवति स्वार्थे, स च कारितसंज्ञकः। चोरयति, चिन्तयति। कारितप्रदेशाः - "**कारितस्यानामिड् विकरणे**" (३।६।४४) इत्येवमादयः ॥४६१।

### [दु० टी०]

चुरादेः। वचनसामर्थ्यात् स्वार्थ इति निश्चितम्। संवाहनं संवहः, तं करोति - संवाहयति। सहनं साहस्तं करोतीति साहयति। योजनविशिष्टं करोति योजयतीति विवक्षया सिद्धम्। चुरादिषु युजादयः पठितव्यास्तेषां विभाषया इन् इति **एके**। योजयति -योजति। पर्चयति - पर्चति। साहयति - सहति। [1]**'स एवायं नागः सहति कलभेभ्यः परिभवम्'**। युज्, पृच्, सह, ईर, ली, वृजी, जृ, रिच्, शिष्, तृप्, छद, मी, क्रथ, हिसि, ग्रथ, चीक, शीक, आङः सद, जुष, श्रन्थ, ग्रन्थ, आप्, तनु, वच्, भू, मान, गर्ह, छृदी, दृभी, मार्ग, कठि, मृजू, धृष, मृष, तप, वद, अर्च्च, अर्द, शुन्ध्, वृञ्, धूञ्, प्रीञ्। **गणकृतमनित्यमिति**। भू प्राप्तावात्मनेपदी - भावयते, भवते।

**याचितारश्च नः सन्तु दातारश्च भवामहे।**

**आक्रोष्टारश्च नः सन्तु क्षन्तारश्च भवामहे॥** इति ॥४६१।

**[वि० प०]**

चुरादेश्च। स्वार्थ इत्यनिर्दिष्टार्थः प्रत्ययः स्वार्थे भवति। हेतौ च पूर्वेणैव सिद्धत्वादिति भावः ॥४६१।

**[क० च०]**

चुरादेश्च। चुराद्यन्तर्गणा ये युजादयः प्रीञ्पर्यन्ताः विकल्पेनन्ताः, **गणकृतस्यानित्यत्वादिति टीका**। मानवधेत्यत्र टीकायां च क्षुभिवाहीत्यादिसूत्रे विशब्दनप्रतिषेधाद् युजादिषु विकल्पः साधितः इत्यादि**सिद्धान्तान्तरम्**। चोरयति, चिन्तयतीति वृत्तिः। ननु इन्ञ्यजादेरित्यनेनात्मनेपदमपि स्यात् ? नैवम्, गणे आत्मनेभाषेति पाठबलात् सर्वत्र नोभयपदमिति ॥४६१।

**[समीक्षा]**

'चुर् स्तेये' (९।१) आदि धातुसूत्रों में निर्दिष्ट स्तेय आदि अर्थों में पाणिनि ने णिच् प्रत्यय तथा कातन्त्रकार ने इन् प्रत्यय करके 'चोरयति–चोरयते' आदि प्रयोग सिद्ध किए हैं। कातन्त्रकार ने चुरादिगणान्तर्गत युजादिगण की धातुओं से इन् प्रत्यय के विधानार्थ "चुरादेश्च" यह स्वतन्त्र प्रकृत सूत्र बनाया है, जबकि पाणिनि ने 'सत्यापपाश' इत्यादि के साथ ही इसे भी पढ़ दिया है– "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्" (अ० ३।१।२५)। व्याख्याकारों के अनुसार चुरादि से भिन्न गणों में भी पठित धातुओं से इन् प्रत्यय स्वार्थ में प्रवृत्त होता है। टीकाकार द्वारा उद्धृत मत के अनुसार चुरादिगण के अन्तर्गत युजादि गण पढ़ना चाहिए, जिसमें युज् आदि ४२ धातुओं का समावेश करना आवश्यक है। गणनिर्दिष्ट कार्य के अनित्य होने से इन् प्रत्यय वैकल्पिक होता है।

**[विशेष वचन]**

१. चुरादिषु युजादयः पठितव्यास्तेषां विभाषया इन् इत्येके (दु० टी०)।

२. गणकृतमनित्यमिति (दु० टी०)।

३. अनिर्दिष्टार्थः प्रत्ययः स्वार्थे भवति (वि० प०)।

४. चोरयति, चिन्तयतीति वृत्तिः। ननु "इनृत्र्यजादेरुभयम्" (३।२।४५) इत्यात्मनेपदमपि स्यात् ? नैवम्, गणे आत्मनेभाषेति पाठबलात् सर्वत्र नोभयपदमिति (क० च०)।

**[ रूपसिद्धि ]**

१. **चोरयति**। चुर् + इन् + अन् + ति। 'चुर् स्तेये' (९।१) धातु से स्तेय (चौर्य) अर्थ में प्रकृत सूत्र द्वारा इन् प्रत्यय, "नामिनश्चोपधायाः" (३।५।२) से चुर् - घटित उ को गुण, "ते धातवः" (३।२।१६) से 'चोरि' की धातुसंज्ञा, वर्तमानासंज्ञक प्रथम पुरुष – एकवचन 'ति' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, इकार को गुण तथा अयादेश।

२. **चिन्तयति**। चिन्त् + इन् + अन् + ति। पूर्ववत् प्रक्रिया ॥४६१।

## ४६२. इनि लिङ्गस्यानेकाक्षरस्यान्त्यस्वरादेर्लोपः [ ३।२।१२ ]

**[सूत्रार्थ]**

अनेक अक्षर वाले लिङ्ग से संबद्ध अन्त्यस्वरादि अवयव का इन् प्रत्यय के पर में रहने पर लोप होता है ॥४६२।

**[दु० वृ०]**

स्वराणां मध्ये योऽन्त्यः स्वरः स एवादिर्यस्यावयवस्येति विग्रहः। न क्षरति न चलतीति प्रधानत्वा**दक्षरं स्वर** उच्यते। इनि परे लिङ्गस्यानेकाक्षरस्य योऽवयवोऽन्त्यस्वरादिस्तस्य लोपो भवति। अतिहस्तयति, उपवीणयति। अनेकाक्षरस्येति किम् ? वाचयति। **"श्वेताश्वाश्वतरगालोडितह्वरकाणामश्वतरेतकलोपश्च"** इति **गणकारवचनादेव** – श्वेताश्वमाचष्टे श्वेतयति। अश्वतरमाचष्टे अश्वयति। गालोडितमाचष्टे गालोडयति। ह्वरकमाचष्टे ह्वरयति। **"तद्वदिष्ठेमेयःसु बहुलम्"** – पटिष्ठः, पटिमा, पटीयान्। **"मन्तुवन्तुवीनां लुक् च"** इति गणे इण्मन्तमाचष्टे ईशयति। स्रुग्वन्तमाचष्टे स्रुचयति। स्रग्विणमाचष्टे स्रजयति ॥४६२।

**[दु० टी०]**

इनि। हस्तिना अतिक्रामति, वीणया उपगायतीति अन्त्यस्वरमात्रत्वेऽपि आद्यन्तवदेकस्मिन्नित्युपचाराद् भवति। चुरादिगणसूत्राणामुदाहरणमुच्यते – श्वेताश्वेत्यादि। श्वेताश्वमाचष्टे, तेनातिक्रामति वा। यथासंख्यमनुदेशः समानानां भवति। तद्वदित्यादि। तस्मिन्निव तद्वत्, इनीवेत्यर्थः। पटिष्ठः, पटिमा, पटीयान्। इन्वदिति न कृतं लिङ्गविहितेनः परिग्रहार्थम्, अन्यथा वृद्धिगुणावप्याशङ्केत। मन्त्वित्यादि।

ईशनम् **ईट्**, सम्पदादित्वाद् भावे क्विप् । एवं गोमन्तमाचष्टे **गवयति** । अयमेषां गोमतां प्रकृष्टो **गोमान्**, **गविष्ठः** । स्रग्विणां स्रजिष्ठः, स्रुग्वतां स्रुचिष्ठः । गोमतोर्गवीयान्, स्रुग्वतोः स्रुचीयान् । स्रग्विणोः स्रजीयान् । मन्त्वाद्यन्ताद् इष्ठेयन्सू न दृश्येते इमन् न दृश्यते । **"प्रशस्यस्य श्रः"** (अ० ५।३।६०) इति श्रापयति सत्यापयति । सत्यार्थ-वेदानामन्त आप् तु कारित एव एकस्वराणामदन्तानां चाबागमः । एषां प्रशस्यानामयं श्रेष्ठः । अयमनयोः श्रेयान् । **"वृद्धस्य च ज्य"** (अ० ५।३।६१, ६२) इति प्रशस्यस्य च वृद्धस्य च इन् भवति ज्यादेशश्च । तत्करोति तदाचष्टे इतीन् सिद्ध एव । **चकारस्तु निमित्तार्थः** । श्रापयति, ज्यापयति । ज्येष्ठः, श्रेष्ठः । श्रेयान्, ज्यायान् । बहुलवचनाद् आदिलोपश्च ईयन्सोः, क्वचिद् ह्रस्वस्य दीर्घता । अन्तिकबाढयोर्नेद-साधाविति । अन्तिकबाढाभ्यामिन्, अन्तिकमाचष्टे **नेदयति** । बाढमाचष्टे **साधयति** । इमेऽन्तिकाः, अयमेषां नेदिष्ठः, इमावन्तिकौ । अयमनयोर्नेदीयान् । इमे बाढमधीयते, अयमेषां साधिष्ठमधीते । इमौ बाढमधीयाते । अयमनयोः साधीयोऽधीते ।

युवाल्पयोः कन् वेति । युवानमाचष्टे, अल्पमाचष्टे-**कनयति**, यवयति, अल्पयति । अयमेषां यूनां कनिष्ठः, यविष्ठः । अयमनयोर्यूनोः कनीयान्, यवीयान् । अयमेषामल्पानां कनिष्ठः, अल्पिष्ठः । अयमनयोः अल्पयोः कनीयान् अल्पीयान् । स्थूलदूरयुवक्षिप्रक्षुद्राणामन्तस्थादेर्लोपो गुणश्चेति । अन्तस्थैवादिर्यस्येति विग्रहः । स्थूल-माचष्टे **स्थवयति** । दूरमाचष्टे **दवयति** । युवानमाचष्टे **यवयति** । क्षिप्रमाचष्टे **क्षेपयति** । क्षुद्रमाचष्टे **क्षोदयति** । एवं स्थविष्ठः, स्थवीयान् । दविष्ठः, दवीयान् । यविष्ठः, यवीयान् । क्षेपिष्ठः, क्षेपीयान् । क्षोदिष्ठः, क्षोदीयान् । क्षिप्रस्य क्षुद्रस्य च भावः क्षेपिमा, क्षोदिमा । आभ्यामिमन् न दृश्यते । बहोर्यादिर्भश्चेति, बहोः पर इन् यादिर्भवति बहोर्भूरादेशश्च । बहुमाचष्टे **भूययति** । अयमेषां भूयिष्ठः ।

अतिदेशे बहुलग्रहणादिष्ठेयन्सू यकारादी न भवतः, लुप्तादी च भवतः । बहोर्भावः **भूमा,** अयमनयोर्भूयान् इति । प्रियेत्यादि । प्रियादीनामिन् भवति, **यथासंख्यं प्रादयः आदेशाश्च भवन्ति** । प्रियम्, स्थिरम् आचष्टे प्रापयति, प्रेष्ठः, प्रेमा, प्रेयान्, स्थापयति, स्थेष्ठः, स्थेयान्, स्फापयति, स्फेष्ठः, स्फेयान् । **एकस्वराणामदन्तानाञ्चान्त आप् तु कारित एव** । ऊरुमाचष्टे **वरयति**, वरिष्ठः, वरीयान् । गुरुमाचष्टे **गरयति** गरिष्ठः, गरिमा, गरीयान् । बहुलम् बंहयति, बंहिष्ठः, बंहीयान् । तृप्रम् – त्रपयति, त्रपिष्ठः, त्रपीयान् । दीर्घम् – द्राघयति, द्राघिष्ठः, द्राघिमा, द्राघीयान् । ह्रस्वम् – ह्रसयति, ह्रसिष्ठः, ह्रसीयान् । वृद्धम् – वर्षयति, वर्षिष्ठः, वर्षीयान् । वृन्दारकम् – वृन्दयति, वृन्दिष्ठः, वृन्दीयान् । प्रियगुरुदीर्घह्रस्वाणामेव इमन् दृश्यते ।।४६२।

## [वि० प०]

इनि० । अनेकाक्षरस्य लिङ्गस्यान्त्यस्वरो भवन्नर्थात् स्वजात्यपेक्षया भवतीत्याह- स्वराणामित्यादि । हस्तिना अतिक्रामति, वीणया उपगायतीतीन् । ननु कथम् उपवीणयतीत्याकारलोपोऽन्त्यस्वरमात्रत्वादिति न देश्यम् । **"आद्यन्तवदेकस्मिन्"** (अ० १।१।२३) इत्युपचारादन्त्यस्वरादित्वमस्तीति । तद्वदित्यादि । एतदपि चुरादौ **गणसूत्रम्**; तस्मिन्निव **तद्वत्** । 'इष्ठ-इमन्–ईयन्सु' इत्येतेषु प्रत्ययेषु इनीव कार्य- मित्यर्थः । तेनान्त्यस्वरादिलोपः सिद्धो भवति । अयमेषां प्रकृष्टः पटुः **पटिष्ठः** । पटोर्भावः **पटिमा** । अयमनयोः प्रकृष्टः पटुः **पटीयानि**ति गुणादिष्ठेयन्सू वा । पृथ्वादिभ्य इमन् भावे तमादिनिपातनात् । मन्त्वित्यादि । ईशनमीट् । सम्पदादित्वाद् भावे क्विप्, ततस्तदस्यास्तीति मन्तुः । **"हशषछान्त०"** (२।३।४६) इत्यादिना षकारस्य डत्वे पदान्ते धुटां प्रथमः, पञ्चमे पञ्चमांस्तृतीयान्नवेति प्रत्ययपञ्चमे नित्यं णकारस्तत इनि मन्तुलोपे, या यस्य लिङ्गस्य **भूतपूर्वा प्रकृतिः** सा तस्यैवेति पुनः शकारा- वस्थानम् ॥४६२ ।

## [क० च०]

इनि० । अत्र बहुप्रकारोऽपि वृत्तिपाठस्तत्रायमेव प्रकारः शुद्धः । तथाहि स्वराणां मध्ये योऽन्त्यस्वरः स एवादिर्यस्यावयवस्येति विग्रहः । **अक्षरशब्दस्य स्वरव्यञ्जन- समुदायवाचित्वाद्** वाचयतीत्यादावपि अन्त्यस्वरादिलोपः स्यादित्याह – न क्षरतीत्यादि **वृत्तिः** । तथा च **"व्यञ्जनमस्वरं परम्०"** (१।१।२१) इत्यत्र व्यञ्जनत्वेऽक्षरशब्दो गौण एव । श्वेताश्वेत्यादि । ननु अश्वशब्दस्याकारस्य दीर्घाल्लोपे कृते अश्वशब्द एव नास्ति । कुतस्तल्लोपप्रसङ्गः । नैवम्, **'परनिमित्तादेशः पूर्वस्मिन् स एव'** (का० परि० ४४) इति न्यायादश्वशब्दोऽस्त्येव । ततश्च निमित्ताभावात् श्वेतशब्दोऽकारान्तोऽवशिष्यते इति । अथान्त्यस्वरादिलोपस्य बाधकमिदं वक्तव्यमुच्यते । तत् कथं श्वेतयतीति सिध्यति । यावता अश्वशब्दलोपे इनि परेऽकारस्य एत्वमेव प्राप्नोतीति । अथैवं कृते किं दूषणम्, अनि **"ए अय्"** (१।२।१२) इति कृते श्वेतयतीत्यस्य सिद्धत्वात् । नैवम्, तदा 'श्वेत्यते, श्वेतयिता' इत्यादिकं न सिध्यति । सन्ध्यक्षरान्तानामित्यस्य विषयत्वात् चेदुच्यते – अन्त्यस्वरादिलोपस्य न बाधकमिदम्, किन्तु लोपश्चेति चकारेण समुच्चय आख्यायते ततश्चाश्वादिलोपेऽन्त्यस्वरादिलोपश्च क्रियते । तस्मात् 'श्वेतयिता, श्वेतयाञ्चकार' इत्यादिकं न दुष्यति । ननु **"प्रत्ययलुकां चानाम्"** (४।१।४) इति निषेधात् पुनरन्त्यस्वरादिलोपो न प्राप्नोति । नैवम्, धातोरवयवस्य लोपे सति तस्य विषयत्वाद् भिन्नकर्तृकत्वाच्च ।

ननु तथापि कथम् अन्त्यस्वरादिलोपो लुप्तस्याश्वादिशब्दस्यासिद्धवद्भावाच्चेत्, न। **'स्वरानन्तर्ये नासिद्धवद्भावः'** इति न्यायात्। अथ गालोडितशब्दस्येतलोपे कृते पुनरन्त्यस्वरादिलोपे कर्तव्ये ओड्भागस्य लोपे कृते गालयतीत्येव स्यात् न तु गालोडयतीत्युच्यते – गालोडो वाचां विकारः सञ्जातोऽस्यास्तीत्यर्थे तारकादित्वादितच्-प्रत्यये सति इवर्णावर्णयोरित्यादिना गालोडशब्दस्याकारलोपे सति गालोडित इति सिद्ध-मास्ते। इदानीं तु इतशब्दस्य लोपे निमित्ताभावात् लोपनिवृत्तौ गालोडशब्दोऽकारान्तः समायातः, न च गालोडः सञ्जातोऽस्येति इतच्प्रत्ययस्तस्मिन् लुप्तेऽपि प्रत्ययलोप-लक्षणन्यायात् पुनरिवर्णावर्णयोरित्यादिना अकारलोपे कृतेऽस्य विषयः इति वाच्यम्। यथा तस्य प्राप्तिस्तथा परत्वादस्यापि प्राप्तिस्ततश्चान्त्यस्वरादिलोपे कर्तव्येऽकार एव लुप्यते, न त्वोडभाग इति। नाप्यत्राप्यसिद्धवद्भावः **स्वरानन्तर्ये** इति तस्य निषेधात्।

ननु अकारलोपे **'यावत्सम्भवस्तावद् विधिः'** (का० परि० ५४) इति न्यायात् पुनरन्त्यस्वरादिलोपः स्यात्। यथा 'त्वया, मया' इत्यादौ **"एषां विभक्तावन्तलोपः"** (२।३।६) इति ? सत्यम्, अकारलोपस्यासिद्धवद्भावान्न दोषः। ननु किमर्थमिदं सूत्रम्, **"इन् कारितं धात्वर्थे"** (३।२।९) इत्यत्रेन्ग्रहणमकृत्वा डिन् विधीयताम्। अतो **"डानुबन्धेऽन्त्यस्वरादिलोपः"** (२।६।४२) इत्यनेन अतिहस्तयतीत्यादिकं सिद्धम्। यद्येवं विंशतिशब्दादपि डिनि परे **"तेर्विंशतेः"** (२।६।४३) इत्यादिना तिशब्दस्य लोपः स्यात्। अपि चानेकाक्षरग्रहणस्याभावाद् वाचयतीत्यादावपि अन्त्यस्वरादिलोपः स्यात्, तदा एतद्दोषपरिहारार्थं ङानुबन्ध इत्यस्यानन्तरं न विंशत्येकस्वराभ्यामित्यपरं सूत्रं विधीयताम् ? सत्यम्, **सुखार्थमिति कश्चित्**। किं च सभाजधातोरन्त्यस्वरादिलोपे सभाजयतीत्यस्यासिद्धिरिति। अथ **"धातोश्च हेतौ"** (३।२।१०) इत्यत्रापरमिन्ग्रहणं कर्तव्यमिति। एषां पण्डितानां सिद्धान्तेन सूत्रमिदं **सुखार्थ**मिति वक्तुं शक्यते। यदि डिनिनोर्विधानकल्पने **गौरवं** न मन्यते इति। ईदृशं तु **गौरवं "शिन्चौ वा"** (१।४।१३) इति स्फुटीभूतमस्तीति **संक्षेपः**॥४६२।

**[समीक्षा]**

'हस्तिना अतिक्रामति' अर्थ में 'अतिहस्तयति' तथा 'वीणया उपगायति' अर्थ में 'उपवीणयति' शब्द सिद्ध करने के लिए कातन्त्रकार ने इन् प्रत्यय से पूर्ववर्ती लिङ्ग में अन्त्य स्वरादि भाग का लोप स्वतन्त्र प्रकृत सूत्र द्वारा किया है, जब कि पाणिनीय व्याकरण में पृथक्-पृथक् सूत्रों द्वारा लोप कार्य होता है।

[विशेष वचन]

१. न क्षरति न चलतीति प्रधानत्वादक्षरं स्वरं उच्यते (दु० वृ०)।

२. या यस्य लिङ्गस्य भूतपूर्वा प्रकृतिः सा तस्यैवेति पुनः शकारावस्थानम् (वि० प०)।

३. अक्षरशब्दस्य स्वरव्यञ्जनसमुदायवाचित्वात् (क० च०)।

४. तथा च "व्यञ्जनमस्वरं परम्" (१।१।२१) इत्यत्र व्यञ्जनत्वेऽक्षरशब्दो गौण एव (क० च०)।

५. एषां पण्डितानां सिद्धान्तेन सूत्रमिदं सुखार्थमिति वक्तुं शक्यते। यदि डिनिनोर्विधानकल्पने गौरवं न मन्यते इति।ईदृशं तु गौरवं "शिन्चौ वा" (१।४।१३) इति स्फुटीभूतमस्तीति संक्षेपः (क० च०)।

[रूपसिद्धि]

१. **अतिहस्तयति**। हस्तिना अतिक्रामति। अतिहस्तिन् + इन् + अन् + ति। 'अतिहस्तिन्' शब्द से "इन् कारितं धात्वर्थे" (३।२।९) से इन् प्रत्यय, प्रकृत सूत्र से 'इन्' भाग का लोप, 'अतिहस्ति' की "ते धातवः" (३।२।१६) से धातुसंज्ञा, वर्तमानासंज्ञक प्रथमपुरुष-एकवचन 'ति' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, 'न्' अनुबन्ध का प्रयोगाभाव, इकार का गुणादेश तथा "ए अय्" (१।२।१२) से एकार को अयादेश।

२. **उपवीणयति**। वीणया उपगायति। उपवीणा + इन् + अन् + ति। 'उपवीणा' शब्द से इन् प्रत्यय, प्रकृतसूत्र से आकार का लोप, धातुसंज्ञा, 'ति' प्रत्यय, अन् विकरण, इकार को गुण तथा एकार को अयादेश।

३. **श्वेतयति**। श्वेताश्वमाचष्टे। श्वेताश्व + इन् + अन् + ति। इन् प्रत्यय के पर में रहने पर गणसूत्र से अश्व शब्द का तथा प्रकृत सूत्र से तकारोत्तरवर्ती अकार का लोप, धातुसंज्ञा, तिप्रत्यय, अन् विकरण, इ को गुण तथा ए का अयादेश।

४-६. **अश्वयति**। अश्वतरमाचष्टे। अश्वतर + इन् + अन् + ति। **गालोडयति**। गालोडितमाचष्टे। गालोडित + इन् + अन् + ति। **ह्वरयति**। ह्वरकमाचष्टे। ह्वरक + इन् + अन् + ति। इन् प्रत्यय परे रहते क्रमशः तर - इत - क का गणसूत्र के अनुसार तथा प्रकृत सूत्र के अनुसार अकार का लोप तथा अन्य प्रक्रिया पूर्ववत्।

७-९. **पटिष्ठः**। अयमेषां प्रकृष्टः, पटुः। पटु + इष्ठ + सि। "गुणादिष्ठेयन्सू वा" (२।६।४०-२) से इष्ठ प्रत्यय "तद्वदिष्ठेमेयःसु बहुलम्" से पटुशब्दस्थ उकार

का लोप। **पटिमा** । पटोर्भावः । पटु + इमन् + सि । "तथा भावे इमन्नपि" से इमन् प्रत्यय, उकारलोप, सिप्रत्यय । **पटीयान्** । अयमेषामतिशयेन पटुः । पटु + ईयन्सु + सि । "गुणादिष्ठेयन्सू वा" से ईयन्सु प्रत्यय, उकारलोप तथा विभक्तिकार्य ।

१०. **ईशयति** । ईण्मन्तमाचष्टे । ईण्मन्त् + इन् + अन् + ति । "मन्तुवन्तु०" इत्यादि से मन्तु प्रत्यय का लुक्, ईशि की धातु संज्ञा, ति प्रत्यय, इ को गुण तथा ए को अयादेश ।

११. **स्रुचयति** । स्रुग्वन्तमाचष्टे । स्रुग्वन्त् + इन् + अन् + ति । वन्तु प्रत्यय का लुक्, स्रुचि की धातुसंज्ञा, ति प्रत्यय, अन् विकरण, इकार को गुण तथा एकार का अयादेश ।

१२. **स्रजयति** । स्रग्विणमाचष्टे । स्रग्विन् + इन् + अन् + ति । इन् प्रत्यय के पर में रहने पर "मन्तुवन्तु०" इत्यादि से विन् प्रत्यय का लुक्, स्रजि की "ते धातवः" (३।२।१६) से धातु संज्ञा, वर्तमानासंज्ञक ति-प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, इकार को गुण तथा एकार को अयादेश ।।४६२ ।

## ४६३. रशब्द ऋतो लघोर्व्यञ्जनादेः [३।२।१३]

### [सूत्रार्थ]

अनेक अक्षरों वाले व्यञ्जनादि लिङ्ग के लघु ऋकार को रकारादेश होता है इन् प्रत्यय के पर में रहने पर ।।४६३ ।

### [दु० वृ०]

व्यञ्जनादेर्लिङ्गस्यानेकाक्षरस्य ऋतो लघो रशब्दादेशो भवति इनि परे । पृथु – प्रथयति । मृदु – म्रदयति । दृढ – द्रढयति । कृश – क्रशयति । भृश – भ्रशयति । परिवृढ – परिव्रढयति । **एषामेवाभिधानम्** ।।४६३ ।

### [दु० टी०]

रशब्दः । तद्वदिष्ठेमेयःसु बहुलमिति । प्रथिष्ठः, प्रथिमा, प्रथीयान् इत्यादयः । व्यञ्जनादेरिति किम् ? ऋजुमाचष्टे **ऋजयति** । लिङ्गस्येति किम् ? स्पृहयति । अनेकाक्षरस्येति किम् ? नरमाचष्टे नारयति । शब्दग्रहणं सस्वरार्थम् । ऋतु इति किम् ? शिथिलयति । लघोरिति किम् ? वृक्षयति । कथं श्वेनीमाचष्टे श्वेतयति, हरिणीमाचष्टे हरितयति इति ? सत्यम् । **सन्नियोगशिष्टानां प्रत्ययलोपलक्षणं नास्तीति** निवृत्तो नकारो न पुनर्भवति स्त्रीत्वस्याविवक्षितत्वाद् वा । अथ **व्यञ्जनादेर्लिङ्गस्येति** अपृथुमाचष्टे

अप्रथयतीति न सिध्यति। अथ ऋतो व्यञ्जनादेरित्यादिशब्दश्चेह समीपवचनः। यथा दधिभोजनमर्थसिद्धेरादिः। यः कार्यारम्भे यदृच्छोपसम्प्राप्तदधिभोजनं लभते स तदनन्तरमर्थसिद्धिमाप्नोतीति। अनृचो माणवकस्तमाचष्टे अनृचयतीति दुष्यति। शोभना ऋचो यस्येति स्वृचयति, कृतयति इत्युभयथापि दुष्यति। नैवम्, अधिकृतस्य वाशब्दस्य बहुलार्थत्वात्। यश्च कर्तारमाचष्टे **कारयतीति** तृशब्दस्य लोपो भवति, **अभिधानाश्रयणाद्** वेत्याह– एषामेवाभिधानमिति। तथा चोक्तम्–

**पृथुं मृदुं दृढं चैव कृशं च भृशमेव च।**
**परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत्॥**

एवं च परिगणने क्रियमाणे लघुग्रहणं प्रत्याख्यातम्, व्यञ्जनादिग्रहणं चोत्तरार्थं भवति ॥४६३।

**[वि० प०]**

रशब्दः। एषामेवाभिधानमिति। तथा चोक्तम्–

**पृथुं मृदुं दृढं चैव कृशं च भृशमेव च।**
**परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत्॥**

यद्येवं लघोरिति व्यञ्जनादेरिति च कथम्, वृक्षमाचष्टे, ऋजुमाचष्टे– **वृक्षयति**, **ऋजयति** इति। अत एवा**भिधानान्न भविष्यति**? सत्यम्, व्यञ्जनादिग्रहणमुत्तरार्थम्, लघुग्रहणं च **सुखार्थमेव**। 'ऋतो रः' इति सिद्धे शब्दग्रहणं रेफस्य **सस्वरार्थम्** ॥४६३।

**[क० च०]**

रशब्दः। ननु शब्दग्रहणं रेफस्य सस्वरार्थमिति **पञ्जी** कथं संगच्छते, यावता रेफ एव सस्वरः, ततश्च 'ऋद्धस्य राजमातङ्गाः' इतिवत् सापेक्षसमासो न स्यात्? नैवम्, सस्वरशब्दोऽत्र धर्मपरत्वेन सस्वरत्वमुच्यते। देवदत्तस्य गुरुकुलमितिवत् **मुख्यसापेक्षसमासो** न दुष्यति ॥४६३।

**[समीक्षा]**

'पृथु' शब्द से 'प्रथिष्ठः, प्रथीयान्, प्रथिमा' शब्दों के तथा 'मृदु' शब्द से 'म्रदिष्ठः, म्रदीयान्, म्रदिमा' शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने ऋकार को रकारादेश किया है। पाणिनि का सूत्र है– "र ऋतो हलादेर्लघोः" (अ० ६।४।१६१)। व्याख्याकारों ने इस आदेश के अन्तर्गत छह शब्दों का संग्रह किया है–

१. पृथु। २. मृदु। ३. भृश। ४. कृश। ५. दृढ। ६. परि+वृढ। इस परिगणन के फलस्वरूप 'कृत, मातृ, भ्रातृ' आदि शब्दों में रकारादेश प्रवृत्त नहीं होता। इस प्रकार उभयत्र समानता होने से किसी में भी उत्कर्ष या अपकर्ष नहीं कहा जा सकता।

**[विशेष वचन]**

१. 'पृथु - मृदु - दृढ - कृश - भृश - परिवृढ' एषामेवाभिधानम् (दु० वृ०)।

२. अथ ऋतो व्यञ्जनादेरित्यादिशब्दश्चेह समीपवचनः। यथा दधिभोजनमर्थसिद्धेरादिः। यः कार्यारम्भे यदृच्छोपसम्प्राप्तदधिभोजनं लभते स तदनन्तरमर्थसिद्धिमाप्नोतीति (दु० टी०)।

३. व्यञ्जनादिग्रहणमुत्तरार्थं लघुग्रहणं च सुखार्थमेव। 'ऋतो रः' इति सिद्धे शब्दग्रहणं रेफस्य सस्वरार्थम् (वि० प०)।

**[रूपसिद्धि]**

१. **प्रथयति**। पृथुमाचष्टे। पृथु + इन् + अन् + ति। 'पृथु शब्द से "इन् कारितं धात्वर्थे" (३।२।९) से इन् प्रत्यय, न्-अनुबन्ध का प्रयोगाभाव, "इनि लिङ्गस्यानेकाक्षरस्यान्त्यस्वरादेर्लोपः" (३।२।१२) से उकार का लोप, प्रकृत सूत्र द्वारा ऋकार को रकार, 'प्रथि' की "ते धातवः" (३।२।१६) से धातुसंज्ञा, वर्तमानासंज्ञक प्रथमपुरुष-एकवचन ति-प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, इकार को गुण तथा एकार को "ए अय्" (१।२।१२) से अयादेश।

२-६. **म्रदयति**। मृदुमाचष्टे। मृदु + इन् + अन् + ति। **द्रढयति**। दृढमाचष्टे। दृढ + इन् + अन् + ति। **क्रशयति**। कृशमाचष्टे। कृश + इन् + ति। **भ्रशयति**। भृशमाचष्टे। भृश + इन् + अन् + ति। **परिव्रढयति**। परिवृढमाचष्टे। परि + वृढ + इन् + अन् + ति। पूर्ववत् प्रक्रिया ॥४६३।

## ४६४. धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे [३।२।१४]

**[सूत्रार्थ]**

क्रियासमभिहार अर्थ में वर्तमान व्यञ्जनादि धातु से य-प्रत्यय होता है और उस य-प्रत्यय की चेक्रीयित संज्ञा भी होती है ॥४६४।

**[दु० वृ०]**

क्रियायाः समभिहारः पौनःपुन्यं भृशार्थो वा। क्रियासमभिहारे वर्तमानाद् धातोर्व्यञ्जनादेर्यशब्दः परो भवति, स च चेक्रीयितसंज्ञकः। पुनः पुनः पचति **पापच्यते**।

भृशं ज्वलति **जाज्वल्यते**। पाकादीनां प्रधानक्रियाणां पौनःपुन्यम्। प्रधानक्रियोपकारकाणामधिश्रयणादीनां च भृशता फलातिरेको वा। व्यवस्थितवास्मरणादेकस्वरात्, तेन पुनः पुनर्जागर्ति। ऋप्रभृतिभ्यश्च– अरार्यते, अटाट्यते। अश भोजने– अशाश्यते, प्रोर्णोनूयते, सोसूच्यते, मोमूत्र्यते। शुभिरुचिभ्यां स्यात्–भृशं शोभते, भृशं रोचते। गत्यर्थात् कौटिल्य एव–भृशं पुनः पुनर्वा कुटिलं क्रामति चंक्रम्यते। लुपादेर्गर्ह्यात्– भृशं पुनः पुनर्वा गर्हितं लुम्पति लोलुप्यते। एवं सासद्यते, चंचूर्यते, जंजभ्यते, दंदश्यते, जंजप्यते, दंदह्यते, निजेगिल्यते ॥४६४।

**[दु० टी०]**

धातोः। समभिपूर्वाद् हरतेर्भावे घञ्। सम्-शब्दः साकल्ये, अभिराभिमुख्ये, हरतिर्देशान्तरप्रापणे। **तेनायमर्थः**-बह्व्यः क्रिया अनेककर्तृसाधनयोग्या यदाभिमुख्येन कर्तारमेकं निष्पतन्ति, तदा **क्रियासमभिहार** उच्यते। यदाप्येका क्रियाऽवयवक्रिया अधिश्रयणादयो बह्व्य इति समभिहारो न विरुध्यते। येषां यदर्थं प्रति प्रवृत्तिः, तेषां तं प्रति अवयवत्वं दृष्टम्, यथा घटं कपालानामिति। पुनः पुनरिति यः कर्ता क्रियान्तरमनारभ्य पाकमेव पुनः पुनरारभते, स प्रधानक्रियां समभिहरति। अनेककालव्यापारं परिगृह्य एकत्वेऽपि क्रियाभेदपरिकल्पनेन समभिहारो दर्शितः। भृशमत्यर्थमिति। अधिश्रयणादीर्गुणक्रियाः क्रियान्तरैर्न व्यवधत्ते कर्ता तास्ताश्च साकल्येन करोति, स गुणक्रियां समभिहरतीति **द्विविधः समभिहारः**। क्रियाग्रहणादुभयरूपेऽपि भविष्यति, न च धातोः साधनसमभिहारे **वृत्तिरस्ति**। फलातिरेको वेति। **अन्ये** तु फलातिरेकमपि भृशतां वर्णयन्ति न चात्र पौनःपुन्ये समभिहारार्थतायां वा द्विर्वचनं भवति। पदनिबन्धनत्वात् तस्य धातुमात्रोपादानस्येह समभिहारस्य विवक्षितत्वाच्च। धातुग्रहणं किमर्थम्, सोपसर्गान्मा भूत्–प्राटति भृशमिति। नैवम्, क्रियासमभिहाराभिधानं धातोरेव संभवति। प्रादयश्च क्रियाविशेषस्य द्योतका इति। न च नाम्नः प्रकृत्यर्थविशेषणाभावे प्रत्ययार्थविशेषणाकल्पना स्यात्। तर्हि क्रियाग्रहणस्य चरितार्थत्वाद् गुणाक्रेयासमभिहारे न प्राप्नोति। व्यवस्थितवाधिकारादिति, **अभिधानाद्** वा।

**भाष्यकारो**ऽप्याह– एकाजूहलादिग्रहणानर्थक्यं समभिहारे यङ्विधावनेकाचो हलादेर्नाभिधानादिति। तच्चावश्यमभिधानमाश्रयतिव्यम्। अर्त्यटत्यश्नात्यूर्णसूचिसूत्रिमूत्रिभ्यश्च दर्शनाद् भृशमृच्छति, इयर्ति इति वा। 'अटति, अश्नाति, ऊर्णोति, सूचयति, सूत्रयति, मूत्रयति' इति योज्यम्। शुभिरुचिभ्यां न स्यादिति। न हि शोशुभ्यते, रोरुच्यते इत्यभिधानमस्ति। गत्यर्थात् कौटिल्ये एवेति एवकारः कौटिल्यादन्यत्र निषेधार्थस्तेन क्रियासमभिहारमात्रे न भवति। चंक्रम्यते इति। योऽल्पीय-

स्यध्वनि गतागतं करोति, स एवमुच्यते। **वृत्तिवाक्ययोर्भिन्नार्थत्वाद् वृत्त्या वाक्यं न शक्यते निवर्तयितुम्**। तथा ह्येकदैकपथं गच्छन् सर्पो गतिविशेषात् कुटिलं क्रामतीत्युच्यते। कथं **परो** नित्यग्रहणमाचष्टे। जङ्गम्यते इति **जङ्गमः**। पचाद्यच्, स्थावरविरहपक्षमात्रमभिधत्ते **रूढिशब्दत्वात्**। लुपादेर्गर्ह्यादिति। लुप् - सद - चर - जप - जभ - दह - दन्श् - गृभ्य एव विधानम्। परन्तु दन्शि कृतनलोपं निर्दिशति दंदशीति, **चेक्रीयितलुक्यपि यथा स्यादिति**। **गर्हितार्थाभिधायित्वात् लुपादेरपि गर्हा उच्यते**। **केचिद्** अनयोर्योगयोः क्रियासमभिहारं नानुवर्तयन्ति। **'येन नाप्राप्तौ यो विधिरारभ्यते स तस्य बाधकः'** (का० परि० ४२) इति भृशं क्रामति, भृशं लुम्पतीति यो न भवति। **भाष्यकार**स्त्वेतावपि योगावनर्थकावभिधानादित्याचष्टे। कथं लुनीहि लुनीहि इत्येवायं लुनातीति व्यञ्जनादेरेकस्वरात् परो यशब्दः प्राप्नोतीति ? नैष दोषः, विभाषया यशब्दस्य विधानात् कथं स भवान् लोलूयस्व लोलूयस्व इत्येवायं लोलूयते इति क्रियासमभिहारे मध्यमैकवचनं भवति पञ्चम्या इति। एवं तर्हि क्रियाविशेषे स्वार्थे यशब्दोऽन्तरङ्गः कर्तृकर्मणोश्च हिस्वौ बहिरङ्गाविति पश्चात् प्रवर्तेते, तदा आभीक्ष्ण्यद्योतनाय च द्विर्वचनं भवति। धातोर्यङिति सिद्धे **चेक्रीयितग्रहणं पूर्वाचार्यसंज्ञाविर्भावनार्थम्**॥४६४।

**[वि० प०]**

धातोर्य:०। पापच्यते इति **"चण् परोक्षा०"** (३।३।७) इत्यादिना द्विर्वचनम् अभ्यासलोपः, **"दीर्घोऽनागमस्य"** (३।३।२९) इति दीर्घः, **"चेक्रीयितान्तात्"** (३।२।४३) इत्यात्मनेपदम्। समभिहरणं **समभिहारः**, क्रियायाः समभिहारः **क्रियासमभिहारः** इति षष्ठीसमासः। ननु समभिहारो हि विप्रकीर्णानां द्रव्याणामेकत्र राशीभाव उच्यते। क्रियाश्चोत्पन्नप्रध्वंसित्वादनवस्थायिन्यः, तत्कथं तासां समभिहारः उच्यते ? सत्यम्, समभिहारसादृश्यात् **क्रियासमभिहार** उच्यते। यथा समाहृतानां द्रव्याणां द्रव्यान्तरैरव्यवधानं समभिहारः, एवं क्रियाणामपि क्रियान्तरैरव्यवहितत्वात् क्रियासमभिहार उच्यते। **क्रिया च द्विविधा – प्रधानभूता अप्रधानभूता च**। तत्र यः क्रियान्तरमनारभमाणः प्रधानभूतं पाकमेव पुनः पुनः समारभते, सः प्रधानभूताः क्रियाः समभिहरतीति, तदा तासां पौनःपुन्यं समभिहारः। यः पुनरधिश्रयणादीर्गुणक्रियाः क्रियान्तरैरव्यवहिताः साकल्येन करोति, स गुणक्रियाः समभिहरतीति, तदा तासां भृशता समभिहारः। क्रियाग्रहणं क्रियामात्रसमभिहारप्रतिपत्त्यर्थम्, अन्यथा धातोः साधने वृत्त्यभावात् क्रियाया एव समभिहारो गम्यते, तेनोभयत्रापि समभिहार उच्यते, न तु गौणमुख्यचिन्तेत्याह – पाकादीनामित्यादि। प्राधान्यं पुनः पाकादिक्रियाणां सकलकारकप्रकृतेस्तादर्थ्यात्।

अधिश्रयणादीनामिति । अधिश्रयणं चुल्लीमस्तके स्थाल्यारोपणमादिर्येषां तुष-वुषप्रक्षेपणादीनां ते तथोक्ताः । भृशता । यौगपद्येन शीघ्रमनुष्ठानमित्यर्थः । फलातिरेको वेति **मतान्तर**मनेन दर्शितम् । **कश्चित्** फलातिरेकमपि भृशतां मन्यते । अधिश्रयणादीनां यत् साध्यं फलं कर्तुर्विवक्षितं तस्यातिरेको भृशता इत्यर्थः । व्यवस्थितेत्यादि । ऋप्रभृतिभ्यश्चेति इति **विशेषः** । स्वरादित्वान्न प्राप्नोति । अरार्यते इति । "**अर्तेश्चेक्रीयिते च**" इति गुणः, ततः "**स्वरादेर्द्वितीयस्य**" (३ । ३ । २) इति य-शब्दस्य द्विर्वचने अभ्यास-कार्यं चेति । तथा अटाट्यते, अशाश्यते, प्रोर्णोनूयते । प्रपूर्वः '**ऊर्णुञ् आच्छादने**' (२ । ६४) । अत्रापि "**स्वरादेर्द्वितीयस्य**" (३ । ३ । २) इति नुशब्दस्य द्विर्वचनम्, रेफस्य न द्विरुच्यते । "**न नबदराः संयोगादयोऽये**" (३ । ३ । ३) इति प्रतिषेधात् । "**नाम्यन्तानां यणायि०**" (३ । ४ । ७०) इत्यादिना दीर्घः । 'सोसूच्यते' इति । '**सूच पैशुन्ये**' (९ । १९१) इत्यादि चुरादाविनि कृते सत्यनेकस्वरत्वान्न प्राप्नोति । वाशब्देन संग्रह उच्यते । चंक्रम्यते इति। "**कवर्गस्य चवर्गः**" (३ । ३ । १३) इति कृते "**अभ्यासस्यान्तोऽनुस्वारोऽनुनासिकान्तस्य**" इत्यनुस्वारागमः । लुपादेर्गर्ह्यादिति गर्ह्यार्थविषयत्वात् लुपादिरपि गर्ह्य उक्तः । 'लोलुप्यते' इति "**गुणश्चेक्रीयिते**" (३ । ३ । २८) इति गुणः । एवमिति भृशं पुनः पुनर्वा गर्हितं सीदतीत्यादि वाक्यमित्यर्थः । चंचूर्यते इति । "**चरफलोरुच्च**" (३ । ३ । ३३) इत्यनुस्वारः, परस्याकारस्योत्वं च "**नामिनो र्वोः**" (३ । ८ । १४) इत्यादिना दीर्घः । जंजप्यते इत्यादीनां चतुर्णां जपादीनां चेत्यनुस्वारः । निजेगिल्यते इति । निपूर्वो गॄ निगरणे, यशब्दः । "**ॠदन्तस्येरगुणे**" (३ । ५ । ४२) इतीर् । द्विर्वचने "**गिरतेश्चेक्रीयिते**" (३ । ६ । ९८) इति लत्वम् ॥४६४।

**[क० च०]**

धातोर्य० । धातुग्रहणं धातुपरिमाणार्थम्, तेन सोपसर्गान्न भवति चेत्, धातुरेव क्रियासमभिहारे वर्तते नोपसर्ग इति तत् किं धातुग्रहणेन ? तर्हि नाम्नोऽपि स्यादिति चेत्, न । क्रियासमभिहारे तस्य वृत्तेरभावात्, नैवम् । धातुग्रहणाभावे "**इन् कारितं धात्वर्थे**" (३ । २ । ९) इतिवत् नाम्नोऽपि क्रियासमभिहारार्थत्वात् । अथ तथापि नाम्नो न भविष्यति "**वशेश्चेक्रीयिते**" (३ । ४ । १८) इत्यनेन सम्प्रसारणनिषेधात् । "**चेक्रीयिते च**" (३ । ४ । ७६) इत्यनेन अर्तेर्गुणविधानाच्च । नैवम्, ज्ञापकेन किमिह प्रत्याख्यातुं न शक्यते, किन्तु क्रियाग्रहणाभावे साधनसमभिहारेऽपि यशब्दः स्यात्, तन्निरासार्थं क्रियाग्रहणं कथं गौणक्रियार्थं भविष्यतीति धातुग्रहणं वाच्यम् । यद्यत्र "**धातोर्वा तुमन्तात्**" (३ । २ । ४) इत्यादित इह धात्वधिकार इष्यते, तदा तत्रैव वाशब्दात् कुत्र किं खण्डयितुं न शक्यते इति । यङिति कृते "**कर्तरि रुचादि०**" (३ । २ । ४२) इत्यादिना

आत्मनेपदे सिद्धे चेक्रीयितान्तादित्यपि न कृतं भवति चेक्रीयितग्रहणं केवलं **पूर्वाचार्य**प्रसिद्धसंज्ञाविर्भावार्थमित्युक्तमिति **टीका**। इहापि यकारस्य सस्वरार्थं शब्द-ग्रहणम्, तेन अरार्यते इति द्विर्वचनं सिद्धम्।

ननु **"धातोरेकाचो हलादेः क्रियासमभिहारे यङ्"** (अ० ३।१।२२) इति **पाणिनिः**। तदभावा**दस्मन्मते**ऽनेकस्वरादपि यशब्दः स्यादित्याह– व्यवस्थितेत्यादि **वृत्तिः**। तेन जागृधातोरनेकस्वरत्वान्न भवतीति भावः। ननु पूर्वसूत्रे व्यञ्जनादिग्रहणमिहार्थ-मित्युक्तम्। अतः ऋप्रभृतीनामूर्णोतेश्च स्वरादित्वादनेकस्वरत्वाच्च। **'सूच पैशुन्ये, सूत्र अवमोचने, मूत्र प्रस्रवणे'** (९।१९१, २२१, २२२) इति त्रयाणां च चुरादित्वादिनि कृतेऽनेकस्वरत्वादप्राप्तौ **भाष्यकृता** "अभिधानादनेकाचो हलादेः" इत्युक्तम्, **स्वमते**ऽ-प्यभिधानादेव भविष्यतीत्याह – ऋप्रभृतिभ्यश्चेति **वृत्तिः**। ननु सूचिसूत्रिमूत्रीणां त्रयाणां यशब्दं प्रति किमर्थमभिधानाश्रयणम् **"कारितस्यानाम् इड् विकरणे"** (३।६।४४) इत्यत्र विषयसप्तम्या प्रागिनो लोपे एकस्वरा एवैते धातवः ? सत्यम्, एवं सति चोरयतीत्यादीनामपि प्रागिनो लोपे यशब्दः स्यादिति तन्निवृत्त्यर्थमेवैषां धातूनामु-पादानम्। एतत्तु **भाष्यकार**मतमवलम्ब्योक्तम्, **पदकार**स्तु एषां धातूनां विषयसप्तमी-माश्रित्य प्रयोगाः सिध्यन्ति। किमेषामुपादानेनेत्याचष्टे, **तन्मते** तुल्यन्यायाच्चोरयतेरपि चोचूर्यते इति **वृत्तावुक्तम्**। **'अशू व्याप्तौ'** (४।२२) इत्यस्यैव धातोर्यशब्दः **पाणिनीयधातुवृत्ता**वुक्तम्, इह तु न्यासानुसाराद् **'अश् भोजने'** (८।४३) इत्युक्तम्।

ननु प्रोर्णोनूयते इत्यत्र **"न नबदराः"** (३।३।३) इत्यादिसूत्रे 'अये' इति प्रतिषेधाद् रेफसहितस्य नुशब्दस्य न कथं द्विर्वचनम्। यथा अरार्यते इति ? सत्यम्, तत्र अये–इत्युपश्लेषलक्षणा सप्तमी। न चायं रेफो यकारोपश्लिष्ट इति तत्रैव व्याख्यातव्यम्। ननु सोसूच्यते इत्यत्र न कथं षत्वं **"धात्वादेः षः सः"** (३।८।२४) इत्यनेन विकारस्थत्वात् ? सत्यम्। स्वरादन्त्यपराः सादयः षोपदेशा इत्येकस्वराणामेव धातूनामिष्टत्वादिति न दोषः। शुभिरुचिभ्याम् इति **वृत्तिः**। **"न शुभिरुचिभ्याम्"** (इति **पाणिनिः**। तत्रैव गृणातेश्चेति **भाषावृत्तिः**। **'गै शब्दे'** (१।२५६) इत्यस्यापि न स्यादित्यर्थः। **'शोशुभ्यमाना वसुधा तदाऽभवत्'** इति प्रयोगो **मतान्तरेणेति वररुचिः**। **वस्तुतस्तु** शुन्भ्धातोरयं प्रयोगः। न चैवं सति विशेषाभावात् शुभेर्निषेधो व्यर्थ इति वाच्यम्, चेक्रीयितलोपे शोशुभीतीति प्रयोगनिवारणप्रयोजनत्वादिति **सारसमुच्चयः**। **"नित्यं कौटिल्ये गतौ"** (अ० ३।१।२३) इति **पाणिनिः**। **अस्मन्मते** तु वाधिकारात् सिध्यतीत्याह– गत्यर्थादिति **वृत्तिः**।

ननु परस्य नित्यग्रहणाद् वाक्यनिवृत्तिरभिधीयते । इह तु तदभावाद् वाक्यमपि स्याच्चेत्, स्यादेवेत्याह – पुनरित्यादि । नित्यग्रहणेनापि तन्निरासस्याशक्यत्वात् । तथाहि कौटिल्ये वर्तमानाद् धातोर्यशब्दो नित्यं विधीयते । न च **वाक्ये** धातोः कौटिल्ये विधिरस्ति, भिन्नार्थत्वेन तन्निवर्तनस्याशक्यत्वात् । अत एव **टीकायां वृत्तिवाक्ययोर्भिन्नार्थत्वाद् वृत्त्या वाक्यं निवर्तयितुं न शक्यते इत्युक्तम्** । "**लुपसदचरजपजभदहदन्शगृभ्यो भावगर्हायाम्**" (अ० ३।१।२४) इति **कश्चित्** । तत् कथमिह स्यादित्याह – लुपादेरिति **वृत्तिः** । अथा**स्मन्मते** भावग्रहणाभावात् साधनगर्हायां कथन्न भवति । यथा 'वेदं जपति वृषलः' इत्यत्र वृषलस्य **वेदपाठे**ऽनधिकाराद् गर्हा गम्यते ? सत्यम् । न हि लुपादेरेव गर्हा किन्तु तद्वाच्योऽर्थो गर्हा इति । ततश्च गर्ह्ये लुपादेरिति वक्तव्ये यत्सामानाधिकरण्येन निर्दिशति, तल्लुपादिवाच्यक्रियाणां गर्ह्यार्थप्रतिपादनार्थमिति ब्रूमः । **अन्ये** तु व्यवस्थितवाऽधिकारात् साधनगर्हायां न भवतीत्याहुः । **पञ्जी** सुगमा ॥४६४।

## [समीक्षा]

क्रियासमभिहार अर्थ में पच् धातु से पापच्यते, ज्वल् धातु से जाज्वल्यते, दीप् धातु से देदीप्यते आदि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने धातु से य-प्रत्यय तथा पाणिनि ने यङ् प्रत्यय किया है – "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" (अ० ३।१।२२)। व्याख्याकारों ने पूर्वाचार्यों द्वारा अभिमत चेक्रीयित संज्ञा को माना है। महाभाष्यप्रदीपकार ने इसे स्पष्ट रूप में स्वीकार किया है – "यङः पूर्वाचार्यसंज्ञा चेक्रीयितम्" (म० भा० प्र० ४।१।७८)। इसमें द्वित्वादिविधि विशेषरूप में प्रवृत्त होती है।

## [विशेष वचन]

१. पाकादीनां प्रधानक्रियाणां पौनःपुन्यम्, प्रधानक्रियोपकारकाणामधिश्रयणादीनां च भृशता फलातिरेको वा (दु० टी०)।

२. अनेककालव्यापारं परिगृह्य एकत्वेऽपि क्रियाभेदपरिकल्पने समभिहारो दर्शितः। भृशमत्यर्थमिति (दु० टी०)।

३. अन्ये तु फलातिरेकमपि भृशतां वर्णयन्ति (दु० टी०)।

४. प्रादयश्च क्रियाविशेषस्य द्योतका इति (दु० टी०)।

५. वृत्तिवाक्ययोर्भिन्नार्थत्वाद् वृत्त्या वाक्यं न शक्यते निवर्तयितुम् (दु० टी०; क० च०)।

६. धातोर्यङिति सिद्धे चेक्रीयितग्रहणं पूर्वाचार्यसंज्ञाविर्भावनार्थम् (दु० टी०)।

७. समभिहारो हि विप्रकीर्णानां द्रव्याणामेकत्र राशीभाव उच्यते। समभिहारसादृश्यात् क्रियासमभिहार उच्यते। यथा समाहृतानां द्रव्याणां द्रव्यान्तरैरव्यवधानं समभिहारः। एवं क्रियाणामपि क्रियान्तरैरव्यवहितत्वात् क्रियासमभिहार उच्यते। क्रिया च द्विविधा – प्रधानभूता अप्रधानभूता च (वि० प०)।

८. तदा तासां (क्रियाणाम्) पौनःपुन्यं समभिहारः। यः पुनरधिश्रयणादीर्गुणक्रियाः क्रियान्तरैरव्यवहिताः साकल्येन करोति स गुणक्रियाः समभिहरतीति, तदा तासां भृशता समभिहारः (वि० प०)।

९. कश्चित् फलातिरेकमपि भृशतां मन्यते, अधिश्रयणादीनां यत् साध्यं फलं कर्तुर्विवक्षितं तस्यातिरेको भृशता इत्यर्थः (वि० प०)।

१०. चेक्रीयितग्रहणं केवलं पूर्वाचार्यप्रसिद्धसंज्ञाविर्भावनार्थमिति उक्तमिति टीका। इहापि यकारस्य सस्वरार्थं शब्दग्रहणम् (क० च०)।

**[रूपसिद्धि]**

१. **पापच्यते**। पुनः पुनः पचति। पच् + य + ते। 'डु पचष् पाके' (१।६०३) धातु से प्रकृत सूत्र द्वारा य – प्रत्यय, "'द्विर्वचनमनभ्यासस्यैकस्वरस्याऽऽद्यस्य" (३।३।१) के अधिकार में "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) द्वारा 'पच्' धातु को द्वित्व, "पूर्वोऽभ्यासः" (३।३।४) से पूर्ववर्ती पच् की अभ्याससंज्ञा, "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) से 'प' की रक्षा – च् का लोप, "दीर्घोऽनागमस्य" (३।३।२९) से अभ्यासस्थ ह्रस्व अकार को दीर्घ, "ते धातवः" (३।२।१६) से 'पापच्य' की धातुसंज्ञा तथा "चेक्रीयितान्तात्" (३।२।४३) से आत्मनेपदसंज्ञक प्रथमपुरुष – एकवचन 'ते' प्रत्यय।

२. **जाज्वल्यते**। भृशं पुनः पुनरतिशयेन वा ज्वलति। ज्वल् + य + ते।

३. **अरार्यते**। पुनः पुनः अर्ति। ऋ + य + ते। 'ऋ गतौ' (२।७४) धातु से प्रकृत सूत्र द्वारा य – प्रत्यय "चेक्रीयिते च" (३।४।७६) से ऋ को गुण अर्, "स्वरादेर्द्वितीयस्य" (३।३।२) के अधिकार में "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से 'र्य' को द्वित्व, अभ्याससंज्ञा, 'र' का शेष – य् का लोप, दीर्घ तथा विभक्तिकार्य।

४-१७. **अटाट्यते**। पुनः पुनरटति। अट् + य + ते। **अशाश्यते**। पुनः पुनरश्नाति। **प्रोर्णोनूयते**। पुनः पुनः प्रोर्णोति। प्र + ऊर्णुञ् + य + ते। **सोसूच्यते**। पुनः पुनः सूचयति। सूच + य + ते। **मोमूत्र्यते**। पुनः पुनर्मूत्रयति। मूत्र + य + ते। **चङ्क्रम्यते**। भृशं पुनः

पुनर्वा कुटिलं क्रामति । क्रम + य + ते । "अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्य" (३।३।३१) से 'च' के बाद अनुस्वार का आगम । **लोलुप्यते** । भृशं पुनः पुनर्वा गर्हितं लुम्पति । लुप् + य + ते । **सासद्यते** । पुनः पुनर्गर्हितं वा सीदति । सद् + य + ते । **चञ्चूर्यते** । भृशं पुनः पुनर्वा गर्हितं चरति । चर् + य + ते । **जञ्जप्यते** । पुनः पुनर्भृशं वा गर्हितं जपति । जप् + य + ते । "जपादीनां च" (३।३।३२) से ज से उत्तरवर्ती अनुस्वार का आगम । **जञ्जभ्यते** । पुनः पुनर्भृशं वा गर्हितं जभते । जभ् + य + ते । **दन्दह्यते** । पुनः पुनर्वा गर्हितं दहति । दह + य + ते । **दन्दश्यते** । भृशं पुनः पुनर्वा गर्हितं दशति । दन्श् + य + ते । "अनिदनुबन्धानामगुणेऽनुषङ्गलोपः" (३।६।१) से नकार का लोप । **निजेगिल्यते** । भृशं पुनः पुनर्वा गर्हितं निगिलति । नि + गॄ + य + ते । "ॠदन्तस्येरगुणे" (३।५।४२) से ॠ के स्थान में इर्, "कवर्गस्य चवर्गः" (३।३।१३) से ग् को ज् आदेश तथा "गिरतेश्चेक्रीयिते" (३।६।९८) से र् को ल् आदेश । अन्य प्रक्रिया पूर्ववत् ॥४६४।

## ४६५. गुपूधूपविच्छिपणिपनेरायः [३।२।१५]

**[सूत्रार्थ]**

'गुपू' आदि पाँच धातुओं से स्वार्थ में आय प्रत्यय होता है ॥४६५।

**[दु० वृ०]**

गुपूप्रभृतिभ्यः आयः परो भवति स्वार्थे । गोपायति, धूपायति, विच्छायति, पणायति, पनायति । पनिसहचरित इह पणिः स्तुत्यर्थ **इत्यन्ये** । ऋतेर्णीयङ् वक्तव्यः । ऋतीयते । ङकार आत्मनेपदार्थः । णकारोऽगुणार्थः । कमेरिनङ् कारितं च । कामयते । **व्यवस्थितवाऽधिकारादायादयोऽसार्वधातुके वा भवन्ति**– गोपायिता, गोप्ता, गोपाया, गुप्तिः । ऋतीयिता, अर्तिता । कामयिता, कमिता ॥४६५।

**[दु० टी०]**

गुपू० । ऊदनुबन्धाद् **'गुपू रक्षणे'** (१।१३२), न तु गुप गोपनकुत्सनयोरिति । **'तप धूप सन्तापे, लिश विच्छ गतौ'** (१।१३३; ५।५६) **केचिद्** धूपविच्छौ चुरादावपीत्याहुः, न तयोर्विकल्पितेनोभौवादिकगुपधातुना साहचर्याद् धूपति विच्छतीति भवति । पनीत्यादि । पणिर्व्यवहारे स्तुतौ च, पनिः स्तुतावेव पनिसहचरितः पनिना सहाव्यभिचरितसंबन्धः स्तुत्यर्थ एव पणिरिष्यते न तु **व्यवहारार्थो** व्यभिचारात् । **अन्ये** एक इति, तेषां शतस्य पणते, व्यवहरतीति प्रयोगो भवति । **भट्टिकाव्ये** पुनरस्मादायो दृश्यते । यथा –

**स प्रोषिवानेत्य पुरं प्रवेक्ष्यन् शुश्राव घोषान् न जनौघजन्यान्।**
**आकर्णयामास न वेदनादान्न चोपलेभे वणिजां पणायाः॥**

प्रत्ययान्तत्वादः स्त्रियाम् । न च पणिपन्योः कृतार्थमनुदात्तानुबन्धत्वमसार्वधातुके यदायो नास्ति तदा कथमत्र आत्मनेपदम् ? नैवम्, स्वार्थिको यथा प्रकृत्यर्थानुप्रवेशेन धातोस्तद्गतमर्थं लभते, एवमनुदात्तानुबन्धत्वमपीति । अथवा शेषो हि तत्र लक्षणशेष इह चानुदात्तत्वं प्रकृत्याश्रयमस्ति, तत्राशेषत्वान्न परस्मैपदम् । व्यवधानाच्च नात्मनेपदमस्ति, तत्र परस्मैपदस्य निमित्तमेव नास्ति । आत्मनेपदस्य व्यवहितत्वमपि तावदस्तीति तदेव भवति । ऋतेर्णीयङ् वक्तव्य इति । वक्तव्यो व्याख्येयः । **'ऋतीयङ् धातुर्घृणायाम्'** । ऋतीया इति **"गुरोश्च निष्ठासेटः"** (४।५।८१) इत्यप्रत्ययः । ऋतीयाञ्चक्रे इति चुलुम्पाञ्चकार इतिवद् भविष्यति । ऋतधातुः सार्वधातुके न दृश्यते । **"कमेरिनङ्"** इति कामिनङ् धातुः कान्तौ । नकारानुबन्धसामर्थ्याद् इनो यत् कार्यं तदीप्सितव्यम्, तेन कारितत्वाद् इनो लोपः सिद्धः – काम्यते इति । इटि तु न भवति – कामयिता । इन्यसमानलोपोपधाया ह्रस्वश्चणि ह्रस्वः – अचीकमत् । 'कामयाञ्चक्रे' इत्यपि भवति । कमिस्तु सार्वधातुके न दृश्यते । व्यवस्थितेत्यादि । एवं सति आय एव परिशिष्यते असार्वधातुके इति **विषयसप्तमी** । निमित्तानाश्रयणाद् उपदेश एवाय इति शंसिप्रत्ययादप्रत्ययो भवति ।आयाभावपक्षे तु स्त्रियां क्तिरिति ।अर्त्तिता, कमितेति धात्वन्तरेण सिद्धम् ॥४६५।

**[वि० प०]**

गुपू० । स्वार्थ इत्यनिर्दिष्टार्थत्वात् स्वार्थे भवति । क्रियासमभिहारोऽपीह न स्मर्यते इष्टत्वादिति । पनीत्यादि । पणिः स्तुतिव्यवहारयोः पनिः स्तुतावेव पठ्यते । यदाह गणे**'पण व्यवहारे स्तुतौ च, पन च'** इति (१।४०१, ४०२)। तत्र चकारेणानन्तरत्वात् स्तुतिरनुकृष्यते । **तेषां मते** व्यवहारार्थस्य पणेरायो न भवति, शतस्य पणते इत्येव भवति । अयं तु व्यवहारार्थादप्यायप्रत्ययं मन्यते । तथा च **भट्टिकाव्ये** – **'न चोपलेभे वणिजां पणायाः'** इति वाणिजिकान् व्यवहारान् क्रयविक्रयलक्षणान्नोपलब्धवानित्यर्थः । ऋतेर्णीयङ् इति । वक्तव्य इति । वक्तव्यो व्याख्येयः । घृणायामर्थे ऋतीयङ् इति धात्वन्तरम् इति भावः । ऋतधातोश्च सार्वधातुके नाभिधीयते प्रयोगः । कमेरिनङ् इति इहापि कामिनङ् धातुः कान्तौ वेदितव्यः ।

यद्येवम्, कारितव्यपदेशाभावात् काम्यते इत्यादौ **"कारितस्यानामिड् विकरणे"** (३।६।४४) इति कारितलोपः कथमिति चेत् ? सत्यम् । नकारानुबन्ध इन्कार्य-

प्रतिपत्तये भविष्यति, अन्यथा कामिनञ्-धातोर्नकारो व्यर्थः स्यादिति। कमिस्तु सार्वधातुके नाभिधीयते। व्यवस्थितेत्यादि। आयादय इत्यादिग्रहणं **परमत**दर्शनार्थम्। इह णीयङ्इनङोरनभिधानादाय एव परिशिष्यते। असार्वधातुके इति विषयसप्तमीयं ततो बुद्धिस्थमसार्वधातुकमाश्रित्यायप्रत्यये सति **"शंसिप्रत्ययादः"** (४।५।८०) इत्यायप्रत्ययान्तत्वात् 'गोपाया' इति अ-प्रत्ययः सिद्धो भवति। गुप्तिरिति पक्षे **"स्त्रियां क्तिः"** (४।५।७२) इति। कामयितेति कामिनङ्धातुना कमितेति कमु कान्तावित्यनेन ऋतीयितेति ऋतीयङ् धातुना, अर्तितेति च **सौत्रेण ऋतधातुना** सिद्धमिति ।।४६५।

## [क० च०]

गुपू०। आयस्याकारकरणादिन्यसमान इत्यादिना चणि न ह्रस्वः। यथा अजुगोपायदिति। ऊदनुबन्धकरणाद् गुपू रक्षणे इत्यस्य ग्रहणम्, अन्यथा गुप गोपनकुत्सनयोरित्यस्य ग्रहणाद् गोपनेऽपि आयः स्यादिति **दोषः**। **'लिश विच्छ गतौ'** (५।५६) इति तौदादिकस्य ग्रहणं भौवादिकस्तु नास्त्येव विच्छ धातुरिति चेत् किमर्थं तुदादौ विच्छिः पठ्यते। न च तुदादेरनीत्यगुणार्थमिति वाच्यम्। स्वरपरस्य छकारस्य द्विर्भावे उपधोपधत्वात् सिद्धं चेत्, अस्ति प्रयोजनम्– **"तुदभादिभ्यः"** (२।२।३१) इत्यनेनान्तेरनकारकत्वमिति चेत्, न। आयप्रत्ययेन व्यवधानाद् अनकारकत्वप्राप्तेरभावात्। तदा विच्छिपाठसामर्थ्यात् सार्वधातुकेऽपि आयो विकल्प्यते, तेन च विच्छायति, विच्छति। विच्छती, विच्छन्ती, विच्छायन्तीति सिद्धम् भवति।

**अन्ये** तुदादिपाठसामर्थ्याद् आयव्यवधानेऽपि अन्तिरनकारको भवतीत्याह– तन्मते विच्छायती विच्छायन्तीति। ननु यदि भौवादिको विच्छधातुर्नास्ति, तत्कथं **टीकायाम्– केचित्तु** धूपविच्छौ चुरादावपि पठन्ति, तयोर्विकल्पेनन्तयोर्भौवादिकेन गुपधातुना साहचर्याद् धूपति विच्छतीति भवतीति सिद्धमित्युक्तम् ? सत्यम्। भौवादिकपदमचौरादिकपरं बोध्यम्। अथ यदि विच्छधातुरचौरादिकोऽप्यस्ति तदा तत्रैव आयप्रत्ययस्य चरितार्थत्वात् कथं तुदादेरायो विकल्प्यते। न च साहचर्यादिति वाच्यम्, साहचर्यस्यैव सम्बन्धस्वरूपत्वात्। न च चुरादेर्विच्छेरायप्रत्यये विच्छतीति कथं भविष्यतीति वाच्यम्, तुदादिधातोरेवैतत्सिद्धेः ? सत्यम्। व्यवस्थितवाऽधिकारात् **सर्वमनवद्यमिति ब्रूमः** ।।४६५।

## [समीक्षा]

'गुपू' आदि पाँच धातुओं से 'गोपायति, धूपायति' आदि रूपों के सिद्ध्यर्थ कातन्त्र तथा पाणिनीय दोनों ही व्याकरणों में 'आय' इस निरनुबन्ध प्रत्यय का

विधान किया गया है। पाणिनि का सूत्र है– "गुपूधूपविच्छिपणिपनिभ्य आयः" (अ० ३।१।२८)। 'आय' प्रत्यय में कोई अनुबन्ध नहीं लगाया गया है, अतः यहाँ व्याख्याकारों के अनुसार आत्मनेपद नहीं होता है तथा असार्वधातुक प्रत्ययों के होने पर यह आयप्रत्यय विकल्प से प्रवृत्त होता है। परिणामस्वरूप 'गोपायिता – गोप्ता, कामयिता – कमिता' आदि दो-दो रूप सिद्ध होते हैं।

**[रूपसिद्धि]**

१. **गोपायति**। जुगुप्सते। गुप् + आय + ति। 'गुपू रक्षणे' (१।१३२) धातु से स्वार्थ में प्रकृत सूत्र से 'आय' प्रत्यय, "नामिनश्चोपधायाः" (३।५।२) से उपधाभूत उकार को गुणादेश, "ते धातवः" (३।२।१६) से 'गोपाय' की धातुसंज्ञा, वर्तमानासंज्ञक प्रथमपुरुष-एकवचन 'ति' प्रत्यय तथा "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण – न् अनुबन्ध का प्रयोगाभाव।

२. **धूपायति**। धूप + आय + अन् + ति। 'धूप सन्तापे' (१।१३३) धातु से स्वार्थ में प्रकृत सूत्र द्वारा आय प्रत्यय, धातुसंज्ञा तथा विभक्तिकार्य।

३-५. **विच्छायति**। विच्छ गतौ + आय + अन् + ति। **पणायति**। पण् व्यवहारे स्तुतौ च + आय +अन् + ति। **पनायति**। पन + आय+अन् + ति। पूर्ववत् प्रक्रिया।

६. **गोपायिता**। गुप् + आय +ता। गुपू धातु से आय प्रत्यय, गुण, धातुसंज्ञा, श्वस्तनीसंज्ञक प्रथमपुरुष- एकवचन ता प्रत्यय, "इडागमोऽसार्वधातुके" (३।७।१) से इडागम तथा अकारलोप। आयप्रत्यय के अभाव में इडागम भी नहीं होता है, अतः 'गोप्ता' रूप।

७. **गोपाया**। गुप् + आय + अ + सि। प्रकृत सूत्र द्वारा आयप्रत्यय, "शंसि-प्रत्ययादः" (४।५।८०) से अ-प्रत्यय, स्त्रीलिङ्ग में "स्त्रियामादा" (२।४।४९) से आप्रत्यय, लिङ्गसंज्ञा, सि-प्रत्यय तथा उसका लोप ॥४६५।

## ४६६. ते धातवः [३।२।१६]

**[सूत्रार्थ]**

'सन् - यिन् - काम्य - आयि - इन् - य - आय[1]' इन सात प्रत्ययों में से किसी के भी अन्त में रहने पर निष्पन्न शब्दों (सन्-आदिप्रत्ययान्त) की धातुसंज्ञा होती है ॥४६६।

---

१. इनङ् – णीयङ्' प्रत्ययान्त शब्दों का भी गणसूत्रपाठ के आधार पर समावेश किया जाता है।

[दु० वृ०]

ते सन्नाद्यन्ता धातुसंज्ञा भवन्ति। जुगुप्सते, मीमांसते, चिकीर्षति, पुत्रीयति, पुत्रकाम्यति, श्येनायते, उपवीणयति, कारयति, चोरयति, पापच्यते, गोपायति, ऋतीयते, कामयते। धातुत्वाद् धातुमशुद्धक्रियत्वाद् वचनम्। इतरेषां गणेऽप्रसिद्धत्वात् **सुखार्थम्** ॥४६६।

[दु० टी०]

**ते धातवः**। विधिर्विधानं विधिभाजां सम्भवे तदन्तविधिरुपलभ्यते। इहापि प्रकृता धातुसंज्ञा सन्नादयश्च सर्वमस्ति धातोर्नाम्निश्च विधीयमानत्वात् तदपेक्षया तत्र तदन्तविधिः सिद्ध एवेत्याह– ते सन्नाद्यन्ता इति। 'ऋतीयते, कामयते' इति प्रसिद्धिवशादुदाहृतम्। ननु किमर्थमिदं वचनम्, तथाहि प्रकृत्यर्थोपसर्जने प्रत्ययाः सन्नादयः परिगृह्यन्ते। अनिर्दिष्टार्थाश्च प्रकृत्यर्थमात्र एव नामार्थोपसर्जने धात्वर्थे विधीयन्ते यिन्नादयः, ते प्रत्ययार्थस्य प्राधान्याद् धात्वर्थोपनिपातिनः एवेति सर्वेषां क्रियाभावत्वमस्तीति चोदयन् परिहारमाह–अशुद्धक्रियत्वादिति। यिन्नादीनामिति संबन्धः। अशुद्धक्रियाणां भावोऽशुद्धक्रियत्वम्, तस्माद् वचनम्। यथा पच्यते पाक इति साध्यतासिद्धतालक्षणायां क्रियायां न भवतीत्युक्तम्, तथेहापीत्यर्थः।

इतरेषामिति यद्यपि चिकीर्षादीनां क्रियाद्वयम्, तथापि समुदायस्य संज्ञा युक्तार्थत्वाद् भ्वादयो हि धातुत्वेन सिद्धाः। **एते बालानामप्रसिद्धा इति वचनम्**। ननु धातुशब्दोऽयं संज्ञात्वेन निर्दिष्टः, अतः संज्ञित्वात् संज्ञिन एव प्रतिपादयेत्। ते धातवो भवन्ति चिकीर्षत्यादिरूपेण विवर्तन्ते इति। नैवम्, एकत्र संज्ञा निर्दिष्टा सैवार्थान्तरेऽपि दृश्यते **लोके**। यथा वटुर्देवदत्तः, शूद्रोऽपि देवदत्त इति। यद्यपि **संज्ञासूत्रमिदम्**, तथापि क्रियाभावो धातुस्तदनन्तरं सन्नाद्या इति न कृतम्। सन्नादीनां हीयत्ता न परिच्छिद्यते। अथ ते धातवः क्रियाभावो धातुश्चेत्युच्यताम्। एवमपि क्रियाभावानामनुकान्तानां गुपादीनामेव धातुसंज्ञा स्यात्। **कश्चिद्** आदेशं वर्णयति 'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः' इति न्यायाद् इषेः करोतेश्च प्रसङ्गे चिकीर्षाशब्दः आदेशो वा सनाद्यन्ता धातुवद् भवन्तीति। तथा सामान्यमेवातिदिश्यते। विशेषातिदेशे पुनर्दिवादिभ्यो यन्निति चैवमाद्यपि सनन्तानां स्यात्। एकदेशपक्षः (एकदेशातिदेशपक्षः) पुनर**पपक्ष** एव धातोर्यद्येकदेशस्य धातुत्वं स्यात् तर्हि पुत्रीयतीत्येवमादिषु न सिध्यति ॥४६६।

**[वि० प०]**

ते धातवः। अथ किमर्थमिदं यावता यिन्नादयः प्रत्यया इच्छादिषु धात्वर्थेषु विधीयन्ते, ततस्तदन्ताः शब्दाः प्रत्ययार्थस्य प्रधानत्वादुपसर्जनीभूतप्रकृत्यर्था इच्छादिक्रियामाचक्षाणाः क्रियाभावो धातुरित्यनेनैव लब्धधातुव्यपदेशा इत्याह – अशुद्धेत्यादि। अशुद्धा क्रिया येषां तेऽशुद्धक्रियास्तेषां भावोऽशुद्धक्रियत्वम्, नामार्थसम्मिलितेच्छादिक्रियावाचित्वादशुद्धक्रियत्वम्, तस्माद् वचनम्, तत्र हि क्रियां भावयतीति भावयतिना शुद्धक्रियानिष्ठ एव शब्द उच्यते स्वभावात् तर्हि चिकीर्षादीनां किमनेन धातुत्वं विधीयते। ते ह्यन्तर्भावान्वितकरणादिक्रियेच्छाविषयत्वात् शुद्धक्रियाभिधायिन एव। येऽपि गोपायप्रभृतयः स्वार्थिकप्रत्ययान्तास्तेऽप्यविचलितस्वार्थाभिधेयत्वात् क्रियाभावा एवेत्याह – इतरेषामित्यादि। डुकृञ्प्रभृतयो हि **गणे** प्रसिद्धा न चिकीर्षादय इति तेषां धातुत्वं न स्यात्। ननु "**क्रियाभावो हि धातुः**" (३।१।९), ततो गणेऽप्रसिद्धिः कोपयोगिनीत्याह – **सुखार्थमिति**।प्रायेण गणपठितानामेव धातुत्वं **मन्दधियः** पश्यन्तोऽन्येषां न मन्येरन्निति भावः॥४६६।

**[क० च०]**

ते धातवः। यद्यपि तच्छब्देनात्र सन्नादीनामेवानुवर्तनम्, तथापि तदन्तविधिना सन्नाद्यन्ता उच्यन्ते इत्याह-सन्नाद्यन्ता इत्यादि **वृत्तिः**। 'ऋतीयते, कामयते' इति उदाहरणद्वयं **वृत्तौ** विद्यते एव। **टीकायामे**तदुदाहरणस्य प्रसिद्धिवशादङ्गीकृतत्वाद् अशुद्धक्रियत्वाद् वचनमिति **वृत्तिः**। ननु कथमेतद् यावता लाक्षणिकत्वादेव धातुसंज्ञा न प्राप्नोति। नैवम्, पूर्ववत् सनन्तादित्यादिवचनाल्लाक्षणिकस्यापि धातुत्वमिति न दोषः॥४६६।

**[समीक्षा]**

'मीमांसते, चिकीर्षति, पुत्रीयति, पुत्रकाम्यति, श्येनायते, कारयति, चोरयति' आदि प्रयोगों के सिद्ध्यर्थ 'मीमांस, चिकीर्ष, पुत्रीय, श्येनाय, कारि' आदि की धातुसंज्ञा होनी आवश्यक है। पाणिनि तथा शर्ववर्मा दोनों ने ही इनकी धातुसंज्ञा की है। एतदर्थ पाणिनि का सूत्र है– "सनाद्यन्ता धातवः" (अ० ३।१।३२)। पाणिनीय व्याकरण में १२ प्रत्यय गिनाए गए हैं, जिनसे बनने वाले शब्दों की धातु संज्ञा उक्त सूत्र द्वारा निर्दिष्ट है। १२ प्रत्यय इस प्रकार हैं– १. सन्। २. क्यच्। ३. काम्यच्। ४. क्यङ्। ५. क्यष्। ६. आचार क्विप्। ७. णिच्। ८. यङ्। ९. यक्। १०. आय। ११. ईयङ्। १२. णिङ्। इन्हें एक श्लोक में इस प्रकार निबद्ध किया गया है।

**सनूक्यचूकाम्यचूक्यङ्क्यषोऽथाचारक्विब् णिज्यङौ तथा।**
**यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः॥**

(द्र०, सि० कौ० – त० बो०, भ्वादिप्र०, ३।१।३२)।

शर्ववर्मा ने 'सन् - यिन् - काम्य - आयि - इन् – य - आय' इन सात प्रत्ययों को मूलतः पढ़ा है। इनके अतिरिक्त **'ईयङ्-णिङ्'** ये दो प्रत्यय दुर्गसिंह आदि के अनुसार मान्य हैं।

**[विशेष वचन]**

१. धातुत्वाद् धातुकार्यमशुद्धक्रियत्वाद् वचनम्। इतरेषां गणेऽप्रसिद्धत्वात् सुखार्थम्। (दु० वृ०)

२. एवमपि क्रियाभावानामनुक्रान्तानां गुपादीनामेव धातुसंज्ञा स्यात्। कश्चिदादेशं वर्णयति 'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः' इति न्यायाद् इषेः करोतेश्च प्रसङ्गे चिकीर्षाशब्द आदेशो वा सनाद्यन्ता धातुवद् भवन्तीति (दु० टी०)।

३. ननु क्रियाभावो हि धातुः, ततो गणेऽप्रसिद्धिः कोपयोगिनीत्याह – सुखार्थमिति। प्रायेण गणपठितानामेव धातुत्वं मन्दधियः पश्यन्तोऽन्येषां न मन्येरन्निति भावः (वि० प०)।

४. पूर्ववत् रानन्तादित्यादिवचनाल्लाक्षणिकस्यापि धातुत्वमिति न दोषः (क० च०)।

**[रूपसिद्धि]**

१. **जुगुप्सते**। गुप् + सन् + ते। 'गुपू रक्षणे' (१।१३२) धातु से सन् प्रत्यय, द्वित्वादि, प्रकृत सूत्र द्वारा 'जुगुप्स' की धातुसंज्ञा, वर्तमानासंज्ञक ते-प्रत्यय तथा अन् विकरण।

२-३. **मामांसते**। मान + सन् + ते। **चिकीर्षति**। कृ + सन् + ति। पूर्ववत् प्रक्रिया।

४. **पुत्रीयति**। पुत्रमात्मनः इच्छति। पुत्र + यिन् + अन् + ति।

५. **पुत्रकाम्यति**। पुत्रमिच्छति। पुत्र + काम्य + अन् + ति।

६. **श्येनायते**। श्येन इवाचरति। श्येन + आयि + अन् + ते।

७. **उपवीणयति**। वीणया उपगायति। उपवीणा + इन् + अन् + ति।

८. **कारयति**। कुर्वन्तं प्रेरयति। कृ + इन् = कारि + अन् + ति।

९. **चोरयति** । चुर् + इन् = चोरि + अन् + ति ।

१०. **पापच्यते** । पुनः पुनरतिशयेन वा पचति । पच् + य + ते ।

११. **गोपायति** । गुप् + आय + अन् + ति ।

१२. **ऋतीयते** । ऋत + ईयङ् = ऋतीय + अन् + ते ।

१३. **कामयते** । कम् + णिङ् कामि + अन् + ते । पूर्ववत् प्रक्रिया ॥४६६।

## ४६७. चकास् - कास् - प्रत्ययान्तेभ्य आम् परोक्षायाम् [३।२।१७]

### [सूत्रार्थ]

चकास्, कास् तथा प्रत्ययान्त धातु से परवर्ती आम् होता है परोक्षासंज्ञक विभक्ति के परे रहने पर ॥४६७।

### [दु० वृ०]

चकास् - कास् - प्रत्ययान्तेभ्यः आम् परो भवति परोक्षायां परभूतायाम् । चकासाञ्चकार, कासाञ्चक्रे, लोलूयाञ्चक्रे, चिकीर्षाञ्चकार । चकास्ग्रहणमनेकस्वरोपलक्षणम् । तेन दरिद्राञ्चकार, चुलुम्पाञ्चकार । प्रत्ययान्तग्रहणमेकस्वरार्थमपीति **मतम्** । तेन स्वमिवाचचार स्वाञ्चकार ॥४६७॥

### [दु० टी०]

चकास्० । कासग्रहणे चकासस्तदन्तविधिना न सिध्यतीति **'अर्थवद्ग्रहणे नानर्थकस्य'** (का० परि० ४) इति चकासग्रहणम् । तच्चानेकस्वरोपलक्षणमित्याह – चकास् इत्यादि । चुलुम्पिरयमगणपरिपठितो धातुरेव क्रियाभावत्वात् । **मतान्तरमिति** । **अन्ये** पुनः प्रत्ययान्तग्रहणं नाद्रियन्ते । नैवम्, प्रत्ययान्तादेकस्वरादामा भवितव्यमिति । अन्तग्रहणं **सुखप्रतिपत्त्यर्थम्** ॥४६७॥

### [वि० प०]

चकास्० । चकासाञ्चकारेति । चकासृ दीप्तौ, ततोऽट्, मध्ये आम्, ततः कृञनुप्रयोगः, तस्य परोक्षायां द्विर्वचनम्, **"अस्योपधायाः"** (३।६।५) इत्यादिना वृद्धिः । कासाञ्चक्रे इति । कासृ भासृ दीप्तौ । कासृ शब्दकुत्सायाम्, अत्रात्मनेपदमेव, **"रम् ऋवर्णः"** (१।२।१०) इति रत्वम् । प्रत्ययान्तमुदाहरति – लोलूयाञ्चक्रे, चिकीर्षाञ्चकार इति । संश्चेक्रीयितयोः **"अस्य च लोपः"** (३।६।४९) । सत्यपि तदन्तत्वे कास्ग्रहणेन चकास्ग्रहणं न स्यात्, एकदेशस्यानर्थकत्वादिति चकास्ग्रहणं **तच्चोपलक्षणमित्याह** – चकास इत्यादि । दरिद्राञ्चकारेति । **'दरिद्रा दुर्गतौ'** (२।३७), **"दरिद्रातेरसार्वधातुके"** (३।६।३४) इत्याकारलोपः । चुलुम्पिरयमगणपरिपठितोऽपि

धातुः क्रियाभावत्वात्। यद्येवं प्रत्ययान्तस्यानेकस्वरत्वादुपलक्षणेनैव सिद्धमित्याह- प्रत्ययान्तेत्यादि। मतमिति **मतान्तरम्, यै**रायिलोपदर्शनमादृतम्, तेषामित्यर्थः ॥४६७॥

**[क० च०]**

चकास०। चकधातुः**रास** धातुरिति नाशङ्क्यते। **परसूत्रे** आसधातोरुपादानाद् आम्नायाद् वा। सूत्रे चका**रस्कासोर्दन्त्यान्तत्वम् आम्नायात्। कुमारे 'स्फुरत्प्रभामण्डलया चकाशे'** इति। **भट्टौ 'उपदिशि चकाशिरे काशा'** इत्यादिदर्शनात्। **'कासृ शब्दकुत्सायाम्'** (१।४३९) इत्यस्यैव ग्रहणम् इति **कश्चित्**। तन्नेति **नारायणभट्टः**, अविशेषाद् द्वयोरपि ग्रहणात्। यत्तु **कालिदासप्रयोगः,** तद्व्यतिक्रमनिर्देशादित्याचष्टे। **वस्तुतस्तु** दैवादिकस्य तालव्यान्तस्य तत्प्रयोगसिद्धिरिति **कुलचन्द्रमतमेव प्रमाणम्**। चुलुम्पाञ्च- कारेति **वृत्तिः**। सूत्रपठितोऽयं चुलुम्पः पाने वर्तते। मतमिति **वृत्तिः**। **स्वमते** तु 'स्वायाञ्चक्रे' इति प्रयोगः, आयिलोपानङ्गीकारात् ॥४६७।

**[समीक्षा]**

कासृ धातु से कासाञ्चक्रे, चकास् धातु से चकासाञ्चकार तथा "लोलूय' नामधातु से 'लोलूयाञ्चक्रे' शब्दों के सिद्ध्यर्थ आम् प्रत्यय करने की आवश्यकता होती है। इसका विधान दोनों व्याकरणों में किया गया है। पाणिनि का सूत्र है– "कास्प्रत्ययादाममन्त्रे लिटि" (अ० ३।१।३५)। पाणिनि ने सूत्र में चकास् धातु का पाठ नहीं किया है, इसलिए वहाँ यह वार्तिक सूत्र पढ़ने की आवश्यकता होती है– "कास्यनेकाच इति वक्तव्यं चुलुम्पाद्यर्थम्" (का० वृ० ३।१।३५)। कातन्त्रकार ने चकास् धातु का समावेश सूत्र में ही साक्षात् कर दिया है, अतः उक्त वार्तिकवचन की आवश्यकता नहीं रह जाती है।

**[विशेष वचन]**

१. चकास्ग्रहणमनेकस्वरोपलक्षणम् (दु० वृ०)।

२. प्रत्ययान्तग्रहणमेकस्वरार्थमपीति मतम् (दु० वृ०)।

३. अन्तग्रहणं सुखप्रतिपत्त्यर्थम् (दु० टी०)।

४. मतमिति मतान्तरम्, यैरायिलोपदर्शनमादृतम्, तेषामित्यर्थः (वि० प०)।

५. वस्तुतस्तु दैवादिकस्य तालव्यान्तस्य तत्प्रयोगसिद्धिरिति कुलचन्द्रमतमेव प्रमाणम् (क० च०)।

**[रूपसिद्धि]**

१. **चकासाञ्चकार**। चकास् + आम् + कृ + अट्। 'चकासृ दीप्तौ' (२।२८)

धातु से परोक्षासंज्ञक प्रथमपुरुष – एकवचन 'अट्' प्रत्यय, प्रकृत सूत्र से आम् प्रत्यय, "आमः कृञनुप्रयुज्यते" (३।२।२२) से कृ का अनुप्रयोग ( चकासाम् + कृ + अ), "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से कृ का द्विर्वचन, पूर्ववर्ती कृ की अभ्याससंज्ञा, "ऋवर्णस्याकारः" (३।३।१६) से ऋ को अ, "कवर्गस्य चवर्गः" (३।३।१३) से क् को च्, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से ऋ को आर्, "मोऽनुस्वारं व्यञ्जने" (१।४।१५) से म् को अनुस्वार तथा "वर्गे तद्वर्गपञ्चमं वा" (१।४।१६) से अनुस्वार को ञ् आदेश।

२. **कासाञ्चक्रे**। कास् + आम् + कृ + ए। 'कासृ शब्दकुत्सायाम्, कासृ दीप्तौ' (१।४३९, ४४०) धातु से परोक्षासंज्ञक उत्तमपुरुष-एकवचन ए-प्रत्यय, आम् प्रत्यय, कृ का अनुप्रयोग, द्विर्वचन, अभ्याससंज्ञक, ऋ को अ, क् को च् तथा ऋ को र् आदेश।

३. **लोलूयाञ्चक्रे**। पुनः पुनर्लुलाव। लू + य + आम् + कृ + ए। 'लूञ् छेदने' (८।९) धातु से "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) से चेक्रीयित-संज्ञक य-प्रत्यय, द्विर्वचन, लोलूय' की "ते धातवः" (३।२।१६) से धातुसंज्ञा, परोक्षासंज्ञक उत्तमपुरुष – एकवचन ए-प्रत्यय, आम्, कृ का अनुप्रयोग तथा द्विर्वचनादि कार्य।

४. **चिकीर्षाञ्चकार**। चिकीर्ष + आम् + कृ + अट्। सन्प्रत्ययान्त कृ धातु = चिकीर्ष से परोक्षासंज्ञक प्रथमपुरुष – एकवचन अट्-प्रत्यय, आम्, कृ का अनुप्रयोग तथा द्वित्वादिकार्य।

५-७. **दरिद्राञ्चकार**। दरिद्रा + आम् + कृ + अट्। **चुलुम्पाञ्चकार**। चुलुम्प + आम् + कृ + अट्। **स्वाञ्चकार**। स्वमिवाचचार। स्व + आयि + आम् + कृ + अट्। रूपसिद्धिप्रक्रिया पूर्ववत् ॥४६९।

## ४६८. दययासश्च [३।२।१८]

### [सूत्रार्थ]

'दय् - अय् - आस' धातुओं से पर में आम् प्रत्यय होता है परोक्षासंज्ञक विभक्ति के परवर्ती होने पर ॥४६८।

**[दु० वृ०]**

'दय्-अय्-आस्' एभ्य आम् परो भवति परोक्षायां परभूतायाम् । दयाञ्चक्रे, पलायाञ्चक्रे, आसाञ्चक्रे ।।४६८।

**[दु० टी०]**

दय्० । **'दय् दानगतिहिंसादानेषु च, अय वय मय इत्यादि गतौ'** (१।४०८, ४०६) । पराशब्दस्योपसर्गस्यायतौ लत्वम् । आस् उपवेशने । **पृथग्योगः सुखप्रतिपत्त्यर्थ एव** ।।४६८।

**[वि० प०]**

दय्० । पलायाञ्चक्रे इति । परापूर्वोऽयवयेत्यादि**दण्डको धातुः** । तस्मिन्नुपसर्गस्यायतौ इति रेफस्य लत्वम् ।।४६८।

**[क० च०]**

दय्० । दययोर्लघूपधयोः साहचर्याद् आङ्पूर्वस्यास्तेर्ग्रहणं कथं न स्यात् ? सत्यम् । आत्मनेपदिनोः साहचर्याद् आसेरेव ग्रहणम्, असेरात्मनेपदित्वात् । असो लघूपधत्वेन कथं साहचर्यं न गृह्यते ? चेत्, न, **आम्नायविरुद्धत्वात्** । अनिष्टत्वाच्च साहचर्य**मिष्टार्थमेव** । 'दय' इत्यकारान्तपाठाद् याधातुर्नाशङ्क्यते, व्यञ्जनान्तधातुप्रस्तावाद् वा ।।४६८।

**[समीक्षा]**

'दयाञ्चक्रे, पलायाञ्चक्रे, आसाञ्चक्रे' शब्दरूपों के सिध्यर्थ 'दय्-अय्-आस्' धातुओं से आम् प्रत्यय की आवश्यकता होती है । कातन्त्रकार तथा पाणिनि दोनों ने ही एतदर्थ प्रायः समान सूत्रों की रचना की है । पाणिनि का सूत्र है – "दयायासश्च" (अ० ३।१।३७) । कातन्त्रकार ने व्यञ्जनान्त धातुप्रस्ताव को आधार मानकर 'दययासश्च' यह सूत्रपाठ किया है, जब कि पाणिनि अकारान्त धातुप्रस्ताव के आधार पर 'दयायासश्च' पाठ को स्वीकार करते हैं ।

**[विशेष वचन]**

१. पृथग्योगः सुखप्रतिपत्त्यर्थ एव (दु० टी०) ।

२. परापूर्वोऽयवयेत्यादिदण्डको धातुः (वि० प०) ।

३. असो लघूपधत्वेन कथं साहचर्यं न गृह्यते ? चेत्, न । आम्नायविरुद्धत्वात् । अनिष्टत्वाच्च साहचर्यमिष्टार्थमेव । दय इति अकारान्तपाठाद् याधातुर्नाशङ्क्यते, व्यञ्जनान्तधातुप्रस्तावाद् वा (क० च०) ।

**[रूपसिद्धि]**

१. **दयाञ्चक्रे** । दय् + आम् + कृ + ए । 'दय दानगतिहिंसादानेषु' (१।४०८) धातु से परोक्षासंज्ञक उत्तमपुरुष – एकवचन ए-प्रत्यय, आम् प्रत्यय, कृ का प्रयोग तथा द्विर्वचनादि ।

२-३. **पलायाञ्चक्रे** । परा + अय् + आम् + कृ + ए । **आसाञ्चक्रे** । आस् + आम् + कृ + ए । शब्दसाधनप्रक्रिया पूर्ववत् ।।४६८।

## ४६९. नाम्यादेर्गुरुमतोऽनृच्छः [३।२।१९]

**[सूत्रार्थ]**

नामिसंज्ञक वर्ण जिसके आदि में हो तथा जिसमें गुरुसंज्ञक वर्ण हो, इस प्रकार की धातु से परोक्षाविभक्ति में आम् प्रत्यय पर में होता है 'ऋच्छ' धातु को छोड़कर ।।४६९।

**[दु० वृ०]**

नाम्यादेर्गुरुमतो धातोर्ऋच्छवर्जिताद् आम् परो भवति परोक्षायां परभूतायाम् । ईहाञ्चक्रे, उब्जाञ्चकार, उञ्छाञ्चकार । कथम् इयेष, उवोष ? नायं धातुसंज्ञातो नित्यं गुरुमान् । अनृच्छ इति किम् ? आनर्च्छ । **व्यवस्थितवाधिकारात्** । प्रोर्णुनाव ।।४६९।

**[दु० टी०]**

नाम्यादेः । कथमित्यादि । इषेर्लघूपधाद् गुणे गुरुमत इत्यनेन आम् प्राप्नोतीति । उषेश्च **"उषविदजागृभ्यो वा"** (३।२।२०) इत्यनेन आम् विभाषितः । पक्षे कृते गुणे पश्चाद् आम् उवोषाञ्चकारेति प्राप्नोति, गुरुमद्वचनं तर्हि किमर्थम् **"अत्युत्तमे वा"** **"अस्योपधाया दीर्घो वृद्धिश्च नामिनाम्"** (३।६।५) विभाषया वक्ष्यति । अहम् इयज, अहम् उवप । "परोक्षायामभ्यासस्योभयेषाम्" (३।४।४) सम्प्रसारणे नाम्यादित्वमस्तीति, नैवम् ।लाक्षणिकत्वात् ? सत्यम् ? ऋच्छेः प्रतिषेधो ज्ञापयति नात्र **लाक्षणिकी वृत्ति**रित्याह – नायमित्यादि। धातुसंज्ञाकालम् आश्रित्य यो धातुर्नित्यं गुरुमान् । नित्ययोगे मन्तुरयम् । उछि उञ्छे, नागमे सति भवति । उञ्छाञ्चकारेति **'उछी विवासे'** (१।६२; ५।२३) छस्य द्वित्वे भवति । विहितविशेषणं वा । गुरुमतो या विहिता परोक्षा अन्तरङ्गत्वान्नागमे छस्य द्वित्वे पश्चात् परोक्षेत्यर्थः। विहितविशेषणस्य ऋच्छप्रतिषेध एव लिङ्गम् । ननु **"ऋच्छ ऋतः"** (३।६।१७) इति गुणः परोऽन्तरङ्गश्च प्रकृत्याश्रितत्वाद् गुणे सत्यनाम्यादित्वाद् आम् न भविष्यति किम् ऋच्छप्रतिषेधेन न च धातुसंज्ञातः प्रागुपदेशनिवृत्त्यर्थं ज्ञापकं सफलमिति । यस्माद् इयेषेति

'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (का० परि० ३१) इति, सत्यम्। एवं सति **प्रक्रियागौरवं** स्यात्। व्यवस्थितेत्यादि। **केचिद्** अनृच्छ्वोरिति पठन्ति। ऋच्छे-र्नाम्यादेरुकारान्तस्य च न भवतीत्यर्थः ॥४६९।

## [वि० प०]

नाम्यादेः। कथमित्यादि। इयेरटि द्विर्वचनम्, **"नामिनश्चोपधाया लघोः"** (३।५।२) इति गुणः **"अभ्यासस्यासवर्णे"** (३।४।५६) इतीयादेशः। इह गुणे कृते गुरुमत्त्वादाम् प्राप्नोतीति देश्यं निरसितुमाह – नायमित्यादि। 'गुरुमतः' इति नित्य-योगे मन्तुरयं धातुसंज्ञामारभ्य यो धातुर्नित्यं गुरुमान् तत इत्यर्थः। अथ लाक्षणिक-त्वादेवात्र न भवतीति कथं नोक्तम्? सत्यम्। ऋच्छेः प्रतिषेधस्य लाक्षणिकस्य परिग्रहार्थत्वात्। अन्यथा **"द्विर्भावं स्वरपरश्छकारः"** (१।५।१८) इति छस्य द्वित्वे गुरुमत्त्वात् कुतोऽस्य प्रसङ्गः। अत एवोदाहृतम्। उञ्छाञ्चकार इति। उछि उञ्छे इदनुबन्धत्वान्नागमे सति लाक्षणिकस्यापि भवतीत्यर्थः।

ननु यदि नित्ययोगे मन्तुरयम्, तदा लाक्षणिकपरिग्रहे कथम् उञ्छाञ्चकारेति नकारस्य लक्षणतः संसङ्गित्वात्? तदयुक्तम्, धातुसंज्ञामारभ्येति यदुक्तम्, सा चोपदेशावस्थायामेव धातुसंज्ञा। नकारोऽप्यनपेक्षितपरनिमित्तकस्तस्यामेवेति **नित्ययोगो** न विहन्यते। गुरुमद्ग्रहणस्य प्रत्युदाहरणम्-अहम् इयज, अहम् उवप इति। अट्युत्तमे यजिवप्योः **"परोक्षायामभ्यासस्योभयेषाम्"** (३।४।४) इति सम्प्रसारणे नाम्यादित्व-मुपधाया दीर्घविधौ तु अट्युत्तमे वेति वचनात् पक्षे गुरुमत्त्वाभावः। आनर्च्छेति। ऋच्छ् गतीन्द्रियप्रलयमूर्तिभावेषु द्विर्भावम् इत्यादिना छस्य द्वित्वम्, ततोऽट्, द्विर्वचनम्, ऋवर्णस्याकारः, **"अस्यादेः सर्वत्र"** (३।३।१८) इति दीर्घः, **"ऋच्छ ऋतः"** (३।६।१७) इति परस्य ऋकारस्य गुणः, तस्मान्नागमः परादिरन्तश्चेत् संयोग इति न्वागमः। अथेह परत्वादन्तरङ्गत्वाच्च **"ऋच्छ ऋतः"** (३।६।१७) इति गुणे कृते नाम्यादित्वाभावाद् आम् न भवतीति किम् ऋच्छेः प्रतिषेधेन? नैवम्। लाक्षणिकपरिग्रहणार्थमित्युक्तमेव। कथमन्यथा उञ्छाञ्चकारेति स्यादिति। प्रोर्णुनावेति। प्रपूर्वक ऊर्णुञ् आच्छादने अट्, **"स्वरादेर्द्वितीयस्य"** (३।३।२) इति नुशब्दस्य द्विर्वचनम्, रेफस्य न द्विरुच्यते। **"न नबदराः संयोगादयोऽये"** (३।३।३) इति प्रतिषेधात्, **"अस्योपधायाः"** (३।६।५) इत्यादिना वृद्धिरिति ॥४६९।

## [क० च०]

नाम्यादेः। 'स्वरविधिः स्वरे' इति वचनबलाद् द्विर्वचने कृते गुणे सति गुरु-मत्त्वाद् आम् स्यादिति **पूर्वपक्षः**। 'उवोष' इति **प्रमादपाठोऽयम्**। **"उषविद०"**

(३।२।२०) इत्यादिना उषेर्विकल्पेनामो विधास्यमानत्वादिति **रक्षितः**। तत्र, **"उष-विद०"** (३।२।२०) इत्यादिना विकल्पेन केवलाद् धातोरेवाम् विधीयते, प्रत्युदाहरणं तु विकल्पपक्षे द्विर्वचने कृते गुणे च गुरूपधत्वाद् आम् स्यादिति। अतो रूपभेदात् प्रत्युदाहरणमिदमस्त्येव। परसूत्रविकल्पफलं तु उवोषाञ्चकार इत्यनिष्टरूपमिति **अपरे**। तदस्माभिर्विचार्यते – लघुद्विर्वचने गुणे च कृते यदि आम् भविष्यतीत्युच्यते, तदा आमा परोक्षाया व्यवधानाद् द्विर्वचन- गुणयोरपि निवृत्तिर्भविष्यतीति किं वाशब्देनेति न वाच्यम्, **"ऊर्णोतेर्गुणः"** (३।६।८५) इतिवत् पूर्वविकारः स्यादिति चेत्, तर्हि गुरूपधत्वाभावाद् आमोऽपि निवृत्तावनवस्था स्यात्, अतो निमित्ताभाव एव न भविष्यतीति न नैमित्तिकाश्रय इति न्यायाच्च, तस्माद् उवोष इति प्रत्युदाहरणमस्त्येव। तथा च **टीकायाम्** – उषेश्च **"उषविद०"** (३।२।२०) इत्यादिना विकल्पितामः पक्षे द्विर्वचने गुणे कृते च पश्चाद् आमि सति 'उवोषाञ्चकार' इति अनिष्टरूपापत्तिः स्यादिति गुरुमद्ग्रहणम् इत्युक्तमिति। **पञ्जी** गुरुमद्ग्रहणस्य प्रत्युदाहरणम् अहमियज इति, अहम् उवप इति। इदं प्रत्युदाहरणं **प्रमादत** एवोपदेशे धातोरनाम्यादित्वादिति **सारसमुच्चयः**। तन्न, उपदेशनाम्यादेरेवेति नियमाभावात्। स्थितिपक्षेऽपि गुरावेवौपदेशिक-त्वाभ्युपगमाद् ऋच्छवर्जनादेव नाम्यादेर्भविष्यति यदादिग्रहणं तत् **सुखार्थम्**॥४६९।

**[समीक्षा]**

'ईहाञ्चक्रे, उब्जाञ्चकार, उञ्छाञ्चकार' आदि शब्दरूपों के सिद्ध्यर्थ आम् प्रत्यय आवश्यक है, उसकी पूर्ति दोनों ही आचार्यों ने की है। पाणिनि का सूत्र है – "इजादेश्च गुरुमतोऽनृच्छः" (अ० ३।१।३६)। पाणिनि के अनुसार इच् प्रत्याहार में 'इ-उ-ऋ-लृ-ए-ओ-ऐ-औ' वर्णों का समावेश होता है, कातन्त्रव्याकरण में प्रत्याहारों को नहीं अपनाया गया है, उसमें "स्वरोऽवर्णवर्जो नामी" (१।१।७) सूत्र द्वारा उक्त वर्णों की नामी संज्ञा की है। अतः उसमें 'इजादेः' के स्थान में 'नाम्यादेः' पाठ किया है। बँगला भाष्यकार ने आर्या छन्द में चार प्रकार की गुरु संज्ञा का स्पष्टीकरण इस प्रकार किया है –

**संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम्।**
**विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन॥**

अर्थात् १. संयोगसंज्ञक वर्णों से पूर्ववती वर्ण, २. दीर्घसंज्ञक वर्ण, ३. अनुस्वारयुक्त ह्रस्व स्वर, तथा ४. विसर्गयुक्त ह्रस्व स्वर। इसके अतिरिक्त, पादान्तवर्ती होने पर भी ह्रस्व को विकल्प से गुरु माना जाता है। व्याख्याकारों ने कुछ आचार्यों के अभिमत भी उद्धृत किए हैं।

**[रूपसिद्धि]**

१. **ईहाञ्चक्रे** । ईह् + आम् + कृ+ ए । 'ईह चेष्टायाम्' (१।४४६) धातु से परोक्षासंज्ञक आत्मनेपद प्रथम पुरुष – एकवचन 'ए' प्रत्यय, आम् प्रत्यय, कृ का अनुप्रयोग तथा द्विर्वचनादि ।

२-३. **उब्जाञ्चकार** । उब्ज् + आम् + कृ + अट् । **उच्छाञ्चकार** । उच्छ् + आम् + कृ + अट् । शब्दसाधनप्रक्रिया पूर्ववत् ॥४६९।

## ४७०. उषविदजागृभ्यो वा [३।२।२०]

**[सूत्रार्थ]**

'उष् - विद् - जागृ' इन तीन धातुओं से आम् प्रत्यय पर में होता है परोक्षा विभक्ति के परे रहते ॥४७०।

**[दु० वृ०]**

उषादिभ्य आम् परो भवति वा परोक्षायाम् परभूतायाम् । जागर्त्तिना सहचरितो विदिरदादिः । **ऊषाञ्चकार** ।उवोष, विदाञ्चकार, विवेद, जागराञ्चकार, जजागार ॥४७०।

**[दु० टी०]**

उषविद० । **'उष दाहे, विद ज्ञाने'** (१।२२९; २।२७) ।**भाष्ये** तु साहचर्यं न चिन्तितम् । **'जागृ निद्राक्षये'** (२।३६) अनेकस्वरत्वान्नित्ये प्राप्ते वाविधानम् ॥४७०।

**[वि० प०]**

उषविद० । जागर्त्तिनेत्यादि । **'विद सत्तायां दिवादौ, विद्लृ लाभे तुदादौ, विद विचारे रुधादौ, विद ज्ञाने अदादौ, जागृ निद्राक्षये'** (३।१०९; ५।९; ६।२४; २।२७, ३६) इत्यनेनादादिकेन साहचर्याद् विदिर्ज्ञानार्थ एवेत्यर्थः। उवोष इति । **"नामिनश्चोपधाया लघोः"** (३।५।२१) इति गुणे कृते **"अभ्यासस्यासवर्णे"** (३।४।५६) इत्यभ्यासस्योकारस्योवादेश इति । विदाञ्चकार इति । विदेर्लघूपधस्यापि गुणो न भवति आमि विदेरेवेति प्रतिषेधात् ॥४७०।

**[क० च०]**

उष० । जागर्त्तिना सहचरित इति **वृत्तिः** । उषजागृभ्यां परस्मैपदिभ्यां साहचर्यात् परस्मैपदस्यैव प्राप्तिरिति **न्यासः** । जागर्तेरनेकस्वरत्वात् पूर्वेणैव सिद्धौ इहोपादानं विकल्पार्थम्, तत्साहचर्याद् उषविदोरपि विकल्पो भविष्यति किं वाशब्देनेति न वाच्यम् **"ऊर्णोतेर्गुणः"** (३।६।८५) इतिवत् पूर्वविकल्पः स्याद् उत्तरत्र च न वर्तते ॥४७०।

[समीक्षा]

'ओषाञ्चकार, विदाञ्चकार, जागराञ्चकार' प्रयोगों के सिद्ध्यर्थ 'उष्-विद्-जागृ' धातुओं से आम् प्रत्यय करने की आवश्यकता होती है, इसकी पूर्ति दोनों ही आचार्यों ने की है। पाणिनि का सूत्र है– "उषविदजागृभ्योऽन्यतरस्याम्" (अ० ३।१।३८)। व्याकरण में 'वा–अन्यरस्याम्' शब्द समानार्थक हैं। पाणिनि ने 'अन्यतरस्याम्' शब्द का तथा कातन्त्रकार ने 'वा' शब्द का प्रयोग किया है। व्याख्याकारों ने 'वृत्ति-भाष्य-न्यास' के अभिमतों को प्रस्तुत किया है।

[रूपसिद्धि]

१. **ओषाञ्चकार**। उष+आम्+कृ+अट्। 'उष दाहे' (१।२२९) धातु से परोक्षाविभक्तिसंज्ञक परस्मैपद प्रथमपुरुष-एकवचन अट् प्रत्यय, प्रकृत सूत्र से आम् प्रत्यय, उकार को गुण, 'कृ' का अनुप्रयोग, द्विर्वचन, अभ्यासस्थ ऋ को अर्, रेफ का लोप, ककार को चकार तथा ऋ को वृद्धि आर् आदेश। आम्प्रत्यय के वैकल्पिक होने से आम् प्रत्यय न होने पर 'उवोष' प्रयोग बनता है।

२-३. **विदाञ्चकार**। विद्+आम्+कृ+अट्। **जागराञ्चकार**। जागृ+आम्+कृ+ अट्। शब्दसाधनप्रक्रिया पूर्ववत्॥४७०।

## ४७१. भीह्रीभृहुवां तिवच्च [३।२।२१]

[सूत्रार्थ]

'भी-ह्री-भृ-हु' धातुओं से परवर्ती आम् प्रत्यय विकल्प से होता है परोक्षाविभक्ति के पर में रहने पर। इस आम्, प्रत्यय के पर में रहने पर 'ति' विभक्ति की तरह कार्य होता है।

[दु० वृ०]

एषाम् आम् परो भवति वा परोक्षायाम्, स च तिरिव, तेन द्वित्वम् इत्त्वं चेति। बिभयाञ्चकार, बिभाय। जिह्रयाञ्चकार, जिह्राय। बिभराञ्चकार, बभार। जुहवाञ्चकार, जुहाव॥४७१।

[दु० टी०]

भीह्री०। **'ञिभी भये, ह्री लज्जायाम्, डु धाञ् डु भृञ् धारणपोषणयोः, हु दाने'** (२।६८, ६९, ८५, ६७)। तिवचनस्य वर्तमानकालत्वम्, कर्तृत्वम्, एकवचनत्वम्, प्रथमपुरुषत्वं च यद्यप्यस्ति तथापि परोक्षायां प्रतिपन्नम् इति सार्वधातुकत्वमेवा-

तिदिश्यते। सार्वधातुककार्यं च द्विर्वचनम्, भृञः इत्त्वं च सम्भवति नान्यद् इत्याह - तेन द्वित्वमित्त्वं चेति ॥४७१।

**[वि० प०]**

भीह्री०। यद्यपि वर्तमानकालादयोऽपि तिप्रत्ययस्याभिधेयास्तथापि न तेषामतिदेशः, परोक्षाभिधेयस्यैवातीतकालस्य विद्यमानत्वात्। न चैकस्मिन् वर्तमानत्वमतीतत्वं शक्यमावेदयितुम्। अतः सार्वधातुकत्वमेवातिदिश्यते इत्यभिप्रायेणाह – तेन द्वित्वमित्त्वं चेति। **"जुहोत्यादीनां सार्वधातुके"** (३।३।८) इति द्वित्वम्। अन्यथा नित्यत्वादामा परोक्षाया व्यवहितत्वात् कथं द्विर्वचनं स्यात्। **"भृञ्हाङ्माङामित्"** (३।३।२४) इति भृञोऽभ्यासस्येत्त्वम्। एते चत्वारोऽपि जुहोत्यादौ पठ्यन्ते। आम्प्रत्ययाभावपक्षे **"चण्परोक्षा०"** (३।३।७) इत्यादिना द्विर्वचनं यथासंभवमभ्यासे **"द्वितीयचतुर्थयोः प्रथमतृतीयौ, हो जः"** (३।३।११, १२) इति च प्रवर्तते। आमि नाम्यन्तलक्षणो गुणः, **"अस्योपधायाः"** (३।६।५) इत्यादिना वृद्धिः ॥४७१।

**[क० च०]**

भीह्री०। सामीप्यसंबन्धे षष्ठी। एषां समीपे आम् भवतीत्यर्थः। सूत्रत्वादुवादेशः। हुधातुर्वाधातुश्च नाशङ्क्यते नाम्यन्तधातुप्रकरणादाम्नायाद् वा ॥४७१।

**[समीक्षा]**

'बिभयाञ्चकार, जिह्रयाञ्चकार, बिभराञ्चकार, जुहवाञ्चकार' प्रयोगों के साधनार्थ 'भी - ह्री - भृ - हु' धातुओं से आम् प्रत्यय, द्वित्व तथा इत्त्व की आवश्यकता होती है। दोनों ही आचार्यों ने इन कार्यों के लिए सूत्र बनाए हैं। द्वित्व – इत्त्व कार्यों के विधानार्थं कातन्त्रकार ने यहाँ 'ति' प्रत्यय का अतिदेश किया है और पाणिनि ने श्लु का। पाणिनि का सूत्र है – "भीह्रीभृहुवां श्लुवच्च" (अ० ३।१।३९)। कातन्त्रव्याख्याकारों ने ति - अतिदेश के विधान का स्पष्टीकरण इस प्रकार किया है कि यद्यपि ति – अतिदेश से वर्तमानकालत्व, कर्तृत्व, एकवचनत्व तथा प्रथमपुरुषत्व की भी प्राप्ति होती है तथापि यहाँ परोक्षा विभक्ति में सार्वधातुकत्व का अतिदेश अभीष्ट है। सार्वधातुक का कार्य है द्विर्वचन तथा भृञ् धातु के अभ्यास में इत्त्व-विधान। इसलिए वृत्तिकार ने कहा है – 'स च तिरिव, तेन द्वित्वमित्त्वं चेति'। आम् प्रत्यय का विधान वैकल्पिक होने से 'बिभाय, जिह्राय, बभार, जुहाव' रूप भी साधु माने जाते हैं।

[रूपसिद्धि]

१. **बिभयाञ्चकार, बिभाय** । भी + आम् + कृ + अट् । 'ञि भी भये' (२।६८) धातु से परोक्षासंज्ञक प्रथमपुरुष – एकवचन अट् प्रत्यय, प्रकृत सूत्र से आम्, ति – अतिदेश से "अन् विकरणः कर्तरि" (३।२।३२) से अन्, "अदादेर्लुग् विकरणस्य" (३।४।९२) से अन् का लुक्, "जुहोत्यादीनां सार्वधातुके" (३।३।८) से 'भी' को द्विर्वचन, प्रथम भी की अभ्याससंज्ञा, "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) से भी की रक्षा (यहाँ भ् के अतिरिक्त किसी अन्य व्यञ्जन के न होने से किसी का लोप नहीं होता), "ह्रस्वः" (३।३।१५) से दीर्घ ईकार को ह्रस्व, "द्वितीयचतुर्थयोः प्रथमतृतीयौ" (३।३।११) से भ् को ब्, "नाम्यन्तयोर्गुणः" (३।५।१) से ई को गुण ए, "ए अय्" (१।२।१२) से ए को अय्, कृ का अनुप्रयोग तथा उसका द्विर्वचनादि । आम् प्रत्यय के अभाव में अभ्यासकार्य तथा ई की वृद्धि – आयादेश ।

२. **जिह्रयाञ्चकार, जिह्राय** । ह्री + आम् + कृ + अट् । अभ्यासस्थ ह् के स्थान में "हो जः" (३।३।१२) से ज् आदेश तथा अन्य प्रक्रिया पूर्ववत् ।

३. **बिभराञ्चकार, बभार** । भृ + आम् + कृ + अट् । "भृञ्हाङ्माङामित्" (३।३।२४) से अभ्यासस्थ अकार को इकार, अन्य प्रक्रिया पूर्ववत् ।

४. **जुहवाञ्चकार, जुहाव** । हु + आम् + कृ + अट् । साधनप्रक्रिया पूर्ववत् ।।४७१।

## ४७२. आमः कृञनुप्रयुज्यते [३।२।२२]

[सूत्रार्थ]

आम्प्रत्ययान्त धातु से परोक्षाविभक्ति में कृ का अनुप्रयोग होता है ।।४७२।

[दु० वृ०]

आमन्तस्य धातोः कृञनुप्रयुज्यते परोक्षायां परभूतायाम् । ईहाञ्चक्रे, चकासाञ्चकार, कासाञ्चक्रे । प्रयुज्यते इति **स्पष्टार्थम्** । आमो मकारस्यानुस्वारो भवत्यन्त्यत्वात्, तद्वर्गपञ्चमो वा स्यात् ।।४९२।

[दु० टी०]

आमः । कालादयोऽर्था परोक्षयैवोक्ता इति विशेषवाचिन उत्पत्तिरामप्रत्ययस्य । प्रकृत्यर्थ एवार्थोऽस्यामः प्रत्ययस्य । सामान्यवचनः कृञनुप्रयुज्यते इति । यद्यपि विशेषोपक्रमे सामान्याभिधानमप्रसिद्धं लोके, किन्तु अन्यथा **लक्षणवृत्तिः,** अन्यथा च **शब्दप्रवृत्तिः** । तत्रैकस्य पचादेर्विशेषस्यानुप्रयोगे सर्वविशेषार्थापेक्ष्यमाणैव (सर्वविशेषा-

र्थापेक्षया सा नैव) निवर्तते, सर्वेषां विशेषधातूनाम**नुप्रयोगः** स्यात्, सामान्यं चानुप्रयुज्यमानं विशेषसन्निधाने सामान्यात् प्रयोज्यविशेषेऽवतिष्ठते। अनुप्रयोग-वचनादेव करोतिरवसीयते, ञकारस्तु सूत्रार्थ एव। कृञनुप्रयोगेण विना नार्थोपलब्धिरिति वचनम्॥४७२।

**[वि० प०]**

आमः। प्रयुज्यते इति **स्पष्टार्थमिति**, भवतीत्यध्याहारेणापि **अनुप्रयोगो** लभ्यते कथमन्यथा भवतीत्यर्थः। आमि इत्यादि। एतेनामन्तस्य विरतेरभिधानमस्तीति **"मोऽनुस्वारं व्यञ्जने"** (१।४।१५) इत्यनुस्वारः। ततो **"वर्गे तद्वर्गपञ्चमं वा"** (१।४।१६) इति दर्शयति– तथा चान्तो विरतिरिति सन्धौ दर्शितमिति॥४७२।

**[क० च०]**

आमः। इह सूत्रे अनुप्रयुज्यते इति पदद्वयम्, आमादिवत् कृञपि न प्रत्यय-विशेषः, अनुप्रयुज्यते इति वचनात्। प्रसिद्धस्यैवानुप्रयोगो युज्यते, स च धातुरेव। अत एव कृञो ञकारः **सुखार्थः**। न च क्रियाभावत्वं नास्तीति कथमस्य धातुत्वम्? ईहाञ्चक्रे इत्युक्ते योऽर्थः प्रतीयते तस्य कृञं विनापि प्रकृतिप्रत्ययाभ्यामेवाभिधानम् अतिरिक्तस्याप्रतीतेरिति वाच्यम्, कृञः सामान्यक्रियावाचित्वेन चेष्टाया एवोक्तत्वात्। प्रयुज्यते इत्युक्तेऽपि साध्यं सिध्यति अनुग्रहणस्य फलं **परसूत्रे** व्याख्यास्यामः॥४७२।

**[समीक्षा]**

'ईहाञ्चक्रे, चकासाञ्चकार, कासाञ्चक्रे' शब्दों के सिध्यर्थ 'ईह-चकास्-कास्' इन मुख्य धातुओं के अतिरिक्त कृ का अनुप्रयोग अत्यन्त आवश्यक होता है, इसी की पूर्ति के लिए दोनों आचार्यों ने सूत्र बनाए हैं। पाणिनि का सूत्र है– "कृञ्चानु-प्रयुज्यते लिटि" (अ० ३।१।४०)। दोनों के 'कृञ्' की व्याख्या में अन्तर यह है कि पाणिनि ने 'कृञ्' को प्रत्याहार मानकर उसमें कृ के अतिरिक्त 'अस्-भू' का भी समावेश कर लिया है, जब कि कातन्त्रकार ने कृञ् से केवल कृ को लिया है। फलतः 'अस्-भू' के अनुप्रयोगार्थ "अस्भुवौ च परस्मै" (३।२।२३) यह स्वतन्त्र सूत्र बनाया गया है।

**[रूपसिद्धि]**

१-३. **ईहाञ्चक्रे**। ईह्+आम्+कृ+ए। **चकासाञ्चकार**। चकास्+आम्+कृ+अट्। **कासाञ्चक्रे**। कास्+आम्+कृ+ए। 'ईहाञ्चके' की रूपसिद्धि के लिए सूत्र

४६९ तथा 'चकासाञ्चकार-कासाञ्चक्रे' की रूपसिद्धि के लिए सूत्र ४६७ की समीक्षा द्रष्टव्य है ।।४७२।

## ४७३. अस्भुवौ च परस्मै [३।२।२३]

**[सूत्रार्थ]**

आम्प्रत्ययान्त धातु से परोक्षा विभक्ति के परवर्ती होने पर 'अस्-भू' धातुओं का अनुप्रयोग होता है ।।४७३।

**[दु० वृ०]**

आमन्तस्य धातोरस्भुवावनुप्रयुज्येते परोक्षायां परभूतायाम् । परस्मैपदं चातिदिश्यते । ईक्षामास, ईक्षाम्बभूव, चकासामास, चकासाम्बभूव । **अन्वाचयशिष्टो**ऽयमादेशोऽर्थस्यान्तरतम्यात् । तेन ईक्षामासे, ईक्षाम्बुभूवे कन्या छात्रेण । ईहांव्यतिबभूवे छात्रः । अस्तेर्भूर्न स्यात्, विधानबलात् । प्रकृतेः श्रुतश्चकारः आदेशेन सह सम्बध्यते । विद् + आम् + कृञनुप्रयोगः, पञ्चम्यां वा – विदाङ्करोतु, विदांकरवाणि । वेत्तु, वेदानि ।।४७३।

**[दु० टी०]**

अस्भु० । आन्तरतम्यादिति भावे कर्मणि व्यतिहारे च विहितस्यात्मनेपदस्य परस्मैपदं नातिदिश्यते इत्यर्थः । अथवा परस्मैपदं चानुप्रयुज्यते इति । आत्मनेपदं तु **कीलप्रतिकीलन्यायेन** निवृत्तं भवति, यदा कर्तृत्वं नार्थस्तदा प्रधानवाक्यनिर्दिष्टौ अस्भुवौ भवत एवेति भावः । ननु परोक्षायाम् आम् आदिश्यताम्, भीह्रीभृहुवान्तिवद्भावान्न द्विर्वचनम्, आमन्तस्याव्यक्तपदार्थत्वात् क्रियाकालसाधनपुरुषोपसंख्याग्रहणाभिव्यक्तये परोक्षान्तेनैवानुप्रयोगो भविष्यति स च सामर्थ्यात् कृभ्वस्तीनामेव सामान्यवचनत्वात् । न च पचादीनां विशेषार्थानामसंबन्धात् । न स समानार्थानां जागराम् – जजागार' इति भवति उक्तार्थत्वात् । **क्रियासामान्यवचनास्तु कृभ्वस्तयः** क्रियाविशेषाणां सन्निधौ तद्व्याप्यैव क्रियाविशेषेऽवतिष्ठन्ते इति ? सत्यम् । विद्यतेरपि सामान्य-वचनस्यानुप्रयोगो मा भूदिति कृभ्वस्तिग्रहणं व्यवहितविपर्ययनिवृत्त्यर्थं च, पाचयां देवदत्तौ बभूव, बभूव पाचयामिति अस्तेर्भूभावो बाधितो भवति वचनात् ।

**अन्य** आह – परोक्षान्तस्य विद्यते लाभाद्यर्थेन सह रूपस्याविशेषात् प्राकरणिकी सामान्यार्थता भवति । तथा अस्यतेरपि परोक्षान्तस्य सत्तायां वृत्तिर्दृश्यते । यथा 'लावण्य उत्पाद्य इवास यत्नः' इति आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य पदं भवत्येव सादृश्यार्थत्वाद् अनुप्रयोगस्यास्भुवौ परस्मैपदान्तौ अनुप्रयोगव्यपदेशेऽपि गौणत्वमस्तीति

पश्चादुच्यमानः कथं पूर्वो व्यवहितो वा स्यादिति। कृभ्वस्तीनां सोपसर्गाणामनुप्रयोगो भवत्येव। न चोपसर्गेण व्यवधानं पाचयांप्रचकारेति। तथा च **'उक्षां प्रचक्रुर्नगरस्य मार्गान्'** इति प्रयोगो दृश्यते, तस्माद् **अनुप्रयोगविधानं प्रतिपत्तिगौरवनिरासार्थमेव**। **कश्चिद्** आह – नावश्यं प्रयोगः पुरुषोपग्रहादयो विवक्ष्यन्ते इति क्रियामात्रमेवार्थः स्यात्। **अपर** आह – प्राकरणिकाः कालादयः स्युरिति **पुरुषापराधाद्** विपरीतप्रयोगोऽपि सम्भाव्यते। **इतर** आह, कृञादयोऽन्यत्र परिपूर्णक्रियासाधनसम्बन्धाः स्वरूपोपात्तार्थप्रतिपादका एव दृश्यन्ते नान्यपरोपगृहीतार्थाद्योतकाः, तस्मात् परिसमाप्तार्थाना**मनुप्रयोगो** न स्यादिति वचनम् ॥४७३।

**[वि० प०]**

असभु०। 'ईक्षामास, ईक्षाम्बभूव' इति ईक्षेरात्मनेपदित्वात् परोक्षाया ए, तत आमन्तस्य असभुवौ द्विर्वचनम् एकत्र **"अस्यादेः सर्वत्र"** (३।३।१८) इत्यभ्यासे दीर्घत्वम्। अन्यत्र **"भवतेरः"** (३।३।२२) इत्युकारस्यात्वम्। **"भुवो वोऽन्तः"** (३।४।६२) इत्यादिना आत्मनेपदस्य च परस्मैपदादेशः अट्। अर्थस्यान्तरतम्यादिति। परस्मैपदं हि **"शेषात् कर्तरि परस्मैपदम्"** (३।२।४७) इति कर्तरि विधीयते, तेनात्मनेपदस्यापि कर्तर्येव विहितस्य परस्मैपदादेश इत्यर्थः। तेन कर्मणि भावे च न भवतीति। तथा 'ईहांव्यतिबभूवे छात्रः' इत्यनियम इत्यादिरुचादिवचनाद् व्यतिहारे विहितस्य न भवति। प्रकृतेरित्यादि। प्रकृतावानर्थक्यादिति हेतुः। न च कृञ् चेति संबन्धो युज्यते तस्य पूर्वेणैव सिद्धत्वादिति। परस्मैपदादेशार्थमित्यपि न वक्तव्यम्, पृथग् वचनात्। अत एवादेशेन सह सम्बध्यते चकारः। **ततश्चादेशोऽयमन्वाचयशिष्ट** इत्यन्तरेणापि परस्मैपदादेशम्। असभुवौ प्रधानवाक्यनिर्दिष्टौ भवत एवेति। विद इत्यादि। एतत्तु **"धातोर्वा"** (३।२।४) इत्यतो मण्डूकप्लुतिवाधिकाराद् वेदितव्यम्। विदांकरवाणीति। विद + आनि + आम्, कृञनुप्रयोगः, तनादेरुः, करोतेरिति नाम्यन्तलक्षणो गुणः, अवादेशः, णत्वं च ॥४७३।

**[क० च०]**

अस्०। ननु सिचि परस्मै इतिवदत्रापि निमित्तसप्तमी कुतो न स्यात्, ततश्च परस्मैपदे परे असभुवोरनुप्रयोगेण कृञोऽनुप्रयोगो बाध्यतां चेत् तर्हि चकारो व्यर्थः स्यात् कार्यद्वयाभावेन समुच्चीयमानार्थाभावात्, नैवम्। कृञोऽनुवर्तनेन चकारस्य सफलत्वात् चेत्, न। पूर्वेणैव सिद्धत्वेन कृञोऽनुवर्तनस्य विफलत्वात्। ननु पूर्वेण आत्मनेपदे प्राप्ते अनेन च परस्मैपदप्राप्त्यर्थं कृञोऽनुवर्तनं भविष्यति ? सत्यम्। यदि परस्मा इति निमित्तमेव भविष्यति, तदा कार्यात् पूर्वमेव निर्दिशेत्।

**महान्तस्तु नानिष्टानां शास्त्रे प्रक्लृप्तिरित्याहुः**। न च कृञ् चेति **पञ्जी**। ननु पृथग्वचनादिति कथमत्र हेतुः संगच्छते, यावता पृथग्वचनसामर्थ्यात् कर्तरि 'ईक्षाञ्चक्रे' इत्यात्मनेपदस्य स्थितिरपि भविष्यति। अकृते तु पृथग्योगे नित्यम् ईक्षाञ्चकार इति कर्तरि परस्मैपदादेशसन्नियोगशिष्टत्वात् कर्तर्येव कृञोऽनुप्रयोगः प्राप्नोति न तु कर्मणि। ततः कर्मण्यपि कृञोऽनुप्रयोगार्थं पृथग्वचनं सार्थकम्। तत्कथं पृथग्वचनात् कृञो निवृत्तिरिति? सत्यम्। विशेष्यविशेषणभावस्य प्रयोक्तुरायत्तत्वाच्चकारस्य परस्मैपदादेशेन संबन्धः कर्तव्य एवेति हृदि कृत्वैव **पञ्जीकृता** आदेशेन सह सम्बध्यते चकार इत्युक्तम्, अतो न **पूर्वपक्षावसर** इति। [अनुग्रहणात् 'तत्पातयां प्रथममास' इति, 'संयोजयां विधिवदास' इत्यत्र प्रथमशब्दविधिवच्छब्दाभ्यां व्यवधानेऽपि असनुप्रयोग **इत्येके** 'पातयां मास' इति च भिन्नपदम् **इत्यपरे** पातं यातीति **पातयाशब्दः**, एवमन्यत्रापि। इति क्वचित् पाठः]॥४७३।

**[समीक्षा]**

पूर्ववर्ती सूत्र-सं० ४७२ की समीक्षा द्रष्टव्य है।

**[विशेष वचन]**

१. अन्वाचयशिष्टोऽयमादेशोऽर्थस्यान्तरतम्यात्। तेन ईक्षामासे, ईक्षाम्बुभूवे कन्या छात्रेण, ईहांव्यतिबभूवे छात्रः (दु० वृ०)।

२. आन्तरतम्यादिति कर्मणि, भावे व्यतिहारे च विहितस्यात्मनेपदस्य परस्मैपदं नातिदिश्यते इत्यर्थः। अथवा परस्मैपदं चानुप्रयुज्यते इति। आत्मनेपदं तु कीलप्रतिकीलन्यायेन निवृत्तं भवति यदा कर्तृत्वं नार्थस्तदा प्रधानवाक्यनिर्दिष्टावसृभुवौ भवतः एवेति भावः (दु० टी०)।

३. अत एवादेशेन सह सम्बध्यते चकारः, ततश्चादेशोऽयमन्वाचयशिष्टः इत्यन्तरेणापि परस्मैपदादेशम्। असृभुवौ प्रधानवाक्यनिर्दिष्टौ भवत एवेति भावः (वि० प०)।

४. महान्तस्तु नानिष्टानां शास्त्रे प्रक्लृप्तिरित्याहुः (क० च०)।

५. विशेष्यविशेषणभावस्य प्रयोक्तुरायत्तत्वाच्चकारस्य परस्मैपदादेशेन सम्बन्धः कर्तव्य एवेति हृदि कृत्वैव पञ्जीकृतादेशेन सह संबध्यते चकारः इत्युक्तम् (क० च०)।

**[रूपसिद्धि]**

१. **ईक्षामास**। ईक्ष् + आम् + अस् + ए – अट्। 'ईक्ष दर्शने' (१।४३२) धातु से परोक्षाविभक्तिसंज्ञक प्रथमपुरुष–एकवचन ए–प्रत्यय, "नाम्यादेर्गुरुमतोऽनृच्छः"

(३।२।१९) सूत्र द्वारा आम् प्रत्यय, प्रकृत सूत्र से अस् का अनुप्रयोग, ए के स्थान में परस्मैपदसंज्ञक अट् आदेश, अस् को द्विर्वचनादि तथा "अस्यादेः सर्वत्र" (३।३।१८) से दीर्घ आदेश।

२. **ईक्षाम्बभूव**। ईक्ष्+आम्+भू+ए। 'ईक्ष दर्शने' (१।४३२) धातु से परोक्षाविभक्तिसंज्ञक प्रथमपुरुष–एकवचन प्रत्यय ए, आम्, भू का अनुप्रयोग, द्विर्वचनादि, "भुवो वोऽन्तः परोक्षाद्यतन्योः" (३।४।६२) से व् का आगम तथा ए के स्थान में परस्मैपदसंज्ञक अट् प्रत्यय।

३-४. **चकासामास**। चकास्+आम्+अस्+ए–अट्। **चकासाम्बभूव**। चकास्+आम्+भू+ए–अट्। शब्दसाधन की प्रक्रिया पूर्ववत्।

५. **ईक्षामासे**। ईक्ष्+आम्+अस्+ए। कर्मवाच्य का प्रयोग।

६. **ईक्षाम्बुभूवे**। ईक्ष्+आम्+भू+ए। कर्मवाच्य का प्रयोग।

७. **ईहांव्यतिबभूवे**। ईह्+आम्+व्यति+भू+ए। क्रियाव्यतिहार अर्थ में 'ईह चेष्टायाम्' (१।४४६) धातु से परोक्षाविभक्तिसंज्ञक प्रथमपुरुष–एकवचन 'ए' प्रत्यय, आम् प्रत्यय, व्यतिहारार्थक 'वि+अति' उपसर्गों के बाद 'भू' धातु का अनुप्रयोग, द्विर्वचनादि तथा वकारागम ॥४७३।

## ४७४. सिजद्यतन्याम् [३।२।२४]

### [सूत्रार्थ]

'अद्यतनी' (= पाणिनीय लुङ्) संज्ञक विभक्ति के पर में रहने पर धातु से सिच् प्रत्यय होता है ॥४७४।

### [दु० वृ०]

अद्यतन्यां परभूतायां धातोः सिच् परो भवति। अनैषीत्, अपाक्षीत्। व्यवस्थित-वाधिकारात्–स्पृशिमृशिकृषितृपिदृपिभ्यो वा। अस्पार्क्षीत्, अस्पृक्षत्। अमार्क्षीत्, अमृक्षत्। अकार्क्षीत्, अकृक्षत्। अतार्प्सीत्, अतृपत्। अदार्प्सीत्, अदृपत्। अद्राप्सीत्, अदर्पीत्। अत्राप्सीत्, अतर्पीत्। पक्षे शिडन्तात् सण्। पुषादित्वात् तृपिदृप्योरण् ॥४७४।

### [दु० टी०]

सिज्०। "**धातोर्यशब्द०**" (३।२।१४) इत्यतो धातोरिति नाधिक्रियते। नहि धातुमन्तरेणाद्यतनी सम्भवतीत्यर्थाद् धातोः सिच् पर इति संबन्धः। सिच इकार **उच्चारणार्थः**, चकारः "**सिचि परस्मै स्वरान्तानाम्**" (३।६।६) इति **विशेषणार्थः**। व्यस्थितवाधिकारादिति। '**स्पृश संस्पर्शे, मृश आमर्शने, कृष विलेखने**' (५।५४, ५८,

६) । एभ्यः शिडन्तत्वात् सणि प्राप्ते, **'तृप प्रीणने, दृप हर्षणमोचनयोः'** (३ । ३५, ३६) इति पुषादित्वादणि प्राप्ते इत्याह – पक्ष इत्यादि । स्पृशमृशकृषतृपदृपां वा अकारागमः इति । अस्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत् । अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् । अक्राक्षीत्, अकार्क्षीत्, अकृक्षत् । अत्राप्सीत्, अतार्प्सीत्, अतृपत् । अद्राप्सीत्, अदार्प्सीत्, अदृपद् इति रूपत्रयं भवति ॥४७४।

## [वि० प०]

सिच्० ।अनैषीत्, अपाक्षीदिति ।**'णीञ् प्रापणे, डु पचष् पाके'** (१ । ६००, ६०३) एकत्र **"सिचि परस्मै स्वरान्तानाम्"** (३ । ६ । ६) इति वृद्धिः, अन्यत्र **"अस्य च दीर्घः"** (३ । ६ । ८), **"चवर्गस्य किरसवर्णे"** (३ । ६ । ५५) इति कत्वम् । **"अड् धात्वादिर्ह्यस्तन्य-द्यतनी"** (३ । ८ । १६) इत्यादिनोभयत्राडागमः, **"सिच०"** (३ । ६ । ९) इतीट् । व्यवस्थितेत्यादि । सिचि **"व्यञ्जनान्तानामनिटाम्"** (३ । ६ । ७) इति वृद्धिः, **"छशोश्च"** (३ । ६ । ६०) इति षत्वम्, तथा **"षढोः कः से"** (३ । ८ । ४) इति ककारः, पक्षे शिडन्तात् सण् इति । **'छुप स्पृश संस्पर्शे, मृश आमर्शने, कृष विलेखने'** (५ । ५४, ५८, ६) इत्येतेभ्यः शिडन्तत्वाद् वक्ष्यमाणवचनेन सण् इत्यर्थः । तथा **'तृप प्रीणने, दृप हर्षणमोचनयोः'** (३ । ३५, ३६) इति अतार्प्सीत्, अदार्प्सीत् । अणि तु अतृपत्, अदृपदिति ।अकारागमविधौ "स्पृशादीनां वा" इति वक्ष्यति ।तेन अस्राक्षीत्, अद्राक्षीत्' इत्यादि रूपत्रयं सिद्धम् ॥४७४।

## [क० च०]

सिच्० । सिजित्यत्र **"चवर्गदृगादीनां च"** (२ । ३ । ४८) इति कथं न गत्वम् ? सत्यम् । दृगादीनां क्विबन्तेन साहचर्याच्चवर्गस्यापि क्विबन्तस्यैव ग्रहणमिति **श्रीपतिः** । **वस्तुतस्तु** अत एव ज्ञापकात् क्विबन्तस्यैव गत्वम् । तेन 'तच्छ्लक्ष्णः' इत्यादौ न गत्वम् । **वृत्तौ** धातोरिति यदुक्तं तत्तु धातोर्विहितत्वात् सिच आदीडागमार्थम् । ननु आमन्तात् सिजनुप्रयुज्यतेऽद्यतन्यां परतः इत्यर्थः कथन्न स्यात् ? नैवम् । अद्यतन्यामामन्तोऽसम्भवात् । अत एव ज्ञापकाद् आम् इति चेत्, न । अन्यथोपपत्तौ ज्ञापककल्पनानौचित्यात् । व्यवस्थित इत्यादि **वृत्तिः** । उषविदेत्यादिसूत्रात् **मण्डूकप्लुत्या** वाऽनुवर्तते, तेन **व्यवस्थितविभाषेति** ज्ञायते । तेन स्पृशादिभ्यः सणनिटः इत्यादिना विकल्पे सण् भवति, तृपिदृप्योश्च पुषादित्वाद् विकल्पे अण् भवति । अन्येभ्यस्तु नित्यम्, तृपिदृप्योर्वेत्युदाहरणमशुद्धं वर्णयन्ति **टीकापञ्ज्यो**रुक्तार्थत्वात् ॥४७४।

**[समीक्षा]**

अद्यतन भूत अर्थ में पाणिनि ने लुङ् लकार का तथा कातन्त्रकार ने अद्यतनी विभक्ति का प्रयोग किया है। इसके शब्दरूप हैं– 'अकार्षीत्, अनैषीत्, अपाक्षीत्' इत्यादि। इनके सिद्ध्यर्थ 'सिच्' प्रत्यय का विधान दोनों ही आचार्यों ने किया है। पाणिनि का सूत्र है– "च्लेः सिच्" (अ० ३।१।४४)। पाणिनि द्वारा प्रयुक्त लुङ् का प्रयोग विशुद्ध कृत्रिम = साङ्केतिक है, जबकि शर्ववर्मा ने 'अद्यतनी' इस अन्वर्थक संज्ञा का प्रयोग किया है।

**[विशेष वचन]**

१. सिच इकार उच्चारणार्थः, चकारः सिचि परस्मै स्वरान्तानाम् इति विशेषणार्थः (दु० टी०)।

२. दृगादीनां क्विबन्तेन साहचर्याच्चवर्गस्यापि क्विबन्तस्यैव ग्रहणमिति श्रीपतिः (क० च०)।

**[रूपसिद्धि]**

१. **अनैषीत्**। अट् + नी + सिच् + दि। 'णीञ् प्रापणे' (१।६००) धातु से अद्यतनी-विभक्तिसंज्ञक प्रथमपुरुष-एकवचन दि–प्रत्यय, "णो नः" (३।८।२५) से णकार को नकार, "अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु" (३।८।१६) से अड़ागम, प्रकृत सूत्र द्वारा सिच् प्रत्यय, इकार – चकार अनुबन्धों का प्रयोगाभाव, "इडागमोऽसार्वधातुके" (३।७।१) से इडागम प्राप्त, "इवर्णादश्विश्रिडीङ्शीङः" (३।७।१४) से उसका निषेध, "सिचि परस्मै स्वरान्तानाम्" (३।६।६) से धातु-घटित ईकार को वृद्धि–ऐ, "सिचः" (३।६।९०) से ईट्, "निमित्तात् प्रत्यय-विकारागम०" (३।८।२६) से स् को ष् तथा "वा विरामे" (२।३।६२) से द् को त्।

२. **अपाक्षीत्**। अट् + पच् + सिच् + ईट् + दि। 'डु पचष् पाके' (१।६०३) धातु से अद्यतनीविभक्तिसंज्ञक दि-प्रत्यय, अडागम, "अस्य च दीर्घः" (३।६।८) से पच् धातुस्थ अकार को दीर्घ, "चवर्गस्य किरसवर्णे" (३।६।५५) से च् को क्, स् को ष्, क् + ष् संयोग में क्ष् वर्ण तथा द् को त्।

३. **अस्प्राक्षीत्, अस्पृक्षत्**। अट् + स्पृश् + सिच् + ईट् + दि। स्पृश धातु से दि प्रत्यय, अडागम, "व्यञ्जनान्तानामनिटाम्" (३।६।७) से ऋ को वृद्धि-आर्, ईडागम, "छशोश्च" (३।६।६०) से श् को ष्, "षढोः कः से" (३।८।४) से ष् को क्,

स् को ष् तथा द् को त् । सिच् प्रत्यय के अभावपक्ष में "सणनिटः" (३।२।२५) से सण् होने पर 'अस्पृक्षत्' ।

४-७. **अमार्क्षीत्, अमृक्षत्** । अट् + मृश् + सिच् + ईट् + दि । पक्ष में सण् प्रत्यय । **अकार्क्षीत्, अकृक्षत्** । अट् + कृष् + सिच् + ईडागम + दि । पक्ष में सण् प्रत्यय । **अतार्प्सीत्, अतृपत्** । अट् + तृप् + सिच् + ईडागम् + दि । सिच् प्रत्यय के अभावपक्ष में सण् प्रत्यय । **अदार्प्सीत्, अदृपत्** । अट् + दृप् + सिच् + ईडागम + दि । पक्ष में सण् प्रत्यय ।।४७४।

## ४७५. सणनिटः शिडन्तान्नाम्युपधाददृशः [३।२।२५]

### [सूत्रार्थ]

नाम्युपध (जिसकी उपधा में नामिसंज्ञक वर्ण हो), अनिट् तथा शिडन्त धातु से उत्तरवर्ती सण् प्रत्यय होता है अद्यतनी-संज्ञक विभक्ति के परे रहते, दृश धातु को छोड़कर ।।४७५।

### [दु० वृ०]

शिडन्तान्नाम्युपधादनिटो धातोर्दृश्वर्जितात् सण् परो भवति, अद्यतन्यां परभूतायाम् । अलिक्षत्, अक्रुक्षत् । अनिट इति किम् ? अकोषीत् । कथम् अघुक्षत् ? गुहूरनिडेकपक्षे । शिडन्तादिति किम् ? अभुक्त । नाम्युपधादिति किम् ? अधाक्षीत् । अदृश इति किम् ? अद्राक्षीत् ।।४७५।

### [दु० टी०]

सण्० । सिचि प्राप्ते तदपवादः सण् विधीयते । न विद्यते इड् यस्मात् । शिट् अन्ते यस्येति, नामी उपधा यस्येति विग्रहः, **णकारोऽगुणार्थः** । **'लिह आस्वादने, क्रुश आह्वाने'** (२।६३; १।५६४) कथमिति चोद्यम्, उदनुबन्धत्वात् पाक्षिकेणेटा **'गुहू संवरणे'** (१।५९५) सेड् भवतीति भावः । परिहारमाह–गुहूरित्यादि । यस्मिंस्तु पक्षे इड् नास्ति तत्र बुद्धिमारोप्यानिड् उच्यते इति न दोषः । पञ्चमलोपविधौ प्रतिषिद्धेड्-ग्रहणाच्चान्यत्रानिड्ग्रहणे विकल्पेटोऽपि ग्रहणमस्तीति ज्ञापयन्**त्यन्ये** । अनिडिति द्वितीयान्तम् इत्**यपरे** । क्रियाविशेषणं चैतत् सण् अनिड्वचनं करोतीत्यर्थः । सिचमधि-कृत्य सिचोऽनिटः सण्णादेश इत्याहु**रपरे** । **अन्तग्रहणं सुखार्थमेव** । अन्तग्रहणे सत्युपधा-ग्रहणमपि तथैव । नामिनः परो यः शिट् स एवान्तो यस्येति 'अन्त्याभावेऽन्त्यसदेशस्य ग्रहणम्' इति भावः । व्यवस्थितवाधिकारात् **'श्लिषू आलिङ्गने'** (३।२९), अश्लिक्षत् कन्यां वटुः, कन्यां व्यत्याश्लिक्षत, अश्लिक्षन्त कन्या वटुना ।

आलिङ्गनमुपगूहनम् परिष्वञ्जनं परिरम्भणम्, तच्च बाहुमतामेव रूढम् । **अन्य** आह – श्लिषः सत्त्वाश्लेष इति सुखालिङ्गितो दुःखालिङ्गित इत्यव्युत्पत्त्या दृश्यते । पुषादित्वादण् प्राप्तः परस्मैपदे सण् भवति, आत्मनेपदे तु आलिङ्गन एवेति नियमः सिद्धः । अनालिङ्गने तु आश्लिषत् जतुकाष्ठं च, समश्लिष्ट गुरुकुलम्, समाश्लिष्ट प्लक्षो न्यग्रोधेन, व्यत्यश्लिष्ट उत्तमकाष्ठं चेति । इच् पुनर्भवत्येव – अश्लिषि कन्या वटुना । **अन्य** आह – **'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते'** (व्या० परि० ९), इज्व्यवहितो भवत्येव ॥४७५।

**[वि० प०]**

सण्० । **'लिह आस्वादने, क्रुश आह्वाने'** (२।६३; १।५६४), **"हो ढः"** (३।६।५६) इति, **"छशोश्च"** (३।६।६०) इति कृते पूर्ववत् कत्वम् । अकोषीदिति । **'कुष निष्कर्षे'** (८।४०), **"इटश्चेटि"** (३।६।५३) इति सिचो लोपः । **'गुहू संवरणे'** (१।५९५) । ऊदनुबन्धत्वात् **"स्वरतिसूति०"** (४।६।८३) इत्यादिना विकल्पितेनेटा सेट्कत्वात् कथं सण्णिति दर्शयन्नाह – कथमित्यादि । **"हो ढः"** (३।६।५६) इति दत्वे कृते **"तृतीयादेर्घढधभान्तस्य"** (३।६।१००) इत्यादिना चतुर्थत्वं घकारः । यस्मिन् पक्षे इड् नास्ति तस्मिन्नेव बुद्धिमारोप्यानिडित्युच्यमानेऽप्यदोष इत्याह – गुहूरनिडेकपक्ष इति । अभुक्तेति । अशने भुजीति रुचादित्वादात्मनेपदम् **"धुटश्च धुटि"** (३।६।५१) इति सिचो लोपः। अधाक्षीदिति। सृजीत्यादिनाऽकारः **"अस्य च दीर्घः"** (३।६।८) ॥४७५।

**[क० च०]**

सण्० । अलिक्षदिति । दहिदिहीत्यादिनाऽनिट्त्वम् । कथम् अघुक्षदिति **वृत्तिः** । उदनुबन्धकरणान्नित्यत्वाच्च परमपि गुणं बाधित्वा सण् । ननु दृशधातोर्वर्जनं किमर्थं सृजिदृशोरागमोऽकार इति ज्ञापकादेव तस्य सण् न भविष्यति । तथाहि अकारागमो गुणवृद्धिस्थाने भवति, अत्र यदि सण् स्यात् तदा कुतो गुणवृद्धिप्रसङ्गः इति ? सत्यम् । अकारागमस्य विषयो गुणप्रसङ्गे भविष्यति । यथा द्रष्टेति । अद्यतन्यां च सण् भविष्यत्येव चेत्, न । सृजेर्गुणवृद्धिस्थानसंभवात् तत्साहचर्याद् दृश्धातोरपि गुणवृद्धिस्थानं संभवति । यथा अद्राक्षीदिति । तच्च तदैव संभवति यदि दृशधातोः सण् न भवतीति चेत्तदा कष्टं स्यादिति **हेमकरः** । **अन्ये** तु णकारानुबन्धबलाद् गुणात् प्राक् सणुत्पत्त्या गुणनिबन्धनस्यापि अकारागमस्य बाधा स्याद् गुणप्रसङ्गे एव तद्विधानादित्याहुः ॥४७५।

**[समीक्षा]**

अद्यतन भूतकाल अर्थ में अद्यतनी संज्ञा कातन्त्रकार ने की है, उस अर्थ में पाणिनि ने लुङ् लकार का प्रयोग किया है। इसके 'अधुक्षत्, अलिक्षत्' आदि शब्दरूपों के सिद्ध्यर्थ सण् प्रत्यय का विधान कातन्त्रकार द्वारा तथा क्स प्रत्यय का विधान पाणिनि द्वारा विहित है। उनका सूत्र है– "शल इगुपधादनिटः क्सः" (अ० ३।१।४५)। अनुबन्ध तथा प्रत्याहार का उपादान अपने व्याकरण की प्रक्रिया के अनुसार किया गया है।

**[विशेष वचन]**

१. अन्तग्रहणं सुखार्थमेव। अन्तग्रहणे सत्युपधाग्रहणमपि तथैव। नामिनः परो यः शिट् स एवान्तो यस्येति अन्त्याभावेऽन्त्यसदेशस्य ग्रहणमिति भावः (दु० टी०)।

२. उदनुबन्धकरणान्नित्यत्वाच्च परमपि गुणं बाधित्वा सण् (दु० वृ०)।

**[रूपसिद्धि]**

१. **अलिक्षत्**। अट्+लिह+सण्+दि। 'लिह् आस्वादने' (२।६३) धातु से अद्यतन भूतकाल अर्थ में अद्यतनी विभक्ति-संज्ञक प्रथमपुरुष – एकवचन दि-प्रत्यय, "अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु" (३।८।१६) से धातु से पूर्व अडागम, प्रकृत सूत्र द्वारा सण् प्रत्यय, 'ण्' अनुबन्ध के कारण गुणाभाव ("न णकारानुबन्ध-चेक्रीयितयोः" ३।५।७), "हो ढः" (३।६।५६) से ह् को ढ्, "षढोः कः से" (३।८।४) से ढ् को क्, "निमित्तात् प्रत्ययविकारागमस्थः सः षत्वम्" (३।८।२६) से स् को मूर्धन्य ष् आदेश, 'क्+ष्' संयोग में क्ष् तथा द् को त्।

२. **अक्रुक्षत्**।अट्+क्रुश्+सण्+दि। 'क्रुश आह्वाने' (३।५६४) धातु से अद्यतनीविभक्तिसंज्ञक प्रथमपुरुष – एकवचन दि-प्रत्यय, अडागम, "छशोश्च" से श् को ष्, "षढोः कः से" (३।८।४) से ष् को क्, स् को ष् तथा अन्य प्रक्रिया पूर्ववत्॥४७५।

## ४७६. श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण् कर्तरि [३।२।२६]

**[सूत्रार्थ]**

श्रि, द्रु, स्रु, कम् तथा कारितान्त (इन् प्रत्ययान्त) धातु से कर्तृवाच्य में विहित अद्यतनी विभक्ति के पर में रहने पर चण् प्रत्यय होता है॥४७६।

**[दु० वृ०]**

श्रि-द्रु-स्रु-कमि-कारितान्तेभ्यश्चण् परो भवति कर्तर्यद्यतन्यां परतः।

अशिश्रियत्, अदुद्रुवत्, असुस्रुवत् अचकमत, अचीकरत्, अपीपचत्, अलीलवत्। कर्तरीति किम् ? समाश्रयिषातां राजानौ देवदत्तेन। श्विधेटोर्वा वक्तव्यः– अशिश्वियत्, अश्वयीत्, अदधत्, अधासीत् ॥४७६।

**[दु० टी०]**

श्रिद्रु०। सिचोऽपवादः। **'भज् श्रिञ् सेवायाम्, स्रु श्रु दु द्रु गतौ, कमु कान्तौ'** (१।६०४, २७८, २७९; ४।१७; १।४०५)। श्र्यादिग्रहणम् अकारितार्थम्। "इनन्तेभ्यः" इति सिद्धे कारितग्रहणं कारितसंज्ञकादेव यथा स्यात्, तेन दण्डी इवाचरतीति आयेर्लोपे अदण्डायीत्। चणश्चकारः **"चण् परोक्षा०"** (३।३।७) इत्यस्य विशेषणार्थः, तेनापि द्विर्वचनं न भवति। अगमदिति णकारोऽगुणार्थः। **"श्विधेटोर्वा"** वक्तव्य इति। **'टु ओ श्वि गतिवृद्ध्योः, धेट् पा पाने'** (१।६१६, २६४) श्वयतेरण् वक्ष्यति। श्वेरद् वक्तव्यः इति वचनात्-अश्वत्। धेटः सिचो लुग्वचनाद् 'अधासीत्' इति रूपत्रयम्। कर्तरीति किम् ? अधिषातां स्तनौ वत्सेन ॥४७६।

**[वि० प०]**

श्रिद्रु०। 'भज् श्रिञ् सेवायाम्, स्रु श्रु दु द्रु गतौ' (१।६०४, २७८, २७९; ४।१७) एषां चणि स्वरादावित्यादिना इयुवौ। 'अचीकरत्, अपीपचत्' इति करोतेः पचतेश्च हेतोरिन्, चणि द्विर्वचनम्, **"इन्यसमान०"** (३।५।४४) इत्यादिना ह्रस्वः, "अलोपे समानस्य" (३।३।३५) इत्यादिना सन्वद्भावादभ्यासस्येत्त्वम्, **"दीर्घो लघोः"** (३।३।३६) इति दीर्घः। 'श्विधेटोर्वा वक्तव्यः' इत्यधिकृतस्य वाशब्दस्य बहुलार्थत्वादित्यर्थः। अश्वयीदिति। श्विजाग्रोर्गुणः। अधासीदिति। **"यमिरमि०"** (३।७।२५) इत्यादिना इट्, धातोरन्तः सकारः। **"इटश्चेटि"** (३।६।५३) इति सिचो लोपः ॥४७६।

**[क० च०]**

श्रिद्रु०। 'इनन्तेभ्यः' इति सिद्धे कारितग्रहणात् 'अचूचुरत्, अचोरयीत्' इति सिद्धम्! अन्तग्रहणात् **"श्विधेटोर्वा"** इति **वररुचिः**। **पञ्जी**– द्विर्वचनमित्यादि। ननु कथमत्र व्यतिक्रमः, यावता ह्रस्वं कृत्वैव द्विर्वचनस्यैव वक्तुं युक्तत्वात्। तथा च 'अचीकरत्' इत्यादौ द्विर्वचनह्रस्वयोः प्राप्तयोः परत्वाद् ह्रस्व इति **काशिकादिः**। **"इन्यसमानलोपोपधायाः"** (३।५।४४) इत्यत्र **पञ्जीकृताप्येवमुक्तम्**। अन्यथा ह्रस्वाद् द्विर्वचनमेव प्राग् भविष्यति तदा मा भवान् 'अटिटत्' इति। अत्राटेरिनि उपधाया दीर्घत्वे टिभागस्य द्विर्वचने सति उपधात्वाभावाद् **"इन्यसमान०"** (३।५।४४)

इत्यादिना ह्रस्वो न स्यात्। तस्माद् ह्रस्वत्वं प्रागेवावश्यं वाच्यमिति। न च कृतेऽपि ह्रस्वे पुनरडागमे सति दीर्घो न भविष्यति किं ह्रस्वेनेति वाच्यम्। **"न मामास्मयोगे"** (३।८।२१) इत्यनेनैव अडागमस्याप्राप्ते। अत एवावर्णस्याकारोऽपि निवर्तते। अथ परत्वादपि नित्यस्य बलवत्त्वाद् द्विर्वचनेनैव भवितव्यं चेत्, न। ओणृधातोर्ऋदनुबन्धकरणं ज्ञापयति – नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यते इति **काशिकावृत्तिकारः**। तथाहि – अथ किमर्थम् ओणृधातोर्ऋदनुबन्धकरणं चेद् औणिणद् इत्यत्र **"न शास्वृदनुबन्धानाम्"** (३।५।४५) इत्यनेन ह्रस्वप्रतिषेधार्थम्, नैवम्। सत्यसति वा ह्रस्वत्वे नास्ति विशेषः, यावता **"स्वरादीनां वृद्धिरादेः"** (३।८।१७) इति वृद्ध्यादिकं भविष्यति। यद्येवं यत्र न मामास्मयोगः इति वृद्धिनिषेधस्तदर्थं भविष्यति। यथा मा भवान् ओणिणद् इति ओकारस्य मा भूद् ह्रस्व इति चेदयुक्तम्। इह ह्रस्वे कृतेऽपि **"स्वरादेर्द्वितीयस्य"** (३।३।२) इति द्विर्वचनेन भवितव्यम्, द्विर्वचने कृते ह्रस्वो नास्ति अनुपधत्वात्। अतो नित्यत्वाद् द्विर्वचने कृते ह्रस्वस्य कथं प्राप्तिरिति तस्मात् किं ह्रस्वनिषेधार्थम् ओणृधातो ऋदनुबन्धकरणेन ? ऋदनुबन्धकरणं ज्ञापयति – नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यते। तेन च मा भवान् अटिटद् इति सिद्धम्। तत् कथं **पञ्जीकृता** द्विर्वचनं प्रागुक्त्वा पश्चाद् **"इन्यसमान०"** (३।५।४४) इत्यादिना ह्रस्व उक्त इति। अत्र **हेमकरः** प्रयोगसमाधानलक्षणमात्रमुक्तं न ह्रस्व इत्याचष्टे। **वस्तुतस्तु** अचीकरदित्यादौ प्राग् द्विर्वचने ह्रस्वे वा विशेषो नास्तीति कृत्वा **पौर्वापर्यं** न चिन्तितमिति ॥४७६।

**[समीक्षा]**

'अशिश्रियत्, अचीकरत्, असुस्रुवत्, अचकमत्' इत्यादि शब्दरूपों के सिद्ध्यर्थ अ तथा द्वित्वविधान की आवश्यकता होती है। इसी की पूर्ति पाणिनि ने चङ् प्रत्यय तथा कातन्त्रकार ने चण् प्रत्यय द्वारा की है। पाणिनि का सूत्र है – "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" (अ० ३।१।४८)। चङ् प्रत्यय के पर में रहने पर "चङि" (अ० ६।१।११) से द्वित्व होता है। कातन्त्रकार चण् प्रत्यय करके "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) सूत्र द्वारा द्विर्वचन की पूर्ति करते हैं। अपने अपने व्याकरण की प्रक्रिया के अनुसार ङ्-ण् अनुबन्ध गुणनिषेधार्थ प्रयुक्त हैं। पाणिनि ने सूत्र में कम् धातु का पाठ नहीं किया है। अतः वार्त्तिककार को 'कमेरुपसंख्यानम्' वचन कहने की आवश्यकता हुई। कलापचन्द्रकार ने वररुचि – हेमकर - काशिकाकार आदि आचार्यों के विशेष अभिमत उद्धृत किए हैं।

**[विशेष वचन]**

१. श्र्यादिग्रहणमकारितार्थम् (दु० टी०)।

२. अन्तग्रहणात् श्विधेटोर्वेति वररुचिः (क० च०)।

३. अत्र हेमकरः–प्रयोगसाधनलक्षणमात्रमुक्तं न ह्रस्व इत्याचष्टे। वस्तुतस्तु अचीकरदित्यादौ प्राग् द्विर्वचने ह्रस्वे वा विशेषो नास्तीति कृत्वा पौर्वापर्यं न चिन्तितमिति (क० च०)।

**[रूपसिद्धि]**

१. **अशिश्रियत्**। अट् + श्रि + चण् + दि। 'भज् श्रिञ् सेवायाम्' (१।६०४) धातु से अद्यतनी-विभक्तिसंज्ञक प्रथमपुरुष–एकवचन प्रत्यय – दि, "अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु" (३।८।१६) द्वारा धातु से पूर्व अडागम, प्रकृत सूत्र द्वारा चण् प्रत्यय, "न णकारानुबन्धचेक्रीयितयोः" (३।५।७) से गुण का निषेध, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से श्रि को द्विर्वचन, पूर्ववर्ती श्रि की अभ्याससंज्ञा, "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) से रेफ का लोप, "स्वरादाविवर्णोवर्णान्तस्य०" (३।४।५५) से इकार को इय् तथा द् को त् आदेश।

२-३. **अदुद्रुवत्**। अट् + द्रु + चण् + दि। **असुस्रुवत्**। अट् + स्रु + चण् + दि। उकार को उव् आदेश तथा अन्य प्रक्रिया पूर्ववत्।

४. **अचकमत**। अट् + कम् + चण् + त। 'कमु कान्तौ' (१।४०५) धातु से अद्यतनीसंज्ञक आत्मनेपद प्रथमपुरुष–एकवचन 'त' प्रत्यय, प्रकृत सूत्र से चण्, अडागम, द्विर्वचनादि तथा "कवर्गस्य चवर्गः" (३।३।१३) से ककार को चकारादेश।

५. **अचीकरत्**। कुर्वन्तं प्रायुङ्क्त। अट् + कृ + इन् + चण् + दि। कृ धातु से दि प्रत्यय, "ऋवर्णस्याकारः" (३।३।१६) से ऋ को अ, "कवर्गस्य चवर्गः" (३।३।१३) से क् को च्, इन्यसमानलोपोपधाया ह्रस्वश्चणि" (३।५।४४) से ह्रस्व, "अलोपे समानस्य सन्वल्लघुनीनि चण्परे" (३।३।३५) से सन्वद्भाव, "उवर्णस्य जान्तःस्थापवर्गपरस्यावर्णे" (३।३।२७) से अ को इत्त्व, "दीर्घो लघोः" (३।३।३६) से दीर्घ तथा "कारितस्यानामिड् विकरणे" (३।६।४४) से कारितसंज्ञक इ (इन्) का लोप।

६. **अपीपचत्**। पचन्तं प्रायुङ्क्त। अट् + पच् + इन् + चण् + दि। इन्प्रत्ययान्त 'डु पचष् पाके' (१।६०३) धातु से अद्यतनीसंज्ञक दि-प्रत्यय, अडागम, चण्, द्विर्वचन, अभ्याससंज्ञादि, ह्रस्व, सन्वद्भाव, इत्त्व, दीर्घ तथा कारितलोप।

७. **अलीलवत्** । अट्+लू+इन्+चण्+दि । लुनन्तं प्रायुङ्क्त । 'लूञ् छेदने' (८।९) धातु से इन् प्रत्यय, "वृद्धिरादौ सणे" (२।६।४९) से वृद्धि, आव् आदेश (= लावि), दिप्रत्यय, अडागम, चण्, द्विर्वचन, अभ्याससंज्ञा, इन्यसमानलोपोपधायाः" (३।५।४४) से आ को ह्रस्व, सन्वद्भाव, इत्त्व, दीर्घ तथा कारितसंज्ञक इ का लोप ॥४७६।

## ४७७. अण् असु-वचि-ख्याति-लिपि-सिचि-ह्वः [३।२।२७]

### [सूत्रार्थ]

'अस्-वच्' आदि छह धातुओं से कर्ता अर्थ में अद्यतनीविभक्ति के पर में रहने पर 'अण्' प्रत्यय होता है ॥४७७।

### [दु० वृ०]

एभ्यो धातुभ्योऽण् परो भवति कर्तर्यद्यतन्यां परतः । अपास्थत, अवोचत्, अख्यत्, अलिपत्, असिचत्, अह्वत् । व्यवस्थितवाधिकाराल्लिप्यादीनामात्मनेपदे वा । अलिपत – अलिप्त ।असिचत – असिक्त ।अह्वत – अह्वास्त ।कर्तरीति किम् ? अलिप्सातां कुड्ये देवदत्तेन । असुरित्युकारो 'अस् भुवि – अस् दीप्तौ' आभ्यां मा भूदिति ॥४७७।

### [दु० टी०]

अण्० । असु क्षेपणे, वच भाषणे, ब्रुवो वचिः, ख्या प्रकथने 'चक्षिङ् ख्याञ्' सामान्येन ग्रहणम् । लिप उपदेहे, सिचिर् क्षरणे, ह्वेञ् स्पर्धायाम् । दिवादिषु पुषादयो रधादयो मुहादयश्च पठिताः । वृत्करणमेकराश्यपेक्षया रधादिसमाप्त्यर्थं मुहादि-समाप्त्यर्थे सति न वेडागमः । पुषादयश्च गृधु अभिकाङ्क्षायां यावत् तत आत्मनेपदिन इति । असुग्रहणमात्मनेपदार्थमेव परस्मैपदे तु पुषादित्वादण् सिद्ध इति भावः । कथ-मस्यात्मनेपदम्, भावकर्मणोरिति चेत्, अयुक्तम्, कर्तरीति विशेषणात् ? सत्यम् । **"उपसर्गादस्यत्यूहो वा"** (३।२।४२-२१) इति रुचादिरिति । सोपसर्गमुदाहरति – अपास्थत इति । लिपिसिचिह्वां **केचिदा**त्मनेपदं नेच्छन्ति । **तन्मते**नाप्याह – व्यवस्थितेत्यादि । प्रासिष्ट अभूत् । अस्तेर्भूभावेऽपि कृते तदादेशस्तद्वदिति प्राप्नोति । भुवः सिज्लुग् भवतेः स्यात् ख्यातेस्तु तिपा निर्देशः **स्वरूपार्थः** । **अन्य** आह – चेक्रीयितलुग्निवृत्त्यर्थः । अचाख्यासीत् । वचेरपि तिपं निर्दिशति अवावचीदिति इह नादरः । **छान्दस एव चेक्रीयितलुगन्त इति** ॥४७७।

**[वि० प०]**

अण्० । अस्यतेः पुषादित्वादणि सिद्धे इह पुनरुपादानम् आत्मनेपदार्थम् । आत्मनेपदं च **"उपसर्गादस्यत्यूहो वा"** (३।२।४२-२१) इति रुचादित्वात् । अतः सोपसर्गमुदाहरति – अपास्थतेति ।**"अस्यतेस्थोऽन्तः"** (३।६।९५) इति थकारागमः । अवोचदिति । **"अणि वचेरोदुपधायाः"** (३।६।९४) इत्यकारस्यौत्वम् । अख्यदिति । ख्या प्रकथने । **"आलोपोऽसार्वधातुके"** (३।४।२७) इत्याकारलेपः ।।४७७।

**[क० च०]**

अण्० । अत्र अणधातुरिति नाशङ्क्यते यावता एभ्यो धातुभ्यः किं विधातव्यम् इत्याशङ्कायां यदि पूर्वसूत्रात् सणोऽनुवृत्तिर्भविष्यति, ततश्चैकयोग एव कृतः स्यात् । **"अणि वचेरोदुपधायाः"** (३।६।९४) इत्यत्राणो निमित्तत्वासम्भवाच्च । सिचीति सिञ् चिञ् धातू नाशङ्क्येते चिसीत्यकरणात् । **'अवयवसिद्धेः समुदायसिद्धिर्बलीयसी'** (व्या० परि० १०८) इति न्यायाच्च । **'तिल स्नेहने, पिसृ अवयवे'** (५।७६, १४) इति नाशङ्क्येते, अनयोः परस्मैपदित्वात् लृदनुबन्धं विधाय परेणैव सूत्रेण सिद्धत्वात् । अथ **व्यतीहारे** आत्मनेपदमस्तीति कथं लृदनुबन्धे कृते सिध्यतीति चेत्, न । साहचर्येण ख्याधातोः स्वरूपवाचिप्रत्ययान्तनिश्चयात् । एवम् **'अत सातत्यगमने'** (१।३) इति नाशङ्क्यते । **वस्तुतस्तु आम्नायादेव** सर्वविप्रतिपत्तिनिरासः । सिचेरिदनुबन्धोऽनर्थको निष्फलत्वाद् इति **सारसमुच्चयः** । तद्बलाद् इदनुबन्धाद् वेति परस्मैपदे विकल्पसिद्धिरि**त्यन्ये** । सूत्रे सिचिग्रहणं तु लिपादौ ग्रहणार्थम्, तेनात्मनेपदे विकल्पः साधितः इति **स्थितं वास्तवमिति** ।।४७७।

**[समीक्षा]**

'अपास्थत – अवोचत् – असिचत्' आदि अद्यतनी (=लुङ् लकार) के प्रयोगों में दि प्रत्यय (=तिप्) से अकार की अपेक्षा होती है, जिसकी पूर्ति पाणिनि ने च्लि के स्थान में अङ् आदेश तथा कातन्त्रकार ने अण् प्रत्यय करके की है । पाणिनि के सूत्र हैं – "अस्यतिवक्तिख्यातिभ्योऽङ्, लिपिसिचिह्वश्च" (अ० ३।१।५२-५३) । पाणिनि का द्वितीय सूत्र परवर्ती सूत्र (अ० ३।१।५४) में अनुवृत्ति के लिए पठित है । यहाँ पाणिनीय च्लि प्रत्यय के संबन्ध में यह ज्ञातव्य है कि च्लि प्रत्यय के स्थान में या तो सिच् आदेश हो जाता है या चिण् या क्स या चङ् या फिर अङ् आदेश हो जाता है, च्लि कहीं पर भी यथावत् नहीं रह पाता । इस प्रकार च्लि प्रत्यय

का विधान अनावश्यक ही कहा जा सकता है। जबकि कातन्त्रकार ने ऐसा न करके स्वतन्त्र रूप में आवश्यकतानुसार अण् आदि प्रत्ययों का विधान किया है।

**[विशेष वचन]**

१. व्यवस्थितवाधिकाराल्लिपादीनामात्मनेपदे वा (दु० वृ०)।

२. वृत्करणमेकराश्यपेक्षया रधादिसमाप्त्यर्थं मुहादिसमाप्त्यर्थे सति न वेडागमः (दु० टी०)।

३. वस्तुतस्तु आम्नायादेव सर्वविप्रतिपत्तिनिरासः। सिचेरिदनुबन्धोऽनर्थको निष्फलत्वादिति सारसमुच्चयः। तद्बलाद् इदनुबन्धाद् वेति परस्मैपदे विकल्पसिद्धिरित्यन्ये (क० च०)।

**[रूपसिद्धि]**

१. **अपास्थत**। अप + अस् + अण् + त। 'अप' उपसर्गपूर्वक 'अस्' धातु से अद्यतनीविभक्तिसंज्ञक त-प्रत्यय, अडागम, प्रकृत सूत्र द्वारा अण् प्रत्यय, ण् अनुबन्ध का प्रयोगाभाव, "अवर्णस्याकारः" (३।८।१८) से अकार को आकार तथा "अस्यतेस्थोऽन्तः" (३।६।९५) से थ् का आगम।

२. **अवोचत**। अट + ब्रू – वच् + अण + दि। 'ब्रूञ् व्यक्तायां वाचि' (२।६६) धातु से अद्यतनीविभक्तिसंज्ञक दि-प्रत्यय, अडागम, "ब्रुवो वचिः" (३।४।८८) से वच् आदेश, प्रकृत सूत्र द्वारा अण् प्रत्यय, "अणि वचेरोदुपधायाः" (३।६।९४) से अकार को ओकार तथा दि के इकार का प्रयोगाभाव।

३. **अख्यत्**। अट् + ख्या + अण् + दि। "आलेपोऽसार्वधातुके" (३।४।२७) से धातुवर्ती अकार का लोप, अन्य प्रक्रिया पूर्ववत्।

४-५. **अलिपत्**। अट् + लिप् + अण् + दि। **असिचत्**। अट् + सिच् + अण् + दि। रूपसाधनप्रक्रिया पूर्ववत्।

६. **अह्वत्**। अट् + ह्वे – ह्वा + अण् + दि। "सन्ध्यक्षरान्तानाम् आकारोऽविकरणे" (३।४।२०) से एकार को आकार तथा उस आकार का "आलेपोऽसार्वधातुके" (३।४।२७) से लोप एवं अन्य प्रक्रिया पूर्ववत्।।४७७।

## ४७८. पुषादिद्युताद्य्लृकारानुबन्धार्तिसर्तिशास्तिभ्यश्च परस्मै [३।२।२८]

**[सूत्रार्थ]**

पुष् आदि, द्युत आदि, लृकारानुबन्ध वाली, ऋ, सृ तथा शास धातुओं से अद्यतनी-संज्ञक परस्मैपद प्रत्ययों के परे रहते कर्ता अर्थ में अण् प्रत्यय होता है।।४७८।

**[दु० वृ०]**

पुषादिद्युताद्यॢकारानुबन्धार्तिसर्तिशास्तिभ्योऽण् परो भवति कर्तर्यद्यतन्यां परस्मैपदे परतः। पुषादि - गृधु अभिकाङ्क्षायां यावत्। अपुषत्, अशुषत्। द्युतादि। अद्युतत्, अश्वितत्। ॡकारानुबन्धाः – अगमत्, अघसत्। ऋ सृ गतौ – आरत्, असरत्। शासु अनुशिष्टौ - अशिषत्। परस्मा इति किम् ? व्यद्योतिष्ट। द्युतादीनामात्मनेपदमप्यस्ति इति। इरनुबन्धाद् वा वक्तव्यम् – अरुधत्, अरौत्सीत्। जॄ - श्वि - स्तन्भु - म्रुचु - म्लुचु - ग्लुचां वा वक्तव्यम्। जॄ - अजरत् - अजारीत्। श्वि – अश्वत्, अश्वयीत्। स्तन्भुः। **सौत्रो**ऽयं धातुः – अस्तभत्, अस्तम्भीत्। अम्रुचत्, अम्रोचीत्। अम्लुचत्, अम्लोचीत्। अग्लुचत्, अग्लोचीत्। स्तेये गतावपि वर्तते ॥४७८।

**[दु० टी०]**

पुषादि०। सण्सिचोरपवादः। ननु च क्रैयादिकोऽपि पुषादिरस्ति। **'पुष पुष्टौ, मूष स्तेये, खव भूतिप्रादुर्भावे'** (१।२२८, २१८; ८।५०) ? सत्यम्, एषां ग्रहणे ॡकारानुबन्धत्वमेव विदध्याद् इति ? तर्हि भौवादिकस्य प्राप्नोति। **'पुष पुष्टौ, श्रिषु श्लिषु प्रुषु प्लुषु उष दाहे'** (१।२२८, २२९) इत्यादयो नानानुबन्धा दृश्यन्ते, ॡकारानुबन्धाः कर्तुं न शक्यन्ते। नैवम्, स्थापिबत्योः सिचो लुग्विधानात्। तस्मात् परिशिष्टोऽत्र दैवादिक इति भावः। विशिष्टेन द्युतादिना साहचर्यात् पुषादिसामान्यमपि नाशङ्क्यते, तेन अपोषीत्। यणा निर्दिश्य पुष्यादीति पठ**न्त्येके**। कृपूपर्यन्ता द्युतादयस्तदनन्तरं **वृत्करणाद्** विशिष्टानुबन्धत्वात् ॡदनुबन्धा न कृताः। प्रत्येकमादिशब्दः पुषश्च द्युतादिश्चेति **विप्रतिपत्ति**निरासार्थः। ॡकार इत्युक्तेऽनुबन्धो गम्यते, गम्ॡप्रभृतीनां ॡकारस्यानुबन्धत्वात्। किन्तु प्रतिपत्तिगौरवं स्यात्। **'ऋ सृ गतौ'** (२।७४) इति लुग्विकरणयोरेव ग्रहणं शास्तिना साहचर्यात्। **'सृ गतौ, ऋ प्रापणे'** (१।२७४, २७५) चेति भौवादिकयोर्न ग्रहणं भवति। आसार्षीत्, आर्षीत्।

**अन्ये** त्वाहुः – 'ऋ - सृ' इति जुहोत्यादिकावेव निर्दिष्टौ, द्विर्वचनं तु न स्यात् सूत्रत्वाद् इति। कथन्तर्हि **"अर्तिह्रीब्ली०"** (३।६।२२) इति अर्तेर्ऋच्छेः सर्तेर्वेति ? सत्यम्। अत्र धातुनिर्देशमात्रे तिप् प्रतिपत्तव्यः, विशेषस्याविवक्षायां विकरणो न स्यात्, अतो भौवादिकाभ्यामप्यणा भाव्यमि**त्येके**। तिप् - निर्देशश्चेक्रीयितलुग्निवृत्त्यर्थः इत्यप्ययुक्तम्, 'अरारीत् - असासारीत् – अशासीत्' इति **छान्दसत्वात्**। **येऽपि** चेक्रीयितलुगन्तं भाषायामिच्छन्ति **तेऽपि** 'आरारत् – असासरत् - अशासत्' इत्येव प्रतिपन्नाः। द्युतादय

आत्मनेपदिनः कथं परस्मैपदम् इत्याह– आत्मनेपदमप्यस्तीति। अद्यतन्यामाकृति-गणत्वात् परस्मैपदं भवति, आत्मनेपदमपि न्यायादस्तीत्यर्थः। अर्तेरपि समार्ष्ट। **"समो गमृच्छति०"** (अ० १।३।२९) इत्यादिना आत्मनेपदम्, सिच्, वृद्धिश्च।

**केचिद्** इहाणमिच्छन्ति– समारत। तेनार्तेरप्यात्मनेपदे विभाषा सिद्धा। 'इरनुबन्धाद् वा वक्तव्यम्' इति। वक्तव्यम् = व्याख्येयम्। **चकारोऽनुक्तसमुच्चयार्थः**। **'रुधिर् आवरणे'** (६।१)। आत्मनेपदे तु सिजेव–अरुद्ध। जॄश्वीत्यादि। **'जॄष् झॄष् वयोहानौ'** (३।१८)। अर्तिसर्त्योर्ऋवर्णस्योपलक्षणत्वाद् गुणः। **'टु ओ श्वि गतिवृद्ध्योः'** (१।६१६)। श्वयतेरत्वं सिचि, श्विजाग्रोर्गुणः, श्वयतेरण् चणा सिजिति रूपत्रयम्। स्तन्भुः **सौत्रो धातुः**। उकारः **"उदनुबन्धपूक्लिशां क्त्वि"** (४।६।८४) इति विशेषणार्थः। **"अनिदनुबन्धानाम्"** (३।६।१) इति नलोपः। **'म्रुचु म्लुचु गतौ, ग्रुचु ग्लुचु कुजु खुजु स्तेये, ग्लुन्चु षस्जृ गतौ'** (१।४९, ५०, ४९) इति **कश्चित्** पठति। स न पठितव्योऽ**नेकार्थत्वाद् धातूनाम्**। इत्याह– स्तेये गतावपि वर्तते इति। ग्लुन्चेस्तु अग्लुञ्चीदिति रूपत्रयं सिद्धम्। उभयोरुपादानसामर्थ्यादनुषङ्गलोपाभाव इति वर्ण्यते **केश्चित्**। **तदप्रमाणम्**। ग्लुचि (ग्रुचि) पाठोऽपि तथैव। न हि 'अग्लुचत्' इत्यादृतम्। जॄप्रभृतीनां कर्तर्यात्मनेपदेऽपि अण् वेति **कश्चिद्** आह– 'व्यत्यजीर्ष्ट, व्यत्यजरत' इति सन्दिग्धमेतत्॥४७८।

## [वि० प०]

पुषादि०। **'गृधु अभिकाङ्क्षायाम्'** (३।८०) यावदिति। ततो वृत्करणादित्यर्थः। एतेन दैवादिकपुषादेर्ग्रहणमिति दर्शितम्। तथाहि– **'पुष पुष्टौ, मूष स्तेये, खव भूतिप्रादुर्भावे'** (१।२२८; २१८; ८।५०) इति। यद्यस्य क्रैयादिकस्य पुषादेर्ग्रहण-मभिप्रेयात् तदा पुषादिग्रहणमपनीय स्वल्पत्वाद् लृकारानुबन्धानेवामून् विदध्यात्। किमिह व्याप्त्यर्थेन पुषादिग्रहणेनेति तर्हि भौवादिकस्य पुषादेः कथन्न ग्रहणम्। **'पुष पुष्टौ, श्रिषु श्लिषु प्रुषु प्लुषु उष दाहे'** (१।२२८, २२९) इत्यादयो बहवो नानानु-बन्धाश्च दृश्यन्ते। न तेषां लृकारानुबन्धत्वं शक्यते वक्तुम्, न च तथापि **लाघवमस्ति**, तत्कृतस्यैव गौरवस्य सम्भवात्? तदयुक्तम्। **"इणस्थादापिबति०"** (३।४।९३) इत्यादिना स्थापिबत्योः सिचो लुग्विधानाद् एतौ हि भौवादिके पुषादौ पठ्येते। यदि तस्येह ग्रहणं स्यात् तदा सिजपवादेनाभ्यामणा भवितव्यमिति असतः सिचो लुक् कथम् उपपद्येत। किञ्च यदि भौवादिकस्य पुषादेर्ग्रहणं स्यात् तदा द्युतादेरपि तत्रैव पठितत्वादलं द्युतादिग्रहणेन, पुषादित्वेनैव सिद्धत्वादिति, तस्मात् किं पुष्यति इति यणा निर्देशेन दैवादिकपरिग्रहणार्थेनेति भावः।

अघसदिति। **"अदेर्घस्लृ सनद्यतन्योः"** (३।४।७९) इति कृते पश्चाद् लृकारानुबन्धत्वादण्। **'ऋ सृ गतौ'** (२।७४) इति अर्ति, सर्तीति। यद्यपि धातुनिर्देशमात्रे इक्श्तिपौ, विशेषाविवक्षायां च विकरणो न भवति, तथाप्यनयोर्लुग्विकरणयोरेव ग्रहणं शास्तिना साहचर्यात् **"अर्तिसर्त्योररणि"** (३।६।११) इति गुणे कृते पश्चादर्तेरवर्णस्याकारः। **'सृ गतौ, ऋ प्रापणे'** (१।२७४, २७५) चेति भौवादिकयोः सिजेव – आर्षीत्, असार्षीत्। 'अशिषत्' इति। **"शासेरिदुपधाया अण्व्यञ्जनयोः"** (३।४।४८) इतीत्त्वे **"शासिवसिघसीनां च"** (३।८।२७) इति षत्वम्। ननु द्युतादीनामात्मनेपदित्वात् परस्मैपदमनुपपन्नम्? सत्यम्। अत एव परस्मैपदेऽण्विधानसामर्थ्याद् रुचादेराकृतिगणत्वाद् वा द्युतादिभ्योऽद्यतन्याः परस्मैपदमस्ति, आत्मनेपदिषु पाठादात्मनेपदमित्याह – द्युतादीनामित्यादि। इरनुबन्धाद् वेति वक्तव्यं व्याख्येयम्। इह चकारस्यानुक्तसमुच्चयार्थत्वादिति। **'रुधिर् आवरणे'** (६।१)। 'अरौत्सीत्' इति। **"व्यञ्जनान्तानामनिटाम्"** (३।६।७) इति वृद्धिः। जृश्वीत्यादि। **"अर्तिसर्त्योररणि"** (३।६।११) इत्यत्र ऋवर्णस्योपलक्षणत्वात् जीर्यतेरपि गुणः। अजारीदिति। **"सिचि परस्मै स्वरान्तानाम्"** (३।६।६) इति वृद्धिः। **"इटश्चेटि"** (३।६।५३) सिचो लोपः। अश्वदिति। श्वेरद् वक्तव्यम् इति वचनादिकारस्यात्वम्, असन्ध्यक्षरविधिः। 'अस्तभत्' इति। अनिदनुबन्धत्वादनुषङ्गलोपः। 'वञ्चु चञ्चु तञ्चु त्वञ्चु' इत्यादि **दण्डकधातु**पठितौ म्रुचु म्लुचु इति गत्यर्थौ। अग्लुचदिति। ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे इति स्तेयार्थः। अत्र ग्लुञ्चिमपि गत्यर्थं **केचित्** पठन्ति। अग्लुचदिति गतौ सिद्धम्। इह पुनः स्तेयार्थस्यैव ग्लुचेरुपादानाद् गतावयं प्रयोगो न स्यादित्याह – स्तेये गतावपि वर्तते इति। एतत् पुनरनेकार्थत्वाद् धातूनाम् इति। ग्लुञ्चेस्तु अग्लुञ्चीदिति सिचि भवितव्यमिति रूपत्रयम्॥४७८।

**[क० च०]**

पुषादि०। 'सकृदुच्चारितः शब्दः सकृदर्थं गमयति' (द्र०, व्या० पा० ६१) इति न्यायाद् गणत्रितयपुषादीनां न ग्रहणम्। अन्येषामपि ग्रहणं न कथं स्यादित्याह – तथाहीत्यादि। 'वृङ् संभक्तौ' (८।५१) इति तु न पठितं तस्यात्मनेपदित्वात् सिचो लुग्विधानात्। न च लोपविधानसामर्थ्याद् विकल्प इति वाच्यम्, अन्यथोपपत्तौ विकल्पस्यानौचित्यात्। अथ यदि दैवादिकस्य पुषादेर्ग्रहणं भविष्यति तदा पुष्यतीत्येव निर्दिशेद् इत्याह – किं चेति। अलं द्युतादिग्रहणेनेति। ननु कथमेतत्, यावता द्युतादेः

पाठोऽवश्यं परस्मैपदार्थं कर्तव्य इति। तस्माद् द्युतादेर्ग्रहणं न ज्ञापकमिति, तदा भौवादिकस्यापि पुषादेर्ग्रहणं स्यात् ? सत्यम्। यदि भौवादिकस्य पुषादेरेव ग्रहणं स्यात् तदा दिवादौ पुषादिसमाप्त्यर्थं यद् **वृत्करणं** तत् तत्र न कृत्वा भौवादिक एव पुषादौ वृत् पुषादयः इति पठेत्॥४७८।

**[समीक्षा]**

सामान्य भूत अर्थ में 'अपुषत्, अद्युतत्, अगमत्' आदि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने अण् प्रत्यय का तथा पाणिनि ने च्लि के स्थान में अङ् आदेश का विधान किया है। पाणिनि का सूत्र है– "पुषादिद्युताद्य्लृदितः परस्मैपदेषु" (अ० ३।१।५५)। पाणिनि के च्लिप्रत्यय तथा च्लि के स्थान में अङ् आदेश के विधान में कातन्त्रकारीय अण्–प्रत्यय की अपेक्षा अवश्य ही गौरव सन्निहित है। पाणिनि का च्लिविधान तो किसी भी प्रकार औचित्यपूर्ण नहीं कहा जा सकता।

**[विशेष वचन]**

१. स्तन्भुः, सौत्रोऽयं धातुः (दु० वृ०, दु० टी०)।

२. 'आरारीत्, असासारीत, अशासीत्' इति छान्दसत्वात्। येऽपि चेक्रीयितलुगन्तं भाषायामिच्छन्ति, तेऽप्यरारत्–असासरत्–अशासत् इत्येव प्रतिपन्नाः (दु० टी०)।

३. अत एव परस्मैपदेऽण्विधानसामर्थ्याद् रुचादेराकृतिगणत्वाद् वा द्युतादिभ्योऽद्यतन्याः परस्मैपदमस्ति (वि० प०)।

४. दण्डकधातुपठितौ म्रुचु-म्लुचु इति गत्यर्थौ (वि० प०)।

५. एतत् पुनः 'अनेकार्थत्वाद् धातूनाम्' इति (वि० प०)।

६. 'सकृदुच्चारितः शब्दः सकृदर्थं गमयति' इति न्यायात् (क० च०)।

७. उमापतिर कारिका यथा –

अद्यतन्यां द्युतादीनां वृतादेः स्यसनोस्तथा।
यजादेरादिशब्देन श्वस्तन्यामुभयं कृपेः॥ (वङ्गभाष्य)।

**[रूपसिद्धि]**

१. **अपुषत्**।अट्+पुष+अण्+दि।'पुष पुष्टौ' (१।२२८) धातु से अद्यतनी (= लुङ् लकार) संज्ञक प्रथम पुरुष–एकवचन दि प्रत्यय, "अड् धात्वादिर्ह्यस्त-न्यद्यतनीक्रियातिपत्तिषु" (३।८।१६) से धातुपूर्व अडागम, प्रकृत सूत्र से अण् प्रत्यय, ण् अनुबन्ध का प्रयोगाभाव, "न णकारानुबन्ध०" (३।५।७) से गुणाभाव, तथा दि-प्रत्ययगत इकार का लोप।

२. **अशुषत्** । अट् + शुष + अण् + दि । "शुष्लृ शोषणे" (३ । २७) धातु से अद्यतनी (= लुङ् लकार) संज्ञक प्रथम पुरुष – एकवचन दि – प्रत्यय, अन्य प्रक्रिया पूर्ववत् ।

३. **अद्युतत्** । अट् + द्युत + अण् + दि । 'द्युत दीप्तौ' (१ । ४७३) धातु से अद्यतनीसंज्ञक दि - प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ।

४. **अश्वितत्** । अट् + श्विता + अण् + दि । 'श्विता वर्णे' (१ । ४७४) धातु से अद्यतनीसंज्ञक दि - प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ।

५. **अगमत्** । अट् + गम्लृ + अण् + दि । 'गम्लृ गतौ' (१ । २७९) धातु से अद्यतनीसंज्ञक दि – प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ।

६. **अघसत्** । अट् + अद + दि । 'अद भक्षणे' (२ । १) धातु से अद्यतनीसंज्ञक दि – प्रत्यय, अडागम, "अदेर्घस्लृ सनद्यतन्योः" (३ । ४ । ७९) से अद् को घस्लृ आदेश तथा अन्य प्रक्रिया पूर्ववत् ।

७. **आरत्** । ऋ + अण् + दि । 'ऋ गतौ' (२ । ७४) धातु से अद्यतनीसंज्ञक दि – प्रत्यय, प्रकृत सूत्र से अण् प्रत्यय, "अर्तिसर्त्योरणि" (३ । ६ । ११) से ऋ को गुण, "अवर्णस्याकारः" (३ । ८ । १८) से अकार को आकार ।

८. **असरत्** । अट् + सृ + अण् + दि । 'सृ गतौ' (२ । ७४) धातु से अद्यतनीसंज्ञक प्रथमपुरुष – एकवचन दि – प्रत्यय, अडागम, प्रकृत सूत्र से अण् प्रत्यय, "अर्तिसर्त्योरणि" (३ । ६ । ११) से ऋ को गुणादेश तथा दि – गत इकार का लोप ।

९. **अशिषत्** । अट् + शास + अण् + दि । 'शासु अनुशिष्टौ' (२ । ३९) धातु से अद्यतनीसंज्ञक दि – प्रत्यय, अडागम, प्रकृत सूत्र से अण् प्रत्यय, "शासेरिदुपधाया अण्व्यञ्जनयोः" (३ । ४ । ४८) से आकार को इकार तथा "शासिवसिघसीनां च" (३ । ८ । २७) से सकार को षकार ।। ४७८ ।

## ४७९. इजात्मने पदेः प्रथमैकवचने [३ । २ । २९]

**[सूत्रार्थ]**

पद धातु से पर में इच् प्रत्यय होता है कर्ता अर्थ में अद्यतनी संज्ञा के आत्मनेपद – प्रथमपुरुष – एकवचन में ।। ४७९ ।

**[दु० वृ०]**

पदेर्धातोरिच् परो भवति, कर्तर्यद्यतन्यामात्मनेपदे प्रथमैकवचने परतः । उदपादि, समपादि । "इच् ते पदेः" इति सिद्धे **गुरुकरणं योगविभागार्थम्**, तेन

**"दीपजनबुधपूरितायिप्यायिभ्यो वा"** (द्र०, अ० ३।१।६१) अदीपि, अदीपिष्ट।अजनि, अजनिष्ट। अबोधि, अबुद्ध। अपूरि, अपूरिष्ट। अतायि, अतायिष्ट। अप्यायि, अप्यायिष्ट ॥४७९।

**[दु० टी०]**

इजा०। इच् ते पदेरिति। ननु तशब्दोऽयमस्ति आत्मनेपदैकवचनम्, परस्मैपदबहुवचनं च। कस्येदं ग्रहणम्, **'पद गतौ'** (३।१०७) आत्मनेपदी इति भावः ? 'आत्मने प्रथमैकवचने' इति **बालावबोधार्थं वा, योगविभागस्तु बुद्धिकल्पनया**।तेनेत्यादि। **'दीपी दीप्तौ'** (३।९५)। तदपवादत्वात् पक्षे सिच्। **'जनी प्रादुर्भावे'** (१।५३१; ३।९४)। **"जनिवध्योश्च"** (३।४।६७) इति ह्रस्वः। **'बुध अवगमने'** (१।५६६)। **"राधि-रुधि०"** (३।७।२२) इत्यादिना अनिट्। **'बुधिर् बोधने'** (१।५८२)। पक्षे सिच्।भौवादिकत्वादिट् – अबोधिष्ट। **'पूरी आप्यायने, तायृ सन्तानपालनयोः, स्फायी ओ प्यायी वृद्धौ'** (१।४१४, ४१३)।तथा **सृजः श्रद्धोपनयनक्रियायाम्**-असर्जि मालां धार्मिकः इति ॥४७९।

**[वि० प०]**

इजा०। आत्मने इति लुप्तपदशब्दोऽयं निर्देशः सूत्रत्वात्। तथा चोक्तम् –

**आदिलोपोऽन्तलोपश्च मध्यलोपस्तथैव च।**
**विभक्तिपदवर्णानां दृश्यते शार्ववर्मिके॥** इति।

उत्सम् - पूर्वात् पदेरिच्, अडागमः, **"अस्योपध०"** (३।६।५) इत्यादिना उपधादीर्घः, **"इचस्तलोपः"** (३।४।३२) इति तकारलोपः। **"इच् ते पदेः"** इत्यादि। यद्यपि परस्मैपदमध्यमपुरुषबहुवचनमपि तशब्दो वर्तते, तथापि **'पद गतौ'** (३।१०७) इत्यस्यात्मनेपदित्वादात्मनेपदैकवचनमेव लभ्यते इति भावः। अदीपीत्यादि। पूर्ववदिचस्तलोपः, पक्षे सिच्, षाट्टवर्गत्वम्।अजनीति। **"जनिवध्योश्च"** (३।४।६७) इति उपधाह्रस्वः। अबुद्धेति। **'बुध अवगमने'** (१।५६६)। **"राधिरुधि०"** (३।७।२२) इत्यादिना अनिट्। **"धुटश्च धुटि"** (३।६।५१) इति सिचो लोपः। **"घढधभेभ्यस्तथोर्धोऽधः"** (३।८।३) इति तकारस्य धकारः। **"धुटां तृतीयश्चतुर्थेषु"** (३।८।८) इति धातुधकारस्य दकारः।**'बुधिर् बोधने'** (१।५८२) इत्यस्य भौवादिकस्य सेट्कत्वात् पक्षे 'अबोधिष्ट' इति रूपत्रयम् ॥४७९।

**[क० च०]**

इजा० । व्यतिक्रमनिर्देशादपि योगविभागः सिध्यति । गुरुकरणमेव **सुखार्थम्** ॥४७९।

**[समीक्षा]**

'उदपादि, समपादि' शब्दरूपों के सिद्ध्यर्थ पाणिनि ने च्लि के स्थान में चिण् आदेश तथा कातन्त्रकार ने इच् प्रत्यय किया है । पाणिनि का सूत्र है– "चिण् ते पदः" (अ० ३।१।६०) । पाणिनि द्वारा लुङ् लकार में च्लि प्रत्यय का विधान गौरवाधायक है । कातन्त्रवृत्तिकार के अनुसार "इच् ते पदेः" सूत्रपाठ से ही अभीष्टसिद्धि होने पर भी "इजात्मने पदेः प्रथमैकवचने" इस प्रकार के गौरवपूर्ण सूत्रपाठ का प्रयोजन है– योगविभाग । इसके फलस्वरूप 'दीप-जन-बुध-पूरि-तायि-प्यायी' धातुओं से इच् प्रत्यय विकल्प से प्रवृत्त होगा । अतः 'अदीपि-अदीपिष्ट' आदि दो-दो रूप बनेंगे ।

**[विशेष वचन]**

१. 'इच् ते पदेः' इति सिद्धे गुरुकरणं योगविभागार्थम् (दु० वृ०) ।

२. 'आत्मने प्रथमैकवचने' इति बालावबोधार्थं वा, योगविभागस्तु बुद्धि-कल्पनया (दु० टी०) ।

३. तथा चोक्तम्,

आदिलोपोऽन्तलोपश्च मध्यलोपस्तथैव च ।
विभक्तिपदवर्णानां दृश्यते शार्ववर्मिके ॥इति (वि० प०) ।

४. व्यतिक्रमनिर्देशादपि योगविभागः सिध्यति, गुरुकरणमेव सुखार्थम् (क० च०) ।

**[रूपसिद्धि]**

१. **उदपादि** । उद्+अट्+पद+इच्+त । 'पद गतौ' (३।१०७) धातु से अद्यतनी-आत्मनेपदसंज्ञक प्रथमपुरुष–एकवचन 'त' प्रत्यय, "अड् धात्वादिर्ह्यस्तन्यद्यतनी-क्रियातिपत्तिषु" (३।८।१६) से धातुपूर्व अडागम, प्रकृत सूत्र से इच् प्रत्यय, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधादीर्घ तथा "इचस्तलोपः" (३।४।३२) से तकार का लोप ।

२. **समपादि**। सम्+अट्+पद+इच्+त। अडागम आदि प्रक्रिया पूर्ववत् ॥४७९।

## ४८०. भावकर्मणोश्च [३।२।३०]

### [सूत्रार्थ]

सभी धातुओं से भाव-कर्म अर्थ की विवक्षा में अद्यतनी – आत्मनेपदसंज्ञक प्रथमपुरुष-एकवचन प्रत्यय के परे रहते इच् प्रत्यय होता है ॥४८०।

### [दु० वृ०]

सर्वस्माद् धातोरिच् परो भवति भावकर्मणोर्विहितेऽद्यतन्याम् आत्मनेपदे प्रथमैकवचने परतः। अस्थायि भवता, अकारि कटो भवता। व्यवस्थितवाधिकारान्नानोस्तपः – अन्वतप्त ॥४८०।

### [दु० टी०]

भाव०। ननु कर्तरि सिद्धत्वात् पदिरिह वर्तते तत् कथमिह सर्वस्माद् इति ? सत्यम्। **योगविभागादन्यथैकयोगेऽपि** चकारेण कर्तरीत्यनुकृष्यते। नानोस्तप इति। **'तप धूप सन्तापे'** (१।१३३) पूर्वं यत् पापं कर्म तेन पश्चात् तप्तः पीडित इत्यर्थः। यदात्मनेपदं भावे तदा पूर्वकृतेन पापेन पश्चात् तप्तमित्यर्थः। कथम् अन्ववातप्तम्। अवशब्दव्यवधाने प्रतिषेधः स्यात्। अनोरिति नेयं पञ्चमी, किन्तर्हि विशेषणविशेष्यभावसम्बन्धे षष्ठी ॥४८०।

### [वि० प०]

भावकर्मणोः। सर्वस्मादिति। अथानन्तरत्वात् पदिरिह कथं नानुवर्तते पूर्वेणैव सिद्धत्वादिति चेद् अयुक्तम्, कर्तरि पूर्वेणैव सिद्धम्, इह भावकर्मार्थमनुवर्तताम् ? सत्यम्। पृथग्योगात्। अन्यथा एकयोगेऽपि चकारेण कर्तरि इत्यनुकृष्यते, तत् किं भिन्नयोगेनेति। अस्थायीति। **"आयिरिच्यादन्तानाम्"** (३।६।२०) इत्यायिरादेशः। कृञश्च **"अस्योपधाया"** (३।६।५) इत्यादिना वृद्धिः। व्यवस्थितेत्यादि। अनोरिति विशेषणसम्बन्धे षष्ठीयम्, न पञ्चमी। तेन 'अन्ववातप्त' इत्यवशब्देन व्यवधानेऽपि प्रतिषेधो भवति। इच्प्रतिषेधे सिच्, **"धुटश्च धुटि"** (३।६।५१) इति सिचो लोपः ॥४८०।

### [क० च०]

भाव०। आत्मनेपदेनैव भावकर्मणोरर्थयोरुक्तत्वादत्र इच् न भवति। अत उक्तं **वृत्तौ** – 'भावकर्मणोर्विहिते' इति। ननु चकारात् कर्तरीत्यनुवर्तताम्, ततश्च सर्वस्मादेव

धातोर्भावकर्मणोश्च कर्तरि च इच् स्यात्, तर्हि एकयोगेनाप्ययमर्थः सिध्यति किं भिन्नयोगेन ? चेद् भिन्नयोगे पदेर्धातोः कर्तर्येव यथा स्यात्, न तु भावकर्मणोरिति व्याख्यातव्यम्। नैवम्, यद्येवमपीष्टं स्यात्, तदा व्यवस्थितवाशब्दबलादेव तत्-सिद्धेश्चकारेण किं प्रयोजनमिति **साम्प्रदायिकाः। वस्तुतस्तु** चकारकरणं कर्तर्यनुवर्त-नार्थमेव ततश्चकारस्य व्यवस्थितवाशब्देन सम्बन्धादुत्तरत्र प्रयोगानुसारेण कर्तरीति सम्बन्ध एव प्रयोजनम्। तेन कर्तरि 'तप्यते तपस्तापसः' इति सिद्धम्, तेन भिन्नयोगे **चकार उक्तसमुच्चयमात्र इति हेमकरमतमपास्तमिति** ॥४८०।

**[समीक्षा]**

'अस्थायि भवता, अकारि कटो भवता' आदि प्रयोगों के सिद्ध्यर्थ पाणिनि ने चिण् आदेश तथा कातन्त्रकार ने इच् प्रत्यय भाव तथा कर्म अर्थ की विवक्षा में किया है। पाणिनि का सूत्र है – "चिण् भावकर्मणोः" (अ० ३।१।६६)। वृत्तिकार दुर्गसिंह ने कहा है कि यहाँ व्यवस्थित – वा का अधिकार होने के कारण अनु-पूर्वक 'तप' धातु से इच् प्रत्यय नहीं होता है, अतः 'अन्वतप्त' रूप बनेगा।

**[विशेष वचन]**

१. व्यवस्थितवाधिकारान्नानोस्तपः – अन्वतप्त (दु० वृ०)

२. ननु कर्तरि सिद्धत्वात् पदिरिह वर्तते तत् कथमिह सर्वस्मादिति ? सत्यम्, योगविभागात्। अन्यथैकयोगेऽपि चकारेण कर्तरीत्यनुकृष्यते (दु० टी०)।

३. अनोरिति नेयं पञ्चमी किन्तर्हि विशेषणविशेष्यभावसम्बन्धे षष्ठी (दु० टी०)।

४. वस्तुतस्तु चकारकरणं कर्तर्यनुवर्तनार्थमेव। – – – – तेन भिन्नयोगे चकार उक्तसमुच्चयमात्र इति हेमकरमतमपास्तमिति (क० च०)।

**[रूपसिद्धि]**

१. **अस्थायि भवता**। अट् + स्था + इच् + त्। भाववाच्य में 'ष्ठा गतिनिवृत्तौ' (१।२६७) धातु से अद्यतनी - आत्मनेपदसंज्ञक प्रथमपुरुष - एकवचन त - प्रत्यय, अडागम, प्रकृत सूत्र से इच् प्रत्यय, "आयिरिच्यादन्तानाम्" (३।६।२०) से आ को आय् आदेश तथा "इचस्तलोपः" (३।४।३२) से त प्रत्यय का लोप।

२. **अकारि कटो भवता**। अट् + कृ + इच् + त। कर्मवाच्य में 'डु कृञ् करणे' (७।७) धातु से अद्यतनी आत्मनेपदसंज्ञक त - प्रत्यय, अडागम, प्रकृत सूत्र द्वारा

इच् प्रत्यय, "अस्योपधायाः" (३।६।५) इत्यादि से ऋकार को वृद्धि तथा तप्रत्यय का लोप ॥४८०।

## ४८१. सार्वधातुके यण् [३।२।३१]

**[सूत्रार्थ]**

भाववाच्य तथा कर्मवाच्य में सार्वधातुकसंज्ञक प्रत्यय के परे रहते सभी धातुओं से यण् प्रत्यय होता है ॥४८१।

**[दु० वृ०]**

सर्वस्माद् धातोर्यण् परो भवति भावकर्मणोर्विहिते सार्वधातुके परे। आस्यते भवता, शय्यते भवता, ग्रामो गम्यते भवता। कृञः श च – क्रिया। चकारात् तपेस्तपःकर्मकात् कर्तरि भवति। तप्यते तपस्तापसः। तपोऽर्जयतीत्यर्थः। अत्रार्थे रुचादिः, अनोस्तु न स्यात्। अनुतपते तपस्तापसः ॥४८१।

**[दु० टी०]**

सार्व०। भावकर्मणोर्विहिते सार्वधातुके इति। भावकर्मणोरभिधेययोः साध्ये यणि विज्ञायमाने सार्वधातुकमविशेषितमिति कर्तरि स्यात्। उभयोश्च प्राधान्येनाभिधीयमानयोः परस्परानपेक्षत्वाद् असम्बन्धः। न चैवम्भूतयोरप्य**भिधानमस्ति**। नहि शय्यते इत्यस्माद् भावः कर्ता च प्रतीयते, नापि गम्यते इति कर्म च कर्ता च। किञ्च 'साहयः, सातयः' इति साहिसातीत्यादिना कर्तरि विशेष इत्युक्तार्थत्वादण् न स्यात्। कारितलोपे 'साहयः' इति न स्यात्। तस्मात् सार्वधातुकस्य भावकर्मप्रतिपादनायां सहायीभावेन तु यणो विधानम्, एवं विकरणानामपि स्थितम्। कथं क्वचिदुभयप्रयोगेऽर्थसंप्रत्ययः – 'पचति, पठति, पठ्यते, आस्यते' इति क्वचिद् विकरणमात्रं पच पठ इति। क्वचित् सार्वधातुकमात्रम् – अर्ति, जुहोति। क्वचिद् उभयोरप्यभावे – अमार्ट, अधोग् इति ? सत्यम्। स्मृतिविषयत्वादनुसन्धिप्रत्ययात् **लोके** कर्त्राद्यर्थविशिष्टोऽनेकरूपः **पदार्थः पदेनैव गम्यते नावयवेन। अवयवास्तु** शास्त्रकल्पितविभागाः समुदायार्थबुद्धिभावनायां हेतवो भवन्तीति।

यद्येवं भावकर्माधिकारेण किम्, कर्तरि सार्वधातुके अनादिभिर्बाधितत्वात् परिशिष्टे अवतिष्ठेते ? सत्यम्, अतिदेशे प्रयोजनं वक्ष्याम। चकारादित्यादि। तपःशब्दो व्रते स्नानमौनादिलक्षणे ज्ञानविशेषे च स्वर्गादिप्राप्तिहेतौ वर्तते। तपिश्चानेकार्थत्वादर्जने, यदाऽसौ तपोऽर्जयतीति, तदा तपिस्तपःकर्मको भवति, तापसश्च तदुपार्जनकर्तेति भावः। तपःकर्मकादिति किम् ? उत्तपति स्वर्णं स्वर्णकारः ॥४८१।

[वि० प०]

सार्व० । शय्यते इति । "**अयीर्ये**" (३।६।१९) इति शीङः ईकारोऽयम् । क्रियेति । "**सार्वधातुकवच्छे**" (४।१।५) इति शप्रत्ययस्य सार्वधातुकवद्भावाद् यण् "**यणाशिषोर्ये**" (३।४।७४) इति इकारागमः । "**स्त्रियामादा**" (२।४।४९) रुचादिरत्रार्थे इति व्युद्भ्यां तप इति तप इत्यनुवर्तमाने तपःकर्मक इति रुचादित्वादात्मनेपदम् इत्यर्थः ॥४८१।

[समीक्षा]

'आस्यते भवता, शय्यते भवता' आदि भाववाच्य के तथा 'ग्रामो गम्यते भवता' आदि कर्मवाच्य के शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने यण् तथा पाणिनि ने यक् प्रत्यय का विधान किया है। पाणिनि का सूत्र है– "सार्वधातुके यक्" (अ० ३।१।६७)। गुण–वृद्धि के प्रतिषेधार्थ क् तथा ण् अनुबन्ध की योजना अपने-अपने व्याकरणों के नियमानुसार की गई है।

[रूपसिद्धि]

१. **आस्यते भवता**। आस्+यण्+ते। 'आस उपवेशने' (२।४५) धातु से भाववाच्य में आत्मनेपदसंज्ञक प्रथमपुरुष–एकवचन तप्रत्यय, प्रकृत सूत्र द्वारा यण् प्रत्यय तथा ण् अनुबन्ध का प्रयोगाभाव।

२. **शय्यते भवता**। शी+यण्+ते। 'शीङ् शये' (२।५५) धातु से भाववाच्य में आत्मनेपदसंज्ञक प्रथमपुरुष-एकवचन ते-प्रत्यय, प्रकृत सूत्र द्वारा यण् प्रत्यय, "न णकारानुबन्धचेक्रीयितयोः" (३।५।७) से गुणाभाव तथा "अयीर्ये" (३।६।१९) से ईकार को अयादेश।

३. **ग्रामो गम्यते भवता**। गम्+यण्+ते। 'गम्लृ गतौ' (१।२७९) धातु से कर्मवाच्य में आत्मनेपदसंज्ञक प्रथमपुरुष-एकवचन ते-प्रत्यय तथा प्रकृत सूत्र द्वारा यण् प्रत्यय ॥४८१।

## ४८२. अन् विकरणः कर्तरि [३।२।३२]

[सूत्रार्थ]

कर्ता अर्थ में विहित सार्वधातुकसंज्ञक प्रत्यय के पर में रहने पर धातु से परवर्ती **अन् प्रत्यय होता है** तथा उसकी विकरणसंज्ञा भी होती है ॥४८२।

[दु० वृ०]

धातोरन् परो भवति कर्तरि विहिते सार्वधातुके परे, स च विकरणसंज्ञकः।

भवति, भवन्। विकरणप्रदेशाः– **"अनि च विकरणे"** (३।५।३) इत्येवमादयः ॥४८२।

**[दु० टी०]**

अन्। नकारः **"यस्याननि"** (३।६।४८) इति विशेषणार्थः। विकरणेत्यादि। 'शन्, श्यन्, श्नु, श्न, शु, श्ना, शान' विकरणाः शानुबन्धाः न कृताः। अनि च विकरणे शानुबन्धे शनीति न विदध्यात्, **विकरणस्य पूर्वाचार्यप्रसिद्धत्वात्** ॥४८२।

**[वि० प०]**

अन्०। भवन्निति वर्तमानेत्यादिना शन्तृङ् पूर्ववत् सार्वधातुकवद्भावादन् विकरणः इति ॥४८२।

**[क० च०]**

अन्०। **पाणिनिमते** विकरणानां शानुबन्धकरणात् सार्वधातुकत्वम्। तेन अजतीत्यादौ **"अजेर्वीः"** (३।४।९१) इति वीभावो न भवति। माङो मायते इति ईत्त्वं न स्यात्। 'गृह्णाति, वृणोति' इत्यादौ न चेडागमः इति **मैत्रेयादयः**। तदिह न वक्तव्यम्, तत्र व्यावृत्तिबलादेकवर्णव्यवधानेऽप्यजेर्वीभावप्रतिषेधात्। --- साहचर्याद् माङो यण्चेक्रीयितयोरेवेत्वविधानाद् ईत्वाभावार्थं (क्रियमाणम्) वक्ष्यमाणत्वाच्चेति **कुलचन्द्रः**। **अन्ये** तु सर्वत्रासार्वधातुकस्य विशेषणस्यावश्यं विषयतया सम्भवार्थम् (विषयतासम्भवात्) अत एवास्तेर्भूरसार्वधातुके इत्यसार्वधातुकग्रहणं विकरणस्य सार्वधातुकत्वव्यपदेश इति सामान्यतो ज्ञापयति। यत्त्विडागमविधौ गृह्णातीति प्रत्युदाहरणम्, तदन्यार्थं क्रियमाणम् एतदपि विषयीकरोतीत्याशयः। येन सादृश्यादादेशं प्रत्येव ज्ञापकमित्याशयेनैवेत्याहुः ॥४८२।

**[समीक्षा]**

तिङन्त पदों में प्रकृति – प्रत्यय के मध्य में विकरण का विधान पूर्वाचार्य करते थे, तदनुसार परवर्ती आचार्यों ने भी उसका निर्वाह किया है। यह विकरणविधान भ्वादिप्रभृति गणभेद के अनुसार भिन्न-भिन्न रूप में देखा जाता है। अनुबन्धों की योजना अपने-अपने व्याकरणों की प्रक्रिया के अनुसार है। पाणिनि के विकरण और संबद्ध सूत्र इस प्रकार हैं – १. **शप्**। "कर्तरि शप्" (अ० ३।१।६८)। २. **श्यन्**। "दिवादिभ्यः श्यन्" (अ० ३।१।६९)। ३. **श्नुः**। "स्वादिभ्यः श्नुः" (अ० ३।१।७३)। ४. **श**। "तुदादिभ्यः शः" (अ० ३।१।७७)। ५. **श्नम्**। "रुधादिभ्यः श्नम्" (अ० ३।१।७८)। ६. **उ**। "तनादिकृञ्भ्य उः" (अ० ३।१।७९)। ७.

**श्ना**। "क्र्यादिभ्यः श्ना" (अ० ३।१।८१)। अदादिगण में शप् का लुक्, जुहोत्यादिगण में श्लु तथा चुरादि णिच्-प्रत्ययान्त की धातुसंज्ञा उपपन्न होती है, अतः **'प्रकृतिप्रत्ययमध्यपतितत्वं विकरणत्वम्'** के अनुसार उक्त ७ विकरण पाणिनीय व्याकरण में उपलब्ध होते हैं। कातन्त्रकार के विकरण ससूत्र इस प्रकार हैं– १. **अन्**।"अन् विकरणः कर्तरि"(३।२।३२)। २. **यन्**।"दिवादेर्यन्"(३।२।३३)। ३. **नुः**। "नुः ष्वादेः" (३।२।३४)। ४. **न**। "स्वराद् रुधादेः परो नशब्दः" (३।२।३६)। ५. **उ**। "तनोदरुः" (३।२।३७)। ६. **ना**। "ना क्र्यादेः" (३।२।३८)। इस प्रकार कातन्त्र में केवल छह ही विकरण हैं, क्योंकि 'अन्' विकरण 'भ्वादि-तुदादि' दोनों ही गणों में प्रवृत्त होता है। विकरणों की योजना कातन्त्रटीकाकार दुर्गसिंह के अनुसार पूर्वाचार्यों द्वारा प्रसिद्ध की गई थी– "अनि च विकरणे, शानुबन्धे शनीति न विदध्यात्, विकरणस्य पूर्वाचार्यप्रसिद्धत्वात्" (कात० वृ० टी० ३।२।३२)।

**[रूपसिद्धि]**

१. **भवति**। भू+अन्+ति। 'भू सत्तायाम्' (१।१) धातु से वर्तमानासंज्ञक प्रथमपुरुष–एकवचन 'ति' प्रत्यय, प्रकृत सूत्र द्वारा अन् विकरण, न् अनुबन्ध का प्रयोगाभाव, "अनि च विकरणे" (३।५।३) से भू-गत ऊकार को गुण ओकार तथा "ओ अव्" (१।२।१४) से ओ को अवादेश।

२. **भवन्**। भू+शन्तृङ्+सि। 'भू सत्तायाम्' (१।१) धातु से वर्तमान अर्थ में "वर्तमाने शन्तृङानशावप्रथमैकाधिकरणामन्त्रितयोः" (४।४।२) से शन्तृङ् प्रत्यय, श्-ऋ-ङ् अनुबन्धों का प्रयोगाभाव, (भू+अन्त्), प्रकृत सूत्र से 'अन्' विकरण, न्-अनुबन्ध का प्रयोगाभाव (भू+अ+अन्त्), "अकारे लोपम्" (२।१।१७) से अन् के अकार का लोप, "अनि च विकरणे" (३।५।३) से गुण, "ओ अव्" (१।२।१४) से ओ को अवादेश, 'भवन्त्' की लिङ्गसंज्ञा, सिप्रत्यय तथा सि-त् का लोप ॥४८२।

## ४८३. दिवादेर्यन् [३।२।३३]

**[सूत्रार्थ]**

कर्ता अर्थ में विहित सार्वधातुकसंज्ञक प्रत्यय के परे रहते दिवादिगणपठित धातुओं से यन् प्रत्यय होता है तथा उसकी विकरणसंज्ञा भी प्रवृत्त होती है ॥४८३।

**[दु० वृ०]**

दिवादेर्गणाद् यन् परो भवति स च विकरणसंज्ञकः, कर्तरि विहिते सार्वधातुके परे। दीव्यति, सीव्यति। "भ्राश – भ्लाश – भ्रमु – क्रमु – त्रसि – त्रुटि – लषि - यसि - संयसिभ्यश्च वा"। भ्राश्यते, भ्राशते। भ्राम्यति, भ्रम्यति, भ्रमति। भौवादिकोऽपि भ्रमिरस्तीति। क्रम्यति, क्राम्यति, क्रामति। त्रस्यति, त्रसति। त्रुट्यति, त्रुटति। लष्यति, लषति। यस्यति, यसति। संयस्यति, संयसति ॥४८३।

**[दु० टी०]**

दिवा०। अनोऽपवादः। नकारः **"शमादीनां दीर्घो यनि"** (३।६।६६) इति विशेषणार्थः। सृजः ग्रहणश्रद्धोपनयनक्रियायामभिधानम् – सृज्यते मालां धार्मिकः। रञ्जेः कर्मकर्तर्यभिधानम् – रज्यति वस्त्रं स्वयमेव। अन्यत्र रजति। एवं कुष्यति पादपः स्वयमेव। अन्यत्र कुष्णाति। कुषिर्दैवादिकः कर्मकर्तर्येव वर्तते, परस्मैपदिषु पाठात् परस्मैपदम्। रञ्जेस्तत्र वद्ग्रहणस्य स्वाश्रयार्थत्वादिति। भ्राशेत्यादि। भ्राशभ्लाश-भ्रमुक्रमुलषामनि प्राप्ते त्रसियस्योर्नित्ये प्राप्ते यनि त्रुटेरपि तौदादिकत्वादनि प्राप्ते यन् वा विधीयते। 'टु भ्राजृ – टु भ्रासृ दीप्तौ' (१।५४०)। रुचादित्वादात्मनेपदम्। 'भ्रमु चलने' (१।५५८), भौवादिकोऽयम्, शमादिष्वपाठान्न दीर्घः। 'भ्रमु अनवस्थाने' इत्यस्य दैवादिकस्य रूपसिद्ध्यर्थमिहार्थभेदाद् ग्रहणम्। अथवा भौवादिकैः साहचर्याद् भौवादिकस्य ग्रहणं युक्तमिहेति। **अनेकार्थत्वादनवस्थानेऽपि वर्तिष्यते**, ततश्च रूपत्रयं सिद्धमेव। 'क्रमु पादविक्षेपे' (१।१५७) क्रमेः शमादीनां दीर्घो यनि। **"ष्ठिवुक्लम्वाचमामनि"** (३।६।६७) इति ज्ञापकाद् अन् - यनौ – क्लामति, क्रामति, क्राम्यति। **'त्रसी उद्वेगे, त्रुट् छेदने, लष कान्तौ, यसु प्रयत्ने'** (३।८; ५।९०; १।५९१; ३।५०) 'संयसः' इति नियमार्थं सम् - पूर्वादिव यसेर्नान्योपसर्गपूर्वकादिति आयस्यति, नित्यं यन्। तदेतन्न वक्तव्यम्। उभयगणपाठाङ्गीकाराद् वा सिद्धमिति। **आचार्याणां** मतेऽपि अधिकृतस्य वाग्रहणस्य बहुलार्थत्वाद् वा ॥४८३।

**[वि० प०]**

दिवादेः। दीव्यति, सीव्यतीति **"नामिनो र्वोः"** (३।८।१४) इत्यादिना दीर्घः। भ्राशेत्यादि। अधिकृतस्य वाशब्दस्य बहुलार्थत्वाद् उभयगणपाठाङ्गीकरणाद् वा अन्यनाविति भावः। भौवादिको भ्रमिरस्तीति। 'भ्रमु अनवस्थाने' दैवादिकः शमादौ पठ्यते। भ्रमु चलने भौवादिकः। अस्य शमादित्वाभावात् **"शमादीनां दीर्घो यनि"** (३।६।६६) इति न दीर्घः। इति रूपत्रयं विशेषाभावादिह द्वयोरपि ग्रहणम्। अथ भौवादिक एव विकल्प्यताम्, एवमपि रूपत्रयं सिध्यत्येव ? तदयुक्तम्, चलनार्थस्य

विकल्पेऽनवस्थानार्थस्य भ्रमतीति प्रयोगो न स्यात् । अथानवस्थानचलनयोः को भेद इति चेत्, **महान् भेदः** । तथाहि चलन्नपि कार्येषु स्थिरारम्भकत्वात् स्थिर उच्यते अचलन्नपि कार्येष्वस्थिरकत्वादनवस्थित उच्यते इति । क्रामति इति **"क्रमः परस्मै"** (३।६।६८) इति दीर्घः । कथं क्लामति इति **"ष्ठिवुक्लम्वाचमामनि"** (३।६।६७) इति निर्देशात् क्लमेर्दैवादिकादप्यन्, पक्षे क्लाम्यतीति शमादित्वाद् दीर्घः । यसिपाठेनैव सिद्धे संयसिपाठो नियमार्थः, संपूर्वादेव यसो यथा स्यात्, नान्योपसर्गपूर्वात् । तेन उपयस्यति, प्रयस्यतीति नित्यं दिवादित्वाद् यन् ॥४८३।

**[क० च०]**

दिवादेः । तद्विज्ञानो बहुव्रीहिरयम् । तेन दीव्यतीति निर्देशाद् व्याप्तिन्यायाच्च । एवमुत्तरत्रापि ॥४८३।

**[समीक्षा]**

दिवादिगणपठित धातुओं से त्याद्यन्त (= तिङन्त) पदों की सिद्धि के लिए किए जाने वाले ति - आदि प्रत्ययों से पूर्व कातन्त्र में यन् तथा पाणिनीय व्याकरण में श्यन् विकरण किया गया है । पाणिनि का सूत्र है – "दिवादिभ्यः श्यन्" (अ० ३।१।६९) । पाणिनि ने इस मुख्य सूत्र के अतिरिक्त भी तीन सूत्र बनाए हैं – भ्राश - भ्लाश आदि धातुओं से, अनुपसर्गपूर्वक यस् धातु से तथा सम् – पूर्वक यस् धातु से श्यन् विकरण के वैकल्पिक विधानार्थ । यह व्यवस्था कातन्त्रवृत्तिकार दुर्गसिंह ने एक वार्त्तिक द्वारा की है । पाणिनि के ३ सूत्र इस प्रकार हैं – "वा भ्राशभ्लाश-भ्रमुक्रमुक्लमुत्रसित्रुटिलषः, यसोऽनुपसर्गात्, संयसश्च" (अ० ३।१।७० - ७२) । विकरण की यह व्यवस्था पूर्वाचार्यों के द्वारा प्रवर्तित की गई है ।

**[रूपसिद्धि]**

१. **दीव्यति** । दिवु + यन् + ति । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्ति-गतिषु' (३।१) धातु से वर्तमानासंज्ञक प्रथमपुरुष – एकवचन ति – प्रत्यय, प्रकृत सूत्र द्वारा यन् विकरण, न् अनुबन्ध का प्रयोगाभाव तथा "नामिनो र्वोरकुर्छुरोर्व्यञ्जने" (३।८।१४) से वकार की उपधा इकार को दीर्घ ।

२. **सीव्यति** । सिव् + यन् + ति । 'षिवु तन्तुसन्ताने' (३।२) धातु से ति – प्रत्यय, "धात्वादेः षः सः" (३।८।२४) से मूर्धन्य षकार को सकार तथा व् की उपधा को दीर्घ ॥४८३।

# ४८४. नुः ष्वादेः [३।२।३४]

**[सूत्रार्थ]**

कर्ता – अर्थ में विहित सार्वधातुकसंज्ञक प्रत्यय के परे रहते ष्वादिगणपठित धातुओं से 'नु' प्रत्यय होता है तथा उसकी विकरणसंज्ञा भी होती है ।।४८४।

**[दु० वृ०]**

ष्वादेर्गणान्नुर्विकरणसंज्ञकः परो भवति कर्तरि विहिते सार्वधातुके परे। सुनोति, सुन्वन्। चिनोति, चिन्वन्। योगविभागाद् अक्षतेर्वा। अक्ष्णोति, अक्षति। तनूकरणे तक्षतेश्च – तक्ष्णोति, तक्षति। तनूकरणे इति किम्? सन्तक्षति। वाग्भिः शिष्यं निर्भर्त्सयतीत्यर्थः ।।४८४।

**[दु० टी०]**

नुः। ननु च वत्वे रूपस्यैकत्वाद् दिवाद्यन्तर्गणष्वादेरपि ग्रहणं स्यात्, नैवम्। प्रधानगणप्रस्तावात् **"सरति - सूति - सूयति - वृणोतेराच्छादने"** इति निर्देशाच्च। योगविभागादित्यादि। योगविभागादियमिष्टसिद्धिरिति भावः। अक्षतेर्वेत्यादि। **'अक्षू संघाते प्राप्तौ'** (१।२०४) नित्यमनि प्राप्ते नुर्विधीयते। 'तक्षू त्वक्षू तनूकरणे' (१।२०६), अनेकार्थत्वाद् धातूनामित्याह – निर्भर्त्सयतीत्यर्थः ।।४८४।

**[वि० प०]**

नुः। **'षूङ् प्राणिप्रसवे'** (२।५४; ३।८१) इत्यस्यापि वत्वे सति रूपसाम्यात् ष्वादेरिह दिवाद्यन्तर्गणस्य कथन्न ग्रहणमिति न चोद्यम्, यना विशेषबाधितत्वात्। इह प्रधाने गणप्रस्तावेऽन्तर्गणस्यायुक्तत्वाच्चेति। अत इह न तस्य ग्रहणम्। **'षुञ् अभिषवे, चिञ् चयने'** (४।१; ८।५; ४।५) सुन्वन्, चिन्वन् इति शन्तृङानशोः पूर्ववत् सार्वधातुकवद्भावात् नुविकरणः। **"नोर्वकारो विकरणस्य"** (३।४।६०) इति वत्वम् ।।४८४।

**[क० च०]**

नुः। यना विशेषबाधितत्वादिति **पञ्जी**। ननु कथं यनो विशेषत्वम्, नोरेव विशेषत्वादित्याह – प्रधानेति ।।४८४।

**[समीक्षा]**

ष्वादिगणपठित धातुओं से 'सुनोति – चिनोति' आदि त्याद्यन्त (तिङन्त) पदों के सिद्ध्यर्थ कातन्त्रकार ने नु तथा पाणिनि ने श्नु – विकरण किया है। पाणिनि का सूत्र है – "ष्वादिभ्यः श्नुः" (अ० ३।१।७३)। पाणिनि ने 'अक्ष - तक्ष' धातुओं

से वैकल्पिक श्नुविकरण के विधानार्थ दो अन्य सूत्र बनाए हैं – "अक्षोऽन्यतरस्याम्, तनूकरणे तक्षः" (अ० ३।१।७५ – ७६)। कातन्त्रवृत्तिकार दुर्गसिंह ने योगविभाग के बल पर उक्त अभीष्ट-सिद्धि की है – "योगविभागादक्षतेर्वा, तनूकरणे तक्षतेश्च"।

**[विशेष वचन]**

१. योगविभागादक्षतेर्वा, तनूकरणे तक्षतेश्च (दु० वृ०)।

२. योगविभागादियमिष्टसिद्धिरिति भावः (दु० टी०)।

३. तक्षू त्वक्षू तनूकरणे। अनेकार्थत्वाद् धातूनामित्याह – निर्भर्त्सयतीत्यर्थः (दु० टी०)।

४. इह प्रधाने गणप्रस्तावेऽन्तर्गणस्यायुक्तत्वाच्चेति। अत इह न तस्य ग्रहणम् (वि० प०)।

**[रूपसिद्धि]**

१. **सुनोति**। सु+नु+ति। 'षुञ् अभिषवे' (४।१; ८।५) धातु से वर्तमानासंज्ञक प्रथमपुरुष – एकवचन ति-प्रत्यय, "धात्वादेः षः सः" (३।८।२४) से मूर्धन्य षकार को सकारादेश, प्रकृत सूत्र से नु-विकरण तथा "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से नु-गत उकार को गुणादेश।

२. **चिनोति**। चि+नु+ति। 'चिञ् चयने' (४।५) धातु से तिप्रत्यय, नु-विकरण तथा नु-गत उकार को गुण ओकार।

३. **सुन्वन्**। सु+नु+शन्तृङ्+सि। 'षुञ् अभिषवे' (४।१; ८।५) धातु से वर्तमान अर्थ में "वर्तमाने शन्तृङानशौ०" (४।४।२) इत्यादि से शन्तृङ् प्रत्यय, श्-ऋ-ङ् अनुबन्धों का प्रयोगाभाव, प्रकृत सूत्र से नु-विकरण, "ङे न गुणः" (४।१।६) से गुणाभावः, "नोश्च विकरणादसंयोगात्" (३।४।३४) से नु-गत उ को व्, 'सुन्वन्त्' की लिङ्गसंज्ञा, सिप्रत्यय तथा सि-त् का लोप।

४. **चिन्वन्**। चि+नु+शन्तृङ्+सि। 'चिञ् चयने' (४।५) धातु से वर्तमान अर्थ में शन्तृङ् प्रत्यय, नु-विकरण, उ को व्, लिङ्गसंज्ञा, सि-प्रत्यय तथा सि-त् का लोप ॥४८४।

## ४८५. श्रुवः शृ च [३।२।३५]

**[सूत्रार्थ]**

कर्ता-अर्थ में विहित सार्वधातुकसंज्ञक प्रत्यय के परे रहते श्रु-धातु से नु-विकरण तथा श्रु को 'शृ' आदेश होता है ॥४८५।

## [दु० वृ०]

श्रुवो धातोर्नुविकरणसंज्ञकः परो भवति श्रादेशश्च कर्तरि विहिते सार्वधातुके परे। शृणोति, शृण्वन्। उभयं विधेयं भौवादिकत्वाद् धिन्विकृण्व्योर्धि कृ चेति वक्तव्यम् – धिनोति, कृणोति ॥४८५।

## [दु० टी०]

श्रुवः। श्रु श्रवणे। **केचिद्** अमूं ष्वादौ पठन्ति। नुसंनियोगेनायमादेश इति धिन्विकृण्व्योर्धि कृ चेति वक्तव्यमिति। धिन्विकृण्व्योर्नुर्भवति तत्सन्नियोगे च धिकृभावादेशौ यथासंख्यमिति। **स्वमते** नात्रैषोऽर्थः, 'कृवि चिरि जिरि दास द्रुह जिघांसायाम्, धिवि तृप प्रीणने' (४।१७, २१) इति ष्वादित्वान्नुः सिद्ध एव **"य्वोर्व्यञ्जनेऽये"** (४।१।३५) इति वलोपश्चानिदनुबन्धानामिति वर्जनादिदनुबन्धानामनुषङ्गः साधितः, स चान्तव्यञ्जननिमित्त इति **'निमित्ताभावे नैमित्तिकस्याप्यभावः'** (कात० परि० २७) इति भावः ॥४८५।

## [वि० प०]

श्रुवः। उभयमिति। **ये** तु **'श्रु श्रवणे'** (१।२७८) इति ष्वादौ पठन्ति, तन्मते पूर्वेणैव नुः सिद्धः, श्रादेश एव विधीयते। धिन्वीत्यादि। वक्तव्यं व्याख्येयम्। धिवि तृप प्रीणने। तिक तिग षघ ऋक्ष कृवि जिरि दास द्रुह जिघांसायाम् इति। अत्र ष्वादित्वान्नुः सिद्ध एव, ततो **"य्वोर्व्यञ्जनेऽये"** (४।१।३५) इति वकारलोपः, पश्चादनुषङ्गलोपविधावनिदनुबन्धानामिति वर्जनाद् इदनुबन्धानामेवानुषङ्गो ज्ञापितः, तस्याप्यनुषङ्गत्वादेवान्त्यव्यञ्जनं निमित्तत्वमिति निमित्ताभावे नैमित्तिकस्याप्यभावो भविष्यति ॥४८५।

## [क० च०]

श्रुवः। प्रत्ययविधाने श्रुवः इति पञ्चमी, आदेशविधाने तु अन्वर्थवशात् षष्ठी। शृ चेति प्रत्ययान्तरविधानं नाशङ्क्यते, सम्बन्धस्य प्रयोक्तुरधीनत्वात्। **"य्वोर्व्यञ्जनेऽये"** (४।१।३५) इति वलोप इति **पञ्जी**। तत्कथं संगच्छते, परत्वात्, **"च्छ्वोः शूटौ पञ्चमे च"** (४।१।५६) इति ऊटा भवितव्यम्। न च कृत्प्रत्यय एव तस्य विषय इति वाच्यम्, दुद्यूषतीत्यसिद्धेः। तथा च खवधातोः खौनातीति प्रयोगो **धातुवृत्ताविष्ट**त्वादिति **कुलचन्द्रः। महान्तस्तु** छकारसाहचर्याद् वकारस्यापि कृत्प्रत्यय एवायं विधिरिति। लोपविधिस्तु सामान्येनैवेष्यते। तथा च **धातुप्रदीपः** – क्र्यादौ **'खच प्रादुर्भावे'** इति चान्त एव, खचितमिति प्रयोगदर्शनात्। **ये** तु वकारान्तं पठन्ति, **तन्मते**

खनातीति वलोप एवेत्याहुः। एतन्मते 'दुद्यूषति' इत्यत्राभिधानादेवोट्, **धातुपारायणे** तु **त्रिलोचनेन** खव्नातीति दर्शितम्, तत्तु **लेखकप्रमाद** एवेति। **अन्ये** तु क्वचिदपवाद-विषये उत्सर्गस्यापि समावेश इत्याहुः। **केचित्तु** पूर्वापरयोरित्यत्र परशब्दस्य श्रेष्ठवाचकत्वादित्याहुः। निमित्ताभाव इति। ननु सुकन्भ्याम् इत्यत्रापि संयोगान्तलोपे निमित्ताभावः कथं स्यात्। न चेद् अनुबन्धप्रतिषेधो व्यर्थ इति वाच्यम्, सुकंस इत्यत्राघुट्स्वरे चरितार्थत्वात् ? सत्यम्, न नैमित्तिकाश्रय इति प्रतिषेधाद् अनुषङ्गे सत्येव संयोगान्तलोपविधानात् ॥४८५।

**[समीक्षा]**

'श्रु श्रवणे' (१।२७८) धातु से 'शृणोति, शृण्वन्' आदि शब्दरूपों के सिद्ध्यर्थ पाणिनि तथा शर्ववर्मा दोनों ने ही श्रु को शृ आदेश किया है। पाणिनि का भी यही सूत्र है– "श्रुवः शृ च" (अ० ३।१।७४)। चकार के बल से विकरण नु (=श्नु) की प्रवृत्ति होती है। इस प्रकार उभयत्र समानता है।

**[विशेष वचन]**

१. उभयं विधेयम्, भौवादिकत्वात् (दु० वृ०)।

२. श्रु श्रवणे, केचिद् अमूं ष्वादौ पठन्ति नुसन्नियोगेनायमादेश इति (दु० टी०)।

३. ये तु श्रु श्रवणे इति ष्वादौ पठन्ति तन्मते पूर्वेणैव नुः सिद्धः, श्रादेश एव विधीयते (वि० प०)।

४. खव्-धातोः खौनातीति प्रयोगो धातुवृत्ताविष्टत्वादिति कुलचन्द्रः (क० च०)।

५. महान्तस्तु छकारसाहचर्याद् वकारस्यापि कृत्प्रत्यय एवायं विधिरिति (क० च०)।

६. तथा च धातुप्रदीपः– क्र्यादौ खच् प्रादुर्भावे इति चान्त एव, खचितमिति प्रयोगदर्शनात्। ये तु वकारान्तं पठन्ति, तन्मते खनातीति वलोप एवेत्याहुः। धातु-पारायणे तु त्रिलोचनेन खव्नातीति दर्शितम्। तत्तु लेखकप्रमाद एवेति (क० च०)।

**[रूपसिद्धि]**

१. **शृणोति**।श्रु+नु+ति।'श्रु श्रवणे' (१।२७८) धातु से वर्तमानासंज्ञक प्रथमपुरुष-एकवचन ति-प्रत्यय, प्रकृत सूत्र श्रु को शृ आदेश-नु विकरण, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से नु-गत उ को गुण ओ तथा नकार को णकारादेश।

२. **शृण्वन्** । श्रु + नु + शन्तृङ् + सि । 'श्रु श्रवणे' (१।२७८) धातु से वर्तमान अर्थ में "वर्तमाने शन्तृङानशावप्रथमैकाधिकरणामन्त्रितयोः" (४।४।२) से शन्तृङ् प्रत्यय, श् - ऋ - ङ् अनुबन्धों का प्रयोगाभाव, "सार्वधातुकवच्छे" (४।१।४) से सार्वधातुकवद्भाव, "ङे न गुणः" (४।१।५) से गुणाभाव, प्रकृत सूत्र द्वारा नु – विकरण – श्रु को शृ आदेश, "नोश्च विकरणादसंयोगात्" (३।४।३४) से नु-गत उ को व्, न् को ण्, 'शृण्वन्त्' की लिङ्गसंज्ञा, सिप्रत्यय तथा सि - त् का लोप ॥४८५।

## ४८६. स्वराद् रुधादेः परो नशब्दः [३।२।३६]

### [सूत्रार्थ]

कर्ता - अर्थ में सार्वधातुकसंज्ञक प्रत्यय के परे रहते रुधादिगणपठित धातुओं से स्वर वर्ण से परवर्ती 'न' प्रत्यय होता है तथा उसकी विकरणसंज्ञा भी होती है ॥४८६।

### [दु० वृ०]

रुधादेर्गणस्य स्वरात् परो नशब्दो भवति, स च विकरणसंज्ञकः कर्तरि विहिते सार्वधातुके परे। रुणद्धि, भिनत्ति। प्रकृतिप्रत्यययोरर्थाभिधाने नशब्देनैव साहाय्यं कृतम् इति अन्न स्यात् ॥४८६।

### [दु० टी०]

स्वरात्०। एकप्रयोजनेनापि बाधाकरणं न पुनरभिन्नदेशेनैवेति नियमः, तस्मात् सार्वधातुकस्याभिधेये सहायभावमापद्यमानेन नशब्देनान्विकरणो बाध्यते, प्रकृत्यन्तर्वर्तिना प्रत्ययाख्येन आगमेन तु भिन्नजातिनिबन्धनेन कुत एतदिति प्रकृति-प्रत्ययौ प्रत्ययार्थं सह ब्रूत इत्याह – प्रकृतीत्यादि। विकरणसंज्ञया च रुधादे-र्विकरणान्तस्य लोपः इति प्रयोजनम्। सत्यपि प्रत्ययत्वे नशब्दस्यादेरिड् न भवति, धातो-र्विहितस्यासार्वधातुकस्यादेरिड् भवन् धात्वेकदेशात्। कथमिति स्वरात् पर इति वचनं देशनियमार्थम् ॥४८६।

### [वि० प०]

स्वरात्०। अथैकस्थानित्वाद् विशेषविहितैर्यनादिभिरन्विकरणो बाध्यताम्, नशब्दस्तु भिन्नदेशत्वात् कथं बाधक इति, तदयुक्तम्, भिन्नदेशेऽप्येकार्थतया बाधायाः सम्भवात्। तथाहि, प्रकृतिप्रत्ययाभ्यां प्रकृत्यर्थविशिष्टः प्रत्ययार्थः कर्ता

प्रतिपाद्यते। यदाह **भाष्यकारः – 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः'** इति। तस्मिंश्च ताभ्यां प्रतिपाद्येऽर्थे विकरणानामर्थान्तरानिवेशत्वात् साहाय्यमेवार्थः। स च नशब्देनैव कृतः इत्युक्तार्थत्वादन्विकरणो न भवतीत्याह– प्रकृतीत्यादि ॥४८६।

**[क० च०]**

स्वरात्०। परो नशब्द इत्यत्रानशब्द इति नाशङ्कनीयम्, भिनत्तीति ज्ञापकाद् अकारलोपस्यादृष्टकल्पनापत्तेः। अथ परग्रहणं किमर्थं चेद् रुधादेः स्वरात् पूर्वं कथं न स्यात् ? नैवम्, **'पञ्चम्या निर्दिष्टे परस्य'** (कात० परि० २२) इति न्यायात् पर एव भविष्यति चेत्, न। तस्य हि स्थितस्य परस्य यत् किञ्चित् कार्यं विधीयते तत्रैव तस्य विषय इति। **"प्रत्ययः परः"** (३।२।१) इत्यत्र **टीकापञ्जीकृद्भ्या**मुक्तं चेत्, तथापि **"प्रत्ययः परः"** (३।२।१) इत्यनेनैव परत्वं भविष्यति। अथ विकरणस्य प्रत्ययत्वं नास्तीति चेत्, न। कप्रत्ययवत् प्रकृतिप्रत्ययार्थस्य साहाय्यकर्तृत्वात्। अत एव **टीकायां** सत्यपि नशब्दस्य प्रत्ययत्वेऽसार्वधातुकत्वात् तस्यादिरिडागमो न भवति। धातोर्विहितस्यासार्वधातुकस्यादिरिड् भवन् कथं धात्वेकदेशाद् विहितस्यादिरिड् भविष्यतीत्युक्तम्। किं च पूर्वं न भविष्यति यावता निमित्तव्यवधानमिति चेद् अवश्यं व्यवधानमाश्रयणीयम्। तथाहि भिनत्तीत्यादौ दकारेण व्यवधानता, वचनादेकेन वर्णेन व्यवधानमाश्रीयते न त्वनेकेनेति, तर्हि **परग्रहणमुत्तरार्थम्**। तेन तनादेः परः इति विशेषणात् स्वरात् इति न सम्बध्यते।

यदि पुनस्तनादिरुधाद्योः स्वराद्यनशब्दाविति अकरणादेव परसूत्रे स्वरादिति न वर्तते, तदा किं स्यादिति चेद् उच्यते– परग्रहणं विनात्र स्वरान्ताद् धात्वन्तराद् रुधादेरपि न–शब्दः स्याद् इत्यपि शङ्का स्यात्। **वररुचिस्तु** परग्रहणमिहार्थमुत्तरार्थं चेत्याचष्टे– शब्दग्रहणं सस्वरार्थमिति। अथ रुधादेर्विकरणान्तस्य लोप इति ज्ञापकात् सस्वरो ज्ञाप्यते, किं शब्दग्रहणेनेति चेत्, व्यञ्जनेऽपि नकारे कृते विकरणान्तस्य लोप इत्युक्ते भिन्दतीत्यादौ दकारस्य लोपो भविष्यति चेद् भिनत्तीतिनिर्देशात्। तर्हि ज्ञापकेन किमिह प्रत्याख्यातुं न शक्यते। **पञ्जी**-प्रकृतिप्रत्ययाविति। ननु कथमेतत्, यावता **'आख्यातं क्रियाप्रधानम्'** इत्यस्त्येव ? सत्यम्, **भाष्यकारमत**मवलम्ब्योक्तम्। **स्वमते** आख्यातेऽपि प्रत्ययार्थान्वितस्वार्थबोधकत्वमङ्गीकर्तव्यमिति **संक्षेपः**। विशेषस्तु **धातुसूत्रे** व्याख्यातो**ऽस्माभि**रिति ॥४८६।

**[समीक्षा]**

'रुधिर् आवरणे' (६।१) इत्यादि रुधादिगणपठित धातुओं से 'रुणद्धि, भिनत्ति' आदि प्रयोगों के सिद्ध्यर्थ पाणिनि ने 'श्नम्' विकरण तथा कातन्त्रकार

ने 'न' विकरण का विधान किया है। पाणिनि का श् अनुबन्ध "श्नान्नलोपः" (अ० ६।४।२३) इस विशेषण के लिए तथा म्-अनुबन्ध अन्तिम अच् से पर में विधानार्थ किया गया है। कातन्त्रकार ने प्रकृत सूत्र में ही 'स्वरात् परः' पढ़कर उक्त की पूर्ति की है। पाणिनि का सूत्र है– "रुधादिभ्यः श्नम्" (अ० ३।१।७८)।

**[विशेष वचन]**

१. प्रकृतिप्रत्यययोरर्थाभिधाने नशब्देनैव साहाय्यं कृतम् इति अन् न स्यात् (दु० वृ०)।

२. सत्यपि प्रत्ययत्वे नशब्दस्यादेरिड् न भवति, धातोर्विहितस्यासार्वधातुकस्यादेरिड् भवन् धात्वेकदेशात् (दु० टी०)।

३. 'स्वरात् परः' इति वचनं देशनियमार्थम् (दु० टी०।

४. प्रकृतिप्रत्ययाभ्यां प्रकृत्यर्थविशिष्टः प्रत्ययार्थः कर्ता प्रतिपाद्यते। यदाह भाष्यकारः– 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति (वि० प०)।

५. वचनादेकेन वर्णेन व्यवधानमाश्रीयते न त्वनेकेनेति (क० च०)।

६. वररुचिस्तु परग्रहणम् इहार्थमुत्तरार्थं चेत्याचष्टे (क० च०)।

७. आख्यातेऽपि प्रत्ययार्थान्वितस्वार्थबोधकत्वमङ्गीकर्तव्यमिति संक्षेपः (क० च०)।

**[रूपसिद्धि]**

१. **रुणद्धि**। रुध्+न+ति। 'रुधिर् आवरणे' (६।१) धातु से वर्तमानासंज्ञक प्रथमपुरुष–एकवचन ति–प्रत्यय, प्रकृत सूत्र द्वारा रुध्-गत उ-स्वर से पर में न-प्रत्यय, "घढधभेभ्यस्तथोर्धोऽधः" (३।८।३) से त् को ध्, "धुटां तृतीयश्चतुर्थेषु" (३।८।८) से ध् को द् आदेश तथा न् को ण् आदेश।

२. **भिनत्ति**। भिद्+न्+ति। 'भिदिर् विदारणे' (६।१) धातु से वर्तमानासंज्ञक ति-प्रत्यय, प्रकृत सूत्र द्वारा भिद्-गत इ-स्वर से पर में न-प्रत्यय तथा "अघोषेष्वशिटां प्रथमः" (३।८।९) से दकार को तकारादेश ॥४८६।

## ४८७. तनादेरुः [३।२।३७]

**[सूत्रार्थ]**

कर्ता-अर्थ में विहित सार्वधातुकसंज्ञक प्रत्यय के परे रहते तनादिगणपठित धातुओं में स्वर से परवर्ती विकरणसंज्ञक 'उ' प्रत्यय होता है ॥४८७।

**[दु० वृ०]**

तनादेर्गणाद् उर्विकरणसंज्ञकः परो भवति कर्तरि विहिते सार्वधातुके परे। तनोति, सनोति॥४८७।

**[दु० टी०]**

तनादेः। **'तनु विस्तारे, षणु दाने'** (७।१,२) उभयपदिनौ ॥४८७।

**[क० च०]**

तनादेः। पूर्वसूत्रदत्तयुक्त्या स्वरादितीह न वर्तते, करोतेरिति निर्देशाच्च रुरिति नाशङ्क्यते ॥४८७।

**[समीक्षा]**

'तनु विस्तारे' (७।१) आदि धातुओं से 'तनोति' आदि शब्दरूपों के सिद्ध्यर्थ पाणिनि तथा कातन्त्रकार दोनों ने ही 'उ' विकरण का विधान किया है। पाणिनि का सूत्र है– "तनादिकृञ्भ्य उः" (अ० ३।१।७९)। पाणिनि ने इस सूत्र में 'कृञ्' का जो उपादान किया है, उससे 'अकृत, अकृथाः' आदि में "तनादिभ्यस्तथासोः" (अ० २।४।७९) से सिच्प्रत्यय का वैकल्पिक लुक् नहीं होता।

**[रूपसिद्धि]**

१. **तनोति**। तन्+उ+ति। 'तनु विस्तारे' (७।१) धातु से वर्तमानासंज्ञक प्रथमपुरुष–एकवचन ति–प्रत्यय, प्रकृत सूत्र से उ–विकरण तथा "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से उ को गुणादेश-ओ।

२. **सनोति**। सन्+उ+ति। 'षणु दाने' (७।२) धातु से वर्तमानासंज्ञक प्रथमपुरुष–एकवचन ति-प्रत्यय "धात्वादेः षः सः" (३।८।२४) से मूर्धन्य षकार को दन्त्य सकार, 'निमित्तापाये नैमित्तिकस्याप्यपायः' (कात० परि० २७) के अनुसार णकार की निवृत्ति, प्रकृत सूत्र से उ–विकरण तथा उसके स्थान में गुण आदेश-ओ॥४८७।

## ४८८. ना क्र्यादेः [३।२।३८]

**[सूत्रार्थ]**

कर्ता–अर्थ में विहित सार्वधातुकसंज्ञक प्रत्यय के परे रहते क्र्यादिगणपठित धातुओं से पर में विकरणसंज्ञक ना–प्रत्यय होता है ॥४८८।

**[दु० वृ०]**

क्र्यादेर्गणान्नाविकरणसंज्ञकः परो भवति कर्तरि विहिते सार्वधातुके परे। क्रीणाति, प्रीणाति। स्तन्भु - स्तुन्भु - स्कन्भु - स्कुन्भु - स्कुभ्यो नुश्चेति वा वक्तव्यम्। स्कुञ् क्रैयादिकः, शेषाः **सौत्रा धातवः**। स्तभ्नाति, स्तभ्नोति। स्तुभ्नाति, स्तुभ्नोति। स्कुभ्नाति, स्कुभ्नोति। स्कभ्नाति, स्कभ्नोति। स्कुनाति, स्कुनोति ॥४८८।

**[दु० टी०]**

ना०। 'डु क्रीञ् द्रव्यविनिमये, प्रीञ् तर्पणे' (८।१, २)। स्तन्भु इत्यादि। स्कुञो नित्यं नाविकरणे प्राप्ते शेषा इति चत्वारोऽप्युदनुबन्धपूक्लिशां क्त्वि इति वेटः। नैतद् वक्तव्यम्, स्वादौ क्र्यादौ च पाठाश्रयणात् सिद्धम् ॥४८८।

**[वि० प०]**

ना क्र्यादेः। स्तन्भु इत्यादि वक्तव्यं व्याख्येयम्। इहापि क्र्यादौ स्वादौ च पाठाश्रयणात् सिद्धम्। स्तन्भुप्रभृतीनामनिदनुबन्धानामगुण इत्यनुषङ्गलोपः ॥४८८।

**[क० च०]**

ना क्र्यादेः। क्रीणातीति। **'डुक्रीञ् द्रव्यविनिमये, प्रीञ् तर्पणे कान्तौ च'** (८।१, २) इति क्र्यादौ। नाग्रहणं **योगविभागार्थम्**। तेन किं स्यादित्याह– तस्मिन्नित्यादि **वररुचिवृत्तिः**। **पञ्ज्यां** तु उभयगणपाठाङ्गीकरणादेव सिद्धमित्युक्तम्। चकाराद् वा। स्कुञिति। स्कुञ् आवरणे क्र्यादिः। शेषा इति **वृत्तिः**। अमीषामुदनुबन्धबलात् सर्वविषयत्वम्, न त्वनुकरणमात्रविषयत्वमिति **न्यासः**। तन्मते तु उभयगणपाठाङ्गीकारादेव सर्वविषयत्वम्। तनादिक्र्याद्योरुनाविति न कृतम्, नेत्यस्य किमकारान्तत्वम्, किं वा व्यञ्जनान्तत्वम् इति शङ्का स्याद् इत्युत्तरत्र च दोषः स्यात् ॥४८८।

**[समीक्षा]**

'डु क्रीञ् द्रव्यविनिमये' (८।१) आदि धातुओं से 'क्रीणाति' आदि शब्दरूपों के सिद्ध्यर्थ पाणिनि ने श्ना तथा शर्ववर्मा ने ना-विकरण का विधान किया है। पाणिनि का सूत्र है – "क्र्यादिभ्यः श्ना" (अ० ३।१।८१)। श् अनुबन्ध की योजना "तिङ् शित् सार्वधातुकम्" (अ० ३।४।११३) से सार्वधातुकसंज्ञा के लिए की गई है।

**[विशेष वचन]**

१. शेषा इति वृत्तिः। अमीषामुदनुबन्धबलात् सर्वविषयत्वम्, न त्वनुकरणमात्रविषयत्वमिति न्यासः। तन्मते तूभयगणपाठाङ्गीकारादेव सर्वविषयत्वम् (क० च०)।

**[रूपसिद्धि]**

१. **क्रीणाति** । क्री+ना+ति । 'डु क्रीञ् द्रव्यविनिमये' (८।१) धातु से वर्तमानासंज्ञक प्रथमपुरुष – एकवचन ति – प्रत्यय, प्रकृत सूत्र से ना – विकरण तथा नकार को णकारादेश ।

२. **प्रीणाति** । प्री+ना+ति । 'प्रीञ् तर्पणे' (८।२) धातु से वर्तमानासंज्ञक ति – प्रत्यय, ना – विकरण तथा णत्व ।।४८८।

## ४८९. आन व्यञ्जनान्तादृधौ [३।२।३९]

**[सूत्रार्थ]**

क्र्यादिगणपठित व्यञ्जनान्त धातु से विकरणसंज्ञक 'आन' प्रत्यय होता है मध्यमपुरुष - एकवचन हि - प्रत्यय के परे रहते ।।४८९।

**[दु० वृ०]**

क्र्यादेर्गणाद् व्यञ्जनान्तादानो विकरणसंज्ञकः परो भवति हौ परे । पुषाण, बधान । व्यञ्जनान्तादिति किम् ? क्रीणीहि ।।४८९।

**[दु० टी०]**

आन० । आनेति लुप्तप्रथमैकवचनोऽयं निर्देशो नाविकरणस्यापवादः । **'पुष पुष्टौ, बध बन्धने'** (१।२२८; ९।१५) । **'कुष निष्कर्षे'** (८।४०), कुषाण । स्तन्भु – स्तभान ।स्तुन्भु – स्तुभान ।स्कन्भु – स्कभान ।स्कुन्भु – स्कुभान ।**अन्य**स्त्वाह – नाविकरणस्यानादेश इति ।।४८९।

**[वि० प०]**

आन० । आनेति लुप्तप्रथमैकवचनोऽयं निर्देशः । पुषाणेति । हेरकारादहन्तेरिति हेर्लोपः । बधानेति । बन्ध बन्धने । पूर्ववद**नुषङ्ग**लोपः । क्रीणीहि इति । उभयेषा-मित्यादिना ईकारः ।।४८९।

**[क० च०]**

आन० । अकारान्तोऽयमानः । अत्र पाठ एव **प्रमाणम्** । तथापि यदि त्वत्रैव विप्रतिपत्तिस्तदा पूर्वसूत्रे स्वरान्तत्वादत्रापि स्वरान्तत्वं कल्पनीयम्, न चात्राकारो न भवतीत्यर्थः कथन्न स्यादिति वाच्यम् ? आकारविध्यभावेन प्रतिषेधानुपपत्तेः । नैवम्, नाविकरणस्याकारनिषेधात् केवलं नकार एव भविष्यति, तदा 'पुष्णहि-बध्नहि' इति रूपं भविष्यति ।तर्हि केवलं नकारमेव निर्दिशेत्, अन्तग्रहणमुत्तरत्र व्यञ्जनान्तादिति निवृत्त्यर्थम् । तेन 'कटः क्रियते, ग्रामो गमिष्यते' इत्यादिकं सिद्धम् । **वस्तुतस्तु**

प्रकृतत्वाद् धातुमात्रानुवृत्तिरेव [illegible] तन्निवृत्त्यर्थमन्तग्रहणं क्रियते। **अयमाशयः**— अन्तग्रहणं बहुव्रीह्यर्थम्। तेनान्यपदार्थे [illegible]यमाने क्र्यादिरेवोपस्थितो भवति तर्ह्युत्तरत्र कथं व्यञ्जनान्तादिति न [illegible] येन क्रियते' इति ज्ञापकात् ॥४८९।

**[समीक्षा]**

'मुषाण – पुषाण' इत्यादि पञ्चमीसंज्ञक मध्यमपुरुष – एकवचन हि – प्रत्ययान्त शब्दरूपों के सिद्ध्यर्थ पाणिनि ने श्नाप्रत्यय के स्थान में शानच् आदेश तथा शर्ववर्मा ने आन – विकरण का विधान किया है। कातन्त्रवृत्तिटीकाकार ने स्वीकार किया है कि कोई आचार्य 'ना' के स्थान में 'आन' आदेश मानते हैं।

**[रूपसिद्धि]**

१. **पुषाण**। पुष + आन + हि। 'पुष पुष्टौ' (१।२२८) धातु से पञ्चमीविभक्ति मध्यमपुरुष – एकवचन में हि – प्रत्यय, प्रकृत सूत्र द्वारा आन-विकरण, गुणाभाव, न् को णत्व तथा "हेरकारादहन्तेः" (३।४।३३) से हि का लोप।

२. **बधान**। बन्ध् + आन + हि। 'बन्ध बन्धने' (८।३२) धातु से हि – प्रत्यय, प्रकृत सूत्र से आन प्रत्यय, हि तथा अनुषङ्ग (न्) का लोप ॥४८९।

## ४९०. आत्मनेपदानि भावकर्मणोः [३।२।४०]

**[सूत्रार्थ]**

भाववाच्य तथा कर्मवाच्य अर्थ में धातु से आत्मनेपदसंज्ञक प्रत्यय होते हैं ॥४९०।

**[दु० वृ०]**

धातोरात्मनेपदानि भवन्ति भावकर्मणोरर्थयोः। आस्यते भवता, शय्यते भवता। **भावः सत्ता**। औत्सर्गिकमेकवचनमेव, असंख्यत्वात्। कर्मणि च – क्रियते कटो देवदत्तेन। कथं मास आस्यते, क्रोशो गुडधानाभिर्भूयते। ओदनपाकः शय्यते, नदी सुप्यते ? कालाध्वभावदेशानां कर्मसंज्ञा सिद्धैवेति ॥४९०।

**[दु० टी०]**

आत्म०। **भावः क्रिया** साधनव्यापारस्य विशेषणम्, यथोक्तम् – कारकाणां प्रवृत्तिविशेषः क्रियेति। **सा च द्विविधा – चलनात्मिका, अचलनात्मिका च**। उत्क्षेपणा-वक्षेपणाकुञ्चनप्रसारणगमनभ्रमणरेचनादिलक्षणा चलनात्मिका। स्थानाशनशयन-हर्षणादिलक्षणा अचलनात्मिका। कर्तुर्व्यतिरिक्तार्थासंस्पर्शिनी क्रिया **भाव** इति यावत्। तस्माद् भाववचनो धातुरचलात्मकः। चलनात्मिकया क्रियया वस्तु व्याप्यते इति

क्रियावचनो धातुरिति उभयमुभयशब्देनोच्यते इति। धातुमात्रादविशेषेण त्यादयः प्राप्ताः नियमार्थमारभ्यते। **कामचारप्राप्तस्य प्रकारान्तरेण पुनर्विधानं नियमः**, स तु प्रत्ययनियमो धातोर्भावकर्मणोरेवात्मनेपदानि भवन्ति, न त्वर्थनियमो भावकर्मणो-रात्मनेपदान्येवेति। अर्थनियमे हि भावकर्मणोस्तव्यादयो न स्युः। अथानवकाशा एते भावकर्मणोर्विधानबलाद् भविष्यन्ति, कर्मणि तर्हि घञ् न स्यात्? को भवतां दायो दत्तः, को भवतां लाभो लब्ध इति? सत्यम्। समानविषयत्वान्नियमस्य परस्मैपदान्येव व्यावृत्यन्ते इति चेद् इत्यध्याहार्यं **प्रतिपत्तिगौरवं** स्यात्। प्रत्ययनियमे वक्ष्यमाणे कर्तरीति वचनान्न दोषः, तर्हि किमेवकारेण कृतमित्युच्यते वक्ष्यमाणेभ्योऽन्यस्माद् धातोर्भावकर्मणोरेवात्मनेपदानि भवन्ति न कर्तरीति साधितम्।

एकस्यापि वचनस्य कालः संख्याकर्मादयश्चार्था वचनात्। उक्तञ्च,

**सुपां कर्मादयोऽप्यर्थाः संख्या चैव तिङाम्।**
**कर्मादयश्च प्रसिद्धो नियमः प्रकृतेषु वा॥**

**भाव सत्तेति**। सा च यादृशी धातुना विधीयते तादृशी संख्या नास्ति! **सदवस्था** हि प्रकारवती। **असदवस्था** च साधनसंबन्धविरोधिनीति। न तामवस्थां धातव आचक्षते। या त्ववस्था साधनसम्बन्धेनाविरुद्धा सा धातुभिराख्यायते। तस्माच्छब्द-धर्मत्वादेकवचनमेव भावे। कर्मणि तु यानि द्विवचनबहुवचनानि तानि साधनसंख्यायां भावे तर्हि प्राप्नुवन्ति, आस्यते भवद्भ्याम्, आस्यते भवद्भिरिति। नैवम्, एकपद-वाच्यस्य साधनस्य संख्यामाख्यातमाचष्टे। एकः पचति, द्वौ पचतः, त्रयः पचन्तीति। एकेन पच्यते, द्वाभ्यां पच्यते, त्रिभिः पच्यते इति। कथं तर्हि पाकः, पाकौ, पाका इति, भावभेदापेक्षाण्येतानि न पक्तृपाच्यभेदापेक्षाणि। सदवस्थो हि कृतां भाव इति धातुसंज्ञायामुक्तमेव। भूयमानमित्यत्र पुनरेकवचनमेव तादृशलक्षणस्यासत्त्वभूतस्य युष्मदस्मद्भ्यां सत्त्वभूताभ्यां सामानाधिकरण्यस्यासम्भवात् कथम् उष्ट्राशिका आस्यन्ते हतशायिकाः शय्यन्ते इति भावेऽत्र नात्मनेपदम्, किन्तर्हि कर्मणि उष्ट्राशनम् उष्ट्राशिका हतशयनं हतशायिका तस्य द्रव्यत्वाभेदे सति द्विवचनबहु-वचनानि भवन्तीति मनसि कृत्वाह-देवदत्तेन मास आस्यते इत्यादि ॥४९०।

[वि० प०]

आत्मने०। भावः सत्तेति। ननु यदि असंख्या सत्ता तत् कथम् एकवचनमपि, अस्याप्येकत्वसंख्यायां विधीयमानत्वात्। तदयुक्तम्, द्वित्वादिसंख्याविशेषरहितत्वाद-संख्यत्वं सत्तायाः प्रख्याप्यते, न तु उत्सर्गसिद्धैकत्वसंख्यापि नास्ति प्रमाणतः सिद्धसत्ताया

द्वित्वादिविशेषाभावेऽपि एकत्वस्यापह्नोतुमशक्यत्वात् । अत एवोत्सर्गसिद्धेरेकत्वविधीयमानमेकवचनमौत्सर्गिकमुच्यते । क्रियते इति । **"यणाशिषोर्ये"** (३।६।१३) इति इकारागमः । शय्यते इति । **"अयीर्ये"** (३।६।१९) इत्यम् । सुप्यते इति । **"स्वपिवचि०"** (३।४।३) इत्यादिना सम्प्रसारणं वकारस्योकारः । यथा हि कालादीनां कर्मत्वं सिद्धम्, अकर्मकैरपि धातुभिर्योगे तथा **"यत् क्रियते तत् कर्म"** (२।४।१३) इत्यत्रैव दर्शितम् ।।४९०।

**[क० च०]**

आत्मने० । क्र्यादिरिह नानुवर्तते वक्ष्यन्ते इति निर्देशात् । **"येन क्रियते तत् करणम्"** (२।४।१२) इत्यादिनिर्देशाद् व्यञ्जनादिति नानुवर्तते तत्सम्बन्धात् । सार्वधातुके इत्यपि नानुवर्तते । **वस्तुतस्तु** अन्वयादेव नानुवृत्तिः । अथ सार्वधातुकविषये भावकर्मणोरात्मनेपदानि भवन्तीत्यन्वयो भविष्यति चेत्, न । निमित्तसप्तम्या विषयत्वकल्पने गौरवं स्यात् । **केचित्तु "सार्वधातुके यण्"** (३।२।३१) इत्यत्र सार्वधातुकग्रहणमिदं ज्ञापयति, तन्न । सार्वधातुकग्रहणाभावे पाक इत्यादौ कृदन्तभावेऽपि यण्प्रसङ्गादिति ब्रूमः । ननु भावश्च कर्म चेति युक्तार्थे व्यञ्जनान्तस्य यत्सुभोरित्यतिदेशबलात् लिङ्गान्तनकारलोपः कथं न स्यात् ? सत्यम् । अत एव निर्देशादुत्तरपदे न भवति, तेन परमदण्डिनावित्यादिकं सिद्धम् ।

[1]ननु सूत्रमिदं किमर्थम्, सामान्येन धातुमात्रात् त्यादयः सिद्धा एव ? सत्यम् । सिद्धे सति पुनर्विधानं नियमार्थम् । स च प्रत्ययनियमो यथा धातोर्भावकर्मणोरेवात्मनेपदानि भवन्ति नान्यत् । ननु कर्मणि भावे चेत्यादिना सामान्यविधानादेव सिद्धे प्रकरणमिदं नियमार्थम्, तदभावा**दस्मन्मते** कथं नियमः ? सत्यम्, कर्तृकर्माद्यर्थे विधानं विना **"बहुषु बहुवचनम्"** इत्यादिकम्, **"युष्मदि मध्यमः, नाम्नि प्रयुज्यमानेऽपि प्रथमः"** (३।१।६; ५) इत्यादिकं चानर्थकमेव स्यात् । न हि धातोरर्थे एकत्वादिसङ्ख्यास्ति, येन धातोरर्थे भविष्यतीति वाच्यम् ? किञ्च विभक्तिसंज्ञाया **अन्वर्थबलादेव** कर्तृकर्माद्यर्थे भवतीति लभ्यते । भावकर्मणोरात्मनेपदान्येवेति नियमस्तु न संभवति, भावे कृत्प्रत्ययस्यापि सम्भवात् । अथ समानविषयत्वात् परस्मैपदमेव । परस्मैपदमेव नियमेन व्यावृत्यते इति चेत्, **प्रतिपत्तिगौरवं** स्यात् ।

---

१. श्रीपतिना "सुभोर्नोत्तरपदस्य" (कात० परि०, स० ३३) इति सूत्रं कृतम् । अयमर्थः– सुभोर्यदतिदिष्टं तदुत्तरपदे बोद्धव्यम्, न तूत्तरपदस्य । अत एव निर्देशाद् अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तेऽपि ङणना इत्यनेन द्वित्वं च न स्याद् इति कुत्रचित् पाठः ।

ननु यदि भावकर्मणोरात्मनेपदान्येव भवन्ति तदा कथं रोचते, वर्धते, कुरुते इति ? सत्यम्, **"कर्तरि रुचादि०"** (३।२।४२) इत्यादिविशेषविधानात्, तर्हि क्व नियमव्यावृत्तिश्चेद् भवतीत्यादौ तदयुक्तम्, **"कर्तरि परस्मैपदम्"** (३।२।४७) इत्यनेन परस्मैपदमेव भविष्यति न त्वात्मनेपदम्। ततो नियमेन किं कृतम् इति चेद् उच्यते – वक्ष्यमाणेभ्यो धातुभ्योऽन्यस्माद् धातोर्भावकर्मणोरेवात्मनेपदानि भवन्ति। न कर्तरीति साधितम्। यत्तु **"शेषात् कर्तरि"** (३।२।४७) इति सूत्रम्, तदपि कर्तर्येवेति नियम-परम्, न तु **भावे कर्मणि** च। एवं च सति कर्तर्यात्मनेपदस्यापि प्राप्तौ भावकर्मणोरेवात्मनेपदमिति नियमः क्रियते।

ननु यदि भावकर्मणोरेवात्मनेपदान्येव भवन्ति, तदा कथम् **'एति जीवन्तमानन्दो नरं वर्षशतादपि'** (वा० रा० ५।३४।६; ६।१२९।२) इति, **"रोगो रुजति रोगिणम्"**। तथा च किं विचेष्टितम् इत्यानन्दरोगयोर्भावयोः स्तुतेश्च कर्मण्येवात्मनेपदमेव स्यात् ? सत्यम्। प्रत्यासत्त्यात्मनेपदप्रकृतेर्भावे तत् कर्मणि चात्मनेपदमेव विधीयते इति न दोषः। न चात्र प्रकृतिवाच्यो भावस्तत् कर्म वा प्रत्ययार्थ इति। ननु **पाणिनिमते** भावेऽकर्मकधातुभ्य इत्यस्ति। **अस्मन्मते** सकर्मकादपि भावे स्यात् ? सत्यम्। सूत्रे कर्मणोरिति कृतेऽपि द्विवचनबलात् क्रियावचनः कारकवचनश्च कर्मशब्दोऽभि-ज्ञाप्यते, तथापि यद् भावग्रहणं तदकर्मकधातोरेव भावे भवतीति ज्ञापयति। एवं **"भावकर्मणोः कृत्यक्तखलर्थाः"** (४।६।४७) इति **वररुचिः। पाणिनिनापि** 'भावे चाकर्मकधातुभ्यः' इत्युक्तम्। अत एव कर्मवत्सूत्रेऽकर्मकत्वाद् भावे प्रत्ययः सिध्यतीति **टीकायां** वक्ष्यते। तर्हि कथं 'पच्यते देवदत्तेन' इति भावे प्रत्यय इति चेद् अविवक्षितकर्मत्वाद् भवत्येवेति। न विद्यते कर्म येषां ते **अकर्मका** इति व्युत्पत्तेः। **त्रिमुनिसंग्रहकारमते** तु पूर्वम् अविवक्षितकर्मत्वात् पच्यते मासान् इत्यपीच्छति। यत्तु क्वचित् सकर्मकादपि भावे कृत्प्रत्ययः। एवं सति 'कां दिशं गन्तव्यम्' इति **कादम्बरी**प्रयोग उपपन्नो भवतीति, तेनोक्तं तदपि प्राक् कर्मविवक्षायामपि भावे प्रत्यय इत्याशयेनैवेति लक्ष्यते। एवं च सति **"भावाख्यातं ध्रौव्यात्"** (कात० परि० का० ९६) इति **श्रीपतिसूत्रं प्रलपितमात्रम्** ॥४९०।

**[समीक्षा]**

'आस्यते, शय्यते, सुप्यते भवता। क्रियते कटो देवदत्तेन' इत्यादि शब्दरूपों को भाव – कर्म अर्थ में सिद्ध करने के लिए पाणिनि तथा शर्ववर्मा दोनों ही आचार्यों ने आत्मनेपद का विधान किया है। पाणिनि का सूत्र है – "भावकर्मणोः" (अ० १।३।१३)। सत्ता को भाव कहते हैं। इस अर्थ में औत्सर्गिक एकवचन ही होता

है, द्विवचन – बहुवचन नहीं। टीकाकार के अनुसार कारकों के प्रवृत्तिविशेषरूप क्रिया को भाव कहा गया है, और वह क्रिया चलन-अचलनरूप दो प्रकार की होती है। कलापचन्द्रकार सुषेण विद्याभूषण ने पाणिनि – वररुचि – संग्रहकार आदि आचार्यों के मत उद्धृत किए हैं।

**[विशेष वचन]**

१. भावः सत्ता। औत्सर्गिकमेकवचनमेवासंख्यत्वात् (दु० वृ०)।

२. कालाध्वभावदेशानां कर्मसंज्ञा सिद्धैवेति (दु० वृ०)।

३. भावः क्रिया, साधनव्यापारस्य विशेषणम्। यथोक्तम् – कारकाणां प्रवृत्ति-विशेषः क्रियेति। सा च द्विधा – चलनात्मिका अचलनात्मिका च (दु० टी०)।

४. अर्थनियमे हि भावकर्मणोस्तव्यादयो न स्युः (दु० टी०)।

५. सदवस्था हि प्रकारवती, असदवस्था च साधनसम्बन्धविरोधिनीति। न तामवस्थां धातव आचक्षते, या त्ववस्था साधनसम्बन्धेनाविरुद्धा, सा धातु-भिराख्यायते। तस्माच्छब्दधर्मत्वादेकवचनमेव भावे (दु० टी०)।

६. प्रमाणतः सिद्धसत्ताया द्वित्वादिविशेषाभावेऽपि एकत्वस्यापह्नोतुमशक्य-त्वात्। अत एवोत्सर्गसिद्धेरेकत्वविधीयमानमेकवचनमौत्सर्गिकमुच्यते (वि० प०)।

७. सिद्धे सति पुनर्विधानं नियमार्थम् (क० च०)।

८. एवं च सति कर्तर्यात्मनेपदस्यापि प्राप्तौ भावकर्मणोरेवात्मनेपदम् इति नियमः क्रियते (क० च०)।

९. एवं च सति "भावाख्यातं ध्रौव्यात्" इति श्रीपतिसूत्रं प्रलपितमात्रम् (क० च०)।

**[रूपसिद्धि]**

१. **आस्यते** भवता। आस् + यण् + ते (भाववाच्य)। 'आस उपवेशने' (२।४५) धातु से भाववाच्य में प्रकृत सूत्र द्वारा आत्मनेपद, वर्तमानासंज्ञक प्रथमपुरुष – एकवचन 'ते' प्रत्यय, "सार्वधातुके यण्" (३।२।३१) से यण् प्रत्यय तथा ण् – अनुबन्ध का प्रयोगाभाव।

२. **शय्यते** भवता। शीङ् + यण् + ते (भाववाच्य)। 'शीङ् स्वप्ने' (२।५५) धातु से भाववाच्य में प्रकृत सूत्र द्वारा आत्मनेपद, वर्तमानासंज्ञक प्रथमपुरुष – एकवचन 'ते' प्रत्यय, "सार्वधातुके यण्" (३।२।३१) से यण् प्रत्यय, ण् –अनुबन्ध का प्रयोगाभाव तथा "अयीर्ये" (३।६।१९) से शीङ्धातुघटित ईकार को अयादेश।

३. **क्रियते कटो देवदत्तेन** । कृ+ यण् + ते (कर्मवाच्य) । 'डु कृञ् करणे' (७।७) धातु से कर्मवाच्य में प्रकृत सूत्र द्वारा आत्मनेपद, ते-प्रत्यय, "सार्वधातुके यण्" (३।२।३१) से यण् प्रत्यय, "यणाशिषोर्ये" (३।४।७४) से इकारागम तथा "रम् ऋवर्णः" (१।२।१०) से ऋकार को रकारादेश ॥४९०।

## ४९१. कर्मवत् कर्मकर्ता [३।२।४१]

### [सूत्रार्थ]

कर्मकर्ता=जो कर्म कर्ता के रूप में विवक्षित होता है, उसको कर्मवद्भाव हो जाता है ॥४९१।

### [दु० वृ०]

कर्म चासौ कर्ता चेति कर्मकर्ता कर्मवद् भवति ।

**क्रियमाणं तु यत् कर्म स्वयमेव प्रसिध्यति ।**
**सुकरैः स्वैर्गुणैः कर्तुः कर्मकर्तेति तद् विदुः ॥**

लूयते केदारः स्वयमेव, अभेदि कुसूलः स्वयमेव, कर्मवद्भावादात्मनेपदम् । वत्करणं स्वाश्रयार्थम् । तेन भावेऽपि 'पच्यते ओदनेन स्वयमेव' । त्यादित्वान्न तव्यादिषु कर्मवद्भावः । कर्तव्यं कटेन स्वयमेव, ईषत्करः कटेन स्वयमेव । कर्मकर्तेत्यभेदाद् भेदे तु न स्यात् – भिद्यमानः कुसूलः पात्राणि भिनत्ति, तथा अन्योऽन्यमाश्लिष्यतः । आत्मानं हन्ति आत्मेति । **द्विविधो ह्यत्रात्मा** तथा पचत्योदनम्, राध्यति स्वयमेव धातुभेदात् । गच्छति ग्राममसौ गम्यते इति न स्यात् । क्रियाश्रयः कर्तैव केवलं कर्मेति भेदात् । उक्तार्थतापि कर्मकार्यम्, तेन न द्वितीया, धात्वधिकाराच्च । कर्मकर्तेति किम् ? साध्वसिश्छिनत्ति, साधु स्थाली पचति । कथं ब्रूते कथा स्वयमेव । अचीकरत कटमसौ स्वयमेव ? वचनं प्रेषणादि च कर्तृस्थमेव, आत्मनेपदं तु फलवद्विवक्षयेति मतम् । **कार्यातिदेशोऽयम्** ॥४९१।

### [दु० टी०]

कर्मवत् । कर्म चासौ कर्ता चेति । ननु कर्म कथं कर्ता, अथ कर्ता कथं कर्मेति विप्रतिषिद्धत्वाद् भिन्नाधिकरणमेव ? सत्यम्, धातोः कस्यचित् कश्चिदर्थभागः कर्मप्रधानफलरूपो विक्लित्त्यादिः । कश्चित् कर्तृस्थो गुणो भावनारूपोऽधिश्रयणादिः । तत्र यदा कर्तृस्थे धातोः स्वस्यार्थभागे सुकरत्वेन कर्मण्यध्यारोपितायां भावनायां धातुर्वर्तते तदा तत् कर्मकर्ता भवतीत्याह – क्रियमाणं त्वित्यादि । **अन्य** आह – कर्मकर्तरि स्वतन्त्रकर्मत्वमस्ति, इह हि यस्मादर्थे भिद्यते कुसूलः स्वयमेवेति नान्यः

कर्ता दृश्यते, क्रिया चोपलभ्यते । किञ्च भोगविग्रहवतैव क्रियायाः कर्त्रा भवितव्यम्, न वातातपकाला अपि कर्तारः स्युः । नैतदेवम्, निर्वाते निरातपे चाविकृतकुसूलः स्वयमेव भिद्यते तस्य नान्यः कर्ता भवति, अस्ति काचिदवस्था कुसूलस्य यस्मात् कर्तृव्यापारमनपेक्षमाण एव भिदामासादयति तामवस्थामाश्रित्य कर्ता । अत्र चात्मसंयोगे कर्तुः कर्मदर्शनादिति नादृतम् । केदारशब्देन च तत्स्था व्रीहय आख्यायन्ते ।

ननु लूयते अत्र द्विधाभवनम्, द्विधाभवनं वाऽभिधेयं स्यात् । सुकरतायां तु केदारो व्यापारेणैव वर्तते । तत्र कथम् अधातुवाच्यस्यार्थस्य केदारः कर्ता स्यात् । उच्यते – सुकरतोपाधिके द्विधाभवने लुनातिर्वर्तते एव, तत्र च केदारस्य कर्तृत्वमिति । कर्मवद्भावादात्मनेपदमिति ओदनादेर्देवदत्तादिव्यापारेण व्याप्यमानस्य कर्मत्वे सिद्धे कर्तृत्वविवक्षायामपि कर्मप्रतिबन्धकार्यप्रतिपत्त्यर्थोऽतिदेशः इति । एवम् उदुम्बरं पचति रविर्वायुर्वा पच्यते फलमुदुम्बरं स्वयमेव । वतिरयं सादृश्योपादाने, **सादृश्यं च रूपतो व्यपदेशतो निमित्ततः कार्यतः शास्त्रतो वा भवति ।** कर्मणो निमित्तं व्याप्यत्वम्, न तु कर्तुर्विरुद्धधर्मत्वात् । प्रवृत्तिनिवृत्तिलक्षणः पुनर्व्यपदेशः । तथाहि यत्र कर्मव्यपदेशोऽस्ति तत्र शास्त्रं कार्यं च प्रवर्तते, व्यपदेशः संज्ञासंज्ञिसम्बन्धान्न व्यतिरिच्यते । वतिमन्तरेण च वत्यर्थो गम्यते एवेत्याह – वत्करणं स्वाश्रयार्थमिति । तेन भावेऽपीति । भावो हि भवितरि सति भवतिनाऽन्तरीयकत्वात् कर्तुः प्रबन्धनेन कार्यं स्यादिति । अथवा कर्मत्वेऽपनीते कर्तृत्वे सति धातुरकर्मक इति भावे भवति ।

**पूर्वाचार्यास्तु** सञ्ज्ञामाचक्षते कर्मैव कर्मवत् कर्तुरिह कर्मणा क्रियाकृतमेव सादृश्यम् । कर्मणा तुल्यक्रियः कर्ता कर्मसंज्ञो भवतीत्यर्थः । भिद्यमानः कुसूलः स्वयं भिद्यते कुसूलेन, भावस्य विवक्षितत्वादिति मन्यन्ते । कृत्यक्तखलर्थेषु प्रतिषेधो न वक्तव्य इत्याह – त्यादित्वादित्यादि ।आख्यातमिदं प्रकरणं कुतः कृत्प्रकरणे प्राप्तिरिति भावः । ईषत्कर इति खलन्तः पुंलिङ्ग एव । कर्मकर्तेत्यभेदादिति एका भेदनक्रिया देवदत्तस्य तया कुसूलः कर्म कुसूलस्य भेदनक्रियायां पात्राणि कर्मेति । यदा अन्योऽन्यमाश्लिष्यतस्तदा कर्तैवाश्लिष्यमाणश्च कर्मैवेति । **द्वाविहात्मानौ अन्तरात्मा शरीरात्मा च,** अन्तरात्मा तत् करोति येन शरीरात्मा सुखदुःखमनुभवति । शरीरात्मा च तत् करोति येनान्तरात्मा सुखदुःखमनुभवति । आत्मेति गम्यमानमपीह सुखार्थं प्रयुज्यते, नात्र पचतिरकर्मकत्वेन वर्तते, अपि तु राध्यति धात्वन्तरमिति शब्दान्तरत्वात्, प्रतीयमानश्च कर्मवद्भावो बहिरङ्गो धातुक्रियाकारकभेदेन भवतीति कर्मवद्भावस्य पदमुदाहरणं न वाक्यम् – पचत्योदनम्, पच्यते ओदनः स्वयमेवेति द्वे वाक्ये । अत्र पूर्वं वाक्यम् **बालकव्युत्पादनार्थमेव कैश्चिदु**पादीयते ।

अथवा वाक्यमुदाहरणम्, तथापि न दोषः कथम् एकस्या आकृतेश्चरितार्थः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च भविष्यतीति । **अन्य**स्त्वाह – यस्मिन् धातौ कर्म कर्तेति विशेषणान्न भवति, एतच्च धात्वधिकारादिति । 'साध्वसिश्छिनत्ति, स्थाली पचति' इति करणाधिकरणयोरत्र कर्तृत्वेनाध्यारोपो न कर्मण इति करणाधिकरण-व्यापारोऽपि प्रधानक्रियाविशेषो धातुवाच्य एवैकवाक्यतानिमित्तत्वात् । कथमित्यादि । यदि ब्रूत इति कर्मवद्भावादात्मनेपदं यण् प्रसज्येत, तदा अचकथत् स्वयमेवेति च प्रसज्येत । अचीकरद् इतीनन्तात् कर्तर्यद्यतन्यां चणो विधीयमानस्याप्रसङ्गः । परिहार-माह – वचनं प्रेषणादि च कर्तृस्थमेवेति विवक्षायाः प्राधान्यात् कर्मकर्तृत्वं नास्तीति भावः । आत्मनेपदं तु फलवद्विवक्षयेति । मतमिति । मतान्तरमेतत् फलवतः कर्तु-र्विवक्षा फलवति कर्तर्यात्मनेपदमित्यर्थः । इह तु रुचादेराश्रयणादेवात्मनेपदम् । स्वयं-शब्दस्य चात्मानमित्यर्थः ।

एवं भूषाक्रियाणां च 'भूषयते कन्या स्वयमेव, अबुभूषत कन्या स्वयमेव, मण्डयते कन्या स्वयमेव, अममण्डत कन्या स्वयमेव' । तथा श्रयतेश्च – श्रयते कटं छात्रः, अशिश्रियत कटः स्वयमेव । तथा अरुद्ध गौः स्वयमेव, अरोधि गौः स्वयमेवेत्यपि प्रतिषेधे कर्मैवात्र न विशेषः, स्वयमेवेति सम्बन्धात् । तथा आहते गौः स्वयमेवात्मानमित्यर्थः । तथा स्रवत्यादीनां प्रतिषेधो न वक्तव्यः, क्रियाभेदात् स्रवति कुण्डिका उदकम्, स्रवति कुण्डिकाया उदकम्, स्रवन्ति वलीकान्युदकम्, स्रवति वलीकेभ्य उदकम्, स्रवति कुण्डिका उदकम् इति विसृजतीति गम्यते । कुण्डिकाया उदकमिति निष्क्रामतीति गम्यते । स्रवन्ति वलीकान्युदकम् इति मुञ्चन्तीति गम्यते, स्रवति वलीकेभ्य उदकम् इति पततीति गम्यते ।

**कार्यातिदेशोऽयमिति** । अतिदिश्यापि शास्त्रं व्यपदेशं वा पुनस्तत्प्रतिबन्धं **कार्य-मन्वेष्टव्यम्** । तस्माद् वरं कार्यातिदेश एव लाघवादिति भावः । किञ्च कार्यातिदेशे यणादयोऽनेन विधीयन्ते इति ये कर्त्राश्रयाः कर्तर्यनादयः प्राप्नुवन्ति ते परत्वादेव यणादिभिर्बाध्यन्ते । शास्त्रातिदेशे तु स्वैरेव शास्त्रैर्यणादयः प्राप्यन्ते इति परत्वात् कर्मकर्तर्यनादयः स्युः । अथ **"सार्वधातुके यण्"** (३ । २ । ३१) इत्यत्र भावकर्मणोरित्य-नुवर्तनात् कर्माश्रिता एव विधयो भवन्तीति शास्त्रातिदेशश्चासम्मोहन इति युक्तम् । कार्यातिदेशपक्षेऽपि तत्र भावकर्मणोरित्यधिकारः **सुखप्रतिपत्त्यर्थ** एव । ननु कर्मणि पदं व्युत्पाद्य स्वयंशब्दसंबन्धात् कर्ता प्रतीयते । कर्मविहितस्याप्यनिवर्तकता पश्चात् कालभावित्वेन बहिरङ्गत्वादिति ? सत्यम्, **पदसंस्कारकमेव व्याकरणम्,** किन्तु **प्रतिपत्तिगौरवं** स्यात् ॥४९१।

[वि० प०]

कर्म । कर्म चासौ कर्ता चेति **कर्मकर्ता** । ननु कर्तृकर्मणोरत्यन्तभेदात् कथमिह कर्मधारयः । तत्र यदि कर्ता न कर्म, कर्म चेन्न कर्तेत्याह – क्रियमाणं त्वित्यादि । कथं स्वयमेव प्रसिध्यतीत्याह-सुकरैरित्यादि । स्वैरित्यादि । स्वैरात्मीयैर्गुणैः कर्तुः सुकरैरित्ये-तदुक्तं भवति । यदाह कर्ताधिश्रयणादिलक्षणात्मसाध्यव्यापारं सुकरत्वेन विवक्षिते कर्मणि निवेशयति नाहमिदं करोमि, किन्तर्हि स्वयमेव एतदात्मानमभिनिर्वर्तयतीति **विवक्षा**, तदैकस्यापि कर्मत्वं कर्तृत्वं च युज्यते इत्यर्थः । कर्मवदभावात् पूर्वेणैव कर्मण्यात्मनेपदं तस्मिंश्च यणिचौ प्रत्ययावित्येतदेवाह – कर्मवद्भावादात्मनेपदम् इति कर्मणीति शेषः । इह वत्करणमन्तरेण संज्ञासूत्रमिदं स्यात् कर्मकर्ता कर्मसंज्ञो भवति इति । अथ परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेण वत्यर्थं गमयति । यथा गौर्वाहीकः, सिंहो माणवकः इति । ततोऽयमतिदेशो भविष्यतीति चेत् ? सत्यम् । किन्तु व्यपदेशातिदेशोऽपि स्यात्, स च संज्ञातो न भिद्यते इति पूर्वक एवार्थः प्रसज्येत, तस्मिंश्च सति कर्मकर्तुः कर्मसंज्ञकत्वात् कर्मण्येवात्मनेपद स्यात्, भावे वत्करणे सति कार्यातिदेशोऽयं भवति । तेन कर्मकर्तुरकर्मण एव सतः कर्मकार्यं विधीयते, न तु स्वाश्रयः कर्तृत्वम् अकर्मकस्वभावमप्यपनयति तस्य तत्राव्यापारात् ।

अतिदेशो हि कर्मकर्तुरप्राप्तं कर्मकार्यमुपनेतुं विधीयमानः कथमिह कर्तृत्वम-पनयेत् । अत एव कार्यातिदेशोऽयमिति वक्ष्यतीत्याह – वत्करणं स्वाश्रयार्थम् इति । अतिदेशमन्तरेण यद् भवति तत् स्वाश्रयत्वं कर्तृत्वं तदर्थमित्यर्थः । ततः किमित्याह – तेन भावेऽपीति । भवितारमन्तरेण भावो न सम्भवति भवितृत्वात् कर्तुः प्रतिपत्तिः । अतस्तत्प्रतिपन्नमेव कार्यं दर्शयितुमोदनेनेति कर्तरि तृतीयाम् आह – **प्रकरणस्य प्रकरणमेव नियामकम्** इत्याह – त्यादित्वादित्यादि । अन्यथा कर्मणि तव्यप्रत्यये कर्तव्ये कर्तव्यः कटः स्वयमेवेत्यपि स्यादिति भावः । ईषत्करः इति । **"ईषद्दुःसुषु"** (४।५।१०२) इत्यादिना भावे खल् । तदन्तश्च स्वभावात् पुंलिङ्ग एव ।

कर्मकर्तेत्यभेदादिति । अभेदे हि कर्मधारयो भवति । तेन यत्र भेदगन्धोऽप्यस्ति, तत्र न भवति भिद्यमानः कुशूलः पात्राणि भिनत्तीति । अत्र तु देवदत्तगतया क्रियया कुशूलस्य कर्मत्वम् । पात्राणां च यत् कर्मत्वं तत् कुशूलगतया क्रिययेति भेदः । एतेनैकद्रव्याधारयैव क्रियया यस्य कर्मत्वं कर्तृत्वं च स कर्मवद् भवतीति दर्शितम् । तथेति आश्लिष्यमाणगतया क्रियया कर्मत्वम्, स्वगतक्रियया कर्तृत्वम् इत्यत्रापि अस्ति भेदः । **द्विविधो ह्यत्रात्मेति अन्तरात्मा बहिरात्मा च** । अन्तरात्मा सुखदुःखाश्रयः, बहिरात्मा च तत् करोति येनान्तरात्मा च सुखदुःखमनुभवतीति अन्तरात्मगतया क्रियया बहि-

रात्मनो दुःखानुभवनमेव हननं तथा बहिरात्मगतया क्रियया चान्तरात्मन इति भेदः। गच्छतीत्यादि।

असाविति ग्राम उच्यते, गम्यते ग्रामः स्वयमेवेति प्रयोगो न स्यात्, कर्मवद्भावस्याभावात्, स एव कथमित्याह – क्रियाश्रयः कर्तैवेति, पादविहरणात्मिका गतिक्रिया देवदत्त एव समवेता, तेन तस्यैव कर्तृत्वं ग्रामस्य तु कर्मत्वमेवेति भेदः। ननु कर्मकर्तुरोदनादेः कर्मवद्भावो विधीयते ततो द्वितीया कथं न भवति ? आत्मनेपदेन तु कर्मत्वमुक्तमिति चेद् ओदनादेः किमायातमित्याह – उक्तार्थतापि कर्मकार्यमिति। तत् कर्मत्वमोदनादेरेव कर्मण इत्युक्तम्। अतस्तदपि तस्य कार्यमित्यर्थः। किञ्च धातुरनुवर्तते ततो धातोरेव कर्मकार्यं प्रति कर्मवद्भावो विधीयते, न लिङ्गस्येति। अतोऽपि न द्वितीयेति चकारेण सूचयन्नाह – धात्वधिकाराच्चेति। कर्मकर्तेत्यादि। करणाधिकरणयोरेवात्र कर्तृत्वविवक्षा न कर्मण इत्यर्थः।

इन्श्रन्थिग्रन्थिब्रूञामात्मनेपदाकर्मकाणां प्रतिषेधः **कैश्चिदु**पसंख्यायते। यथा कारयते कटः स्वयमेवेति। इन्निति सामान्येन गृह्यते। तेन उत्पुच्छयते गौः स्वयमेव, चोरयते गौः स्वयमेवेत्यपि भवति। श्रथ्नीते माला स्वयमेव, ग्रथ्नीते माला स्वयमेव, ब्रूते कथा स्वयमेव। आत्मनेपदाकर्मकाणामिति आत्मनेपदविधाकर्मका ये धातवस्तेषामित्यर्थः। विकुर्वते सैन्धवाः स्वयमेव। कृञो विपूर्वाद् अकर्मकश्चेति रुचादित्वादात्मनेपदम्। एतेषु यदि कर्मवद्भावः स्यात् तदा कर्मण्यात्मनेपदे यण् प्रसज्येत। अद्यतन्यामिच् प्रत्ययश्चेति, तदिह न सिध्यतीति चोदयन्नुपलक्षणमाह – कथमित्यादि। अचीकरतेति। कर्मवद्भावस्याभावाद् **"भावकर्मणोश्च"** (३।२।३) इतीच् प्रत्ययो न भवति, **"श्रिद्रुस्रुकमिकारितान्तेभ्यः"** (३।२।२६) इत्यादिना चण्। **"इन्यसमानलोपोपधायाः"** (३।५।४४) इत्यादिना ह्रस्वः, द्विर्वचनम्, **"अलोपे समानस्य"** (३।३।३५) इत्यादिना सन्वद्भावादित्त्वम्, **"दीर्घो लघोः"** (३।३।३६) इति दीर्घः। परिहारमाह – वचनमित्यादि। वचनं वक्तरि, प्रेषणादि च प्रयोक्तरि इति स्थितम्, न तु कथाकटयोः कर्मणोरिति। न तयोः कर्मकर्तृत्वं भवतीति भावः, तत् पुनर्विवक्षायाः प्राधान्यादिति भावः। **मतमिति मतान्तरमित्यर्थः**।

इह रुचादिसमाश्रयणादात्मनेपदं तथा चोपलक्षणम्। किरादिश्रन्थिग्रन्थिसनन्ताः कर्मकर्तृस्था इति रुचादौ **गणसूत्रमुक्त**म्। इह **निमित्त – व्यपदेश – रूप – शास्त्र – कार्यभेदादतिदेशोऽनेकविधः**। तत्र निमित्तातिदेशो न सम्भवत्येव कर्मणो निमित्तं व्याप्यत्वं तत् कथं कर्तर्यतिदेष्टुं पार्यते कर्तृकर्मणोर्विरुद्धधर्मत्वाद् व्यपदेशातिदेशोऽपि नैव वत्करणादित्युक्तमेव। रूपातिदेशः कथं न भवतीति चेत् कर्मणो रूपं किन्तदिति न

विद्मः, यणादिकमिति चेत् कार्यातिदेश एवायं किमुच्यते रूपातिदेश इति । शास्त्रातिदेशोऽपि न युज्यते यतोऽतिदेश्यमपि शास्त्रं तत् प्रतिबन्धमेव कार्यमनुसर्तव्यम् । अपि चात्र पक्षे **"सार्वधातुके यण्"** (३।२।३१) इत्येवमादिभिरेव शास्त्रैरतिदिष्टैर्यणादयो विधेयाः । तत्र च कर्मकर्तरि परत्वादनादयोऽपि विकरणा भवेयुः, वत्करणस्य स्वाश्रयत्वेन कर्तृत्वप्रतिबन्धस्यापि कार्यस्य सम्भवात् । कार्यातिदेशपक्षे तु सकलमनेनैव कार्यमित्यस्यैव परत्वाद् यणादय एवेत्याह – **कार्यातिदेशोऽयमिति** ॥४९१।

**[क० च०]**

कर्मवत्० । पूर्वसूत्रे दृष्टत्वाद् अत्रापि **कर्मशब्दः कारकवचनो** न तु क्रियावचनः । अत्र प्रथमान्ताद् वतिप्रत्ययः कर्मकर्त्रेत्यनेन सामानाधिकरण्यान्न तु सप्तम्यन्तात् । तदा हि कर्मकर्तुरिति निर्देष्टुं योग्यम्, यथा कुट्याम् इवाचरति प्रासादे इति । ननु कर्मकर्तेत्यत्र किं बहुव्रीहिः, किं वा द्वन्द्वः, किं वा षष्ठीतत्पुरुषः, किं वा कर्मधारयः, असमस्तं वा पदम् ? न तावद् बहुव्रीहिः, उभयपदे लक्षणाप्रसङ्गाद् ऋदन्तलक्षणकप्रत्ययप्रसङ्गाच्च । नापि द्वन्द्वः कर्मणः कर्मवद्भावस्य वैफल्यात् । अथ कर्मशब्देनात्र क्रियोच्यते इति चेत् तर्हि इतरेतरे द्विवचनप्रसङ्गात् समाहारे नपुंसकप्रसङ्गाच्च । नापि षष्ठीतत्पुरुषः । यदि कर्मशब्देन क्रियोच्यते तदा कर्मग्रहणमेव व्यर्थं स्यात् । न हि अक्रियायाः कर्ता सम्भवतीति । अथ यदि कर्मशब्देन कारकमुच्यते तदा कर्मणः कर्ता कर्मवद् भवतीत्युक्ते 'कटः क्रियते देवदत्तः' इत्यनिष्टमपि स्यात्, घटं करोति देवदत्तः इत्यादावनिष्टं स्यात् । व्यावृत्तिश्च देवदत्तो भवतीत्यत्र बोद्धव्या ? सत्यम् । षष्ठ्यर्थे लक्षणाप्रसङ्गान्न षष्ठीतत्पुरुषः । निःसन्देहार्थं कर्मणः कर्तेति असमस्ताकरणाच्च । किञ्च कर्मधारये सति अभेदान्वयः षष्ठीतत्पुरुषे च भेदः । **न ह्यभेदान्वयसम्भवे भेदान्वयो ग्राह्य** इति गौरवात् ।

**वस्तुतस्तु** अनिष्टार्थप्रक्लृप्तिभयादेव तत्पुरुषनिरासः । अत एवासमस्तपक्षोऽपि दूरीकृतो वाक्यभेदापत्तेः । तथाहि कर्मक्रिया कर्मवद् भवति कर्ता च कर्मवद् भवतीति । कारकवचने तु कर्मणः कर्मवद्भावो विफलः एवेति **दिक्** । एतन्मनसि कृत्वा **वृत्तिकृद्** आह – कर्म चासौ कर्ता चेति । **असाविति कर्तृपरामर्शः** । कर्मपरामर्शे हि नपुंसकत्वापत्तिः स्यात् । कर्मकर्तेति पदं काकाक्षिन्यायाद् विग्रहवाक्ये कर्मवद् भवतीत्यत्र च सम्बन्धनीयम् । कर्मवद्भवतीति कर्मकार्यभाग् भवतीत्यर्थः । ननु क्रियायाः स्वतन्त्रो यः स कर्ता, कर्तृक्रियया यद् व्याप्यते तत् कर्मेत्युच्यते । ततस्तुल्याधिकरणत्वाभावात् कर्मधारयः कथं स्यात् ? अत एव पञ्ज्यामपि कर्तृकर्मणोरत्यन्तभेदात् कथं कर्मधारय इत्युक्तम् ? तत्र चात्यन्तमिति क्रियाविशेषणम् ?

सत्यम्। कस्यचित् पचूधातोः प्रधानफलरूपो विक्लित्त्यादिरर्थभागः कर्मस्थः। कश्चिदिह गुणीभूतोऽधिश्रयणादिरर्थभागः कर्तृस्थः। एवं भिदेरपि द्वैधीभावोऽ-र्थभागः कर्मस्थः। खड्गोद्यमननिपातादिरर्थभागः कर्तृस्थः, एवमन्येषामपि धातूनां बोध्यम्। तत्र यदा कर्तृस्थेष्वधिश्रयणादिषु सुकरत्वेन कर्मण्येवाध्यारोपितेषु धातुर्वर्तते तदा एकस्यैव कारकस्य कर्मत्वं कर्तृत्वं चेति। एतदुक्तं भवति। पचादिधातुवाच्य-विक्लित्त्यादिकफलभागित्वेन कर्मत्वमध्यारोपिताधिश्रयणाद्याश्रयत्वेन च कर्तृत्वमिति। अतस्तुल्याधिकरणत्वात् कर्मधारयो न दुष्यति।

ननु तथापि कथमेकस्य कारकस्य युगपद् उभयसंज्ञा। **"कारयति यः स हेतुश्च"** (२।४।१५) इति चकारेण निराकृतत्वात्? सत्यम्। **"आत्मनेपदानि भावकर्मणोः"** (३।२।४०) इत्यत्र भावे कर्मणीति भिन्नविभक्तिनिर्देशादेवात्र **विभक्तिविपरिणामेन कर्मणीत्यनुवृत्तिः सिद्धा**। यत् पुनः कर्मकर्तेत्यत्र कर्मग्रहणम्, तद्भूतपूर्वकर्मप्रतिपत्त्यर्थम्। अत एव कर्तृसूत्रे **टीकायां** यदा कर्तृव्यापारेण व्याप्यमानः कर्म भूत्वा कर्ता सम्पद्यते तदा पुनः कर्मकर्तरि पच्यते इति भवतीत्युक्तम्। तथाहि पचादिधातुवाच्यविक्लित्त्यादिफलाश्रयत्वेन ओदनादेः पूर्वं कर्मत्वे जाते पश्चादधि-श्रयणाद्याश्रयत्वेन विवक्षिते कर्तृत्वमुपजायते इति कर्मकर्तोच्यते। एतदनुसन्धानेनैव **वृत्तौ** क्रियमाणं त्वित्याद्युक्तम्।

**अयमर्थः**— क्रियमाणं यद् ओदनादिकं कर्म तत् स्वयमेव प्रसिध्यति सिद्धं भवति कुत इत्याह— सुकरैरिति। स्वैरात्मीयैः कर्मगतक्रियास्वरूपैर्गुणैः कीदृशैः कर्तुः सुकरैः सुखेन क्रियमाणैरित्यर्थः। खल्प्रत्यययोगेऽपि कर्तुरित्यत्र षष्ठ्या; साधुत्वं सम्बन्धे विधीयमानत्वात्। अतो **"न निष्ठादिषु"** (२।४।४३) इति न निषेधः, नञोऽनित्यत्वाद् वा। क्रियाफलस्वरूपैर्गुणैः कर्तुः सुकरैः सुखेन क्रियमाणैरित्यर्थः। तदित्यनेन यदित्यस्य परामर्शः, न तु कर्मकर्तृशब्दस्य पुंसा निर्देशाभावात्। 'लूयते केदारः' इति **वृत्तिः**। अत्र स्वयमेवेति विशेष्यबोधार्थमुक्तम्, न तु पदसाधनोपयोगित्वप्रदर्शनार्थं स्वयमेवेति पदं विनापि 'आयुः परं क्षीयते' इत्यादिप्रयोगदर्शनात्। एतेन लूयते केदारः इति कर्मणि व्युत्पाद्य स्वयंशब्दसम्बन्धेन कर्मकर्तृत्वप्रतीतिरर्थाद् भविष्यति किं सूत्रेण? सत्यम्, **प्रतिपत्तिगौरवनिरासार्थमिति** कस्यचिन्निर्वचनमपि निराकृतमिति।

ननु कार्यातिदेशोऽयमिति वक्ष्यति, ततश्च कर्मवद् भवतीत्युक्ते कर्मकार्यभाग् भवतीत्यर्थः सम्पद्यते। तच्च कर्मकार्यं धातौ लिङ्गे च दृश्यते। ततश्च यथा धातोः **"आत्मनेपदानि भावकर्मणोः"** (३।२।४०) इत्यनेनात्मनेपदं स्यात्, तथा केदारात् कर्मकर्तरि कर्मबोधिका द्वितीयापि स्यात्। आत्मनेपदेनैव कर्मकर्तृत्वाभिधानाद् उक्तार्थत्वे

द्वितीया न भवतीति चेत् पर्यायेण स्यात् । कदाचिद् आत्मनेपदं कदाचिद् द्वितीयेति । ततश्च 'ओदनं पचति स्वयमेव' इत्यपि प्रयोगः स्यात् । अत्र कर्मवद्भावादात्मनेपदं न, कर्मकर्तरि द्वितीयैव तस्य लिङ्गस्योक्तत्वात् ।

न च परत्वादात्मनेपदमेव स्यादिति वाच्यम् । अस्य सूत्रस्य कार्यातिदेशत्वाद-नेनैव कर्मकार्यं विधीयते । न ह्येकस्मिन् सूत्रे पौर्वापर्यसम्भवोऽस्ति । किञ्च कर्मकर्ता हि केदारस्तस्य कर्मकार्येऽतिदेष्टव्ये साक्षात् केदारादेर्यत् कार्यं सम्भवति, तत्प्रत्यासत्त्या तदेवातिदेष्टव्यमिति द्वितीयैव स्यान्नात्मनेपदमिति ? सत्यम् । धातोरित्यधिकारोऽस्ति, ततश्च धातोः कर्मवत् कर्मकर्तेत्युक्ते धातोरेव कर्मकार्यं भवतीति पश्चाद् वक्ष्यति । एतदनुसन्धानेनैव कर्मवद्भावादात्मनेपदमिति **वृत्तावुक्तम्** । अत एव **पञ्जीकृतापि** कर्मवद्भावात् पूर्वेण कर्मण्यात्मनेपदमित्युक्तम्, तत्तु कथं संगच्छते ? कार्यातिदेशत्वाद-नेनैव विधातुमुचितत्वात् । किञ्च, न ह्यत्र कर्मण्यात्मनेपदं विधीयते किन्तु कर्मकर्तर्येव, तस्मात् कर्मकर्तरीति वक्तुमुचितम् ? सत्यम्, पूर्वेण कर्मणि यदात्मनेपदं तत् कर्मवद्-भावादनेनैव कर्मकर्तरि विधीयते इति साध्याहारं व्याख्यातव्यम् । यद् वा पूर्वेणेति यदुक्तं तच्छास्त्रातिदेशमवलम्ब्योक्तम् । यच्च कर्मणीत्युक्तं तदपि कर्मकर्तुः कर्मवद्-भावात् कर्मकर्तैव कर्मोच्यते । यथा चन्द्र इव मुखं **चन्द्र** इत्युच्यते । एवं कर्मणीति शेषः इति यदुक्तं तदपि संगच्छते । ननु यदि कर्मकर्तर्यात्मनेपदमेवेत्युच्यते, तदा कथं यणिचौ स्याताम्, कर्मणि विहिते सार्वधातुकेऽसार्वधातुके च तयोर्विधानात् चेत्, न देश्यमेतत्, धातोः कर्मकार्येऽतिदेष्टव्ये यणिचोरपि विधानस्य प्राप्तेः । न हि यणिचौ विना केवलमात्मनेपदविधानादेव कर्मवत् कार्यमिति वक्तुं शक्यते, कर्मवदित्यनेन धातोः सकाशाद् यत् कार्यं तस्योक्तत्वात् । न हि सङ्कोचे प्रमाणमस्ति, अतः **पञ्जीकृतापि** तस्मिंश्च सति यणिचौ प्रत्ययावपीत्युक्तम् ।

ननु वद्ग्रहणं किमर्थं चेद् वद्ग्रहणमन्तरेण कर्मकर्तुः कर्मसंज्ञापि स्यात् ? अथ संज्ञायां सत्यां किं दूषणं चेद् यथा कटं करोति तथा केदारं लुनाति स्वयमेवेत्यपि प्रयोगः स्यात् ? नैवम्, तदा यत् क्रियते तत् कर्म इत्यतः पश्चादेव सूत्रमिदं कृतं स्यात् । ततश्च प्रथमकर्मग्रहणमपि खण्डितं स्यात्, तस्मात् तादृशमकृत्वा यदत्र धात्वधिकारो विधीयते तद् धातुकार्यमेव भविष्यति, न तु नामकार्यमिति । किं च **परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेणापि वत्यर्थं गमयति** । यथा 'सिंहो माणवकः' इति । तस्मात् किं वद्ग्रहणेनेत्याह–वत्करणमिति **वृत्तिः** । अत एव **पञ्जीकृतापि** 'अथ परार्थे प्रयुज्यमानः' इत्याद्युक्तम्, तत्र चाथशब्दोऽथवार्थः । **वृत्तिग्रन्थस्यायमर्थः** (स्वस्य कर्मण आश्रयः) स्वाश्रयः कर्तृत्वम्, तदेवार्थः प्रयोजनमस्येति विग्रहः । एतेन किमायात-

मित्याह – तेनेति **वृत्तिः**। कर्तृत्वेन कर्मत्वेऽपनीते सति धातोरकर्मकत्वाद् भावेऽपि भवतीत्**याशयः**। अत एव **पञ्जीकृतापि** तत्प्रतिबन्धमेव कार्यमित्यत्र एवशब्दः प्रयुक्तः। **अस्यायमाशयः**– कर्तृत्वप्रतिबन्धमेव कार्यम्, न तु कर्मत्वप्रतिबन्धमिति। यदि कर्मत्वप्रतिबन्धमपि कार्यं भविष्यति तदा भावे न स्यादिति पूर्वसूत्रे भावग्रहणात्। अकर्मकधातोरेव भावे प्रत्ययविधानात्। ननु तथापि कथं भावे प्रत्ययः कर्तृतो भावस्य भिन्नत्वात् चेत्? न, भावो हि भवित्रपेक्षो भवति, भविता च कर्तेति न दोषः।

ननु वद्ग्रहणं कर्तृत्वार्थमित्युच्यते, तथा कर्मकर्तरि कर्तरि विहितः प्रत्ययोऽपि स्यादिति। तदा 'लूयते केदारः स्वयमेव' इति विवक्षायां 'लुनाति केदारः स्वयमेव' इत्यपि स्यात्। सत्यम्, **"शेषात् कर्तरि"** (३।२।४७) इत्यत्र कर्तरि रुचादीत्यतः कर्तरीत्यनुवृत्तौ सिद्धौ यत् पुनः कर्तृग्रहणं तत् शुद्धकर्तर्येव परस्मैपदं यथा स्यात् तेन कर्मकर्तरि न भवतीति तत्रैवोक्तम्। अथ मा भूत् कर्तरि परस्मैपदम् **"इनञ्यजादेः"** (३।२।४५) इत्यनेनात्मनेपदं स्यात्? सत्यम्, **"शेषात् कर्तरि"** (३।२।४७) इत्यत्र **सिंहगुहावलोकनन्यायेन "कर्तरि रुचादि०"** (३।२।४२) इत्यत्रापि कर्तुरनुवर्तनात् शुद्धे कर्तर्यात्मनेपदमिति व्याख्यातव्यम्, अतो न कर्मकर्तरि कर्तर्यात्मनेपदमिति। यद् वा यदि कर्तृत्वमाश्रित्य कर्तृविहितः प्रत्ययोऽपि स्यादित्युच्यते, तदा वद्ग्रहणमपास्य कर्मकर्ता कर्म वेति विदध्यात् तदैव कर्मवद्भावात् 'पच्यते ओदनः स्वयमेव' इति भविष्यति।

विकल्पपक्षे च 'पचत्योदनः स्वयमेव' इति कर्तरि, भावेऽपि 'पच्यते ओदनेन स्वयमेव' इति रूपत्रयं भविष्यति। तस्मादेवं मनसि कृत्वा यद् वद्ग्रहणं तद् बोधयति – कर्मकर्तरि कर्तरि विहितः प्रत्ययो न भवतीति। यद्येवम्, अनेनैव न्यायेन 'लूयते केदारः स्वयमेव' इत्यादौ कर्मकर्तरि परस्मैपदं न भविष्यति, किं **"शेषात् कर्तरि"** (३।२।४७) इत्यत्र एतद्व्यावृत्त्यर्थं कर्तृग्रहणेन? तस्मात् कर्तृग्रहणस्य वैयर्थ्यभयात् परस्मैपदमेव कर्मकर्तरि न भवति, आत्मनेपदं तु भवत्येवेति कथन्न ज्ञाप्यते? नैवम्, **आम्नायविरुद्धस्य ज्ञापयितुमयोग्यत्वात्। तर्हि "शेषात् कर्तरि परस्मैपदम्"** (३।२।४७) इत्यत्र कर्तृग्रहणं कथं चेत् तत्रैव व्याख्यास्याम इति **दिक्**।

कृत्यक्तखलर्थेषु प्रतिषेधो न वक्तव्यः, तर्हि कथं 'कर्तव्यं कटेन स्वयमेव' इत्यत्र 'कर्तव्यः कटः स्वयमेव' इत्यपप्रयोगो न स्याद् इत्याशङ्क्याह – त्यादित्वादित्यादि। **अयमर्थः**– इदम् आख्यातप्रकरणम्, कुतः कृत्प्रकरणे प्राप्तिरिति भावः। यद्येवम्, कानानशोरतिदेशो न स्यात्। **परमते** तु लकारान्तस्य कार्यमतिदिश्यते, ततश्च तयोरपि **परमते** लकारान्तत्वं कृत्वा पठितत्वादतिदेशः प्राप्नोत्येव? सत्यम्, पूर्वसूत्रे

आत्मनेपदानीति बहुवचननिर्देश इहार्थस्तेनात्मनेपदानीत्यनुवर्तते। ततो यदि तन्मात्रमतिदेश्यं स्यात् तदा तत्रैव कर्मकर्तृग्रहणं कुर्यात्। तस्माद् बहुवचनान्ताद् आत्मनेपदग्रहणानुवृत्तिबलाद् भिन्नप्रकरणपठितयोः कानानशोरपि ग्रहणं व्यवस्थितवाधिकाराद् वा।

**वस्तुतस्तु** व्यतिक्रमनिर्देशात् कानानशोरप्यतिदेशः। यद्येवम् 'भिद्यते कुशूलः स्वयमेव' इत्यत्रापि भिन्नप्रकरणबलाद् द्वितीयातिदेशो न भविष्यति, किन्तदर्थमुक्तार्थतापि कर्मकार्यमित्युक्तमिति ? सत्यम्, **पाणिनिनापि** द्वितीयातिदेशनिरासार्थं लकारान्ताश्रयणं यत् कृतं तद् व्यर्थम्। **अस्मदुक्तयुक्त्यैव** तन्निरासादिति कटाक्षितम्। **वस्तुतस्तु** तदपि **सिद्धान्तान्तरम्।** ननु कर्मकर्तरि कर्मवद्भावे तव्यादीनां कः प्रसङ्गः, येन प्रकरणाश्रयणं क्रियते, तस्मादपवादत्वात् केलिमप्रत्ययेन भवितव्यम् ? यथा 'पचेलिमास्तण्डुलाः' इति ? सत्यम्, विकार्ये केलिमस्तत्रापि प्रकृतिविशेष एवेति नापवादः। न वा केलिमार्थं वचनमस्माकम् अस्तीति **कुलचन्द्रः। वस्तुतस्तु** वासरूपविधित्वात् तव्यादीनामपि प्राप्तौ प्रकरणाश्रयणं युक्तमेवेति **महान्तः।** कर्मकर्तेत्यभेदादिति **वृत्तिः।** 'कर्मवत् कर्मणि कर्तरि' इति कृतेऽपि कर्मकर्तरि भविष्यति न च कर्मणि कर्मकार्यं भवति, कर्तरि च कर्मकार्यं भवति इति पृथगन्वयो भविष्यतीति वाच्यम्।कर्मणि कर्मवद्भावस्य वैफल्याद् **विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्वाच्च।**

अथ भिन्नविभक्तिनिर्देशे गौरवमिति चेत्, न। भिन्नविभक्तिनिर्देशात्। अत एव सूत्रादुत्तरत्र कर्तरीत्यनुवर्तमाने कर्तरीत्यस्य खण्डनात्। तस्मादेवमकृत्वा यदभेदघटितः कर्मधारयः क्रियते, तस्माद् यत्र भेदगन्धोऽपि नास्ति तत्र कर्मवद्भाव इति **संक्षेपः।** 'गच्छति ग्राममसौ स्वयमेव' इति **वृत्तिः।** ननु यथा पादविहरणात्मिका गतिक्रिया कर्तरि समवेता न कर्मणीत्युच्यते, तदा 'लूयते केदारः स्वयमेव' इत्यत्राप्युद्यमननिपातनादिकर्तृविषय एव प्रतीयते न तु लूयमाने केदारे, तत् कथमिहाभेदः कल्पयितुं शक्यते, येन लूयते इत्यत्र भवति, गच्छतीत्यत्र न भविष्यति ? सत्यम्। **अयमाशयः**– लवनक्रिया कर्मस्थापि प्रतीयते, गमनक्रिया तु कर्तृस्थैव प्रतीयते। तथाहि द्विधाभूतं केदारादिकं दृष्ट्वा यथा लवनक्रिया प्रतीयते, तथा देवदत्तेन गतमपि ग्रामं दृष्ट्वा गमनक्रियायाः प्रतीतिर्नास्त्येव, किन्तु गच्छन्तं देवदत्तं दृष्ट्वा गमनक्रिया प्रतीयते इति। **एवमन्यत्राप्यूहनीयम्।** तथा चाहुः–

**कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया।**
**आस्यादेर्भावः (अस्यासिभावः) कर्तृस्थः कर्मस्था च गमेः क्रिया॥**

इत्याह – क्रियाश्रयः कर्तैवेतीत्यादि। अत एव य आधार इत्यत्र **पञ्ज्यां क्रिया च द्विधा** कर्तृस्था कर्मस्था चेत्युक्तम्। यद्येवम्, कथमस्मिन्नेव प्रस्तावे ब्रूते कथा स्वयमेवाचीकरत, कटमसौ स्वयमेवेति नोक्तम्, तथा चात्रापि वचनं प्रेषणादि च कर्तृस्थम् एवेति वक्ष्यति ? सत्यम्, गमनेन सह वचनप्रेषणादीनां महान् भेदः, तथाहि गमनं कर्तृस्थमेव प्रतीयते, वचनं च कथायामपि प्रतीयते, कथाया वचनमयत्वात्, तर्हि कथं वचनं कर्तृस्थमेवेति वक्ष्यति ? सत्यम्, अत एव **पञ्जिकायां विवक्षायाः प्राधान्या**दिति वक्ष्यति। यद्यपि कर्मस्थमपि वचनं तथापि कर्तृस्थं कृत्वात्र विवक्षितमिति भावः। तर्हि कथं प्रेषणं गमनेन सह नोक्तम्। नहि यथा कथायां कर्मणि वचनं समवेतं तथा कटेऽपि प्रेषणं समवेतमिति वाच्यम्। प्रेषणस्य वचनादिरूपेण कर्तृस्थेनैव प्रतीयमानत्वादिति ? सत्यम्, **परेण** हि **"इनुश्रन्थिग्रन्थिब्रूआमात्मनेपदाकर्मकाणाम्"** इति सूत्रेण कर्मवद्भावनिषेध उच्यते, ततश्च तद्विषये दर्शयितव्ये एकत्रैव दर्शितमिति न दोषः। उक्तार्थतापि कर्मकार्यमिति **वृत्तिः**। व्याख्यातमेवैतत् तथापि कियदुच्यते – अथातिदेशबलाद् द्वितीया भवतीति कथमुक्तार्थतया बाधनीया ? न हीयं द्वितीया कर्मत्वाश्रिता किन्त्वतिदेशबलात् कर्मकर्तर्येव, अतोऽप्युक्ते कर्मकर्तरीति वक्तुं युज्यते, न हीहोक्ताधिकारोऽस्ति, न वोक्तकर्मणि प्रथमाविधायकवचनमस्ति, येनोक्तार्थेऽपि कर्मकार्यं स्यात्। नैवम्, यद् यत् कार्यं कर्मणि वाच्ये विधीयते तत्तत् कार्यं कर्मकर्तरि वाच्ये विधीयते।

**पञ्जी** – अत्यन्तं भेदोपलम्भादिति। **अत्यन्तमिति क्रियाविशेषणम्**। स्वैरात्मीयैरिति कर्तुः स्वैर्गुणैरधिश्रयणादिभिरित्यर्थः। सुकरैरित्यत्र कर्त्रेति तृतीयान्तकर्तृशब्दो योज्यः, अन्यथा खल्सम्बन्धे **"न निष्ठादिषु"** इति निषेधात् षष्ठ्यनुपपत्तेः। ननु कर्तुः सुकरैर्गुणैरिति कर्मत्वमेवायाति न तु कर्तृत्वमित्याशङ्क्याह – एतदुक्तमिति। पूर्वेण कर्मण्यात्मनेपदम् इति। ननु कथमेतद् यावता कार्यातिदेशोऽयम्, सर्वमनेनैव विधीयते, अतः कर्मवद्भावादात्मनेपदमेव वक्तुं युज्यते ? सत्यम्। पूर्वेणैव कर्मणि यदात्मनेपदं विधीयते तदत्र कर्मवद्भावाद् आत्मनेपदम्, न तु कर्मकर्तरि विधीयते इति साध्याहारं व्याख्यातव्यम् – कर्मणीति शेष इति। ननु कथमेतद् यावता कर्मण्यात्मनेपदेन विधीयते कर्मशक्तेरभावात् ? तथा च कर्मभूतस्य साधनस्य **कर्तृत्वविवक्षायां** सत्यां कर्मत्वमपनीय कर्तृत्वं विवक्ष्यते, ततश्च कर्तैव कर्मकार्यं धातुद्वारा भजते।

कथमन्यथा सकर्मकाद् धातोर्भावे प्रत्ययो वृत्तिव्याख्याने सिद्धान्तित इति अकर्मकादेव तत्स्वीकारात् ? सत्यम्, अत्रापि पूर्ववत् **सिद्धान्तः**। आत्मनेपदेन कर्मत्वमुक्तमिति कर्मत्वमिव कर्तृत्वं कर्मविहितप्रत्ययत्वादिति। एतेन कर्मकर्तृत्वमेव

**तात्पर्यार्थः**। एवमन्यत्रापि व्याख्यातव्यम्। ननु यथा 'कटं करोति, कटः क्रियते' इत्यादौ **तात्पर्यार्थस्**तद्वदत्रापि स्यात्, क्वचिद् द्वितीया क्वचिदात्मनेपदादिकमित्याह – किञ्चेति। 'उत्पुच्छयते गौः स्वयमेव' इति। ननु कथमेतद् यावता पुच्छमुत्क्षिपति इति वाक्ये इन्प्रत्यये सति गौः कर्तैव कथं कर्मत्वम् ? सत्यम्। अत्र गामुत्पुच्छं करोतीति गोः कर्मता, ततः **कर्तृत्वविवक्षा**। अस्मिन् सूत्रे यथाश्रुतं **पञ्जीपाठं** दृष्ट्वा यैः कर्मणि प्रत्ययोऽनेन विधीयते इत्युच्यते, तैः किमपि न ज्ञायते इति ॥४९१।

**[समीक्षा]**

'लूयते केदारः स्वयमेव, भिद्यते काष्ठं स्वयमेव, अभेदि कुशूलः स्वयमेव' आदि प्रयोगों के सिद्ध्यर्थ पाणिनि तथा शर्ववर्मा दोनों ही आचार्यों ने उस कर्ता का कर्मवद्भाव किया है, जिसमें कर्मस्थित क्रिया के सदृश क्रिया विद्यमान हो। पाणिनि का सूत्र है– "कर्मवत् कर्मणा तुल्यक्रियः" (अ० ३।१।८७)। कर्मवद्भाव होने से यण् आदि प्रत्यय होते हैं। कर्म ही यदि कर्ता हो, अर्थात् क्रिया का कर्तृत्व यदि कर्म में आरोपित हो तो कर्म कर्ता हो जाता है और कर्मकर्ता में प्रथमा विभक्ति होती है, अन्य कर्म पद नहीं रहता है तथा क्रिया का रूप कर्मवाच्य की क्रिया के तुल्य होता है। यथा– 'काष्ठं भिद्यते स्वयमेव'। कार्य करने के समय जो कर्मकारक कर्ता के सुखकर निजगुणों से स्वयं ही सिद्ध होता है, उसे कर्मकर्ता कहते हैं–

**क्रियमाणं तु यत् कर्म स्वयमेव प्रसिध्यति।**
**सुकरैः स्वैर्गुणैः कर्तुः कर्मकर्तेति तद् विदुः॥**

**[विशेष वचन]**

१. वत्करणं स्वाश्रयार्थम्। तेन भावेऽपि – पच्यते ओदनेन स्वयमेव (दु० वृ०)।

२. आत्मानं हन्त्यात्मेति। द्विविधो ह्यत्रात्मा (दु० वृ०)।

३. कर्मवद्भावादात्मनेपदमिति ओदनादेर्देवदत्तादिव्यापारेण व्याप्यमानस्य कर्मत्वे सिद्धे कर्तृत्वविवक्षायामपि कर्मप्रतिबन्धकार्यप्रतिपत्त्यर्थोऽतिदेश इति (दु० टी०)।

४. वतिरयं सादृश्योपादाने। सादृश्यं च रूपतो व्यपदेशतो निमित्ततः कार्यतः शास्त्रतो वा भवति (दु० टी०)।

५. व्यपदेशः संज्ञासंज्ञिसंबन्धान्न व्यतिरिच्यते (दु० टी०)।

६. पूर्वाचार्यास्तु संज्ञामाचक्षते। कर्मैव कर्मवत् कर्तुरिह कर्मणा क्रियाकृतमेव सादृश्यम्। कर्मणा तुल्यक्रियः कर्ता कर्मसंज्ञो भवतीत्यर्थः। (दु० टी०)।

७. द्वाविहात्मानौ अन्तरात्मा शरीरात्मा च। अन्तरात्मा तत् करोति येन शरीरात्मा सुखदुःखमनुभवति, शरीरात्मा च तत् करोति येनान्तरात्मा सुखदुःखमनुभवति। आत्मेति गम्यमानमपीह सुखार्थं प्रयुज्यते (दु० टी०)।

८. कार्यातिदेशोऽयमिति। अतिदिश्यापि शास्त्रं व्यपदेशं वा पुनस्तत्प्रतिबन्धं कार्यमन्वेष्टव्यम्। तस्माद् वरं कार्यातिदेश एव लाघवादिति भावः (दु० टी०)।

९. पदसंस्कारकमेव व्याकरणम् (दु० टी०)।

१०. द्विविधो ह्यत्रात्मेति अन्तरात्मा बहिरात्मा च। अन्तरात्मा सुखदुःखाश्रयः बहिरात्मा च शरीरलक्षणः। तत्रान्तरात्मा तत् करोति येन बहिरात्मा सुखदुःखमनुभवतीति। बहिरात्मा च तत् करोति येनान्तरात्मा च सुखदुःखमनुभवतीति अन्तरात्मगतया क्रियया बहिरात्मनो दुःखानुभवनमेव हननं तथा बहिरात्मगतया क्रियया च अन्तरात्मन इति भेदः (वि० प०)।

११. इह निमित्तव्यपदेशरूपशास्त्रकार्यभेदादतिदेशोऽनेकविधः (वि० प०)।

**[रूपसिद्धि]**

१. **लूयते केदारः स्वयमेव**। लूञ्+यण्+ते। प्रकृत सूत्र से कर्मवद्भाव होने के कारण 'लूञ् छेदने' (८।९) धातु से वर्तमान अर्थ में आत्मनेपद प्रथमपुरुष – एकवचन 'ते' प्रत्यय, यण् प्रत्यय तथा 'केदारः' पद में प्रथमा विभक्ति का प्रयोग।

२. **अभेदि कुशूलः स्वयमेव**। अट्+भिद्+त–इच्। 'भिदिर् विदारणे' (६।२) धातु से प्रकृत सूत्र द्वारा कर्मवद्भाव होने के कारण अद्यतनी – प्रथमपुरुष – एकवचन 'त' प्रत्यय, अडागम, त को इच् आदेश तथा इकार को गुणादेश।

३. **पच्यते ओदनेन स्वयमेव**। पच्+यण्+ते। कर्मवद्भाव होने से 'डु पचष् पाके' (१।६०३) धातु से वर्तमाना अर्थ में ते-प्रत्यय, "सार्वधातुके यण् (३।२।२१) से यण् प्रत्यय तथा ण् अनुबन्ध का प्रयोगाभाव ॥४९१।

## ४९२. कर्तरि रुचादिङानुबन्धेभ्यः [३।२।४२]

**[सूत्रार्थ]**

कर्तृवाच्य में = कर्ता अर्थ विवक्षित होने पर रुचादिगणपठित तथा ङानुबन्ध वाली धातुओं से आत्मनेपद होता है ॥४९२।

## [दु० वृ०]

रुचादिभ्यो ङानुबन्धेभ्यश्च कर्तर्यभिधेये आत्मनेपदानि भवन्ति। रोचते, वर्द्धते, शीङ् – शेते, चक्षिङ् – आचष्टे। रुच इत्यनुदात्तानुबन्धोपलक्षणम्। ऊर्ध्वमादत्ते इत्युदात्तः, तद्विपरीतश्चानुदात्तः, उदात्तानुदात्तयोर्मिश्रश्च समाहारो **लोकोपचारात्**। तेन रुचप्रकारेभ्योऽपि भवन्ति। आदिग्रहणाच्च – निविशते, परिक्रीणीते ॥४९२।

## [दु० टी०]

कर्तरि०। कर्तरि विधीयमानत्वात् प्रधानस्य प्रत्ययस्यात्र नियमः, नार्थप्रकृत्योः रुचादिङानुबन्धेभ्य एवात्मनेपदानि नान्येभ्यः। कर्तरि रुचादिङानुबन्धेभ्यस्तु न परस्मैपदानि, शेषादेव परस्मैपदानीति नियमात्। प्रकृतिनियमे हि तृजादयो न स्युः। कर्तरि रुचादिङानुबन्धेभ्य आत्मनेपदान्येव। न च वचनाद् भविष्यन्ति परस्मैपदेष्वेवकारात्। अथ **"शेषात् कर्तरि परस्मैपदम्"** (३।२।४७) एवेति प्रकृतिनियमे वचनाच्च तृजादयः इति **प्रतिपत्तिगौरवं** स्यात्। एवं तर्हि समानविषयत्वान्नियमस्य परस्मैपदान्येव व्यावर्त्यन्ते इत्यास्ताम् प्रकृतिनियमोऽपि "आनोऽत्रात्मने" इति "शन्तृङ् क्वन्सुश्च परस्मैपदम्" इति वक्ष्यति न्यायात्। यदि पुनरेककालम् उभयनियम इहाश्रीयते, 'शेषात्' इति **सुखप्रतिपत्त्यर्थमेव** स्यात्। रुच इत्यादि। अथवा गणे येभ्य आत्मनेभाषेति श्रूयते ते रुचादयो ङानुबन्धवर्जिताः। अन्यथा गणे ङानुबन्धपाठोऽनर्थकः स्यात्, रुचादेश्च व्यञ्जनादेर्युप्रत्ययश्च विरुध्यते। आदिशब्दोऽयं प्रकारवचने इति रुचादिङानुबन्धादिति समाहारे कृते **लघुसुखनिर्देशश्च** भवति, यदिह बहुवचनग्रहणं तद् 'निविशते' इत्याद्यर्थमिति विज्ञेयम्, कर्तरीति **योगविभागाद् वा** ॥४९२।

## [वि० प०]

कर्तरि०। रुच इत्यादि। रुचिरयमनुदात्तानुबन्ध इति सादृश्यादनुदात्तानुबन्धानां धातूनामुपलक्षणम्। ऊर्ध्वमादत्ते इति। ऊर्ध्वमित्युच्चैरित्यर्थः, तद्विपरीतश्चानुदात्त इत्यर्थादुक्तम्। **लोकोपचारादित्येतेन "उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः"** (अ० १।२।२९, ३० ३१) इति उदात्तादिसंज्ञां प्रति सूत्रत्रयं न वक्तव्यम्, अन्वर्थबलादेव सिद्धिरित्येतद् दर्शितम्। तेन 'रुचप्रकारेभ्यः' इति रुचिसदृशेभ्यो रुचिनोपलक्षितेभ्योऽनुबन्धेभ्य इत्यर्थः। अथवा येभ्यः आत्मनेभाषा श्रूयते ते रुचप्रकारा **गणे** ङानुबन्धवर्जिता इति, अन्यथा ङानुबन्धकरणमनर्थकं स्याद् रुचादिद्वारेणैव सिद्धत्वात्। अस्त्येवमिति चेत्, न। रुचाद्रेश्च व्यञ्जनादेरित्यत्र ङानुबन्धेभ्योऽपि

युप्रत्ययप्रसङ्गात् तेन तेभ्यो युर्न भवति, रुचादिग्रहणेन तेषामग्रहणात्। तर्हि किमादिग्रहणेनेत्याह-आदिग्रहणाच्चेति रुचादिङानुबन्धादिति। समाहारेण **सुखनिर्देशे** सिद्धे यद् बहुवचनम्, तद्वचनाच्च 'निविशते' इत्यादि सिध्यतीति चकारेण सूच्यते ॥४९२।

**[क० च०]**

कर्तरि०। पूर्वसूत्रे व्यतिक्रमनिर्देशात् पृथग् योगाद् वा कर्मवदिति नानुवर्तते **"आत्मनेपदानि भावकर्मणोः"** (३।२।४०) इत्यत आत्मनेपदानीत्यनुवर्तते प्रकृतत्वात्। **गणे** रुचादिङानुबन्धेभ्य आत्मनेभाषा इत्यस्य पठितत्वाच्च। 'शीङः' इति **वृत्तिः**। ननु प्रयोगे ङकारस्यादर्शनादेव ङानुबन्धो गम्यते किमनुबन्धग्रहणेन, ङकारेऽकारं दत्त्वा 'तेभ्यः' इति सूत्रं निर्दिश्यतां चेत् ? तर्हि **सुखार्थम्**। ननु 'रुच' एवादिर्येषाम् इत्युक्ते कथं 'लभते, द्योतते' इत्यादौ आत्मनेपदमित्याह – रुच इत्यनुदात्तानुबन्धोपलक्षणम् इति **वृत्तिः**। प्रसङ्गतः परस्मैपदस्योभयपदस्य च युक्तिमाह – 'ऊर्ध्वमादत्ते इति **वृत्तिः**'। ननु यदि रुचधातुरिहोपलक्षणं तदादिग्रहणेन किम् फलमित्याह – आदीति **वृत्तिः**। **वृत्तौ** चकारः **पञ्जीकृतैव** व्याख्यातः। **पञ्जी** – अथ रुचादेरनुबन्धेन किम् प्रमाणम् इत्याशङ्क्याह – अथवेति। **'काशे स्पन्द कुशे स्पन्द स्पन्द त्वं शक्रमस्तके'** इति **'गणकृतमनित्यम्'** (का० परि० २९) इति परस्मैपदमेव। 'बलन्ति शलभाः पदानि परितः' इति, तथा 'बलद्बाधाम्' इति च चक्षिङो ङानुबन्धकरणादिति। **वयं तु 'बल प्राणने'** (१।५५०) इत्यस्य रूपमिति ब्रूमः ॥४९२।

**[समीक्षा]**

'रोचते, वर्धते, शेते, आचष्टे, सूते, आस्ते, वस्ते' आदि प्रयोगों के सिद्ध्यर्थ पाणिनि तथा शर्ववर्मा दोनों ही आचार्यों ने आत्मनेपद का विधान किया है। पाणिनि का सूत्र है "अनुदात्तङित आत्मनेपदम्" (अ० १।३।१२)। इसके द्वारा अनुदात्तेत् तथा ङित् धातुओं से आत्मनेपद होता है। शर्ववर्मा ने अनुदात्तेत् धातुओं को रुचादिगण में पढ़ा है। अतः उनके निर्देश में 'रुचादि' शब्द का पाठ है। आचार्य दुर्गसिंह ने ६६ गणसूत्र रुचादिगण में पढ़े हैं। जैसे – "नेर्विश्" – निविशते। "विपराभ्यां जि" – विजयते, पराजयते। "आशिषि नाथः" – सर्पिषो नाथते आदि।

**[विशेष वचन]**

१. ऊर्ध्वमादत्ते इत्युदात्तः, तद्विपरीतश्चानुदात्तः। उदात्तानुदात्तयोर्मिश्रश्च

समाहारो लोकोपचारात्। तेन रुचप्रकारेभ्योऽपि भवन्ति। आदिग्रहणाच्च निविशते, परिक्रीणीते (दु० वृ०)।

२. आदिशब्दोऽयं प्रकारवचन इति रुचादिङानुबन्धादिति समाहारे कृते लघुसुखनिर्देशश्च भवति (दु० टी०)।

३. आदिग्रहणाच्चेति रुचादिङानुबन्धादिति समाहारेण सुखनिर्देशे सिद्धे यद् बहुवचनम्, तद्वचनाच्च 'निविशते' इत्यादि सिध्यतीति चकारेण सूच्यते (वि० प०)।

४. ननु प्रयोगे ङकारस्यादर्शनादेव ङानुबन्धो गम्यते किमनुबन्धग्रहणेन, ङकारेऽकारं दत्त्वा तेभ्यः इति सूत्रं निर्दिश्यतां चेत् ? तर्हि सुखार्थम् (क० च०)।

**[रूपसिद्धि]**

१. **रोचते**। रुच+अन्+ते। 'रुच शुभ दीप्तौ' (१।४७३) धातु से प्रकृत सूत्र द्वारा आत्मनेपद का विधान, तदनुसार वर्तमानासंज्ञक प्रथमपुरुष - एकवचन 'ते' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, न्-अनुबन्ध का प्रयोगाभाव तथा "अनि च विकरणे" (३।५।८) से उपधासंज्ञक उकार को गुणादेश।

२. **वर्धते**। वृध्+अन्+ते। 'वृधु वृद्धौ' (१।४८५) धातु से प्रकृत सूत्र द्वारा रुचादिगण पठित होने से आत्मनेपद, तदनुसार वर्तमानासंज्ञक प्रथमपुरुष – एकवचन 'ते' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, न्-अनुबन्ध का प्रयोगाभाव तथा "अनि च विकरणे" (३।५।८) से उपधा को गुणादेश।

३. **शेते**। शी+अन्-लुक्+ते। 'शीङ् स्वप्ने' (२।५५) धातु से ङानुबन्ध-विशिष्ट होने के कारण प्रकृत सूत्र द्वारा आत्मनेपद का विधान, तदनुसार वर्तमाना-संज्ञक 'ते' प्रत्यय, अन् विकरण, उसका "अदादेर्लुग् विकरणस्य" (३।४।९२) से लुक् तथा "अनि च विकरणे" (३।५।८) से शी-घटित ईकार को गुणादेश।

४. **आचष्टे**। आ+चक्ष्+अन्-लुक्+ते। आङ् उपसर्गपूर्वक 'चक्षिङ् व्यक्तायां वाचि' (२।४१) धातु से ङकारानुबन्ध विशिष्ट होने के कारण प्रकृत सूत्र द्वारा आत्मनेपद का विधान, तदनुसार वर्तमानासंज्ञक ते–प्रत्यय, अन् विकरण, उसका "अदादेर्लुग् विकरणस्य" (३।४।९२) से लुक्, "स्कोः संयोगाद्योरन्ते च" (३।६।५४) से क्ष्-घटित क् का लोप तथा "तवर्गस्य षटवर्गाट्टवर्गः" (३।८।५) से त् को ट् आदेश ॥४९२।

## ४९३. चेक्रीयितान्तात् [३।२।४३]

**[सूत्रार्थ]**

चेक्रीयितप्रत्ययान्त धातु से कर्ता अर्थ में आत्मनेपद होता है ॥४९३।

**[दु० वृ०]**

चेक्रीयितान्ताद् धातोः **कर्तर्यात्मनेपदानि** भवन्ति । पापच्यते, लोलूयते ॥४९३।

**[दु० टी०]**

चेक्री० । अन्तग्रहणं **सुखप्रतिपत्त्यर्थमेव । कश्चिद् भाषायामपि** चेक्रीयितलुगन्तं मन्यमानः साक्षात्प्रतिपादनार्थमाह – बोभवीति । तन्न, **"चर्करीतं चेत्येके"** (२।४०) इति परस्मैपदिषु अदादौ पाठात् सिद्धम् ॥४९३।

**[वि० प०]**

चेक्री० । प्रकृतेरन्त एव प्रत्ययो भवति, यदिहान्तग्रहणं तत् **सुखार्थम् । अन्ये** तु चेक्रीयितलुगन्तं भाषायामपि मन्यमानाः साक्षाच्चेक्रीयितान्तप्रतिपत्त्यर्थं वर्णयन्ति । तेन 'बोभवीति, पापचीति' परस्मैपदमेव । तदयुक्तम्, तदपि "चर्करीतं च" (२।४०) इत्यादौ परस्मैपदिषु पाठात् सिद्धमेव ॥४९३।

**[समीक्षा]**

'पुनः पुनरतिशयेन वा पचति' इस अर्थ में 'पापच्यते' तथा 'पुनः पुनरतिशयेन वा लुनाति' अर्थ में लोलूयते' प्रयोग के सिद्ध्यर्थ चेक्रीयितसंज्ञक य-प्रत्ययान्त धातु से आत्मनेपद का विधान दोनों ही व्याकरणों में किया गया है । कातन्त्रकार ने क्रियासमभिहार अर्थ में धातु से जिस य – प्रत्यय का विधान किया है, उसकी पूर्वाचार्यों के अनुसार चेक्रीयितसंज्ञा की है – "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) । इस प्रकार उन्हें चेक्रीयितप्रत्ययान्त धातु से आत्मनेपद का विधान स्वतन्त्ररूप से प्रकृत सूत्र द्वारा करना पड़ता है । पाणिनि ने यङ् प्रत्यय किया है – "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" (अ० ३।१।२२) । यङ् प्रत्यय यतः ङित् हैं, अतः तत्प्रत्ययान्त धातु भी ङित् ही होगी । अतः "अनुदात्तङित आत्मनेपदम" (अ० १।३।१२) से ही वहाँ आत्मनेपद का विधान उपपन्न हो जाता है ।

महाभाष्यप्रदीपकार कैयट के अनुसार 'यङ्' प्रत्यय की 'चेक्रीयित' संज्ञा पूर्वाचार्यों द्वारा की गई थी – "यङः पूर्वाचार्यसंज्ञा चेक्रीयितमिति" (म० भा० प्र० ४।१।७८) । इसी का अनुसरण करते हुए कातन्त्रकार शर्ववर्मा ने चेक्रीयितसंज्ञा

तथा उसमें आत्मनेपदविधान का निर्देश किया है। यहाँ यह भी ज्ञातव्य है कि पूर्वाचार्यों ने यङ्लुगन्त की 'चर्करीत' संज्ञा की थी, जिसका न्यासकार जिनेन्द्रबुद्धि तथा तत्त्वबोधिनीकार ज्ञानेन्द्रसरस्वती ने उल्लेख किया है– "चर्करीतं च यङ्लुगन्तस्य पूर्वाचार्याणां संज्ञा" (का० वृ० न्यासः ७।३।९४)।"प्राचा तु चर्करीतमिति यङ्लुगन्तं परस्मैपदमित्युक्तम्" (त० बो० ७।३।९४)। निरुक्तकार यास्काचार्य ने 'आपनीफणत्' को चर्करीतप्रयोग माना है तथा 'चोष्कू' इस चर्करीत धातु से प्रत्यय करने का उल्लेख किया है (द्र०, निरुक्तम् २।७; ६।९६)।

**[विशेष वचन]**

१. अन्तग्रहणं सुखप्रतिपत्त्यर्थमेव (दु० टी०)।

२. कश्चिद् भाषायामपि चेक्रीयितलुगन्तं मन्यमानः साक्षात्प्रतिपादनार्थमाह-बोभवीति (दु० टी०)।

३. यदिहान्तग्रहणं तत् सुखार्थम् (वि० प०)।

४. अन्ये तु चेक्रीयितलुगन्तं भाषायामपि मन्यमानाः साक्षाच्चेक्रीयितान्तप्रतिपत्त्यर्थं वर्णयन्ति (वि० प०)।

**[रूपसिद्धि]**

१. **पापच्यते**। पच् +य+ते। 'डु पचष् पाके' (१।६०३) धातु से क्रियासमभिहार (पुनः पुनरतिशेयन वा पचति) अर्थ में "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) सूत्र द्वारा य–प्रत्यय, "चणूपरोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से पच् धातु को द्वित्व, पूर्ववर्ती पच् की "पूर्वोऽभ्यासः" (३।३।४) से अभ्याससंज्ञा, "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) से च् का लोप "दीर्घोऽनागमस्य" (३।३।२९) से पकारोत्तरवर्ती अकार को दीर्घ होने पर निष्पन्न 'पापच्य' की "ते धातवः" (३।२।१६) से धातुसंज्ञा तथा उससे वर्तमानासंज्ञक प्रथमपुरुष–एकवचन 'ते' प्रत्यय।

२. **लोलूयते**। लू+य+ते। 'लूञ् छेदने' (८।९) धातु से क्रियासमभिहार (पुनः पुनरतिशयेन वा लुनाति) अर्थ में य–प्रत्यय, गुण, 'लोलूय' की धातुसंज्ञा, तथा उससे वर्तमानासंज्ञक ते–प्रत्यय ॥४९३।

## ४९४. आय्यन्ताच्च [३।२।४४]

**[सूत्रार्थ]**

'आयि'– प्रत्ययान्त धातु से कर्तृवाच्य में आत्मनेपद होता है ॥४९४।

**[दु० वृ०]**

आयिप्रत्ययान्ताच्च धातोः कर्तर्यात्मनेपदानि भवन्ति। हंसायते, पयायते-पयस्यते। अन्तग्रहणादायिलोपे न स्यादिति मतम्। तेन दरिद्रति, घटति ॥४९४।

**[दु० टी०]**

आय्य०।अन्तग्रहणादित्यादि।**मतं मतान्तरम्, ये** आयिलोपमिच्छन्तीति ॥४९४।

**[वि० प०]**

आयि०। आयिरन्तो यस्येति विग्रहः। अन्तेत्यादि। **मतमिति मतान्तरम्, यै**रायिलोपदर्शनमादृतं तेषामिति भावः। दरिद्र इवाचरति, घट इवाचरतीति **वाक्यम्** ॥४९४।

**[समीक्षा]**

'हंस इवाचरति' अर्थ में 'हंसायते', 'श्येन इवाचरति' अर्थ में 'श्येनायते' शब्दरूप के सिद्ध्यर्थ पाणिनि ने क्यङ् प्रत्यय का विधान किया है- "कर्तुः क्यङ् सलोपश्च" (अ० ३।१।५५) इत्यादि। इस स्थिति में पाणिनि को यकारादि प्रत्यय के पर में रहने पर "अकृत्सार्वधातुकयोर्दीर्घः" (अ० ७।४।२५) से अजन्त अङ्ग 'श्येन' आदि में अकार को दीर्घ करना पड़ता है, जब कि कातन्त्रकार ने 'आयि' प्रत्यय का विधान करके इसका समाधान कर दिया है। अतः प्रकृत आयि प्रत्यय के विधान में कातन्त्रकार ने लाघव प्रदर्शित किया है- "कर्तुरायिः सलोपश्च" (३।२।८)।

**[रूपसिद्धि]**

१. **हंसायते**। हंस इवाचरति। हंस+आयि+ते। 'हंस' शब्द से इव आचरति अर्थ में आयि प्रत्यय, "समानः सवर्णे दीर्घीभवति परश्च लोपम्" (१।२।१) से पूर्ववर्ती अ को दीर्घ- उत्तरवर्ती आ का लोप, 'हंसाय' की धातुसंज्ञा, प्रकृत सूत्र द्वारा आत्मनेपद, तदनुसार वर्तमानासंज्ञक प्रथमपुरुष-एकवचन 'ते' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण तथा पूर्वरूप।

२. **पयायते-पयस्यते**। पय इवाचरति। पयस्+आयि+ते। 'इव आचरति' अर्थ में आयि प्रत्यय-सलोप 'पयाय' की धातुसंज्ञा तथा ते-प्रत्यय। आयिप्रत्यय के अभाव में य-प्रत्यय होने पर 'पयस्यते' शब्दरूप ॥४९४।

## ४९५. इनूञ्यजादेरुभयम् [३।२।४५]

### [सूत्रार्थ]

इन्प्रत्ययान्त, ञकारानुबन्धविशिष्ट तथा यजादिगणपठित धातुओं से कर्ता अर्थ में उभयपद का विधान होता है ।।४९५।

### [दु० वृ०]

इनन्ताञ्ञनुबन्धाद् यजादेश्चोभयपदं भवति कर्तर्यभिधेये । कारयति, कारयते । सुनोति, सुनुते । यजति, यजते । पचति, पचते । **समाहारानुबन्धा ये ते यजादयः** । अफलवति कर्तर्यात्मनेपदं च दृश्यते । यथा वृक्षं परिवारयन्ते कण्टकाः, शोषयते व्रीहीनातपः, **तव दर्शनं किं न धत्ते**, **कमलवनोद्घाटनं कुर्वते ये**, माणवकं ब्रूते, मरीचीन् वितनुते । फलवति कर्तरि परस्मैपदं च दृश्यते – स्वं कटं कारयति, स्वमङ्गं कण्डूयति, स्वं यज्ञं यजति, स्वं पुत्रमपवदति, स्वमश्वं जानाति । अपदान्तरद्योत्येऽपि दृश्यते – **'तनोति शुभ्रं गुणसम्पदा यशः'** । यजेरपि विवक्षया भवितव्यमेवेति मतम् । **गणकारवचनप्रमाणार्थमिदम्** ।।४९५।

### [दु० टी०]

इन्० । ञकारः स्थितिमात्रास्तीत्याह – ञनुबन्धादित्यादि । उदात्तानुदात्तयोर्मिश्रयोश्च समाहारो **लोकोपचारात्**, सोऽनुबन्धोऽयमिति । **यस्त्वाह** – येभ्य उभयतोभाषा इति श्रूयते, ते **यजादयः** । **तन्मते** भृञ्हाञ्माङमिदिति धूञ्प्रीणात्योर्न इत्यादिनिर्देशान् विमुच्यान्येऽनुबन्धा ञकाराः पठिता एव । कण्डूयञ्प्रभृत्यर्थं ञकार उच्यते । कथं डाज्लोहितादिभ्य आयेरुभयपदित्वम् ? सत्यम् ? यजिरिहोपलक्षणम् । आदिग्रहणादन्येभ्योऽपि यजिप्रकारेभ्य इति वा, तेनाकृतिगणत्वान्न दुष्यति फलवति कर्तर्यात्मनेपदम्, अन्यत्र परस्मैपद**मन्यो** ब्रूते । तदयुक्तमित्याह-अफलवतीत्यादि । यद्यपि 'कण्टकैः पुरुषा वृक्षं परिवारयन्ते', तथाप्यानुकूल्यात् करणस्य कर्तृत्वविवक्षा । आवरणफलं तु पुरुषा एवोपभुञ्जते, तथा शुष्कव्रीहिक्षोदनफलं पुरुषा एवोपभुञ्जते न त्वातपः । अथ विवक्षया तर्हि नियुक्तः 'कारयते स्वं कटं भृत्यः, कुरुते कर्म दासः, पचन्ते सूपकाराः, यजन्ते याजकाः' इति कथन्न भवति । सर्वत्र कर्तारं क्रियाफलमभिप्रैति, तत्र प्रकर्षगतिर्विज्ञास्यते, साधीयो यत्र कर्तारं क्रियाफलमभिप्रैति, न चान्तरेण यजिं यजिफलम्, कृषिं कृषिफलम्, याजकाः पुनरन्तरेणापि यजिं गां लभन्ते भृत्याश्च भक्तमिति किं विशेषवचनेन, महाकविभिश्चाविशेषेणैव निबद्धम् – **'तवात्मयोनेरिव**

**किन्न धत्ते'** इत्यादि। 'व्याख्यां कुरुते' इत्यादयश्च न घटन्ते, वचनोच्चारणस्य परप्रत्ययेन फलत्वात्।

अथ परं बोधयितुं वचनमुच्चार्यते तत्र प्रयोजकगतव्यापारेच्छा वक्तारमभिप्रैति कर्त्रभिप्रायता। कथं तर्हि ब्रवीति अभिदधातीति ? सत्यम्। उच्चारणव्यवच्छेदेनाभिधानं यदा विवक्षितं न परावबोधस्तदा परस्मैपदम्, ब्रवीति वचनमुच्चारयतीति। कथं **भामहस्य** व्यवहितदोषोदाहरणम्–

**इतः पश्यति धावन्तं दूरे यान्तं वनस्पतिम्।**
**तां ब्रवीमि विशालाक्षि! या पिनष्टि जरद्गवम्॥**

फलवतीत्यादि। परस्मैपदं चेति। चकारेणात्मनेपदमपीत्यर्थः। क्रियाफलमेषु पदान्तरद्योत्यम्। अपदान्तरद्योत्येऽपीति– **'तनोति शुभ्रं गुणसम्पदा यशः'** इति। तथा 'करोति भोगम्, प्रियं दधाति, मारयति शत्रून्' इति। गणेत्यादि। **गणकारो**ऽप्यविशेषेणैवाह– उभयतोभाष इति। कर्त्रभिप्रायं च अकर्त्रभिप्रायं क्रियाफलमुभयम् उच्यते। उभयस्मिन् भाषोऽस्येति **उभयतोभाषः**। इहाप्युभयं परस्मैपदमात्मनेपदं च भवतीत्यर्थः। 'आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयते हस्ती स्वयमेव'। स एव हस्ती व्याप्यः कर्ता भवति। एवम्– 'पश्यन्ति भृत्या राजानम्, दर्शयते राजा स्वयमेव'। एवञ्जातीयकानां रुचादौ पाठः। तथा 'गणयति गणं गोपालकः, गणयते गणः स्वयमेव' इति भवितव्यमात्मनेपदेन। तथा च "इनृश्रन्थिग्रन्थिब्रूञाम् आत्मनेपदाकर्मकाणां यणिचोः प्रतिषेधे कर्मकर्तर्युपसंख्यानम् इति **भारद्वाजीयाः** पठन्त्यविशेषेण।

आध्याने तु परस्मैपदमेव– 'स्मरति वनगुल्मं कोकिलः, स्मारयत्येनं वनगुल्मः' इति। कर्तृस्थक्रियायामिह परस्मैपदस्यैव विवक्षा। अनिनन्तो यश्चित्तवत्कर्तृकोऽकर्मकस्तत इनन्तात् परस्मैपदस्यैव **विवक्षा**– 'आस्ते माणवकः, आसयति माणवकम्'। तथा चलनाहारार्थेभ्यश्च चलयति, कम्पयति, आशयति, भोजयति। तथा **प्रु-द्रु-स्रु-बुधि-युधि-नशि-जनीङ्भ्यः**– प्रावयति। प्रापयतीत्यर्थः। द्रावयति। द्रवीकरोतीत्यर्थः। स्रावयति। स्यन्दयतीत्यर्थः। गत्यर्थेभ्यस्तु चलनार्थत्वादेव सिद्धम्। बोधयति माणवकं श्लोकम्, योधयति काष्ठम्, नाशयति रोगम्, जनयति सुखम्, अध्यापयति माणवकं वेदम्।

धेड्वदवसपादमाङ्यमाङ्यसपरिमुहरुचिनृतिभ्यः आत्मनेपदं दृश्यते। धेट्-धापयते शिशुम्। वद– वादयते। वस निवासे– वासयते। पा पाने– पाययते।

दमु – दमयते । आङ् यम – आयमयते । आङ् यस – आयासयते । परिमुह – परिमोहयते । रुच – रोचयते । नृती – नर्तयते । यथासम्बन्धं परस्मैपदविवक्षाया **अपवादः** ।

**अद्यतन्यां द्युतादीनां वृतादेः स्यसनोस्तथा ।**
**आकृतिग्रहणादेव श्वस्तन्यामुभयं कृपेः ॥**

**कृपूपर्यन्ता द्युतादयः । द्युताद्यन्तर्गणश्च वृतादिः** । व्यद्युतत्, व्यद्योतिष्ट । वर्त्स्यति, वर्तिष्यते । विवृत्सति, विवर्तिषते । कल्प्स्यति, कल्पिष्यते । चिक्लृप्सति, चिकल्पिषते । परेण पूर्वस्य न बाधा । क्लृप्ता, कल्पिता इति ॥४९५।

**[वि० प०]**

इनृञ० । इनृप्रत्ययोऽर्थाद् धातोरन्तो ञकारश्च स्थितिमान् नास्तीत्यनुबन्धो गम्यते इत्याह – इनन्ताञ्ञनुबन्धादिति । उदात्तानुदात्तयोर्मिश्रः समाहार इत्युक्तमेवेत्याह – समाहार इत्यादि । **कश्चित्** फलवति कर्तर्यात्मनेपदम्, अफलवति कर्तरि परस्मैपदमिति ब्रूते, तदिह न वक्तव्यम्, व्यभिचारादित्याह – अफलवतीत्यादि । इह यद्यपि 'कण्टकैर्वृक्षं पुरुषाः परिवारयन्ते, तथापि विवक्षावशात् करणस्यापि कर्तृत्वम् । यथा – असिश्छिनत्तीति । न चात्र कर्तॄणां कण्टकानामावरणफलोपभोक्तृत्वम्, अपि तु पुरुषा एव रक्षितवृक्षफलं भुञ्जते । तथा शुष्कव्रीहीन् क्षोदयित्वा पुरुषा एव भुञ्जते, न त्वातपस्य व्रीहिशोषणफलमस्तीति । **महाकविनिबद्धः प्रयोगश्च दृश्यते** । यथाह **भारविः – 'तव दर्शनं किं न धत्ते'** इति । न चेह दर्शनस्य कर्तुः फलमस्तीति, किन्तर्हि द्रष्टुरिति ।

तथा **मयूरोऽपि 'कमलवनोद्घाटनं कुर्वते ये'** इति, रश्मय इत्यर्थः । न च तेषां कमलवनोद्घाटनफलोपभोक्तृत्वम्, किन्तर्हि अन्येषामेव । 'माणवकं ब्रूते' इति धर्मादीन् माणवकं ब्रुवाणस्य कर्तुर्न फलम्, अपि तु माणवकस्यैव कर्मण इति । 'मरीचीन् वितनुते' इति मरीचीन् प्रसारयतो नादित्यस्य फलमस्ति, अपि तु **लोकस्य** मरीचिभिरपध्वस्ते तमसीति तत्कर्मप्रवर्तनादिति । अथैष्वपि कर्तुः फलवद् **विवक्षा** । यद्येवम् – 'नियुक्तः कटं कारयते, कटं कुरुते कर्मकारः । पचन्ते सूपकाराः, यजन्ते याजकाः' इति कथन्न भवति ? यद्यचेतनेष्वपि कण्टकादिषु फलवत्त्वं विवक्षितम्, सचेतनेषु तदविवक्षाशक्यप्रतिहारेति ।

अथ यदर्थं यागादिक्रियारभ्यते तत्प्रधानं फलममी याजकादयो न लभन्ते, किन्तर्हि दक्षिणादिकम् । अतस्तेषामफलवत्त्वान्नात्मनेपदम् । यदाह **जयादित्यः** – यद्यपि दक्षिणादिकं कर्तुः फलमिहास्ति, तथापि न तदर्थं क्रियारम्भः इति । यद्येवम्, यदर्थ-

मावरणादिक्रियारभ्येते तत्फलं कण्टकादयो न लभन्ते इति स्वरितो ञितः कर्त्रभिप्रायक्रियाफल इति वचनात्। कथं तत्रात्मनेपदम् ? पूर्वं परस्मैपदविषयेऽप्यात्मनेपदं दर्शितम्। इदानीमात्मनेपदविषये परस्मैपदं दर्शयन् परस्योभयथापि व्यभिचारमाह-फलवतीत्यादि। आत्मनेपदविषयत्वं तु स्वरितो ञितः कर्त्रभिप्राये क्रियाफले इति वचनात्।

**अस्यार्थः** – स्वरितो यजादेर्ञितो ञ्यनुबन्धात् कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति। यदि क्रियासाध्येन फलेन कर्ता तद्वान् स्यादित्यर्थः कर्तारमभिप्रैतीति कर्मण्यण् इनन्ताण्णिचश्चेति वचनाद् प्राप्नोति अपपूर्वाद् वदतेरनुपसर्गाच्च जानातेः। **"अपाद् वदः, अनुपसर्गाज्ज्ञः"** (अ० १।३।७३, ७६) इत्येताभ्यां फलवति कर्तरि विधीयमानमात्मनेपदं स्यादिति। ननु कथमयं व्यभिचारः ? यावता स्वशब्दादुपपदादिह कर्तुः फलवत्त्वं प्रतीयते, तत्र च **"विभाषोपपदेन प्रतीयमाने"** (अ० १।३।७७) इति वचनमाचक्षाणेन परेणापि परस्मैपदं पक्षे प्रतिविहितमेवेति। किञ्च इतोऽपि न व्यभिचारः। **पदसंस्कारकं हि व्याकरणम्।** तत्र पूर्वं परस्मैपदं विधाय पश्चात् स्वशब्देन संबन्धात् कर्तुः फलवत्त्वावगतिरिति ? सत्यम्। यत्र तर्हि पदान्तरमन्तरेणापि तु स्वपदादेव कर्तुः फलवत्त्वं प्रतीयते। तत्र का गतिरित्याह – अपदान्तरद्योत्येऽपीति। तथा च **किरातवाक्यम् – 'तनोति शुभ्रं गुणसम्पदा यशः'** इति। यथा 'भोगं करोति, श्रियं दधाति, मारयति शत्रून्' इति बहवः **शिष्टप्रयोगा** दृश्यन्ते इति। यजेरित्यादि। कर्तुः **फलवत्त्वविवक्षा**ऽशक्यपरीहारेत्युक्तम्। अतस्तया विवक्षया मतान्तरेणापि यजेरात्मनेपदेन भवितव्यमेवेत्यर्थः। यजेरिहोपलक्षणम् इनन्ताञ्ञनुबन्धादित्यर्थः।

**अन्ये** तु मतमिति **शर्ववर्मणो** मतमाचक्षते। तत्पुनः **स्वमतानुगतं** न भवतीत्युपेक्ष्यते। न हीह कर्तुः फलवत्त्वमपेक्षितम्, येन विवक्षयेत्याह – अथात्मनेपदस्य विवक्षयेति। अथ किमर्थं ञनुबन्धाद् यजादेश्चोभयपदविधानम् उभयतोभाषेति गणे श्रवणात् सिद्धमेवेति। तथाहि परस्मैपदम् आत्मनेपदं चोभयपदमुच्यते। तस्मिन्नुभयस्मिन् भाषा अस्येत्युभयतोभाषा इत्याह –गणेत्यादि। **गणकारवचनप्रमाणार्थमि**त्येतदर्थः प्रयोजनमस्येति। अथवा प्रमितः प्रमाणं प्रामाण्यमुच्यते। **गणकारवचनस्य** प्रमाणं तदेवार्थः प्रयोजनम् अस्येति। येषामेव धातूनां **गणकृतो**भयतोभाषत्वमुक्तम्, तेषामेव **सूत्रकृता**प्युभयपदं विधीयते इति। **एकसंवादनिबन्धनं गणकारवचनस्य प्रामाण्यं** यथा स्यादित्यर्थः।।४९५।

## [क० च०]

इञ्ञ०। 'यज - वप' इत्यादीनां नवानामिह न ग्रहणम्, व्येञ्वेञोर्ञकारानुबन्धबलात्, यावता ञकारं विनाप्युभयपदं सिध्यतीति। यजादिद्वारेणेति। अथ 'वृक्षं

परिवारयन्ते कण्टकाः' इत्यादिषु गौणफलेऽपि कर्तुः फलवत्ताप्रतीतिः। व्यभिचार इति चेत् तर्हि 'नियुक्तो भृत्यः कटं कारयति, दासः करोति कर्म, पचति पाचकः, यजति याजकः' इत्यादिषु कथं परमते गौणफलविवक्षया आत्मनेपदं न भवतीति ? एतदेव व्यभिचारयन्नाह—यजेरपीति वृत्तिकारः। परमतं तु पञ्जीकृता व्याख्यातम्। एतेनास्मन्मते प्रायेण व्यभिचारदर्शनात् "कर्त्रभिप्राये क्रियाफले" (अ० १।३।७२) इति पाणिनिसूत्रं न सम्मतमिति। तथा च कुलचन्द्रः—

विशेषः पाणिनेरिष्टः सामान्यं शर्ववर्मणः।
सामान्यमनुगृह्णन्ति तत्राचार्यपरम्परा॥ इति।

तत्रेति महान्तः। तथाहि—

वर्णयामास यत्नेन यतो वररुचिः स्वयम्।
पाणिनेरनुसारेण तात्पर्यं शर्ववर्मणः॥

वयं तु—

कर्त्रभिप्राय इत्येतत् सूत्रं न विहितं यतः।
तस्मात् सामान्यमेवास्य सम्मतं शर्ववर्मणः॥

केचित्—

परस्मै पद्यते यस्मात् तत् परस्मैपदं स्मृतम्।
आत्मने पद्यते यस्मात् तदेवात्रात्मनेपदम्॥
इत्थमन्वर्थसंज्ञाया विधानेनैव लक्ष्यते।
मतं हि पाणिनेरेव सम्मतं शर्ववर्मणः॥
नैवमन्वर्थसंज्ञायाः प्रायो वृत्तिर्न दृश्यते।
अतो न पाणिनेः सूत्रं सम्मतं शर्ववर्मणः॥

पञ्जी— ननु यदि गणकारवचनमेव स्वमतप्रमाणम्, तदा अनेन सूत्रेण तस्य किमायातमित्याह— अथवेति। इदानीं टीकोक्तपरिशेष उच्यते— आध्याने परस्मैपदमेव। आध्यानं स्मरणं तत्र वर्तमानादिनन्ताद् धातोः परस्मैपदमेवेति। स्मरति वनगुल्मं कोकिलः स्मारयत्येनं वनगुल्मम्। अनिनन्तो यश्चित्तवत्कर्तृकोऽकर्मकस्ततइनन्तात् परस्मैपदमेव।

आध्यानं स्मरणम्, तत्र वर्तमानादिनन्ताद् धातोः परस्मैपदमेवेति। स्मरति वनगुल्मं कोकिलः, स्मारयत्येनं वनगुल्मम्। अनिनन्तो यश्चित्तवत्कर्तृकोऽ-

कर्मकस्तत इनन्तात् परस्मैपदमेव। आस्ते माणवकम्, आसयति माणवकम्। चलनाहारार्थेभ्यश्च चलयति, कम्पयति। आशयते माणवकम्, भोजयति। प्रुद्रुस्रुबुधि-युधिनशिजनीङ्भ्यः। प्रावयति। प्रापयतीत्यर्थः। द्रावयति। द्रवं करोतीत्यर्थः। स्रावयति। स्यन्दयतीत्यर्थः। गत्यर्थेभ्यश्चलनार्थकत्वात् सिद्धम्। बोधयति माणवकं श्लोकम्। ननु कथं "पत्रेण हंसाः पटुभिर्निनादैः प्रबोध्यन्ते मृगराजकन्याः" इति। तथा "करेणुरारोहयते निषादिनम्" इति माघे? सत्यम्। स्खलितमिदम्। योधयति काष्ठम्, नाशयति रोगम्, जनयति सुखम्, अध्यापयति माणवकम्।

धेट्-वदवसपादमाङ्यमाङ्-यसाङ्-परिमुहरुचेनृतीभ्य आत्मनेपदमेव। धेट्-धापयते। वद-शिशुं वादयते। वस निवासे-वासयते। पा पाने-पाययते। दमु-दमयते। आङ्यम-आयमयते। आङ्यस-आयसयते। परिमुह-परिमोहयते। रुच-रोचयते। एवं च- 'रोचयति लोचनचकोरम्' (गी० गो० १०।१) इति जयदेवप्रयोगे प्रमादः। नृती-नर्तयते।

**अद्यतन्यां द्युतादीनां वृतादेः स्यसनोरपि।**
**तथाकृतिगणादेव श्वस्तन्यामुभयं कृपेः॥**

अयमपरो यजादिः। अयमर्थः- अद्यतनीविषये यदुभयपदं द्युतादीनां भवतीत्यर्थः। अथ अण्विधानबलादेव परस्मैपदं भविष्यति, किमनेन विशेषवचनेन। नैवम्, ज्ञापकान्नित्यमपि परस्मैपदं ज्ञायते। अद्यतन्या अन्यत्र भवतीति संभाव्यते, ज्ञापकस्य सर्वोद्दिष्टत्वात्। स्यसनोरिति भावे सप्तमी। द्युतादयः कृपूपर्यन्ताः। द्युताद्यन्तर्गणो वृतादिः। व्यद्युतत्, व्यद्योतिष्ट। वर्त्स्यति, वर्तिष्यते। विवृत्सति, विवर्तिषते। कल्प्स्यति, कल्पिष्यते। चिक्लृप्सति, चिकल्पिषते। श्वस्तन्याम्-कल्प्ता, कल्पिता॥४९५।

**[समीक्षा]**

'कारयति-कारयते, यजति-यजते, सुनोति-सुनुते' इत्यादि परस्मैपद-आत्मनेपद के दो-दो प्रयोगों के सिद्ध्यर्थ पाणिनि तथा शर्ववर्मा दोनों ने ही नियम बनाए हैं। पाणिनि ने जिन धातुओं को स्वरितेत् कहा है, उनके लिए शर्ववर्मा ने यजादिगण बनाया है। पाणिनि ने णिच्-प्रत्ययान्त धातुओं से कर्त्रभिप्रायक क्रियाफल में आत्मनेपद के विधानार्थ "स्वरितञितः कर्त्रभिप्राये क्रियाफले" (अ० १।३।७२) के अतिरिक्त "णिचश्च" (अ० १।३।७४) सूत्र बनाया है। शर्ववर्मा ने तीनों का संग्रह एक ही सूत्र में कर दिया है।

यह विशेष ज्ञातव्य है कि शर्ववर्मा ने इन्प्रत्ययान्त, ञकारानुबन्धविशिष्ट तथा यजादिगणपठित धातुओं से कर्तृवाच्य में सामान्यतः उभयपद का विधान किया है,

जबकि पाणिनि ने क्रियाफल के कर्तृगामी होने पर आत्मनेपद का निर्देश किया है। इसके फलस्वरूप क्रियाफल के परगामी होने पर परस्मैपद प्रवृत्त होता है। तदनुसार विद्वान् संकल्प करते समय क्रियाफल के कर्तृगामी होने पर 'करिष्ये' इस आत्मनेपद का क्रियापद पढ़ते हैं, परन्तु फल के परगामी होने का स्थिति में 'करिष्यामि' इस परस्मैपद के क्रियापद को पढ़ते हैं। आख्यातपदों का व्यापक व्यवहार देखने पर पाणिनिकृत विभाग समीचीन प्रतीत नहीं होता, क्योंकि 'वृक्षं परिवारयन्ते कण्टकाः' आदि प्रयोगों में परिवारण क्रिया का फल कण्टकों को कभी प्राप्त नहीं होता, अतः वहाँ आत्मनेपद का व्यवहार नहीं होना चाहिए, लेकिन प्रयोग केवल आत्मनेपद का ही किया जाता है। इस विषय में कलापचन्द्रकार सुषेण विद्याभूषण का लेख द्रष्टव्य है, जिसमें कुलचन्द्र आदि के मत उद्धृत किए गए हैं।

**[विशेष वचन]**

१. समाहारानुबन्धा ये ते यजादयः (दु० वृ०)।

२. अफलवति कर्तर्यात्मनेपदं च दृश्यते। ...... फलवति कर्तरि परस्मैपदं च दृश्यते (दु० वृ०)।

३. गणकारवचनप्रमाणार्थमिदम् (दु० वृ०)।

४. फलवति कर्तर्यात्मनेपदम्, अन्यत्र च परस्मैपदम् अन्यो ब्रूते। तदयुक्त-मित्याह – अफलवतीत्यादि (दु० टी०)।

५. महाकविभिश्चाविशेषेणैव निबद्धम् – 'तवात्मयोनेरिव किं न धत्ते' इत्यादि (दु० टी०)।

६. कश्चित् फलवति कर्तर्यात्मनेपदम्, अफलवति कर्तरि परस्मैपदम् इति ब्रूते। तदिह न वक्तव्यम्, व्यभिचारादित्याह – अफलवतीत्यादि (वि० प०)।

७. महाकविनिबद्धः प्रयोगश्च दृश्यते। यथाह भारविः – 'तव दर्शनं किं न धत्ते' इति (वि० प०)।

८. इदानीमात्मनेपदविषये परस्मैपदं दर्शयन् परस्योभयथापि व्यभिचारमाह – फलवतीत्यादि (वि० प०)।

९. पदसंस्कारकं हि व्याकरणम् (वि० प०)।

१०. येषामेव धातूनां गणकृतोभयतोभाषत्वमुक्तम्, तेषामेव सूत्रकृताऽप्युभय-पदं विधीयते इति। एकसंवादनिबन्धनं गणकारवचनस्य प्रामाण्यं यथा स्यादित्यर्थः (वि० प०)।

११. अस्मन्मते प्रायेण व्यभिचारदर्शनात् "कर्त्रभिप्राये क्रियाफले" (अ० १।३।७२) इति पाणिनिसूत्रं न सम्मतमिति । तथा च कुलचन्द्रः—

विशेषः पाणिनेरिष्टः सामान्यं शर्ववर्मणः ।

सामान्यमनुगृह्णन्ति तत्राचार्यपरम्परा ।। इत्यादि (क० च०) ।।४९५।

[रूपसिद्धि]

१. **कारयति, कारयते** । कृ + इन् + अन् + ति, ते । 'कुर्वन्तं प्रयुङ्क्ते' इस अर्थ में 'डु कृञ् करणे' (७।७) धातु से "धातोश्च हेतौ" (३।२।१०) सूत्र द्वारा इन् प्रत्यय, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से ऋ को वृद्धि, "ते धातवः" (३।२।१६) से 'कारि' की धातुसंज्ञा, प्रकृत सूत्र से उभयपदविधान के अन्तर्गत परस्मैपदसंज्ञक वर्तमानार्थक प्रथमपुरुष – एकवचन 'ति' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से कारि - घटित इकार को गुण तथा "ए अय्" (१।२।१२) से अयादेश । आत्मनेपदसंज्ञक ते - प्रत्यय आने पर 'कारयते' प्रयोग ।

२. **सुनोति, सुनुते** । सु + नु + ति, ते । 'षुञ् अभिषवे' (४।१) धातु से प्रकृत सूत्र द्वारा उभयपदविधान के अन्तर्गत परस्मैपदसंज्ञक ति – प्रत्यय, "नुः ष्वादेः" (३।२।३४) द्वारा नु – विकरण तथा "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से नु – गत उकार को गुणादेश । आत्मनेपदसंज्ञक त – प्रत्यय में 'सुनुते' प्रयोग ।

३. **यजति, यजते** । यज + अन् + ति, ते । 'यज देवपूजासङ्गतिकरणदानेषु' (१।६०८) धातु से प्रकृत सूत्र द्वारा उभयपद का विधान । परस्मैपदरूप – यजति, आत्मनेपदरूप – यजते ।

४. **पचति, पचते** । पच + अन् + ति, ते । 'डु पचष् पाके' (१।६०३) धातु से प्रकृतसूत्र द्वारा उभयपद का विधान । परस्मैपदरूप तिप्रत्ययान्त-पचति । आत्मनेपदरूप ते-प्रत्ययान्त – पचते ।।४९५।

## ४९६. पूर्ववत् सनन्तात् [३।२।४६]

[सूत्रार्थ]

सन् प्रत्यय होने से पूर्व जो धातु जिस पद में होती है, सन् प्रत्यय होने के बाद भी उस धातु से वही पद उपपन्न होगा ।।४९६।

[दु० वृ०]

सनः पूर्वो यो धातुस्तद्वत् सनन्तादपि तत् पदं भवति। रुरोचिषते, अधिजिगांसते, पापचिषते, शिश्येनायिषते, पिपक्षति, पिपक्षते।

स्मृदृशी च सनन्तौ तु रुचादौ श्रुरनाङ्प्रतिः।
अननुर्ज्ञश्च विज्ञेयो यथा सुस्मूर्षते इति॥

[दु० टी०]

पूर्व०। सन् अन्ते यस्येति विग्रहः। पूर्वस्मादिव पूर्ववत्। **पूर्ववत्** सनन्तस्येदं विशेषणम्, पूर्वस्यावधिः सन्नेव श्रुतत्वाद् इत्याह-सनः पूर्व इति। तद्वदिति। येन निमित्तेन धातोः पदं दृष्टं तेनैव निमित्तेन सनन्तादपि भवतीत्यर्थः। नेर्विश् - निविविक्षते। परिव्यवेभ्यः क्रीञ् - परिचिक्रीषते इत्यादयः इति। अन्तग्रहणं पदविधौ सनन्तस्यैव निमित्तभावार्थम्, अन्यथा सनोऽवधिभावोपयुक्तत्वात् सनन्तादिति न लभ्यते, नहि द्वितीयं सन्ग्रहणमस्ति येनैतत् स्यात्। कुतस्तर्हि धातुमात्रादिति चेद् आत्मनेपदाद्यनुक्रमणमनर्थकं स्यात्। अथ प्रत्ययान्तात् स्यात् सन्ग्रहणमनर्थकं पूर्ववत् प्रत्ययादिति एवं वाच्यं स्यात् तस्मात् प्रत्यासन्नं सनं त्यक्त्वाऽन्यस्याश्रुतस्य कल्पनेऽतिप्रसङ्गात् सनन्तादेव भविष्यतीति **प्रतिपत्तिगौरवं** स्यात्। अथ तदन्तं विशिष्य पश्चात् सनः पूर्व इति सम्बन्धः, तथापि सम्मोह एव स्यात्।

योगापेक्षया पूर्वग्रहणं प्रागस्माद् योगाद् येभ्यः पदमुक्तं तेभ्यः सनन्तेभ्योऽपि भवतीति। न च वक्तव्यम् इनञ् यजादय एव पूर्वशब्दवाच्याः स्युः, तदधिकृत्य सनन्तेन ते विशिष्यन्ते इति पूर्वग्रहणमनर्थकं स्यात्। 'शिशत्सति, मुमूर्षति' इति। यद्यपि शदिमृङोः सनः पूर्वमात्मनेपदं दृष्टम् - शीयते, म्रियते। तथाप्यत्र न भवति। न हि शदिमृङितिमात्रमेव निमित्तम्, किन्तर्हि अत्राशीरद्यतन्योऽपि शदिरनीति आशीरद्यतन्योश्चेति वचनात् "जुगुप्सते" इत्यादौ यथा आत्मनेपदं तथा तत्रैवोक्तमिति। स्मृदृशी इत्यादि। स्मृ चिन्तायां परस्मैपदी तथा दृशिर् प्रेक्षणे सम्पूर्वस्तु रुचादिरेव। **"समो गमृच्छि०"** (३।२।४२, २०) इत्यादिना दिदृक्षते। एवं श्रुरनाङ्प्रतिरिति न विद्येते आङ्प्रती यस्येति विग्रहः। श्रु श्रवणे - शुश्रूषते। अनाङ्प्रतिरिति किम्? आशुश्रूषति, प्रतिशुश्रूषति। अननुर्ज्ञश्चेति न विद्यतेऽनुरस्येति विग्रहः। **"निह्नवे ज्ञा"** (३।२।४२-३९) इत्यादिभिर्गणसूत्रै रुचादित्वं सिद्धमेव। अन्यत्र - वचनं जिज्ञासते धर्मम्। अननुरिति किम्? पुत्रमनुजिज्ञासति। **वृत्तौ** यथा सुस्मूर्षते इति, **उपलक्षणमात्रमेतत्**॥४९६।

[वि० प०]

पूर्व० । पूर्वशब्दः सम्बन्धिशब्दत्वादवधिमपेक्षते, स चावधिः सन्नेव श्रुतत्वा-दित्याह – सनः पूर्वो यो धातुरिति । तद्वदिति पूर्ववदित्यर्थः । पूर्वस्मादिति पूर्ववदिति पञ्चम्यन्ताद् वतिर्येन निमित्तेन सनः पूर्वस्माद् धातोर्यत् पदं दृष्टम्, तेनैव निमित्तेन सनन्तादपि तत् पदं भवतीत्यर्थः । रुरोचिषते इति । अनुदात्तानुबन्धेन निमित्तेन रोचते इति आत्मनेपदं दृष्टम्, तेनैव सनन्तादपि भवति । एवम् अन्यत्रापि निमित्तम् ऊह्यम् । इह व्यञ्जनादेर्व्युपधस्यावो वेत्यत्र संश्चेति वचनाद् विभाषया गुणः । अधिजिगांसते इति । अधिपूर्वः **'इङ् अध्ययने'** (२।५६) **"सनीङिङोर्गमिः"** (३।४।८६) इति गमिरादेशो **"हनिङ्गमोरुपधायाः"**(३।८।१३) इति उपधाया दीर्घः ।पापचिषते इति । पापच्यशब्दाच्चेक्रीयितान्तात् पापचितुम् इच्छतीति सन्, तत इडागमः, **"अस्य च लोपः, यस्यानानि"** (३।६।४९, ४८) इति यलोपः । अथेह कथम् आत्मनेपदं न भवति ? 'शिशत्सति, मुमूर्षति' इति शदिमृङोरपि सनः पूर्वमात्मनेपदं दृष्टमेव । यथा – शीयते, म्रियते इति । नैवम्, नहि शदिमृङ्मात्रमात्मनेपदनिमित्तम्, किन्तर्हि अन्नाशीरद्यतन्योऽपि शदिरनि आशीरद्यतन्योश्च मृङ् इति वचनात् । न चेह सनः पूर्वभागस्यानुविकरणाशीरद्यतनीनामात्मनेपदनिमित्तभूतानां सम्भवोऽस्तीति, तस्मान्निमित्ताभावादेव न भवतीति ।

स्मृदृशीत्यादि । स्मरतेरुपलक्षणमुदाहरिष्यति । तथा दृशेरपि– दिदृक्षते । श्रुरनाङ्प्रतिरिति । न विद्येते आङ्प्रती यस्येति विग्रहः । शुश्रूषते, उपशुश्रूषते । अनाङ्-प्रतिरिति किम् ? आशुश्रूषति, प्रतिशुश्रूषति । अननुर्ज्ञाश्चेति । न विद्यतेऽनुर्यस्येति विग्रहः । जिज्ञासते, प्रतिजिज्ञासते । अननुरिति किम् ? पुत्रमनुजिज्ञासति । यथा सुस्मूर्षति इति । स्मर्तुमिच्छतीति सन् । **"स्वरान्तानां सनि"** (३।८।१२) इति दीर्घत्वे, **"उरोष्ठ्योपधस्य"** (३।५।४३) इत्युर्, **"नामिनो र्वोः"** (३।८।१४) इत्यादिना दीर्घः एतेभ्यः स्मृप्रभृतिभ्यः परस्मैपदित्वादप्राप्तमात्मनेपदं सनन्तेभ्यो विहितं रुचादेराकृतिगणत्वादिति ॥४९६।

[क० च०]

पूर्व० । पूर्वशब्दोऽत्र पूर्वसम्बन्धिनि पदविधाने वर्तते । तेनायमर्थः– पूर्वस्य सम्बन्धि यत् पदं तेन तुल्यं सनन्तादपि भवति । तर्हि कथं पूर्वस्मात् पदविधानेन सनन्तात् पदविधानं तुल्यम्, एकनिमित्तत्वात् । येन निमित्तेन पूर्वस्मादुभयपदं विहितम्, तेनैव सनन्तादपि तदिति निमित्तातिदेशोऽयमिति रक्षितः । वस्तुतस्तु पूर्वसदृशात् सनन्तात् कार्यं भवतीति सूत्रार्थः । कार्यं चात्रात्मनेपदप्रकरणात् परस्मैपदादपि तथा उभय-

पदानुवृत्तौ पूर्ववदित्यस्य वैयर्थ्यात्। **सादृश्यं** च यदि प्रत्यासत्त्या विधीयमान-कार्यद्वारैवाभिमतं स्यात्। तदा सनन्तस्य तादृक् सादृश्यं प्राक् सिद्धम् इतीदानीमेव विधीयते इति सनन्तः पूर्ववद् भवतीत्येवं वक्तुम् उचितम्। तस्माद् विधेयस्य यन्निमित्तं तद्द्वारैव **सादृश्यम्**, तेन पूर्वस्य यदात्मनेपदादिनिमित्तता, तद्विशिष्टात् सनन्ता-दात्मनेपदादिकं भवतीत्यर्थः।

ननु पूर्वनिमित्तस्य ङानुबन्धादेः कथं सनन्ते सम्भवः, ततः सम्भावनवैयर्थ्यमिति वाच्यम्, साक्षाद् विशिष्टत्वाभावे परम्परया तद्विशिष्टत्वासत्त्वात् प्रकृतिद्वारैव प्रकृत्यनुबन्धादिसम्बन्धात्। न च वचनं विना परम्परया सन्निमित्तविशिष्टाद् विधिः सम्भवतीति भावः। समूपूर्वस्येणो गमादेशे यथात्मनेपदम्, तथा हनिङ्गमोरित्यत्र वक्ष्यामः। **अन्ये** तु कार्यातिदेशोऽयं पूर्वसम्बन्धिकार्यं सन्वद् भवतीत्यर्थः। एवं चार्थान्तरे आत्मनेपदिनोऽपि सनि कृतेऽर्थान्तरव्यावृत्त्यात्मनेपदं स्यादिति न वाच्यम्। प्रत्यासत्त्या सादृश्यात् पूर्ववदात्मनेपदं सादृश्ये वद्ग्रहणात् **काकाक्षिन्यायेन** सनन्तस्य विशेषणमाहुः। अन्यथेति सनः पूर्वो यस्तत्सदृशो भवतीति **कार्यातिदेशः** सामान्यत एव विधिः स्यादित्यर्थः, कुतस्तदतिरिक्तविधिरिति शेषः। अनर्थकमिति। सनः प्रकृते क्वचिदात्मनेपदस्य क्वचित् परस्मैपदस्य च दृष्टत्वात् सामान्यतस्तत्रातिदेशे कर्तरि रुचादीत्यादिवचनमनर्थकं स्यादित्यर्थः। सनन्तग्रहणमिति पूर्वग्रहणमित्यपि बोध्यम्। अग्रे पूर्ववत् प्रत्ययादित्यनर्थकमेव।

**वस्तुतस्तु** प्रत्ययादिति विधिवाक्यम्। तथाहि सनः प्रकृते क्वचिद् आत्मनेपदस्य क्वचित् परस्मैपदस्य च दृष्टत्वात् प्रत्ययान्तेभ्यः सामान्यतस्तत्रातिदेशे क्रियमाणे पूर्वसूत्रादुभयपदस्यानुवृत्त्या प्रत्ययान्तराद् उभयपदम् इत्येव वक्तुमुचितम्, किमति-देशेनेति भावः। **मैत्रेयेणापी**दृगेव एतन्न बुद्ध्वा सन्ग्रहणमपहाय प्रत्ययादिति कृते **गौरवम्**, तथापि **प्रतिपत्तिलाघवम्** इष्टमिति **सारसमुच्चयकृता उक्तम्**। योगेनेति न वक्तव्यम् इत्यनेनैव सम्बन्धः। एवं हि अनन्तरत्वात् पूर्वयोगनिर्दिष्ट एव पूर्वशब्दवाच्यः स्यादिति असदृशात् सनन्तात् कार्यं विधीयमानं सिद्धशास्त्रवत् कार्यनिमित्तत्वाच्च सादृश्यग्रहणाद् येभ्य उभयपदं विहितं तेभ्योऽप्युभयपदमित्येव पर्यवस्यतीत्यर्थः। पूर्वग्रहणमिति। अत एव यथा इनुञ्यजादेरुभयपदम्, तथा सनन्तादपि भूप्रभृतेरित्यर्थो नाशङ्क्यते। शदिरनीति। एवम् अनुचिकीर्षतीत्यत्र सूचनाद्यर्थेऽप्यात्मनेपदस्य निमित्तमस्ति, तथापि अनुपरिभ्यां च कृञः परस्मैपदस्य वक्ष्यमाणत्वात् सूचनाद्यर्थस्यापि निमित्तता नाश्रीयते

इति नात्मनेपदम् । अननुरित्यकर्मकस्य सामान्यरुचादिपाठादनुपूर्वत्वेऽप्यात्मनेपदम् भवत्येव । सर्पिषोऽनुजिज्ञासते इत्युपसर्गात् कर्मप्रवचनीययोगे आत्मनेपदं भवत्येव । देवदत्तमनुजिज्ञासते धर्मम् । एवं चैत्रं प्रति शुश्रूषते इति ॥४९६।

**[समीक्षा]**

'शिशयिषते, निविविक्षते, अधिजिगांसते, पापचिषते' इत्यादि रूपों में सन्-प्रत्ययान्त धातुएँ हैं– 'शिशयिष, निविविक्ष, अधिजिगांस, पापचिष' । सन्प्रत्ययान्त धातुओं की पुनः धातुसंज्ञा करनी पड़ती है । अतः उनसे आत्मनेपद–परस्मैपद-विधान के समाधानार्थ दोनों ही आचार्यों ने स्वतन्त्र सूत्र बनाएँ हैं । पाणिनि का भी कातन्त्रकार की ही तरह सूत्र है–"पूर्ववत् सनः" (अ० १।३।६२) । दोनों के ही अनुसार सनन्त धातुओं से उसी पद का विधान शिष्टसम्मत माना गया है, जो मूल धातुओं से प्राप्त होता है । जो निमित्त मूल धातु से आत्मनेपदविधान का है– रुचादिगण में पाठ अथवा ङकारानुबन्ध, वही निमित्त सन्नन्त धातु से भी आत्मनेपद के स्वीकार करने में मान्य है । काशिकावृत्तिकार जयादित्य तथा टीका-विवरणपञ्जिका–कलापचन्द्रकार दुर्गसिंह आदि ने कहा है– "येन निमित्तेन पूर्वस्मादात्मनेपदं विधीयते तेनैव सन्नन्तादपि भवति" ।

**[विशेष वचन]**

१. येन निमित्तेन धातोः पदं दृष्टम्, तेनैव निमित्तेन सनन्तादपि भवतीत्यर्थः (दु० टी०, वि० प०, क० च०)।

२. वृत्तौ यथा सुस्मूर्षते इति । उपलक्षणमात्रमेतत् (दु० टी०)।

३. रुरोचिषते इति । अनुदात्तानुबन्धेन निमित्तेन रोचते इत्यात्मनेपदं दृष्टम्, तेनैव सनन्तादपि भवति (वि० प०)।

४. एतेभ्यः स्मृप्रभृतिभ्यः परस्मैपदित्वादप्राप्तमात्मनेपदं सनन्तेभ्यो विहितम्, रुचादेराकृतिगणत्वादिति (वि० प०)॥

५. येन निमित्तेन पूर्वस्मादुभयपदं विहितम्, तेनैव सनन्तादपि तदिति निमित्तातिदेशोऽयमिति रक्षितः (वि० प०)।

६. अन्ये तु कार्यातिदेशोऽयम् । पूर्वसम्बन्धिकार्यं सन्वद् भवतीत्यर्थः (क० च०)।

७. एतन्न बुद्ध्वा सन्ग्रहणमपहाय प्रत्ययादिति कृते गौरवम्, तथापि प्रतिपत्तिलाघवमिष्टमिति सारसमुच्चयकृतोक्तम् (क० च०)।

**[रूपसिद्धि]**

१. **रुरोचिषते** । रुच् + सन् + अन् + ते । 'रोचितुमिच्छति' इस अर्थ में 'रुच दीप्तौ' (१।४७३) धातु से "धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्" (३।२।४) सूत्रद्वारा सन् प्रत्यय 'इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः" (३।७।१) से इडागम, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से रुच् को द्वित्व, पूर्ववर्ती रुच् की "पूर्वोऽभ्यासः" (३।३।४) से अभ्याससंज्ञा, "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) से च् का लोप, "नामिनश्चोपधाया लघोः" (३।५।२) से धातुगत उपधासंज्ञक उकार को गुण, "नामिकरपरः प्रत्ययविकारागमस्थः सिः षं नुविसर्जनीयषान्तरोऽपि" (२।४।४७) से सन्प्रत्ययगत सकार को षकारादेश, "ते धातवः" (३।२।१६) से 'रुरोचिष' की धातुसंज्ञा, रुचादिगणपठित होने के कारण "कर्तरि रुचादिङानुबन्धेभ्यः" (३।२।४२) से रुच् धातु आत्मनेपदी है, अतः सनन्त 'रुरोचिष' धातु से प्रकृत सूत्र के निर्देशानुसार वर्तमानासंज्ञक आत्मनेपद ते-प्रत्यय, "षडाद्याः सार्वधातुकम्" (३।१।३४) से वर्तमाना की सार्वधातुकसंज्ञा, "अन् विकरणः कर्तरि" (३।२।३२) से अन्-विकरण तथा न्-अनुबन्ध का प्रयोगाभाव।

२. **अधिजिगांसते** ।अधि + इण् - गा + सन् + अन् + ते ।'अध्येतुम् इच्छति' इस अर्थ में 'अधि' उपसर्गपूर्वक 'इण् गतौ' (२।१३) धातु से सन् प्रत्यय, "सनीणिङोर्गमिः" (३।४।८६) से गम् आदेश, द्विर्वचन, अभ्याससंज्ञा, म् का लोप, "कवर्गस्य चवर्गः" (३।३।१३) से अभ्यासगत ग् को ज्, "सन्यवर्णस्य" (३।३।२६) से अभ्यासगत अकार को इकारादेश, "हनिङ्गमोरुपधायाः" (३।८।१३) से गम्धातुगत उपधासंज्ञक अकार को दीर्घ, "मोऽनुस्वारं व्यञ्जने" (१।४।१५) से म् को अनुस्वार, 'अधिजिगांस' की धातुसंज्ञा, ते प्रत्यय, अन्विकरण।

३. **पापचिषते** । पच् + इट् + सन् + अन् + ते । 'पुनः पुनः पक्तुमिच्छति' इस अर्थ में 'डु पचष् पाके' (१।६०३) धातु से "धातोर्यशब्दश्चेक्रीयितं समाहारे" (३।२।१४) से य - प्रत्यय, द्वित्वादि – पापच्य, उससे सन् प्रत्यय, इडागम, "अस्य च लोपः" (३।६।४९) से अकारलोप, "यस्यानिनि" (३।६।४८) से यकारलोप, मूर्धन्यादेश, धातुसंज्ञा, वर्तमानासंज्ञक ते - प्रत्यय।

४. **शिश्येनायिषते** । श्येन + आयि + सन् + ते । 'श्येन इवाचरितुमिच्छति' इस अर्थ में 'श्येन' शब्द से "कर्तुरायिः सलोपश्च" (३।२।८) सूत्र द्वारा 'आयि' प्रत्यय, सन् प्रत्यय, इडागम, मूर्धन्यादेश, धातुसंज्ञा तथा ते – प्रत्यय।

५. **पिपक्षति, पिपक्षते** । पच् + सन् + ति, ते । 'पक्तुमिच्छति' इस अर्थ में 'डु पचष् पाके' (१।६०३) धातु से सन् प्रत्यय, अनिट्त्व, द्विर्वचनादि, "सन्यवर्णस्य" (३।३।२६) से अभ्यासगत अकार को इकार, "चवर्गस्य किरसवर्णे" (३।६।५५) से च् को क्, सन्प्रत्ययगत सकार को षकार, 'क् + ष्' – के संयोग से क्ष् 'पिपक्ष' की धातुसंज्ञा, उससे वर्तमानासंज्ञक परस्मैपद ति – प्रत्यय तथा आत्मनेपद ते – प्रत्यय ॥४९६।

## ४९७. शेषात् कर्तरि परस्मैपदम् [३।२।४७]

### [सूत्रार्थ]

जिनसे आत्मनेपद का विधान किया गया है, उन्हें छोड़कर शेष धातुओं से कर्तृवाच्य में परस्मैपद होता है ॥४९७।

### [दु० वृ०]

येभ्य आत्मनेपदमुक्तं ततोऽन्यः **शेषः** । शेषाद् धातोः कर्तरि परस्मैपदं भवति । भवति, अत्ति, जुहोति, दीव्यति, रुणद्धि, तुदति, विशति, चोरयति, पुत्रीयति, पुत्रकाम्यति । पुनः कर्तरीति किम् ? भिद्यते कुशूलः स्वयमेव । नायं शुद्धः कर्तेति । कथमनुकरोति, पराकरोतीति ? नित्यं वक्तव्यम् । प्रतिक्षिपति, अतिक्षिपति, अभिक्षिपति । परस्मैपदमेव । तथा प्रवहति, परिमृष्यति, विरमति, आरमति, परिरमति, देवदत्त-मुपरमति । नात्मनेपदम्, यजादे रुचादेश्च **गणकृतस्यानित्यत्वात्** ॥४९७।

**॥इति दौर्गसिंह्यां वृत्तावाख्याते तृतीयाध्याये द्वितीयः प्रत्ययपादः समाप्तः॥**

●

### [दु० टी०]

शेषात्० । निविशिष्टो विशती रुचादिस्तदन्योपसर्गविशिष्टः – प्रविशति । आयिचेक्रीयिताभ्यां यिन्नादयोऽन्ये – पुत्रकाम्यति, गोपायति । **एवमन्येऽपि** । शेषादिति पञ्चम्या अर्थशेषे न स्यात् । भिद्यते कुशूलः स्वयमेवेति । तस्माच्छेषेऽर्थे इति वक्तव्यम्, नैवम् । कर्तरीत्यनुवर्तते पुनः कर्तरीति शेषात् कर्तरीति **प्रतिपत्त्यर्थं** कर्तैव यत्र कर्ता यथा स्यात् । कर्ता चान्यश्च यत्र तत्र मा भूदित्याह – पुनरित्यादि । नात्रानुपरिभ्यां कृञ इति सूत्रमस्तीत्याह – कथमित्यादि । क्षिप प्रेरणे विभाषितः, नात्र प्रत्यत्यभिभ्यः क्षिप इति सूत्रमस्तीति । वह प्रापणे विभाषितः, नात्र प्राद् वहः इति सूत्रमस्ति । मृष तितिक्षायां विभाषितः । नात्र परेर्मृषश्चेति सूत्रमस्ति । चकारेण परिवहति । **'रमु क्रीडायाम्'** (१।५६१) आत्मनेपदी । नात्र **"व्याङ्परिभ्यो रमः"** (अ० १।३।८३) इति सूत्रमस्ति,

**"उपात् सर्कमकात्"** (अ० १।२।८४) इत्यपि नास्ति । अन्तर्भूतेनर्थो रमिरुपसर्गपूर्वश्च सकर्मक इति । देवदत्तमुपरमति । निवर्तयतीत्यर्थः । परिहारमाह – **गणकृतस्यानित्यत्वादिति** । अनित्यत्वं च लक्षणमनुसरतीति भावः । चुरादिभ्य आत्मनेपदिभ्यः शेषा इनन्ताश्चुरादयः परस्मैपदिन एव भवन्तीति, न तूभयपदिन इति ॥४९७।

**॥इति दुर्गसिंहविरचितायां कातन्त्रवृत्तिटीकायामाख्याते तृतीयाध्याये**

**द्वितीयः प्रत्ययपादः समाप्तः॥**

●

## [वि० प०]

शेषात्० । विशतीति । **"नेर्विशः"** (३।२।४२-१) इति वचनान्निविशिष्टो विशी रुचादिरन्योपसर्गविशिष्टः केवलश्च **शेषः** । तेन प्रविशतीत्यपि भवति । ननु शेषादिति पञ्चम्या धातुरेवाख्यायते, नार्थः । ततोऽर्थशेषेण स्याद् अतः पूर्वोक्तेऽपि कर्मकर्तर्यर्थे परस्मैपदं कथं न स्यात् ? तत्र हि वत्करणस्य स्वाश्रयार्थत्वेन कर्तृप्रतिबन्धमपि कार्यं भवतीत्युक्तम् । तस्माच्छेषेऽर्थे भवतीत्यपि वक्तव्यम् । तदयुक्तमित्याह – पुनरित्यादि । **"कर्तरि रुचादिङानुबन्धेभ्यः"** (३।२।४२) इत्यतः कर्तरीत्यनुवर्तमाने यत् पुनः कर्तृग्रहणम्, तत् कर्तैव यत्र कर्ता तत्रैव कर्तरि यथा स्यादिति । यस्तु कर्ताऽन्यस्तत्र मा भूदित्याह – नायं शुद्धः कर्तेति । यद्येवम्, करणकर्तरि कथं परस्मैपदम् – साध्वसिश्छिनत्तीति । नैवम्, करणकर्तुः पूर्वमनुक्तत्वाच्छेषत्वमस्तीति परस्मैपदं न विरुद्धमिति । इह हि कर्तृग्रहणेन शेषेऽर्थे भवतीति दर्शितम् । कथमित्यादि ।

**"अनुपराभ्यां कृञः"** (अ०१।३।७९) इति परस्मैपदविधायकस्य सूत्रस्याभावादुभयपदं प्राप्नोति । तस्मान्नित्यं परस्मैपदं वक्तव्यमित्यर्थः । तथा नात्रापि "प्रत्यत्यभिभ्यः क्षिपः" इति सूत्रमस्तीति । उभयपदिनः क्षिपेरात्मनेपदमपि स्यादिति । तथा वहिरपि विभाषितः, नात्र, **"प्राद् वहः"** (अ० १।३।८१) इति सूत्रमस्ति । तथा 'मृष तितिक्षायाम्' (९।२९०) पूर्ववद् विभाषितः । नात्र **"परेर्मृषश्च"** (अ० १।३।८२) इति सूत्रमस्ति । चकाराद् वहेरपि । तेन 'परिवहति' इत्यप्युदाहर्तव्यम् । तथा 'रमु क्रीडायाम्' (१।५६१) आत्मनेपदित्वादात्मनेपदम्, नात्र **"व्याङ्परिभ्यो रमः"** (अ० १।३।८३) इति । नात्र **"उपात् सकर्मकात्"** (अ० १।२।८४) इति सूत्रमस्ति । अन्तर्भूतकारितार्थो रमिरुपपूर्वः सकर्मकः – देवदत्तमुपरमति, उपरमयति, निवर्त-

यतीति यावत् । एतन्न वक्तव्यमित्याह – नात्मनेपदमित्यादि । अनित्यार्थश्च लक्षणमनुसरतीति भावः । तथा चुरादिभ्य आत्मनेपदिभ्यः शेषा इनन्ताश्चुरादयः परस्मैपदिन एव भवन्ति, न तूभयपदिन इति ॥४९७।

**॥इति त्रिलोचनदासकृतायां कातन्त्रवृत्तिपञ्जिकायामाख्याते तृतीयाध्याये द्वितीयः प्रत्ययपादः समाप्तः॥**

●

## [क० च०]

शेषात्० । ननु कथं तुदतीति प्रत्युदाहृतम्, तथाहि – तुदप्रभृतीनां सिचिर्क्षरणपर्यन्तानामेकादशानां विभाषितत्वात् तुदतीति पाठोऽशुद्ध एव । तथा च "**तुदादेरनि**" (३।५।२५) इत्यत्र **टीकायां** तुदादेरुभयपदिनोऽपि **भाषायां** परस्मैपदमेवाभिधीयते इत्युक्तम् । **कुलचन्द्रस्तु भाषायां** तुदादेस्तु तुदतीति परस्मैपदमित्याचष्टे, **तन्मते** तुदतीति पाठोऽपि संगच्छते । **पञ्जी** – नैवमित्यादि । एतेन शेषेऽर्थे भवत्येवेत्यर्थमङ्गीकृत्याह –इहेत्यादि । तथा च **वररुचिः** – शेषं चतुर्विधमुक्तवान् । तथाहि,

**अर्थादुपपदत्वे तु तथा चैवानुबन्धतः।**
**कारकाच्चैव विज्ञेयः शेष उक्तश्चतुर्विधः॥**

**कुलचन्द्रस्तु** शुद्धकर्तरीत्याह । ननु यदि शुद्धकर्तरि भवतीत्युच्यते, तदा कथम् 'असिश्छिनत्ति' इति करणकर्तृत्वात् ? सत्यम्, इह हि कर्तृत्वविवक्षायां करणत्वत्यागः । अत एव कर्मकर्तर्यपि स्यात् तदर्थं कर्मवद्भावः । तन्न, कर्मकर्तर्यपि कर्मत्यागात् शुद्धकर्तृत्वं स्यात् । ननु कथं **'प्रियामुखं किम्पुरुषश्चुचुम्बे'** इति ? सत्यम् । क्रियाव्यतिहारे आत्मनेपदमिति । तथा **'इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे'** (उ० रा० च० १।१) इति **'शासु अनुशिष्टौ'** (२।३९) इत्यस्य परस्मैपदित्वाद् **'आङः शास इच्छायाम्'** (२।४६) इत्यस्य प्रयोगः । **'कदाचित् कुप्यते माता नोदरस्था हरीतकी'** इति क्विबन्तादायिः । आय्यन्तादात्मनेपदम् । **'आलानं करिणां सम्रे'** इति कर्मकर्तर्यात्मनेपदम् । चुरादिभ्य इत्यादि। एतेन चुरादीनन्तत्वादुभयपदं नास्तीति सूचितम् । एतेन अर्चधातोश्चुरादावात्मनेपदिषु पाठात् **'अर्चयिष्यामो भवन्तमर्चय'** इत्यादि वाक्यमशुद्धमेव, तथा **'अपहाय महीशमार्चिचत् सदसि त्वां ननु भीमपूर्वजः'** इत्यपि **माघस्य** स्खलितमिति ।

**केचित्तु** 'अर्चयमानं भीष्मादिकं प्रयुक्तवान् इत्येवार्थो विवक्षितः' इत्यपीच्छन्ति । यद्यपि शेषादिति पञ्चम्यन्तधातुसमानाधिकरणमिति । क्वचिदर्थे धातोः (र) शेषत्वा-

दशेषेष्वपि (स्वागमार्थेषु) सूचनार्थेषु परस्मैपदं प्राप्नोति, तथापि सूचनार्थस्यापि प्रकृतिविशेषणत्वेनोपादानाद् विशिष्टापेक्षया शेषपरिग्रहः इति भेदकस्याभेदाद् भेद्यस्याभेदकल्पना, उपान्मन्त्रेणेत्यनेन मन्त्रस्य करणत्वाविवक्षायां रुचादिपाठात् तदभावे कारकविशेषत्वं बोध्यम् । वत्करणस्य स्वाश्रयार्थत्वात् कर्तरि कार्यं स्यादिति – कर्त्रैवेति । वात्रेत्यन्तरङ्गोपसर्गग्रहणात् कर्मप्रवचनीयार्थस्य वृक्षमनुकुरुते, वृक्षमभिक्षिपतीति । उपादिति अकर्मकाणां यबन्तकृतोपरममात्रनिवृत्त्यर्थमिति **वररुचिः** । चुरादिभ्य इति । चुरादीनन्तादुभयपदं स्यात् तदा चुरादेरुदात्तानुबन्धोऽनर्थकः स्यादिति **कुलचन्द्रप्रलापो** हेय एव ।

उदात्तानुबन्धत्वात् परस्मैपदमिति सूत्राभावे चुरादेरुदात्तानुबन्धे मानाभावाद् विकल्पेनन्तस्योदात्तानुबन्धसाफल्ये उभयपदानुपपत्तेः । तस्माद् **'वटि विभजने'** (९।१०८) इति पाठाच्चुरादीनन्तान्नोभयपदम् । अन्यथा विभजनवृत्तेर्गणान्तरस्थाद् इनि कृते विभजनार्थो गम्यते इति **रक्षितः** । **अन्ये** तु **स्वार्थिकस्यापि** कर्मसंज्ञां प्रत्येवार्थवत्त्वम्, न तु सर्वत्र । परस्मैभाषा – आत्मनेभाषापाठाद् वा **गणकारवचनाद्** वा विकल्पेनूपक्षे चरितार्थस्य प्रायिकत्वमिति । **'धूञ् कम्पने'** (८।१३; ९।२९७) इत्यादौ ञकारकरणं च । **धातुपारायणे** तु 'चोरयति–चोरयते' इति उभयपदमुदाहरति । अधिकं तु **"चुरादेश्च"** (३।२।११) इत्यत्र **प्रपञ्चितमिति** ।।४९७।

**।।इति श्रीसुषेणविद्याभूषणाचार्यकविराजकृते आख्यातप्रबोधे द्वितीयः प्रत्ययपादः समाप्तः।।**

●

**[समीक्षा]**

'भवति, अत्ति, जुहोति, दीव्यति, रुणद्धि, तुदति, विशति, चोरयति, पुत्रीयति, पुत्रकाम्यति' आदि शब्दरूपों के सिद्ध्यर्थ जिन धातुओं से आत्मनेपद का विधान किया गया है, उनसे भिन्न (= शेष) धातुओं से कर्तृवाच्य में परस्मैपद का विधान पाणिनि तथा शर्ववर्मा दोनों ही शाब्दिकाचार्यों ने किया है । पाणिनि का भी यही सूत्र है– "शेषात् कर्तरि परस्मैपदम्" (अ० १।३।७८) । शुद्ध कर्ता में ही यह परस्मैपदविधि प्रवृत्त होती है, अतः 'भिद्यते कुसूलः स्वयमेव' आदि कर्मकर्तृस्थलों में इसका अभाव देखा जाता है । 'अनु-परा' उपसर्गपूर्वक 'कृ' धातु से उभयपद न होकर केवल परस्मैपद ही साधु माना जाता है – अनुकरोति, पराकरोति । 'प्रवहति, विरमति' आदि प्रयोग 'यजादि – रुचादि' के गण होने तथा गणनिर्दिष्टविधि के अनित्य होने से उपपन्न होते हैं ।

**[विशेष वचन]**

१. प्रवहति . . . . विरमति . . . परिरमति, देवदत्तमुपरमति । नात्मनेपदम्, यजादे रुचादेश्च गणकृतस्यानित्यत्वात् (दु० वृ०)।

२. कर्तरीति प्रतिपत्त्यर्थं कर्तैव यत्र कर्ता तत्र यथा स्यात् । कर्ता चान्यश्च यत्र तत्र मा भूत् (दु० टी०)।

३. अन्तर्भूतेनर्थो रमिरुपसर्गपूर्वश्च सकर्मकः इति । ........ अनित्यत्वं च लक्षणमनुसरतीति भावः (दु० टी०)।

४. यत् पुनः कर्तृग्रहणम्, तत् कर्तैव यत्र कर्ता तत्रैव कर्तरि यथा स्यादिति (वि० प०)

५. अन्तर्भूतकारितार्थो रमिरुपपूर्वः सकर्मकः। देवदत्तमुपरमति, उपरमयति, निवर्तयतीति यावत् । . . . . अनित्यार्थं च लक्षणमनुसरतीति भावः (वि० प०)।

६. टीकायां तुदादेरुभयपदिनोऽपि भाषायां परस्मैपदमेवाभिधीयते इत्युक्तम् । कुलचन्द्रस्तु भाषायां तुदादेस्तु तुदतीति परस्मैपदमित्याचष्टे, तन्मते तुदतीति पाठोऽपि संगच्छते (क० च०)।

७. अर्थादुपपदत्वे तु तथा चैवानुबन्धतः ।
कारकाच्चैव विज्ञेयः शेष उक्तश्चतुर्विधः ।। (क० च०)।

८. अन्ये तु स्वार्थिकस्यापि कर्मसंज्ञा प्रत्येवार्थवत्त्वम्, न तु सर्वत्र परस्मैभाषात्मनेभाषापाठाद् वा, गणकारवचनाद् वा विकल्पेनूपक्षे चरितार्थस्य प्रायिकत्वमिति (क० च०)।

**[रूपसिद्धि]**

१. **भवति** । भू+अन्+ति । 'भू सत्तायाम्' (१।१) धातु से कर्ता अर्थ में प्रकृत सूत्र द्वारा परस्मैपद का विधान, तदनुसार वर्तमानासंज्ञक प्रथमपुरुष – एकवचन 'ति' प्रत्यय, सार्वधातुकसंज्ञा अन् विकरण्, गुण तथा अवादेश ।

२. **अत्ति** । अद्+अन्-लुक्+ति । 'अद् भक्षणे' (२।१) धातु से प्रकृत सूत्र द्वारा परस्मैपद, सार्वधातुकसंज्ञा, अन् विकरण, उसका लुक् तथा द् को त् ।

३. **जुहोति** । हु +ति ।'हु दानादनयोः'(२।६७) धातु से कर्ता अर्थ में परस्मैपद, तिप्रत्यय, सार्वधातुकसंज्ञा, द्विर्वचनादि ।

४. **दीव्यति** । दिव + यन् + ति ।'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु' (३।१) धातु से परस्मैपद, तिप्रत्यय, सार्वधातुकसंज्ञा तथा यन् विकरण ।

५. **रुणद्धि** । रुध + न + ति । 'रुधिर् आवरणे' (६।१) धातु से कर्ता अर्थ में परस्मैपद, तिप्रत्यय, न – विकरण, त् को ध्, ध् को द् तथा न् को ण् आदेश ।

६. **तुदति** । तुद + अन् + ति । 'तुद व्यथने' (५।१) धातु से कर्तृवाच्य में परस्मैपद, तिप्रत्यय अन् – विकरण तथा न् अनुबन्ध का प्रयोगाभाव ।

७. **विशति** । विश + अन् + ति । पूर्ववत् प्रक्रिया ।

८. **चोरयति** । चुर् + इन् + अन् + ति ।'चुर स्तेये' (९।१) धातु से ''चुरादेश्च'' (३।२।११) सूत्र द्वारा इन् प्रत्यय, उपधासंज्ञक उकार को गुणादेश, 'चोरि' की धातुसंज्ञा, प्रकृत सूत्र से कर्ता अर्थ में परस्मैपद, ति–प्रत्यय, अन् विकरण, इकार को गुण एकार तथा उसका अयादेश ।

९. **पुत्रीयति**। पुत्र + य + ति । 'पुत्रमात्मन इच्छति' इस अर्थ में 'पुत्र' शब्द से य-प्रत्यय करके निष्पन्न 'पुत्रीय' की धातुसंज्ञा, प्रकृत सूत्र से कर्ता अर्थ में परस्मैपद, तिप्रत्यय तथा अन् विकरण ।

१०. **पुत्रकाम्यति** । पुत्र + काम्य + अन् + ति । 'पुत्रमात्मन इच्छति' इस अर्थ में 'पुत्र' शब्द से 'काम्य' प्रत्यय, 'पुत्रकाम्य' की धातुसंज्ञा प्रकृत सूत्र से कर्ता अर्थ में परस्मैपद, तिप्रत्यय तथा अन् विकरण ।

११-२१. **अनुकरोति** । अनु + कृ + उ + ति । **पराकरोति** । परा + कृ + उ + ति । **प्रतिक्षिपति** । प्रति + क्षिप् + अन् + ति । **अतिक्षिपति** । अति + क्षिप् + अन् + ति । **अभिक्षिपति** । अभि + क्षिप् + अन् + ति । **प्रवहति** । प्र + वह + अन् + ति । **परिमृष्यति** । परि + मृष् + य + ति । **विरमति** । वि + रम् + अन् + ति । **आरमति** । आङ् + रम् + अन् + ति । **परिरमति** । परि + रम् + अन् + ति । **देवदत्तमुपरमति** । उप + रम् + अन् + ति । पूर्ववत् प्रक्रिया । गणभेद से विकरणभेद ।।४९७।

**।।इति तृतीये आख्याताध्याये समीक्षात्मको द्वितीयः प्रत्ययपादः समाप्तः।।**

●

# अथ तृतीये आख्याताध्याये तृतीयो द्विर्वचनपादः

## ४९८. द्विर्वचनमनभ्यासस्यैकस्वरस्याद्यस्य [३।३।१]

**[सूत्रार्थ]**

धातुसम्बन्धी अनभ्यास, एकस्वरविशिष्ट आद्य अवयव का द्विर्वचन होता है। द्विर्वचन विधि का अधिकार यहाँ से प्रारम्भ किया गया है। अतः इसे विधि - अधिकार उभयविध सूत्र समझना चाहिए ॥४९८।

**[दु० वृ०]**

धातोरवयवस्यानभ्यासस्यैकस्वरस्याद्यस्य द्विर्वचनं भवतीत्यधिकृतं वेदितव्यम्। पपाच, जुहोति। वचनग्रहणं द्वे रूपे भवत इति स्थानित्वाशङ्कानिरासार्थम्। तेन 'जिघांसति, आटिटत्' इति घत्वकारितलोपप्रतिपत्तिगौरवं स्यात्। अनभ्यासस्येति किम् ? जुगुप्सिषते, बोभूयिषते। प्रतिनिमित्तं द्विरुक्तिर्न स्यात्। एकस्वरस्येति बहुव्रीहिः किम् ? व्यञ्जनेन सह द्विर्वचनार्थम्। तेन दिदरिद्रासति। कथम् इयाय, आर ? एक-स्यापि स्वरस्याद्यन्तवदुपचारात्। तथा 'आट, अनेनिजुः'। समुदायस्यापि द्विर्वचनम् अभ्यस्तकार्यं चेति। कथं वृक्षं वृक्षं परि सिञ्चति, ग्रामो ग्रामो रमणीयः, गृहे गृहे अश्वाः ? **वीप्सायां** वर्तमानस्य पदस्य **लोकत एव द्विरुक्तिः** सिद्धा। तथा परि परि त्रिगर्तेभ्यो वृष्टो देवः। परेर्वर्जने द्योत्ये विभाषैव।

तथा उपर्युपरि ग्रामम्, अधोऽधो नगरम्, अध्यधि स्थापयति। उपर्यधोऽधीनां सामीप्य एव। तथा एकैकं जुहोति। आदेरेकस्य विभक्तेर्लुक्। तथा 'हा प्रिया मे गतगता, नष्टनष्टा'। सति सम्भवे पुंवद्भावोऽपि पीडायां गम्यमानायाम्। तथा पटुपटुः, पटुपट्वी, पण्डितपण्डितः, पण्डितपण्डिता, सादृश्ये गुणवचनस्यापि। भीतभीतः, चकितचकितः। तथा प्रियप्रियेण ददाति, सुखसुखेन पश्यति। अप्राणि-विषय एव। **एवमन्येऽप्यनुसर्तव्याः**। तथा आभीक्ष्ण्ये – पचतिपचतितराम्, पचति-पचतितमाम्, गच्छतिगच्छतितराम्, गच्छतिगच्छतितमाम्। तमादयः पश्चात्। तथा डाच्यव्यक्तानुकरणस्य च – पटपटाकरोति, पटपटायते ॥४९८।

[दु० टी०]

द्विर्वचनम्० । **"धातोर्यशब्दः०"** (३।२।१४) इत्यतो धातुरनुवर्तते इत्याह – धातोरिति। धातुरवयवी आद्योऽवयवः । अवयवावयविसम्बन्धे षष्ठीयमित्याह – अवयवस्येति । न अभ्यासो**ऽनभ्यासः** । अभ्यासस्य द्विर्वचनं नैव सम्मतमित्यर्थः । एकः स्वरो यस्याद्यस्येति बहुव्रीहिः । यद्येवं 'जजागार, दिदरिद्रासति' इति सिध्यति पचादीनां तु द्विर्वचनं न स्याद् अनाद्यापेक्षत्वादाद्यव्यपदेशस्येति ? सत्यम, व्यपदेशिवद्भावात् । तथा च **"जुहोत्यादीनां सार्वधातुके"** (३।३।८) इति वचनमाह । स च **व्यपदेशिवद्भावो लोकतः सिद्धः** । यथा शिलापुत्रस्य शरीरमिति शिलापुत्रकोऽनेन देशान्तरेऽवस्थान्तरेषु च दृष्टः, स तस्य समानात्मनोऽवस्थाभेदाद् भिन्नमिवानुस्मरन्नत्राध्यवस्यति एकार्थतां सर्वावस्थायां स एवायं शिलापुत्रक इति ।एतस्यां बुद्धौ तेनात्मना विष्वग्भूता साम्प्रतिकी या तस्यावस्था व्यपदिश्यते तस्या शिलापुत्रस्येदं शरीरमिति । इयाय, आरेति । अत्र पुनरुभयं व्यपदिश्यते । एकस्वरत्वमाद्यत्वं च 'इतो यन्ति इतवान्' इत्यादिषु संज्ञातेषु अन्तर्भूत एको धातुः इण् गताविति । सर्वे एकप्रयोगगतेनेकार-स्वरूपेण व्यपदिश्यते । एकोऽयं स्वर इति इकारोऽस्येति ।

अथवा स्वरशब्दोऽयं जातौ । स्वरत्वं हि स्वर इति व्यपदिश्यते, तस्य स्वरत्वस्य व्यक्तिद्वारेण विशेषणम् एकशब्देन क्रियते एकव्यक्तिगतं स्वरत्वमस्येति ।यथा पचेर्धातोः सर्वविषयस्य यदेकप्रयोगविषयम् एकस्वरत्वरूपं तदवयवः सिद्ध इति । अथवा एकप्रयोगगतस्यैव धातोर्द्वे अवस्थे **अन्वयव्यतिरेकाभ्यां च** समुदायापेक्षस्यार्थवत्ता केवलस्यापेक्ष्यमाणस्यानर्थकत्वं वर्णानामनर्थकत्वाद् यदनर्थकस्वरूपम्, तेन समुदायापेक्षं स्वरूपमस्येति व्यपदिश्यते ।तथा च ते विद्यमाना बुद्ध्या आश्रीयन्ते ।एवम् असन्तोऽपि कल्पनाबुद्ध्या आश्रयरूपा आद्यव्यपदेशहेतवो भवन्तीति नास्ति दोषः। यथा आद्यगर्भेण हतेयम् आद्यागमनमिति आश्रितानुपूर्वाणि आगमनानि बुद्ध्योत्पादितानीति । तथाभूतासु बुद्धिषु उत्पद्यमानासु ये ये तन्निबन्धनाः शब्दा नैते गौणाः। यथा रज्जौ सर्पत्वेनाध्यवसिते सर्व एव हि सर्पशब्दं प्रयुङ्क्त इति । यदि तर्हि न गौणः किमुच्यते **व्यपदेशिवद्भाव** इति, वस्तुलक्षणस्यार्थात्मनस्तथाभावाद् **वस्तुत**स्तथाभूतं न भवतीति व्यपदेशिवद्भाव उच्यते, यः पुनः शब्दादर्थात्मनोऽयमिति, एवं नोपचरितो बुद्धीनां तथानुवृत्तेरिति। **योगविभागो** वा आद्यस्येत्यपरो योगः नियमार्थोऽयं यत्राद्यश्चास्ति तत्राद्यस्यैकस्वरस्य द्विर्वचनं यथा स्यादिति । पूर्वसूत्रे पुनरेकस्वर इति बहुव्रीहिणा धातुरुच्यते । य एकस्वरमात्रो धातुस्तत्र **व्यपदेशिवद्भाव** एव ।

**अन्य** आह – एकश्चासौ स्वरश्चेति कर्मधारयोऽपीति एकशब्दोऽनेकशक्तिरनेकार्थ इति अस्मिन् **दर्शने** सत्येकोऽप्यनेकशक्तियुक्तः शक्तिभेदादनेकप्रतिपत्त्यर्थमावर्तते द्वयोर्लिङ्गदर्शनादभ्यासस्यादिर्व्यञ्जनमवशेष्यं दीर्घ इणः परोक्षायामिति। एकस्वरत्वादवयवानामपि द्विर्वचनप्रसङ्गः। अनेनिजुरिति। निशब्दोऽप्यनेकस्वर इति इज्शब्दस्य इकारोऽपि व्यपदेशिवद्भावात्। तत्र इज्शब्दस्य इकारस्य च द्विर्वचनेऽनिष्टरूपं स्यात्। निशब्दस्य द्विर्वचने जकारेण व्यवधानादभ्यस्तादन उस् न स्यात्, अन्तेरनकारश्च न स्यात्, निज्शब्दस्य द्विर्वचने सर्वं युक्तं तदेतत् कथं समुदायद्विर्वचने तदन्तभूतावयवानामेकस्वराणामपि सिद्धं शास्त्रं चाबाधितं भवतीति। ननु च समुदायैकस्वरस्यापि द्विर्वचने सत्यवयवैकस्वरस्य शास्त्रं हीयतेऽवयवार्थकत्वात् समुदायस्य ? सत्यम्, **समुदायव्यापारेऽवयवानामपि व्यापारः**। यथा वृक्षः प्रचलन् सहावयवैः प्रचलतीति बहुव्रीहिरयं **तद्गुणसंविज्ञान**स्तेन धातुपाठे समुदायेऽवयवस्यान्तर्भावान्न व्यञ्जनमात्रस्य द्विर्वचनं भवतीति। द्विरुक्तिर्द्विर्वचनम्। द्वे उक्ती भवतः इत्यर्थः। वचनग्रहणे त्वक्रियमाणे सुजपि तद्वाराभिधायी न कर्तव्य इत्यर्थः। ततश्च यथोक्तिशब्दमध्याहृत्य द्वे उक्ती भवत इति **वाक्यार्थः**, तथा रूपशब्दमध्याहृत्याद्यस्यावयवस्य स्थाने द्वे रूपे भवत इत्यपि वाक्यार्थः स्यात्, तदा प्रकृतिभागस्य नष्टत्वाद् अभ्यासाच्चेति हन्तेर्हस्य घत्वं न स्यात्।

तथा आटिटदिति कारितलोपः, द्विर्वचने कृते पश्चात् स्वरविधिरिति। द्विःप्रयोगपक्षे तु स एवायं टिशब्दो द्विरुच्चार्यते इति न दोषः। अथ स्थानिवद्भावात् टिग्रहणेन ग्रहणमस्ति नायमिन आदेशः, किन्तर्हि इनश्चान्यस्य चेति ? सत्यम्। अन्यतरव्यपदेशादिनोऽयमादेशो द्विरूपष्टिशब्द इति विज्ञायते, नान्तर्भूतस्येनोऽनुमीयमानस्य स्थानित्वात् **प्रतिपत्तिगौरवं** स्याद् इत्याह – वचनग्रहणमित्यादि। तर्हि धातुर्द्विरुच्यताम्, तथापि वचनग्रहणेन किम् ? सत्यम्। 'सिषेव; सुष्वाप' इति सिवेः स्वपेश्चेयं परोक्षा विहिता, स एवायं सिविः स्वपिश्चेति पदसंज्ञायां सत्यां पदादित्वात् षत्वप्रतिषेधः प्राप्नोतीति विप्रतिपद्येत, वचनग्रहणे तु सत्युच्चारणस्यैव तद् द्वित्वं नोच्चार्यस्य धातोर्धातुरत्रैक एवेति। यद्येवम्, जरीगृहितेति इटो दीर्घो ग्रहेरपरोक्षायां स्यात्, तत्र ग्रहेरितीङ्निर्देशो धातुस्वरूपग्राहको विरूपान्न भवतीत्यर्थः।

अधिकृतं वेदितव्यमिति । चणूपरोक्षेत्यादिषु विधिवाक्येषु सविशेषणमाचार्येण नियुक्तमित्यर्थः । एकस्वरस्येति कर्मणि षष्ठीयमुच्यमानत्वात् । कथमित्यादि आनुपूर्व्ये च दृश्यते – मूले मूले स्थूलाः, अग्रे अग्रे सूक्ष्मा इति । इदमेव शब्दस्वरूपमस्यार्थस्य वाचकमानुपूर्व्येण मूले स्थूलाः, अग्रे सूक्ष्मा इति । समसम्प्रधारणाविषये च दृश्यते – कतरकतरा अनयोराढ्यता, कतमकतमैषामाढ्यता, सा हि साध्यता साधनकृता प्रयत्नकृता भाग्यसम्पत्कृता च, तत्राप्रतिपद्यमानः पृच्छति केयमनयोराढ्येति ।

कतरकतमोऽनयोर्विभवः, कतमकतम एषां विभवः । डतरडतमाभ्यामन्यत्रापि दृश्यते । स्त्रीवचनाभावेऽस्त्रीवचनाभावेऽपि कीदृशी कीदृशी अनयोर्विभूतिः, कीदृशः कीदृशोऽनयोर्विभव इति । उपरि शिरसो घटं धारयतीति औत्तराधर्यमात्रमत्राभिधीयते । ननु सदपि सामीप्यम् उपर्यादीनां सामीप्यवृत्तीनामिति किम् ? उपरिचन्द्रमाः । एकैकं जुहोति, प्रत्येकमित्यर्थः । एवम् एकैकया आहुत्या जुहोति । एकैकस्य, एकैकेषु वीप्सायां द्विर्वचनं सिद्धम् । आदेरेकस्य सम्बन्धिन्या विभक्तेर्लुगाख्यायते । प्रियगमनविनाशादिपीड्यमानेन प्रयोक्त्रा प्रयुज्यमानो गतादिशब्दो द्विर्भावमापद्यते । यो हि पटुसदृशः स पटुपटुरिति यश्च गुणमुक्तवान् यश्च सम्प्रति गुणमाह सर्वत्र द्विर्वचनं सिद्धम् । शुक्लशुक्लोऽयं पटः, शुक्लं शुक्लं रूपमस्येति । प्रियसुखयोरकृच्छ्रे विभाषा दृश्यते । कृच्छ्रं प्रयासः प्राणिनां धर्मः । नञो विपक्षोऽर्थोऽप्रायासेऽप्राणिधर्मे वर्तमानयोरित्याह – अप्राणिविषय एवेति । तेन प्रियः पुत्र इष्टः इत्यर्थः । सुखहेतुत्वात् सुखो रथ इति । सम्भ्रमे यावद्बोधं यावद्भिः पदैर्बोधो गम्यते तावतां पदानां द्विर्वचनम् – अहिरहिः, बुध्यस्व बुध्यस्व, यद्ययं न बुध्यते अहं च न बोधयामि ततो नियतं दष्ट एवाहिनेति मन्यमानः सम्भ्रमेण प्रयुङ्क्ते – अहिरहिः, बुध्यस्व बुध्यस्वेति ।

स्वार्थेऽवधार्यमाणेऽनेकस्मिन् स्वार्थिकं द्विर्वचनं न **वीप्सायाम्**इत्यर्थः । अस्मात् कार्षापणाद् इह भवद्भ्यां माषं माषं देहि, कार्षापणमनेकमाषसमुदायः, अस्मात् कार्षापणान्माषाद् बहुतरं न दातव्यम् इत्यर्थः । पूर्वप्रथमयोरतिशये पूर्वं पूर्वं पुष्प्यन्ति, प्रथमं प्रथमं पच्यन्ते । तथा पूर्वतरं पूर्वतरं पुष्प्यन्ति, प्रथमतरं प्रथमतरं पच्यन्ते इति विकसनक्रियायाः पाकक्रियायाश्च यः पूर्वकालः प्रथमकालश्च तस्यातिशयोऽत्र विवक्ष्यते । यो यस्यात्मीयो यथायथमुच्यते । उपसर्गाणां प्रसमुपोदां पादपूरणे ।

**प्रप्रपूज्य महादेवं संसंयम्य मनः सदा ।**
**उपोपहाय संसर्गमुदुद्गतः स तापसः ॥**

यस्तु **लोकतः** सिद्धस्तत्र किं यत्नेनेति भावः ॥४९८।

[वि० प०]

द्विर्वचनम्० । धातोर्यशब्द इत्यतो धातुरनुवर्तते, ततोऽवयवावयविसम्बन्धे षष्ठीत्याह – धातोरवयवस्येति । द्विर्वचनमिति । "**द्वित्रिचतुर्भ्यः सुच्**" (२।६।४०-१३) इति तमादिनिपातनात् "**संख्याया वारे सुच्**" इति सुच्प्रत्ययः । **उक्तिर्वचनं** द्विश्च तद् वचनं चेति द्विर्वचनम् । द्विरिति भिन्नं पदं वेति । द्वे उक्ती भवत इत्यर्थः । यद्येवम्, वचनग्रहणं किमर्थम्, '**सोपस्काराणि हि वाक्यानि**' भवन्तीति । उक्तिशब्दाध्याहारेणायमर्थो लभ्यते, तस्मिंश्च सति तद्वाराभिधायी सुच् प्रत्ययोऽपि न कृतो भवति, तस्माद् द्वे इत्युच्यताम् इत्याह – वचनग्रहणमिति । उक्तिशब्दाध्याहारेण स्त्रियामयं निर्देश इति विशेषलिङ्गाभावाद् रूपशब्दमध्याहृत्य नपुंसके निर्देशोऽयम् इत्यपि शङ्का स्यात् । ततो धातोरवयवस्य स्थाने द्वे रूपे भवत इति वाक्यार्थोऽपि वा भवेत् । तथा च सति प्रकृतिभागस्य नष्टत्वाद् 'जिघांसति' इत्यत्र "**अभ्यासाच्च**" (३।६।३०) इति घत्वं न स्यात् । आदेशान्तरद्वयविधानेन प्रकृतेरुच्छेदाद् हन्तिरेवायं न भवति । तथा 'आटिटत्' इति कारितलोपश्च स्यात् । इह हि '**स्वरविधिः स्वरे द्विर्वचननिमित्ते**' इत्यादिना द्विर्वचने कृते पश्चाल्लोपः कर्तव्य इति । तस्माद् घत्वं कारितलोपं च प्रति स्थानित्वं कस्येति या शङ्का तस्या निरासार्थं वचनग्रहणम् । तथापि **द्विर्वचनं द्विःप्रयोगो द्विरुच्चारणमित्यर्थः** सम्पद्यते, तेनोच्चारणस्यैव द्विर्वचनोच्चार्यस्यावयवस्येति, स हि स्वेन रूपेणावस्थित एव द्विरुच्चार्यते, न तु तस्य शब्दान्तरत्वमादिश्यते इति भावः ।

अथ स्थानिवद्भावेन हन्तेरादेशोऽपि हन्तिग्रहणेन गृह्यते पूर्वश्च भागोऽभ्यास इति । यद्येवम्, 'आटिटत्' इति न सिध्यति, न हि अयम् इन आदेशः, किन्तर्हि इनश्चान्यस्य चेति । अथोभयोः स्थाने यो निष्पद्यते स लभतेऽन्यतरव्यपदेशमिति दर्शनादिनोऽयमादेशः । यथा देवदत्तयोः पुत्रो देवदत्तस्येति तेनोपपद्यत एव स्थानिवद्भाव इति चेत्, एवन्तर्हि टेरेव लोपः कथं न भवतीति ? नैवम्, अनादेशस्य कारितस्येकारमात्रस्यैव लोपदर्शनादादेशेऽपि इकारस्यैव लोपो दृष्टकल्पनावशात् । एवन्तर्हि **प्रतिपत्तिगौरवं** स्यादित्याह – **घत्वेत्यादि** । अथ '**स्वरविधिः स्वरे द्विर्वचननिमित्ते कृते द्विर्वचने**' इति लिङ्गाद् वचनमेवाध्या**हरिष्यते** इत्यपि गरीयान् **पक्षः** । जिघांसतीति । हन्तुमिच्छतीति सन्, "**चण्परोक्षा०**" (३।३।७) इत्यादिना द्विर्वचनम्, हो जः, "**सन्यवर्णस्य**" (३।३।२६) इतीत्त्वम्, "**अभ्यासाच्च**" (३।६।३०) इति घत्वम्, "**हनिङ्गमोः**" (३।८।१३) इति उपधाया दीर्घत्वम् । 'आटिटत्' इति । अटेर्हेताविन्,

उपधाया दीर्घत्वम्, अद्यतन्या दि, **"श्रिद्रुस्नु०"** (३।२।२६) इत्यादिना चण्, पूर्ववत् **"स्वरादेर्द्वितीयस्य"** (३।३।२) इति टिशब्दस्य द्विर्वचनम् कारितलोपः अनभ्यासस्येत्यादि।

**"गुप्तिज्किद्भ्यः सन्"** (३।२।२) इति सनि कृते द्विर्वचने पुनर्जुगुप्सितुमिच्छतीति तुमन्तात् सन्। तथा अत्यर्थं भवतीति **"धातोर्यशब्द०"** (३।२।१४) इत्यादिना यप्रत्यये कृते पूर्ववद् द्विर्वचनम्। **"गुणश्चेक्रीयिते"** (३।३।२८) इति गुणः, **"द्वितीयचतुर्थयोः प्रथमतृतीयौ"** (३।३।११) इति भकारस्य बकारस्ततो बोभूयितुम् इच्छतीति सन्, निमित्तं निमित्तं प्रति **वीप्सायाम**व्ययीभावः। संश्चेक्रीयितयोर्द्विर्वचने कृते पुनः सनि निमित्ते द्विर्वचनं न स्यादित्यर्थः। एकस्वरस्येत्यादि। एकः स्वरो यस्य स **एकस्वर** इत्यवयवेन विग्रहः। स्वरव्यञ्जनसमुदायः समासार्थः, अवयवश्च समुदायेऽन्तर्भवतीति स्वरव्यञ्जनस्यैकस्वरस्य द्विर्वचनं सिद्धम्, बहुव्रीहिं च प्रति लिङ्गं चिह्नमित्यर्थः, अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्, शिट्परोऽघोष इति च। अन्यथा एकश्चासौ स्वरश्चेति कर्मधारये स्वरमात्रस्यैव द्विर्वचनमिति कथमभ्यासे व्यञ्जनावशेषो युज्यते। यद्येवम्, इणुप्रभृतीनां धातूनां सस्वरमात्रत्वादनाद्यत्वाच्च द्विर्वचनं न सिध्यतीत्याह-कथम् 'इयाय, आर' इति। **'इणु गतौ'** (२।१३), परोक्षाया अट्, वृद्धेः स्वरविधित्वात् पूर्वं द्विर्वचनम्, ततो वृद्धिः, **"ऐ आयु"** (१।२।१३) ऐकारस्यायादेशः। **"अभ्यासस्यासवर्णे"** (३।४।५६) इत्यभ्यासेकारस्येयादेशः आरेति। **'ऋ सृ गतौ'** (२।७४), पूर्ववद् अटि, ऋकारस्य द्विर्वचनम्, ऋवर्णस्याकारः, **"अस्यादेः सर्वत्र"** (३।३।१८) इति दीर्घत्वम्, धातोर्वृद्धिरार्, दीर्घात् परलोपः।

**परिहारमाह–** एकस्यापीत्यादि। अत्रैकस्वरत्वम् आद्यत्वं च व्यपदिश्यते, **व्यपदेशिवद्भावश्च लोकतः एव सिद्धः।** यथा **'राहो शिरः, शिलपुत्रस्य शरीरम्'** इति। तत्र च व्यपदेशिवद्भावे दीर्घ इणः परोक्षायामगुणे "अर्तिपिपर्त्योश्च" (३।३।२५) इति लिङ्गम्, अन्यथा कथम् अभ्यासे दीर्घत्वादिविधानम् इणादिधातोरुपपद्यते इति भावः। एतेन व्यपदेशिवद्भावनिबन्धनस्यैकस्वरस्याद्यस्य गौणत्वान्न द्विर्वचनमिति चोद्यमपास्तमिति। तथेति व्यपदेशिवद्भावाद् इत्यर्थः। अत्रैकस्वरत्वमस्त्येव समुदायस्य केवलम् आद्यत्वं न विद्यते इति व्यपदेशिवद्भाव उच्यते। आटेति। **'अट गतौ'** (१।१०२) परोक्षाया अट्, द्विर्वचनम्, अभ्यासस्यावशेषे कृते **"अस्यादेः सर्वत्र"** (३।३।१८) इति दीर्घः, **"अस्योपधायाः"** (३।६।५) इत्यादिना च धातोरुपधाया दीर्घत्वम्, ततः पुनः समानदीर्घत्वम्। अनेनिजुरिति। **"निजिर् शौचपोषणयोः"** (२।८१) इति ह्यस्तन्यन्, अडागमः, अदादित्वाद् विकरणस्य लुक्, जुहोत्यादित्वाद् द्विर्वचनम्,

अभ्यासस्यावशेषः "**निजिविजिविशां गुणः सार्वधातुके**" (३।३।२३) इति गुणः, अन उस्। "**सिजभ्यस्तविदादिभ्योऽभुवः**" इति अन उस्। अथेह समुदायस्य कथं द्विर्वचनम् ? एकस्वरत्वादवयवानामपि प्राप्नोति, तथाहि यथा निज्शब्द एकस्वरस्तथा निशब्द इज्शब्दोऽपि **व्यपदेशिवद्भावाद्** इकारोऽपि ? सत्यम्। न तावदिकारस्य इञ्शब्दस्य वा द्विर्वचनम्, अनेकस्वरत्वादनाद्यत्वाच्च व्यपदेशिवद्भावेनाद्यत्वमस्तीति चेत् तदयुक्तम्, न खलु सर्वत्र व्यपदेशिवद्भावोऽस्तीति, जागृप्रभृतीनामपि आकारस्य गृशब्दस्य वा कस्मान्न द्विर्वचनम् इत्यपि चोद्यम् आद्रियताम्, व्यपदेशिवद्भावस्य मुख्याभावे सत्यभ्युपगमाद् इहैकस्वर आद्यश्च निजशब्द एव मुख्यो विद्यते इति।

ननु तत्र व्यपदेशिवद्भावान्न द्विर्वचनम्, तत्रैव आद्यैकस्वरो मुख्य इति **सिद्धान्ते**ऽनेकस्वरधातुष्वेवमेवमुक्तम्। यथा 'जजागार' इति एकस्वरेष्वपि व्यपदेशिवद्भावाद् द्विर्वचनम्। अतोऽवयवानामपि स्यादित्याह – अथवेति। अथवा अनिष्टमेव रूपं स्याद् इति इकार इज्शब्दश्च न द्विरुच्यते, तथा निशब्दस्यापि न द्विर्वचनम्। तथाहि "**द्वयमभ्यस्तम्**" (३।३।५) इति द्विरुक्तस्यैवाभ्यस्तसंज्ञाविधानाज्जकारो नाभ्यस्तग्रहणेन गृह्यते अद्विरुक्तत्वात्। अतस्तेनाभ्यस्तस्य व्यवहितत्वाद् अन उसादेशो न स्यात्।

अथ विशेषाभावादनिष्टमेव रूपं भवेद् इति चेत् तदयुक्तम्, अवयवा हि द्विरुच्यमाना अनवस्थाचोद्यमापद्यन्ते, यावदस्य द्विर्वचनं तावदेतस्य कथन्न भवतीति समुदायस्य तु द्विर्वचने सर्वत्रावयवा द्विरुक्ता भवन्ति **समुदायव्यापारेऽवयवानामपि व्यापारोपलब्धेः**। यथा वृक्षः प्रचलन् सहावयवैरेव प्रचलतीति सर्वं समञ्जसमित्याह – समुदायस्येत्यादि। समुदायस्त्वाद्यो न भवति अनाद्यस्याभावादिति व्यपदेशिवद्भाव उच्यते। एतेनैकस्वराणां धातूनां समुदायः एवं द्विर्वक्तव्यः, व्यपदेशिवद्भावेनाद्यत्वोपपत्तेरिति दर्शितम्, अत एव 'पपाच, जुहोति' इत्युदाहृतम्। कथमित्यादि ? बहूनां सजातीयानामर्थानां क्रियागुणद्रव्यैर्युगपत् प्रयोक्तुर्व्याप्तुमिच्छा **वीप्सा**, तस्यां गम्यमानायां द्विर्वचनं लोकत एव सिद्धम्, ततः किं विशेषवचनेनेति भावः। तथेति, **लोकोपचारादि**त्यर्थः। पक्षे परि त्रिगर्तेभ्यो वृष्टो देवः' इत्यपि भवति। कृतद्विर्वचनैरुपर्यादिभिस्त्रिभिर्योगे कर्मप्रवचनीयाभ्युपगमाद् ग्राममिति द्वितीया। सामीप्य एवेति। किम् उपरि चन्द्रमाः, कथम् उपरि शिरसो घटः इत्यौत्तराधर्यमात्रं विवक्षितम्, न तु सामीप्यमिति न दोषः। सति सम्भवे इति। यथासम्भवमित्यर्थः।

इह तु द्विर्वचनमेव न पुंवद्भावः। हा प्रिया मे गतगता, नष्टनष्टा इति। पुंवद्भावोऽपीति। अपिशब्देनादेर्विभक्तेर्लोप आख्यायते। एवमन्यत्रापि अगुणवचनस्यापि इत्यनेन "प्रकारे गुणवचनस्य" (अ० ८।१।१२) इति पत्रसूत्रस्य व्यभिचारं दर्शयति –

तथेति । अकृच्छ्रे प्रियसुखयोर्वा दृश्यते । अत्राधर्मानृतादिवन्नञ् विपक्षे वर्तते । कृच्छ्रं प्रयासः प्राणिनो धर्मस्तद्विपक्षोऽकृच्छ्रं सोऽपि प्राणिनो धर्म एव । यस्मिन् सति प्रयासमन्तरेणैव दानादिक्रियां करोति, तस्मिन्नकृच्छ्रे प्राणिधर्मे वर्तमानयोः प्रियसुखयोर्वा द्विर्वचनमित्यर्थः । पक्षे प्रियेण ददाति, सुखेन पश्यति । विना प्रयासेनेत्यर्थः । अकृच्छ्र इति किम् ? प्रियः पुत्रः, सुखो रथः । नात्र कृच्छ्रविपर्यये प्राणिधर्मविषये प्रियसुखशब्दौ किन्तर्हि द्रव्ययोः पुत्ररथयोर्वर्तेते । पुत्रो हि प्रीणातीति **प्रियः**, सुखहेतुत्वाच्च सुखो रथः इति ।

अप्राणिविषय एवेति अप्राणीत्यनेनाद्रव्यं लक्ष्यते - अद्रव्यविषय एवेत्यर्थः । अद्रव्यविषयता तु प्राणिधर्मवृत्तित्वादनयोरिति । तथाऽन्येऽप्यनुसर्तव्या इति । सम्भ्रमे यावद्बोधं सम्भ्रमश्चाशु प्रतिपादनार्थं प्रयोक्तुः स्मरणं तस्मिन् द्योत्ये यावता पदेन यावता वाक्येन वा बोधो गम्यते तावतो द्विर्वचनमित्यर्थः । यथा – अहिरहिः, बुध्यस्व बुध्यस्व, हस्त्यागच्छति हस्त्यागच्छति, लघु पलायध्वं लघु पलायध्वमिति । तथा नानावधारणानुपूर्व्याधिक्येऽपि दृश्यते । तत्र नानावधारणं नानाभूतानां पदार्थानां भेदेनेयत्तापरिच्छेदः । तद् यथा अस्मात् कार्षापणादिह भवद्भ्यां माषं माषं देहि । प्रत्येकं माषमात्रं दातव्यम्, नाधिकमित्यर्थः । इह कार्षापणसम्बन्धिनो माषाः साकल्येन दातुमिष्टा इति न वीप्सास्ति, नानाग्रहणादिह न भवति । अस्मात् कार्षापणादिह भवद्भ्यां माषं कार्षापणं देहीति एकमेवार्थः । अवधारणादन्यत्र न भवति । इह भवद्भ्यां माषं देहि, द्वौ त्रीन् वा देहीत्यर्थः । आनुपूर्व्यं क्रमानुल्लङ्घनं मूले मूले स्थूलाः, अग्रे अग्रे सूक्ष्माः, ज्येष्ठं ज्येष्ठमनुप्रवेशय मूलाद्यानुपूर्व्येणैषां स्थौल्यादयः इत्यर्थः । आधिक्यं प्रकर्षः, नमो नमः शिवाय, दर्शनीया दर्शनीया कन्या । यथास्वे यथायथम् । यो यदात्मक इत्यर्थे यथायथमित्यर्थः । **एवमन्येऽपि शिष्टप्रयोगानुसारेण वेदितव्याः** । तथा चोपसर्गाणां प्रसमुपोदां पादपूरणे दृश्यते –

**प्रप्रपूज्य महादेवं संसंयम्य मनः सदा ।**
**उपोपहाय संसर्गमुदुद्गतः स तापसः ॥**

इति तमादयः पश्चात् "**आख्यातकिमेकारान्ताव्ययेभ्यः क्रियागुणप्रकर्षवृत्तिभ्य एव तराम् तमाम्**" (२।६।४०१) इति तमादौ पठ्यते । तथेति डाच्प्रत्ययविषयेऽव्यक्तानुकरणस्य द्विर्वचनमित्यर्थः । अपटत् पटत् करोतीति विगृह्य डाचि विषये द्विर्वचनम् । ततः "**अव्यक्तानुकरणादनेकस्वरादनितौ डाच्**" (२।६।४०-२२), अभ्यासतकारलोपस्तमादित्वात्, अन्त्यस्वरादिलोपस्तु डानुबन्धेऽस्त्येव पटपटायते इति डाजन्तादायिः ॥४९८॥

[वि० टी०]

नमो गणेशाय। द्विर्वचनम्। **अधिकारसूत्रमिदम्**। वक्ष्यमाणार्थसंक्षेपाय कार्यिकार्यनिमित्तानां यदुदीरणं **सोऽधिकारः**। तथा च–

**कार्यिकार्यनिमित्तानां पदानां यदुदीरणम्।**
**वक्ष्यमाणार्थसंक्षेपायाधिकारः स उच्यते॥**

स्वस्मिन् सूत्रे फलशून्यत्वे सति परत्र सूत्रे फलसम्बन्धत्व**मधिकारत्वमिति केचित्**। तन्न, एकदेशाधिकारव्यभिचारात् स्वस्मिन्नेव द्विर्वचनाधिकारफलत्वे फलशून्यत्वाभावानुपपत्तेः। **स चाधिकारो द्विविधः**– सूत्रैकदेशभेदात् क्वचित् परार्थः, स्वार्थपरश्च क्वचित्। परार्थश्चायमेव।(स्वार्थपरार्थो यथा) **"अकारो दीर्घं घोषवति"** (२।१।१४) इत्यादावकाराद्येकदेशाधिकार उभयार्थ इति। ननु विधिरयं सामान्यप्रत्यये कथन्न स्यात् चेत् **"चण्परोक्षाचेक्रीयितसनन्तेषु"** (३।३।७) इत्यस्यानर्थक्यमिति, नैवम्। नियमार्थं भविष्यति। यथा असार्वधातुकमध्ये चण्परोक्षाचेक्रीयितसनन्तेष्वेव द्विर्वचनमिति। **"जुहोत्यादीनां सार्वधातुके"** (३।३।८) इत्यत्रादादिकानां मध्ये जुहोत्यादीनामेव सार्वधातुक इति। नैवम्, 'विधिनियमसम्भवे विधिरेव ज्यायान्' (कात० प० ८४) इत्यतोऽधिकारोऽयं न विधिरित्यर्थः। किं च यदि **"चण्परोक्षाचेक्रीयित०"** (३।३।७) इति नियमेऽसार्वधातुके न द्विर्वचनम्, तदा **"जुहोत्यादीनां सार्वधातुके"** (३।३।८) इति सार्वधातुकग्रहणमनर्थकं स्यादिति। वचनग्रहणमित्यादि।

ननु वचनग्रहणाभावे द्वे इत्युच्यताम् इति कथम् उक्तम्, द्विरिति कथं नोक्तम्? सत्यम्। अत्र **पण्डितवार्त्तिकमेतत्**–

**निपातनस्येष्टतया ब्रवीति शब्दो द्वितोक्तेः सुजयन्तु वारम्।**
**अध्याहृतौ तेन सुचोऽप्रयोगः स्वाभाविकी शक्तिरुदीरिता वा॥**

**अस्यार्थः**– अयं सुच्शब्दो द्वितोक्तेर्वारं ब्रवीति कुत इत्याह – निपातनस्येष्टतयेति। तेन कारणेनाध्याहृतौ सुचः प्रयोगो न भवति। यथा **"द्विर्भावं स्वरपरश्छकारः"** (१।५।१८) इति, तन्न चारु। तदा कथं द्विश्छः, सुसन्निकर्षे इत्यत्र भवति। तेनाध्याहृतौ सुचः प्रयोगो भवत्येव। अथवा अध्याहारे न भवतीति **स्वाभाविकी** शक्तिः कथिते**त्यपरे। कश्चित्** तु द्विर्वचनं भवतीत्यस्य द्वे उक्ती भवत इति **तात्पर्यार्थः**। तदवलम्ब्य द्वे इत्युच्यताम् इत्युक्तम्। द्विरुक्तेऽपि तदेव दूषणम्, तथा हि धातोरवयवस्य स्थाने द्विर्वचनं द्विरूपं वा भवतीति, तदेव युक्तमुत्पश्यामः इत्याह– तस्मिंश्च सति तद्वाराभिधायी सुच्प्रत्ययोऽपि न कृतो भवतीति। तस्मिंश्चार्थे क्रियमाणे सतीत्यर्थः। अथवा अस्मिन्

वचनग्रहणे खण्ड्यमाने एवमर्थविवक्षया तद्वाराभिधायी सुच्प्रत्ययोऽपि नैव कृतः स्यादित्यर्थः तथा च सूत्रकृता गम्यमानवाराभिधानेऽपि **"ङ्णना ह्रस्वोपधाः स्वरे द्विः"** (१।४।७) इत्यत्र सुच् कृत इति। ननु यदि द्वे रूपे भवतः इत्यर्थे स्थानित्वाशङ्का, आशङ्का चातत्त्वेन ज्ञानम्। तन्निरासार्थं वचनग्रहणम्, तदा घत्वकारितलोपप्रतिपत्तिगौरवं स्याद् इत्युत्तरग्रन्थः कथं संगच्छते ? सत्यम्। तत्र **वैयकारिका** –

**पदैकदृष्टौ वचनग्रहस्य फलोक्तिवाक्ये यदगादि वृत्तौ।**
**स्थानित्वशङ्केत्युभयं तदेकदेशस्वरूपो न च कोऽपि धातुः॥**
**स्थानित्वक्लृप्त्यापि च पूर्व एव त्वभ्यासबुद्ध्याभ्युपगम्य कार्यम्।**
**घत्वेन्प्रक्लृप्तिप्रतिपत्तिकष्टमुक्तं पुनः प्रागविशेषवस्तु॥ इति।**

पूर्वोक्तचोद्यमेव वक्ष्यमाणसिद्धान्तसङ्गतौ शङ्कितः शङ्कैव कीदृशीति निश्चेतुमाह – पदैकेत्यादि। **अस्यार्थः** – द्वे इति पदैकदृष्टौ वृत्तौ वचनग्रहणस्य फलोक्तिवाक्ये स्थानित्वाशङ्केति यदगादि। तथा च 'इन्हन्' इत्येकदेशस्वरूपोभयमध्ये कोऽपि न धातुरित्येव शङ्का तत्र यदि त्वङ्गीकुरुषे स्थानिवद्भावः प्रतिषिद्धः एवास्ति का तत्र शङ्केति यदगादि तथापि प्रतिपत्तिगौरवं स्यात्। तदेव प्रतिपादयितुमाह – स्थानित्वक्लृप्त्या इत्यादि। **अस्यार्थः** – स्थानित्वकल्पनेनापि पूर्वभागेऽभ्यासबुद्ध्या अभ्यासाच्चेत्यनेन कार्यमभ्युपगम्य घत्वेन्प्रक्लृप्तिप्रतिपत्तिकष्टमित्युक्तम्, पुनः प्रागविशेषतः इति पूर्वोऽभ्यासः इत्यादि विशेषो नोक्त इत्यर्थः। एवं टेरेव लोपः कथं न स्यात् – इत्याद्यपि प्रतिपत्तिकष्टं बोद्धव्यम् अत इदं चिन्त्यते। ननु स्थानित्वाशङ्केति कथमुक्तम् ? शङ्का ह्येवात्रातत्त्वेन ज्ञानमित्युक्तम्, ततः स्थानित्वाशङ्केति वक्तुं युज्यते स्थानित्वे ह्यस्थानिज्ञानमेव शङ्का यथा शुक्तौ रजतशङ्का, न च शुक्तिशङ्का इत्युच्यते। स्वरग्रहणं दीर्घोऽनुवर्तते इति शङ्कानिरासार्थमित्यत्र हि अदीर्घानुवर्तने शङ्का युज्यते वक्तुम्। तस्मादत्र शङ्कापदेन ज्ञानमुच्यते भ्रमज्ञानस्य ज्ञानरूपत्वात्। ततः स्थानित्वाशङ्कानिरासार्थमिति स्थानित्वज्ञानाभावनिरासार्थमित्यर्थः। तथा च तस्माद् घत्वं कारितलोपं च प्रति स्थानित्वं कस्येति या आशङ्का तस्या निरासार्थमिति **पञ्जी**। अनेन स्थानित्वज्ञानाभाव आयात इति तदा स्थानिवद्भावेन घत्वकारितप्रतिपत्तिगौरवं स्यादिति सुतरां संगच्छते इति (सुधियां बुद्धिसिद्धमन्त्रे समर्पितम्, कुतः खलकालाशीविषदुर्मुखफणातीव्राघातजातैर्विकलितं भविष्यतीति)। तेनोच्चारणस्यैव द्वित्वमिति।

ननु यदि उच्चारणस्य द्वित्वं तत्कथमपरो हनिति लिख्यते, नैवम्। विनापि द्विर्लेखनेनोच्चारणस्य द्वित्वं न प्रतीयते अपरो हन् लिख्यते इति **हेमकरः**।

उच्चार्यमाणस्यावयवस्येति हनहनद्वयस्यावयवस्येत्यर्थः। स हि स्वेन रूपेणावस्थित इति नित्यपक्षे बोद्धव्यम्, कार्यपक्षे प्रक्रियावशादित्यर्थः एकस्यापि स्वरस्याद्यन्तवदुपचारादिति। ननु आद्यन्तवदुपचाराद् व्यपदेशिवद्भावो भिन्नोऽभिन्नो वा, यदि भिन्नस्तदा **पञ्ज्यां** व्यपदेशिवद्भावादाद्यत्वम् एकस्वरत्वादिति कथमुक्तम्, वृत्तावाद्यन्तवदुपचाराद् इत्युक्तत्वाद् यदि चाभिन्न इत्युच्यते, तदैकस्मिन्नाद्यन्तवद् भवति कथमेकस्वरत्वम्? सत्यम्, भिन्न एव, किन्तु तन्मूलकमिदम्। आद्यन्तवदेकस्मिन्निति यतो व्यपदेशिवद्भावोऽस्ति, तस्माद् आद्यन्तवदेकस्मिंन्नित्युच्यते, ननु कोऽर्थो व्यपदेशिवद्भावस्य, येन व्यपदेशिवद्भावाद् आद्यन्तवदेकस्मिन्नित्युच्यते? सत्यम्। तत्र कश्चिदाचष्टे – व्यपदिश्यते समुदायोऽस्मिन्निति व्यपदेशोऽवयवः सोऽस्यास्तीति **व्यपदेशी** अवयवी, व्यपदेशीव **व्यपदेशिवत्** तस्य भावो **व्यपदेशिवद्भावः** इत्यर्थः। अवयविवद्भावादाद्यन्तवदेकस्मिन्नित्यर्थः।

**अन्ये** पुनर्व्यपदेश आरोप उच्यते, सोऽस्यास्तीति **व्यपदेशी** आरोपी, स इव, तस्य भावः **व्यपदेशिवद्भावः**। यथा 'सिंहो माणवकः' इत्यत्र माणवकः सिंहारोपवान्, तद्वदयमप्यभेदबुद्ध्या कस्यचिदारोपेण युक्त इत्यर्थः। एकस्याप्याद्यन्तवद्भावे एकोऽयं हेतुरिति कश्चिद् एकस्याप्याद्यन्तवद्भाव इति उपचाराद् व्यपदेशिवद्भावरूपादि**त्यन्ये**। तथा अनेनिजुरित्यादि। नन्वत्र निशब्द आद्य एकस्वरो मुख्यो विद्यते जागृप्रभृतिवत्। तत् कथमत्र व्यपदेशिवद्भाव उच्यते। तथा च **पञ्ज्यामुक्तम्** – व्यपदेशिवद्भावस्य मुख्याभावे सति अभ्युपगमादिति। नैवम्, आद्यशब्दोऽनाद्यव्यावर्तकः। ततश्चाद्यस्यैकस्वरस्य भवति, अनाद्यस्य न भवति इत्यनेनाद्यस्यैकस्वरस्य व्यावृत्तेरभावात् कथं मुख्यस्य संभव इति व्यपदेशिवद्भाव उच्यते। तथा च **वैद्यकारिका** –

> **आद्यग्रहो नाद्यनिवर्तकोऽत्र स्वरान्तरं चावयवस्य सीमा।**
> **इत्थं पचः पस्य निजो न नेश्च द्विर्वाच्यताभूदिति सारभूतम्॥**

**अस्यार्थः** – अत्राद्यग्रहोऽनाद्यनिवर्तकः, अवयवस्य सीमा स्वरान्तरम्, न व्यञ्जनम्। इत्थम् अनेन प्रकारेण पच्-धातोः पस्य पकारस्य निजो नेश्च न द्विर्वाच्यताऽभूदिति **सारभूतम्**। ननु निजो व्यपदेशिवद्भावेन निज्भागस्याद्यस्यैकस्वरस्य द्विर्वचनं युज्यते कथं नेरिकारस्य निज्भागस्य वा द्विर्वचनमिति चोद्यम् **पञ्जिकायाम्**? न च व्यपदेशिवद्भूतस्य निज्धातोराद्यावयव इकारादिरिति। नैवम्, अभिप्रायापरिज्ञानात्। न च निजो व्यपदेशिवद्भावे इकारादिद्विर्वचने चोद्यमुच्यते। अपि तु पृथक् पृथग् व्यपदेशिवद्भाव इति निज्शब्दस्य व्यपदेशिवद्भावान्निभागस्य व्यपदेशिवद्भावादिज्शब्दस्य व्यपदेशिवद्भावाद् इकारस्य व्यपदेशिवद्भावादिति। नन्विकारस्य इज्शब्दस्य निज्धातोरवयवस्य व्यपदेशिवद्भावादाद्यत्वमेकस्वरत्वं यथा, तथा निज्धातोर्नकारापेक्षया इकारस्येज्भागस्यापि

अनाद्यत्वमिति किं भवति ? नैवम्, अवयवस्य व्यपदेशिभावेन भिन्नोऽयं कश्चित्, न तु नकारापेक्षया तस्यानाद्यत्वमित्यर्थः। धात्ववयवोऽपि धातुरिति। एकस्वरस्येति बहुव्रीहिः किमित्यादि।

ननु व्यञ्जनेन सह द्विर्वचनं भवतीति बहुव्रीहेः फलं दर्शितम्, तत् फलं 'पपाच' इत्यादौ बोद्धव्यम्। तत् कथं तेन 'दिदरिद्रासति' इत्युक्तम्, न चानेन द्विर्वचनफलेन दिदरिद्रासतीत्यर्थो घटते, न च वा तेन बहुव्रीहिणा दिदरिद्रासतीति फलस्योक्तत्वात् ? **तथापि** यथा दिदरिद्रासतीति, तथा पपाचेति वक्तुं युज्यते ? सत्यम्, बहुव्रीहेः फलमुक्तम्, **इदानीमेकस्वरग्रहणस्य**, तेनैकस्वरग्रहणेन दिदरिद्रासतीति, अत्रानेकस्वरस्य दरिभागस्य न द्विर्वचनमिति। तथा च **वैयकारिका**—

**उक्त्वा बहुव्रीहिफलं द्विरुक्तिं सव्यञ्जनस्योदितमेव वृत्तौ।**
**एकस्वरेत्यस्य फलं दरिद्रो नान्यद् द्विरुक्तिर्हि दरोऽधिकस्य॥**

**अस्यार्थः**— सव्यञ्जनस्य द्विरुक्तिं बहुव्रीहेः फलमुक्त्वा एकस्वरस्येत्यस्य फलं दरिद्राधातोर्दरोऽधिकस्य न द्विरुक्तिरूपं **वृत्तावुदितमिति** सम्बन्धः। **वीप्सायां** वर्तमानस्य पदस्येति। एतेन वीप्साभीक्ष्ण्ययोः पदस्येति न वाच्यम्। परैरिति। **परमते** परेर्वर्जने वाक्ये इति वाक्यग्रहणात् समासे न स्यात्। 'परि त्रिगर्तं वृष्टो देवः' इत्य**स्मन्मतेऽपि** द्योत्यग्रहणाद् वाक्ये स्यादिति। एकैकं जुहोतीति। एकैकमक्षरं जुहोतीत्यर्थः। **वीप्सायां द्विर्वचनं सिद्धमेव,** किन्त्वेकस्य सम्बन्धिन्या विभक्तेर्लुगित्यर्थः। तथा 'हा प्रिया मे' इत्यादि। एतेन 'आबाधे पुंवच्च' इति न वाच्यम्। आबाधः पीडा, तस्या द्विर्वचनं पुंवच्चेति चकारादादेश्च विभक्तेर्लुगित्यर्थः। प्रियागमननाशादिपीड्यमानेन प्रयोक्त्रा प्रयुज्यमानो गतादिशब्दो द्विर्भावमापद्यते इति **टीकायाम्।** तथा पटुपटुरिति। यो हि पटुसदृशः स पटुरिति। अत्राप्यादेर्विभक्तेर्लुक् पुंवच्चेति वर्तते। सादृश्ये गुणवचनस्यापि द्विरुक्तिरादेर्विभक्तेर्लुक् पुंवच्चेति न वक्तव्यमिति **दुर्गवाक्येनार्थ**पुरस्कारेणोक्तम्, यस्तु गुणे वर्तते तस्य न स्यात्। यथा सदृशं रूपमस्य, सदृशो रसोऽस्येति। कथं शुक्लशुक्लं रूपमस्येति ? नैवम्, गुणे गुणवति प्रवृत्तत्वात्। **एवमन्येऽप्यनुसर्तव्या** इति।

ननु पचतिपचतितरामित्यादि वक्ष्यते, तत्कथं मध्ये एतदुक्तम् ? सत्यम्, तत्र **पण्डितवार्त्तिकम्**—

**यद् वक्ष्यमाणे विविधे स्थितेऽपि परानुसारो गदितोऽत्र मध्ये।**
**प्रायोगिकत्वं खलु तस्य बोध्यं स्वेच्छावशं तत् परमूहनीयम्॥**

**अस्यार्थः**– वक्ष्यमाणे विविधे स्थितेऽपि तन्मध्ये परानुसारो गदितः। एवमन्येऽपीति यदुक्तं तस्य प्रायोगिकत्वं खलु बोध्यम्, तत्परं यदुक्तं तत् स्वेच्छावशमूहनीयमिति। **अन्ये** तु **परमत**मवलम्ब्योक्तमिदम्। परो हि "अकृच्छ्रे प्रियसुखयोः" (अ० ८।१।१३) इत्यनन्तरं संभ्रमे यावद्बोधमित्यादि सूत्रमूक्तवान्, तस्य चोदाहरणं वृत्तौ नास्तीति एवमन्येऽप्यनुसर्तव्या इत्युक्तम्। संभ्रम इत्यादि। यावता पदेन बोधस्तावतो द्विर्वचनम्, संख्यानियमो नास्ति। तत्कथं द्विरुक्तिरित्युच्यते **पण्डितपञ्जिकायां** तत्र सिद्धान्ते **वार्त्तिकमिदम्**–

**यावत्प्रबोधो विहिते द्विरुक्ते शब्दस्य संख्यानियमोऽपि नास्ति।**
**अनेकवारोक्तिपरस्ततोऽत्र द्विरुक्तिशब्दः प्रतिपादनीयः॥**

**अस्यार्थः**– यावत्प्रबोधो द्विरुक्ते विहिते शब्दस्य संख्यानियमो नास्ति। ततस्तस्मात् **तद्द्विरुक्तिशब्दोऽनेकवारोक्तिपरः**, अनेकवारोच्चारणं भवतीत्यर्थः। तन्न चारु, बोध्यमानपदानामवयवमपेक्ष्य द्विरुक्तिर्घटते एवेत्यदोषः। प्रयोक्तुः स्मरणमिति। यद्ययं न बुध्यते अहं न बोधयामि, तदा नियतदंश एवाहिनेति मन्यमानः प्रयोक्ता सम्भ्रमेणाहिरिति पदं यदि प्रयुङ्क्ते तदा द्विर्वचनम्– अहिरहिरित्यादि। नानाभूतानामित्यादि। नानाभूतानां पदार्थानां दीयमानानामित्यर्थः। अस्मात् कार्षापणाद् इत्यत्रास्माद् अनेकमाषसमुदायाद् दीयमानस्य नानात्वमस्त्येव। तत्र माषादधिकं माषात् परं न दातव्यमि**त्यवधारणम्**। इह कार्षापणसम्बन्धिनो माषा इति बहूनां सजातीयानामर्थानां क्रियागुणद्रव्यैर्युगपद् व्याप्तुमिच्छा **वीप्सा** इत्युक्तमिति। माषद्वयादाने **वीप्सा** नास्ति **इत्याशयः**। नानाग्रहणादित्यादि। अत्र हि माषस्य नानात्वं नास्ति। एकमेव दातव्यमित्यवधारणमस्त्येव। अवधारणादन्यत्रेति। अत्र माषस्य नानात्वमस्त्येव, यतो माषमात्रं दातव्यं नाधिकमिति नियमो नास्ति। तदेवाह– द्वौ त्रीन् वेत्यर्थः।

ननु 'माषं देहि' इत्युक्ते कथं द्वौ त्रीन् वेत्यर्थ इति ? सत्यम्, जातिपक्षादवधारणादिति जातावेकवचनम्। **दुर्गवाक्ये** 'मूले मूले स्थूलाः' इति आनुपूर्व्येण 'मूले मूले स्थूलाः' इत्यर्थः। अपटत् पटत् करोतीति विगृह्येति। ननु "अव्यक्तानुकरणादनेकस्वरादनितौ डाच्" (२।६।४०-२२) इति सूत्रेऽभूततद्भाव इति निवृत्त इत्युक्तम्। तत्कथमभूततद्भावे वाक्यम्, तत्र कश्चित् पटत् पटत् करोतीति वाक्यं वदति, तन्न। अभूततद्भावे निवर्तमाने सामान्ये न भवतीति। अपटत् पटत् करोतीति वाक्यं न युक्तम्। संप्रधारणाविषये च दृश्यते कतरकतराः- अनयोराढ्यता, कतरकतमाः– एषामाढ्यता। कतरकतरोऽ-नयोर्विभवः, कतमकतम एषां विभवः। डतरडतमाभ्यामन्यत्रापि दृश्यते। स्त्रीवचनभावे अस्त्रीवचनभावे कीदृशी कीदृशी अनयोर्विभूतिः, कीदृशः

कीदृशोऽनयोर्विभवः। पूर्वप्रथमयोरतिशये – पूर्वं पूर्वं पुष्यन्ति, प्रथमं प्रथमं पच्यन्ते। पूर्वतरं पुष्यति, प्रथमतरं च पच्यन्ते इति विकसनक्रियायाः पाकक्रियायाश्च यः पूर्वकालः प्रथमकालश्च तस्यातिशयोऽत्र विवक्ष्यते। यो यस्यात्मीय इत्यर्थे यथायथमुक्तमिदं सकलं **टीकायाम्** ॥४९८।

**[समीक्षा]**

'पपाच, जुहोति' इत्यादि प्रयोगों के सिद्ध्यर्थ 'पच्-हु' इत्यादि धातुओं का द्वित्व करने के लिए प्रकृत सूत्र का अधिकार किया गया है। पाणिनि का भी इसी प्रकार अधिकार सूत्र है– "एकाचो द्वे प्रथमस्य" (अ० ६।१।१)। इस प्रकार उभयत्र समानता है।

**[विशेष वचन]**

१. वचनग्रहणं द्वे रूपे भवत इति स्थानित्वाशङ्कानिरासार्थम् (दु० वृ०)।

२. वीप्सायां वर्तमानस्य पदस्य लोकत एव द्विरुक्तिः सिद्धा (दु० वृ०)।

३. सति सम्भवे पुंवद्भावोऽपि पीडायां गम्यमानायाम् (दु० वृ०)।

४. यथा शिलापुत्रस्य शरीरमिति। शिलापुत्रकोऽनेन देशान्तरेऽवस्थान्तरेषु च दृष्टः, स तस्य समानात्मनोऽवस्थाभेदाद् भिन्नमिवानुस्मरन्नत्राध्यवस्यति एकार्थतां सर्वावस्थायां स एवायं शिलापुत्रक इति, एतस्यां बुद्धौ तेनात्मना विष्वग्भूता साम्प्रतिकी या तस्यावस्था व्यपदिश्यते तस्य शिलापुत्रस्येदं शरीरमिति (दु० टी०)।

५. समुदायव्यापारेऽवयवानामपि व्यापारः। यथा वृक्षः प्रचलन् सहावयवैः प्रचलतीति (दु० टी०)।

६. सुखहेतुत्वात् सुखो रथः इति। सम्भ्रमे यावद्बोधं यावद्भिः पदैर्बोधो गम्यते तावतां पदानां द्विर्वचनम्– अहिरहिः, बुध्यस्व बुध्यस्व (दु० टी०)।

७. व्यपदेशिवद्भावश्च लोकतः एव सिद्धः। यथा 'राहोः शिरः, शिलापुत्रस्य शरीरम्' इति। तत्र च व्यपदेशिवद्भावे (वि० प०)।

८. समुदायस्त्वाद्यो न भवति अनाद्यस्याभावादिति व्यपदेशिवद्भाव उच्यते। एतेनैकस्वराणां धातूनां समुदाय एव द्विर्वक्तव्यः,व्यपदेशिवद्भावेनाद्यत्वोपपत्तेरिति दर्शितम् (वि० प०)।

९. प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा, तस्यां गम्यमानायां द्विर्वचनं लोकत एव सिद्धम् (वि० प०)।

१०. एवमन्येऽपि शिष्टप्रयोगानुसारेण वेदितव्याः (वि० प०; बि० टी०)।

११. स चाधिकारो द्विविधः– सूत्रैकदेशभेदात् क्वचित् परार्थः, स्वार्थपरश्च क्वचित्। परार्थश्चायमेव (बि० टी०)।

१२. व्यपदिश्यते समुदायोऽस्मिन्निति व्यपदेशोऽवयवः, सोऽस्यास्तीति व्यपदेशी अवयवी। व्यपदेशीव व्यपदेशिवत्, तस्य भावो व्यपदेशिवद्भाव इत्यर्थः। अवयविवद्भावाद्यन्तवदेकस्मिन्नित्यर्थः। अन्ये पुनर्व्यपदेश आरोप उच्यते, सोऽस्यास्तीति व्यपदेशी आरोपी, स इव तस्य भावो व्यपदेशिवद्भावः (बि० टी०)।

१३. यावता पदेन बोधस्तावतो द्विर्वचनम्, संख्यानियमो नास्ति (बि० टी०)।

**[रूपसिद्धि]**

१. **पपाच।** पच् + परोक्षा – अट्। 'डु पचष् पाके' (१।६०३) धातु से "परोक्षा" (३।१।२९) सूत्र द्वारा परोक्षाभूतकाल में प्रथमपुरुष – एकवचन अट् प्रत्यय, प्रकृत सूत्र के अधिकार में "चण्परोक्षा०" (३।३।७) से पच् का द्विर्वचन, अभ्याससंज्ञा, "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) से च् का लोप तथा " अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से धातुगत उपधा को दीर्घ।

२. **जुहोति।** हु + वर्तमाना – ति। 'हु दाने' (२।६७) धातु से "वर्तमाना" (३।१।२४) सूत्र द्वारा वर्तमानासंज्ञक परस्मैपद प्रथमपुरुष – एकवचन 'ति' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् – विकरण, "अदादेर्लुग् विकरणस्य" (३।४।९२) से उसका लुक्, प्रकृत सूत्र के अधिकार में "जुहोत्यादीनां सार्वधातुके" (३।३।८) से द्विर्वचन, अभ्याससंज्ञा, "हो जः" (३।३।१२) से ह् को ज् तथा "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से हु - धातुगत उकार को गुणादेश ॥४९८।

## ४९९. स्वरादेर्द्वितीयस्य [३।३।२]

**[सूत्रार्थ]**

स्वरादि धातु के एकस्वर वाले द्वितीय अवयव के द्विर्वचन का अधिकार यहाँ से प्रारम्भ होता है ॥४९९।

**[दु० वृ०]**

येन नाप्राप्तिन्यायेन पूर्वस्य बाधकोऽयम्। स्वरादेर्धातोर्द्वितीयस्यावयवस्यैकस्वरस्यानभ्यासस्य द्विर्वचनं भवतीत्यधिकृतं वेदितव्यम्। आशिशत्, अटाट्यते, अरिरिषति। स्वरादेरिति किम्? पापच्यते। धातोरिति किम्? आटतुः। स्वरादेरिति कर्मधारयात् पञ्चम्या सिध्यति। द्वितीयग्रहणमिहोपलक्षणम्, तेन **शिष्टप्रयोगानुसारेण**

कण्डूयादीनां तृतीयस्यापि – कण्डूयितुमिच्छति **कण्डूयियिषति** । ईर्ष्यतेर्यिशब्दस्य सनो वा द्विर्वचनम् – ईर्ष्यितुमिच्छति । ईर्ष्यियिषति सनोऽपि – ईर्ष्यिषिषति ।नामधातोराद्यस्य द्वितीयस्य तृतीयस्य क्रमेण युगपद् वा – पुत्रीयितुमिच्छति पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति, पुपुतित्रीयियिषति । क्वचिद् द्वितीयतृतीययोरपि – अश्वीयितुमिच्छति अशिश्वीयिषति, अश्वीयियिषति ।।४९९।

**[दु० टी०]**

स्वरादेः । ननु च विरोधे बाधा स्यात्, अत्र त्वविरोधो भिन्नविषयत्वात् । यथा देवदत्तस्य शिरोऽभ्यज्यताम् पादश्चेति । न हि पादाभ्यङ्गः शिरोऽभ्यङ्गं बाधते ? सत्यम् । क्रमान्नित्यत्वाच्चाद्यस्य द्विर्वचने कृते द्वितीयतृतीययोर्भवति निरवकाशं द्वितीयद्विर्वचनम् । अथ कृते द्विर्वचने यो द्वितीयस्तस्य भविष्यति । ननु च अटेराद्यस्य द्विर्वचने व्यञ्जनावशेषो द्वितीयस्य द्विर्वचने व्यञ्जनावशेषस्तस्याकारत्रयस्य **"असन्ध्यक्षरयोरस्य तौ तल्लोपश्च"** (३।६।४०) इति 'अटिषति' इत्यतद्रूपं स्याद् इत्यनर्थकं वचनमिदम् । नैवम्, अटेः प्रथमस्य द्विर्वचनं **"सन्यवर्णस्य"** (३।३।२६) इतीत्त्वम्, तथा द्वितीयस्याप्येवम् ।ततः समानदीर्घत्वे **"अभ्यासस्यासवर्णे"**(३।४।५६) इति इयादेशे 'इयटिषति' इत्येतद्रूपं स्यात् ।ओणेश्च उवोणिषतीति अभ्यासविकारेष्वपि **'वार्णात् प्राकृतं बलीयः'** (कात० प० ८१) इति पक्षमाश्रित्येदमुच्यते ।

एवमपि व्यक्तिपदार्थे इह ततोऽन्य एव द्वितीय इति न दोषः । सत्यपि सम्भवे बाधनं भवति – 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति दीयताम् इतीह गम्यते, **एकवाक्यतापक्षे** तु साधनं भिद्यते, क्रिया पुनरेकैव । एवमिहापि द्वितीयद्विर्वचनम् आद्यद्विर्वचनं बाधिष्यते पूर्वयोगे वाऽनभ्यासस्येति धातोर्विशेषणं यदि तर्हि आद्यस्यैकस्वरस्य द्विर्वचनं बाध्यते ततो यथाभूतस्य प्रसङ्गः, तथाभूतस्यैव निवृत्तिरिति कथं व्यञ्जनस्य द्विर्वचनम् ? सत्यम्, अप्राप्त्यनुमानबाधेनैव हि क्वचित् प्राप्तस्य निवृत्तिः क्रियते । तत्र स्वरादेर्द्वितीय-द्विर्वचनविधानाद् आद्यद्विर्वचनं नास्तीति अनुमीयते, व्यञ्जनानि तु नटभार्यावद् रङ्गगता यस्य यस्य कार्यमुच्यते तं तं भजन्ते इति लिङ्गं चात्र **"न नबदराः"** (३।३।३) इति प्रतिषेध एव ।

ननु द्वितीस्याभावे आद्यस्य द्विर्वचनं न प्राप्नोति व्यावृत्तत्वात् ।आटतुः, आटुः । नात्र **"स्वरादेः"** (३।३।२) इति स्वरादिसामान्यं निर्दिश्यते, किन्तर्हि स्वरादिव्यक्तिस्तेन य एव द्वितीयवान् स्वरादिः स एवैको निर्दिष्टो नान्य इति, यत्रैव द्वितीयद्विर्वचनं तत्रैवाद्यनिवृत्त्या भवितव्यम् ।स्वरादेरिति किमियं बहुव्रीहेः षष्ठी धातुसमानाधिकरणात्, उत कर्मधारयात् पञ्चमी ।बहुव्रीहेः षष्ठी चेद् अनाद्यारम्भे तृतीयस्यापि प्राप्नोति

'अटिषिषति' इत्यनिष्टं स्यादिति द्वितीयग्रहणं युक्तम्, व्याख्यानतो विशेषार्थप्रतिपत्तेरिति मनसि कृत्वाह – स्वरादेरित्यादि। कर्मधारयादेव पञ्चमी 'पञ्चम्या निर्दिष्टे परस्य' (कात० प० २२) इति व्यवहितस्य तृतीयस्य न भवतीत्याह – द्वितीयेत्यादि। लक्ष्यप्रधानत्वाल्लक्षणस्येति भावः ॥४९९।

**[वि० प०]**

स्वरादेः पूर्वेणाद्यस्य द्विर्वचने प्राप्ते सत्यनेन द्वितीयस्य द्विर्वचनं विधीयते। ततो **'येन नाप्राप्तौ यो विधिरारभ्यते स तस्य बाधकः'** (व्या० परि० वृ० ४२) इत्याह – येनेत्यादि। ननु भिन्नविषयत्वात् कथमयं पूर्वस्य बाधको भवति, न हि 'देवदत्तस्य शिरोऽभ्यज्यताम् पादश्च' इत्युक्ते पादाभ्यङ्गः शिरोऽभ्यङ्गं बाधते इति। नैतद्, एवं क्रमान्नित्यत्वाच्चाद्यस्य द्विर्वचनेन प्राग् भवितव्यम्, तथा च सति यो द्वितीयः स तृतीयो भवतीति निरवकाशतयैवेदं पूर्वस्य बाधकमिति। अथ कृते द्विर्वचने यो द्वितीयः सोऽस्यावकाश इति ? तदप्ययुक्तम्। अटेराद्यस्य द्विर्वचने व्यञ्जनावशेषः, अनेन पुनर्द्वितीयस्य व्यञ्जनावशेषः। ततोऽकारत्रयस्य **"असन्ध्यक्षरयोरस्य तौ तल्लोपश्च"** (३।६।४०) इति **'यावत्सम्भवस्तावद्विधिः'** (कात० प० ५४) इति कृते सति अटिषत्येतद्रूपं स्यात्। एतच्चाप्यन्तरेणाप्येतद् वचनं सिध्यतीत्यनर्थकमेवेदं स्यात्। नैवम्, अटेराद्यस्य द्विर्वचने **"सन्यवर्णस्य"** (३।३।२६) इतीत्त्वम्, द्वितीयस्याप्येवम्। ततः समानलक्षणदीर्घत्वे **"अभ्यासस्यासवर्णे"** (३।४।५६) इतीयादेशे कृते 'इयटिषति' इत्येतद्रूपं स्यात्। तत् कथमानर्थक्यमिति। अथ **'अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते'** (कात० प० ६४) इति ज्ञापकादुत्सर्गोऽसन्ध्यक्षरविधिरिति चेत्, सत्यम्, तथापि **'वार्णात् प्राकृतं बलीयः'** (कात० प० ८१) इति न्यायादित्वमेव स्यात्।

एवन्तर्हि **"स्वरादेर्द्वितीयस्य"** (३।३।२) इति व्यक्तिनिर्देशोऽयम्, व्यक्तौ चाद्यस्य द्विर्वचने अन्य एवेदानीं द्वितीय इति व्यक्त्यन्तरस्य द्विर्वचनमनेन न स्यादिति। न चाद्यस्य पश्चाद् द्विर्वचनमिति वक्तुं युज्यते, 'सकृद्गतो विप्रतिषेधो विधिर्यद् बाधितं तद् बाधितमेव' (कात० प० ३६) इति न्यायात्। ननु यदि आद्यस्यैकस्वरस्य द्विर्वचनमनेन बाध्यते तर्हि व्यञ्जनस्याप्याद्यावयवसम्बन्धिनो द्विर्वचनस्य बाधया भवितव्यम्, यतो यथाभूतस्य प्रसङ्गस्तथाभूतस्यैव बाधा भवति, प्रसङ्गश्च व्यञ्जनसहितस्यैवेति। द्वितीयस्य द्विर्वचने कथमनेकस्वरव्यपदेशिनो व्यञ्जनस्य द्विर्वचनमिति नैष दोषः। यदयं **"न नबदराः संयोगादयोऽये"** (३।३।३) इति प्रतिषेधं शास्ति, तद् बोधयति-स्वरादेर्धातोर्यद् व्यञ्जनं स द्वितीयोऽवयव इति। अन्यथा स्वरादेर्द्वितीयस्यावयवस्य द्विर्वचनं विधीयमानं कथमाद्यावयवसम्बन्धिनां न-ब-द-राणां प्रसज्यते, येन

प्रतिषेधोऽर्थवान् स्यात् । एतदेव वक्ष्यति-स्वरादाद्याद् द्विती ोऽवयवो वचनाद् गम्यते इति । तेन द्वितीयावयवसम्बन्धिनो व्यञ्जनस्य द्विर्वचनं न विरुध्यते ।

आशिशदिति ।अशेर्हेताविन्, ततोऽद्यतन्या दिः ।**"श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण्"** (३।२।२६) इति कृते **"चण्परोक्षा०"** (३।३।७) इत्यादिना शिशब्दस्य द्विर्वचनम्, कारितलोपः, तथा अटाट्यते इति । ऋप्रभृतिभ्यश्चेति । वचनाद् अटेर्यशब्दे कृते ट्यशब्दस्य द्विर्वचनम् । अभ्यासलोपे **"दीर्घोऽनागमस्य"** (३।३।२९) इति दीर्घः। अरिरिषति । अर्तेः सन् "स्मिङ्पूङ्०" (३।७।११) इत्यादिना इटि कृते गुणे च रिशब्दस्य द्विर्वचनम् । आटतुरिति । इह द्वितीयोऽवयवः प्रत्ययस्वरेणैकस्वरो न धातोरिति प्रत्युदाह्रियते, तेनाद्यस्यैव द्विर्वचनं भवति । अथ द्वितीयग्रहणं किमर्थं तृतीयादेर्मा भूत् ? तथाहि स्वर एवादिर्यस्यासौ स्वरादिस्तस्य स्वरादेर्धातोर्द्विर्वचनमित्युक्ते तृतीयस्यापि द्विर्वचनं प्रसज्येत, ततः 'अटिषिषति' इत्यनिष्टरूपं स्यात् ? तदयुक्तम्, स्वरश्चासावादिश्चेति कर्मधारये कृते स्वरादेरिति पञ्चमी भविष्यति । ततः **'पञ्चम्या निर्दिष्टे परस्य'** (कात० प० २२) इत्यादिभूतात् स्वरात् परस्यानन्तरस्य द्वितीयस्यैव भविष्यतीत्याह – स्वरादेरित्यादि **सुगमम्** ।।४९९।

**[वि० टी०]**

स्वरादेः ।स्वरादेरिति किमित्यादि ।द्वितीयस्येत्युक्ते यत्रैकस्वरस्याद्यस्य द्वितीयस्य च सम्भवस्तत्र द्वितीयस्यैव द्विर्वचनं स्यात् ।तदा जागृधातोरपि द्वितीयस्यैव द्विर्वचनमिति स्यात् । पूर्वसूत्रन्तु एकस्वरधातुष्वेव प्रवृत्तं स्यात् । ततश्च तत्राद्यैकस्वरस्येत्यनेन किमेकस्वरधातोःसमुदायस्यैव द्विर्वचनं क्रियते, नैवम् ।स्वरादेरित्यस्याभावे द्वितीयस्येत्युक्ते आद्यस्य द्वितीयस्य चैकत्र द्विर्वचनसम्भवे व्यञ्जनादीनामस्य विषयः स्वरादीनान्तस्य विषयः इत्यपि स्यात् ।स्वरादीनां धातूनां पुनराद्यस्य द्विर्वचनं न भवतु न समुदायस्य । एवं तत्राद्यस्य ग्रहणमुक्तम् । स्वरादेरिति । कर्मधारयादिति । ननु द्वितीयग्रहणाभावे स्वरादेरिति किमियं बहुव्रीहौ धातुसमानाधिकरणात् षष्ठी, उत कर्मधारयात् पञ्चमी ? पूर्वपक्षेऽनाद्यर्थारम्भे तृतीयस्यपि प्राप्नोति तदा 'अटिषिषति' इत्यनिष्टरूपं स्यादिति द्वितीयग्रहणम् ? कथमुक्तं स्वरादेरिति कर्मधारयात् सिध्यतीति ? नैवम्, बहुव्रीहिपक्षेऽपि द्वितीयग्रहणाभावे न दूषणम्, यतोऽनाद्यस्य द्विर्वचनं भवद् आद्यस्य द्विर्वचनाभावे आद्यसमीपस्य द्वितीयस्यैव भविष्यति । उभयपक्षेऽपि दूषणाभावे **सुखप्रतिपत्तिहेतुकम्** । एकं कर्मधारयपक्षमलोक्योक्तमिदमित्यदोषः ।

अथवा द्वितीयस्य धातोरवयवस्य विशेषणम्, स्वरादेरिति चावयवस्य विशेषणं न तु धातोरिति, ततः कर्मधारयात् पञ्चमी युज्यते । द्वितीयग्रहणेऽस्थितेऽत्र बहुव्रीहावपि

कष्टम् । धातोर्विशेषणं **टीकायां** व्याख्यानतो विशेषार्थप्रतिपत्तेरित्युक्तम् । तस्याप्ययमाशय इति लक्ष्यते । **'न ह्यनिष्टार्था शास्त्रप्रक्लृप्तिः'** (भो० प० सू० १०७) इति कश्चित् कर्मधारय एव द्वितीयग्रहणमिहोपलक्षणम् इति । द्वितीयग्रहणाभावेऽपि द्वितीयस्यैव द्विर्वचने लब्धे यद् द्वितीयग्रहणं तत् प्रायेण द्वितीयस्यैव द्विर्वचनम् । क्वचित् कण्डूयादीनां तृतीयस्यापीति वृत्तावुक्तं भवतीति बोद्धव्यम् । उपलक्ष्यते नियमतो ज्ञायतेऽनेनेति **उपलक्षणम्** । ज्ञापनं केचित् कर्मधारयादेवमुपलक्षणमाचक्षते । द्वितीयसम्बन्धिनस्तृतीयस्य द्विर्वचनम् ।

यथा 'काकवन्तो देवदत्तस्य गृहाः' इति । अन्ये द्वितीयपदं तृतीय उच्यते **उपचारात्** । यथा तनाद्युपलक्षणं करोतिरिति । रुच इत्यनुदात्तानुबन्धोपलक्षणमिति । उभयपक्षेऽप्यस्मिन् व्यञ्जनादेर्द्वितीयस्य तृतीयस्य च क्रमेण युगपद् वेत्यस्य चानयनं दुर्घटमिति इयटिषतीत्येतद्रूपं स्यादिति । तत् कथमनर्थकमिति । ननु इयटिषतीत्येतद्रूपं सूत्रमन्तरेण भवति, तदानर्थकमेवैतत् कथं सार्थकमिति । अत्र **केचित्** समानलक्षणो दीर्घः, **"अभ्यासस्यासवर्णे"** (३।४।५६) इति इयादेशे कृते इति पञ्जीपङ्क्तेरभ्यासस्येयादेश इति व्यवहितयोजनं कृत्वा ईयटिषतीत्येतद्रूपं स्यादिति दीर्घादिपाठं मन्यन्ते ।

**महामहोपाध्यायास्तु** तन्निरासार्थं कारिकामाहुः—

> **द्वित्वे द्विरुक्तेरिह तद्बलात् स्यादित्त्वं प्रबाध्याटिषतीतिरूपम् ।**
> **ईदृग् द्विरुक्त्याटिषतीति रूपं सूत्रं विना स्यादिति वाग्घटा स्यात् ॥**
> **सन्दर्भमेतादृशमेव पञ्ज्यामज्ञातवांस्त्वीयटिषत्यधीते ।**
> **व्यक्तावटेष्टेरिति सूत्रभेदे त्वटेः कुतो द्विर्वचनप्रसङ्गः ? ॥**

**अस्यार्थः**— पञ्ज्यां नैवमित्यस्यायम**भिप्रायः,** अटिषतीति पदं सिद्धं सूत्रं विना स्यादिति यदुक्तं तन्न, सूत्रे कृते सत्येव अटिटिषतीति । तदेवाह—द्वित्व इति । **द्विरुक्ते** द्वित्वे सति तद्बलादित्त्वं प्रबाध्यासन्ध्यक्षरविधौ सति इयटिषतीति रूपं भवतीति यदि च ईदृग् द्विरुक्त्या द्विर्वचनद्वये **"सन्यवर्णस्य"** (३।३।२६) इतीत्त्वं क्रियते, तदैवं सूत्रं विना स्यादिति वाग्घटा वाग्घटनं भवति । तदेव पञ्जिकामाह—अटेराद्यस्य द्विर्वचने सन्यवर्णस्येतीत्त्वमित्यादि । कथमनर्थकमिति । अटिषतीति रूपं स्यादेव । तदर्थसूत्रं कथमनर्थकं स्यादिति । अत एतादृशं सन्दर्भम् अज्ञातवान् जन ईयटिषतीति पाठं मन्यते । एवन्तर्हि **"स्वरादेर्द्वितीयस्य"** (३।३।२) इति व्यक्तिनिर्देशोऽयमिति द्विर्वचननिमित्ते प्रत्यये सति यो द्वितीयः स इह व्यक्त्या गृहीत इति, न चाद्यस्य पश्चात् प्राप्तिरिति

**दुर्गवाक्ये** अटेष्टेर्व्यक्तेरेव द्विर्वचनमिति कुतः सूत्रभेदे अटो द्विर्वचनं स्यादिति । तदेवं गदितम् –

**'व्यक्तावटेष्टेरिति सूत्रभेदे त्वटः कुतो द्विर्वचनप्रसङ्गः'** इति । तत्रेदं चिन्त्यते – ननु वचनबलादित्त्वं प्रबाध्य अटिषतीति रूपं स्यादिति कथमुक्तम् ? यदि इत्त्वबाधां करिष्यति, तदा अटेराद्यस्य द्विर्वचनेऽसन्ध्यक्षरविधौ कृते पश्चात् टेरेव द्विर्वचने अटिषतीति सिद्धम् । न च वाच्यम् – असन्ध्यक्षरविधिर्द्वितीयद्विर्वचनेन बाध्यते, यतो **'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते, न तु परान्'** (व्या० परि० पा० १०) इति न्यायात् । तर्हि कथं **पञ्जीकृता** अटिषतीत्येतद्रूपं स्याद् एतच्चान्तरेणैतद् वचनं सिध्यतीत्यनर्थकमेव स्यात् ? सत्यम् । कक्षानवतारदशायां यदुक्तम् । पश्चात् तेनैवमित्यादिना सर्वमेव निरस्तम् । यतोऽसन्ध्यक्षरविधिरेव नास्ति, तन्मात्रं तु यदि इत्त्वं बाधते तदा अटिषतीति सूत्रस्य कृतार्थता च स्यात् । कथं वा इत्त्वबाधायां वचनस्य शक्तिः । ओणृ - धातोः उवोणिषतीति अत्र वचनस्याचरितार्थत्वात् । यदुक्तं **टीकायाम्** – ओणेश्च उवोणिषतीति । यच्च **दुर्गवाक्ये**नोक्तम् – अत्राद्यद्वितीययोः क्रमेण द्विर्वचने ह्रस्वत्वे समानलक्षणदीर्घत्वे च उवादेशे कृते सिद्धमिति । तत्र यदेव सम्भवति तदेव दर्शितमिति न तु क्रमः । किञ्च उन्दिप्रभृतेश्च द्विर्वचनद्वये यथेष्टमनिष्टं **फलम**स्ति ।

**टीकायान्**तु ईयटिषतीति दीर्घादिपाठो दृश्यते, तन्मते व्याख्यया सोऽपि छेदनीय इति । यद् वा समानलक्षणदीर्घत्वे इयादेश इति यत् टीकापञ्जिकाभ्यामुक्तम् । ततः क्रमेण ह्रस्व एवोक्तस्तदपि नैव यदेव सम्भवति तदेव दर्शितम्, न तु क्रमेण कार्यं कर्तव्यमिति । कथमन्यथा दीर्घ इणः परोक्षायामगुणे इयादेशे समानलक्षणे दीर्घत्वे सिद्धे इयो बाधकं षत्वं स्यादिति वचनम् इत्युक्तम् । तत्रापि **पञ्ज्याम्** अचीकरदिति द्विर्वचनम् "इन्यसमानः" (३।५।४४) इत्यादिना ह्रस्वत्वमित्युक्तम् । अन्यथा द्विर्वचनह्रस्वयोः प्राप्तयोः परत्वाद् ह्रस्व इति वक्ष्यति । **केचिद्** आचक्षते – पञ्ज्याम् इयटिषतीति ह्रस्वादिरेव पाठो दृश्यते, **टीकायां** च ह्रस्वादिपाठः करणीयः । समानलक्षणदीर्घत्वे इयादेश इत्युक्तत्वाद् ओणेश्च उवोणिषतीति ह्रस्वादिरेव पाठः । **दुर्गवाक्ये** तु आद्यद्वितीययोः क्रमेण द्विर्वचने ह्रस्वत्वे समानलक्षणदीर्घत्वे इयादेशे च रूपम् इत्युक्तत्वाच्च । तर्हि इदमपि वचनमन्तरेण स्यादिति वचनात् पूर्वस्य बाधकमिति नोक्तम् । यस्माद् उन्दिप्रभृतेश्च द्विर्वचनद्वयेनानिष्टफलमस्तीति **सर्वव्याकरणसिद्धान्तमाह** – एवं तर्हीत्यादि । पूर्वं तु कक्षानवतारे द्विर्वचनसामर्थ्यमुक्तमित्यदोषः । व्यक्तिव्याख्यानस्य कारणं **"न नबदराः संयोगादयोऽये"** (३।३।३) इति वचनम् । अन्यथा यदि आद्यस्य द्विर्वचने यो द्वितीयस्तस्यैव द्विर्वचनम्, तदा द्वितीयावयवसम्बन्धिनामादिभूतानां नबदराणां क्व सम्भव इति ।

**टीकायां** तु सिद्धान्तान्तरमुक्तम् । तथाहि सत्यपि संभवे बाधनं भवति । ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय, दीयताम् इतीह गम्यते । **एकवाक्यतापक्षे** तु साधनं भिद्यते क्रिया पुनरेकैव । एवमिहापि द्वितीयद्विर्वचनम् आद्यद्विर्वचनं बाधिष्यते इति । पूर्वयोगे वाऽनभ्यासस्येति धातोर्विशेषणमिति । एकवाक्येत्यादि । भिन्नवाक्ये तु कौण्डिन्याय तक्रं रक्ष्यताम् इति तदा न बाधनम् इत्यर्थः । साधनं भिद्यते इति साधनं तक्रम् । पूर्वयोगे वाऽनभ्यासस्येति धातोर्विशेषणम् इति । न विद्यतेऽभ्यासो यस्य । आद्यस्य द्विर्वचनं ततः साभ्यासत्वान्न द्वितीयस्य द्विर्वचनमिति ॥४९९।

**[समीक्षा]**

'अटिटिषति, अशिशिषति, अरिरिषति' इत्यादि सनूप्रत्ययान्त शब्दरूपों के सिद्ध्यर्थ स्वरादि धातुओं में सस्वर द्वितीय वर्ण के द्वित्वविधानार्थ दोनों ही आचार्यों ने सूत्र बनाए हैं। पाणिनि का सूत्र है– "अजादेर्द्वितीयस्य" (अ० ६।१।२)। 'अजादि – स्वरादि' शब्दभेद के अतिरिक्त अन्य कोई अन्तर नहीं है।

**[विशेष वचन]**

१. द्वितीयग्रहणमिहोपलक्षणम्। तेन शिष्टप्रयोगानुसारेण कण्डूयादीनां तृतीयस्यापि (दु० वृ०)।

२. दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति दीयतामितीह गम्यते। एकवाक्यतापक्षे तु साधनं भिद्यते (दु० टी०)।

३. अप्राप्त्यनुमानबाधेनैव हि क्वचित् प्राप्तस्य निवृत्तिः क्रियते (दु० टी०)।

४. लक्ष्यप्रधानत्वाल्लक्षणस्येति भावः (दु० टी०)।

५. उभयपक्षेऽपि दूषणाभावे सुखप्रतिपत्तिहेतुकम्। एकं कर्मधारय-पक्षमवलोक्योक्तमिदमित्यदोषः (बि० टी०)।

६. उपलक्ष्यते नियमतो ज्ञायतेऽनेनेति उपलक्षणम्, ज्ञापनं केचित् कर्मधारयादेवमुपलक्षणमाचक्षते (बि० टी०)।

७. यस्माद् उन्दिप्रभृतेश्च द्विर्वचनद्वयेनानिष्टफलमस्तीति सर्वव्याकरण-सिद्धान्तमाह (बि० टी०)।

८. एकवाक्यतापक्षे तु साधनं भिद्यते, क्रिया पुनरेकैव। एवम् इहापि द्वितीयाद्विर्वचनम् आद्यद्विर्वचनं बाधिष्यते इति (बि० टी०)।

**[रूपसिद्धि]**

१. आशिशत्। आशि + चण् + दि। अश्नन्तम् अश्नुवानं वा प्रायुक्त। 'अश्

भोजने' (८।४३) धातु से "इन् कारितं धात्वर्थे" (३।२।९) से इन् प्रत्यय, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधासंज्ञक अकार को दीर्घ, "ते धातवः" (३।२।१६) से 'आशि' की धातुसंज्ञा, अद्यतनीसंज्ञक परस्मैपद प्रथमपुरुष – एकवचन 'दि' प्रत्यय, "श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण् कर्तरि" (३।२।२६) से चण् प्रत्यय, प्रकृत सूत्र की व्यवस्था के अनुसार "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से द्वितीय अवयव 'शि' का द्विर्वचन तथा "कारितस्यानामिड्विकरणे" (३।६।४४) से कारितसंज्ञक इन् का लोप।

२. **अटाट्यते**। अट् + य + ते। पुनः पुनः कुटिलम् अटति। 'अट गतौ' (१।१०२) धातु से कौटिल्य अर्थ में "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) से य - प्रत्यय, प्रकृत सूत्र के अनुसार 'ट्य' भाग का द्विर्वचन, 'अटाट्य' शब्द की धातुसंज्ञा, वर्तमानासंज्ञक प्रथमपुरुष - एकवचन 'ते' प्रत्यय।

३. **अरिरिषति**। ऋ + सन् + ति। अर्तुमिच्छति। 'ऋ प्रापणे च' (१।२७५) धातु से "धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्" (३।२।४) सूत्र द्वारा सन् प्रत्यय, "स्मिङ्पूङ्रञ्ज्वशूकृगृदृधृप्रच्छां सनि" (३।७।११) से इडागम, "गुणोऽर्तिसंयोगाद्योः" (३।४।७५) से गुण, प्रकृत सूत्र के नियमानुसार 'रि' को द्वित्व, 'अरिरिष' की धातुसंज्ञा, वर्तमानासंज्ञक प्रथमपुरुष – एकवचन 'ति' प्रत्यय ॥४९९।

## ५००. न नबदराः संयोगादयोऽये [३।३।३]

**[सूत्रार्थ]**

स्वरादि धातु के द्वितीय अवयवरूप तथा संयोग के आदि में विद्यमान 'न् - ब् - द् - र्' इन चार वर्णों का द्विर्वचन नहीं होता है ॥५००।

**[दु० वृ०]**

स्वरादेर्धातोर्द्वितीयस्यावयवस्यैकस्वरस्यानभ्यासस्य नबदराः संयोगादयो न द्विरुच्यन्ते, न तु ये परे। उन्दिदिषति, उब्जिजिषति, अड्डिडिषति, अर्चिचिषति। नामधातुष्वपि – इन्द्रीयितुमिच्छति इन्दिद्रीयिषति। **एवमन्येऽप्यनुसर्तव्याः**। अय इति किम्? अरार्यते। अर्यमाख्यातवान् आरर्यदित्यपि स्यात्। कथं प्रोर्णोनूयते? नायं ये परतः। स्वरादाद्याद् द्वितीयोऽवयवो वचनाद् गम्यते ॥५००।

**[दु० टी०]**

न नब्रदराः। न नबदराः हि संयोगस्यादयोऽवयवाः इत्यकारः **सुखोच्चारणार्थ** एव। **'उन्दी क्लेदने, उब्ज आर्जवे, अड्ड अभियोगे'** (६।१६; ५।२७; १।१२५)

अन्तरङ्गेऽपि न दकारस्य डकारो वचनात्, **'वार्णात् प्राकृतं बलीयः'** (कात० प० ८१) इति वा। अर्चिचिषतीति। 'अर्च पूजायाम्'। नबदरा इति किम्? ईक्ष – ईचिक्षिषते। ककारो व्यञ्जनं परस्यापीति परेण स्वरेण सह द्विरुच्यते एव। **'अट्ट अतिक्रमहिंसयोः'** (१।३५०) इति दोपधं **पठन्त्येके,** तेषाम् अट्टिटिषते। कथमित्यादि। संयोगस्यादिर्यं परे नायं रेफः औपश्लेषिकाधारत्वाद् इत्यूर्णोतेरप्रतिषेधः स्वरादित्यादि, लिङ्गं चात्र न नबदरा इति प्रतिषेध एवेति व्याख्यातमेव ॥५००।

## [वि० प०]

न न०। न तु ये परे यकार उपश्लिष्टे द्विरुच्यते एवेत्यर्थः। **उन्दिदिषतीत्यादि।** एषां नबदराणां पूर्वतो विश्लिष्य यथाक्रमं दिजिडिचीनां द्विर्वचनम्। अड्डिडिषतीति। **'अदड्ड अभियोगे'** (१।१२५)। इह टवर्गयोगेऽपि दकारस्य तवर्गश्चटवर्गयोगे चटवर्गावित्यन्तरङ्गोऽपि डकारो न भवति। अत एव प्रतिषेधात् कृते **द्विर्वचने** भवत्येवेति। अय इत्यादि। इहापि **"ऋप्रभृतिभ्यश्च"** इति वचनाद् "अर्तेर्यशब्दश्चेक्रीयिते च" इति गुणः, यकारसहितस्यैव रेफस्य द्विर्वचनम्, अभ्यासलोपादि पूर्ववत्। अर्यमाख्यातवान् इति **"इन् कारितं धात्वर्थे"** (३।२।९) इति अर्यशब्दाद् इन्, ततः **"इनि लिङ्गस्य"** (३।२।१२) इत्यादिना अकारलोपः, ततः **"ते धातवः"** (३।२।१६) इति धातुत्वे पूर्ववद् अद्यतन्यां चणि कृते इनि यत् कृतं तत् सर्वं स्थानिवदिति यशब्दस्य द्विर्वचनं समानलोपत्वान्न सन्वद्भावः, अवर्णस्याकारः, आरर्यद् इत्यपीति। अयमपि यकारेणोपश्लिष्टो रेफस्तेनैतदपि प्रत्युदाहरणमित्यर्थः। कथमित्यादि। प्रपूर्वः **'ऊर्णुञ् आच्छादने'** (२।६४)। अत्रापि पूर्ववद् यशब्दो रेफं पूर्वतो विश्लिष्य नुशब्दस्य द्विर्वचनम्, **"गुणश्चेक्रीयिते"** (३।३।२८) इति गुणः। **"नाम्यन्तानां यणायि०"** (३।४।७०) इत्यादिना दीर्घः। **'निमित्ताभावे०'** (कात० प० २७) इत्यनेन णकारस्य नत्वम्। अये इत्युपश्लेषलक्षणा सप्तमी। न चायं रेफो यकारेणोपश्लिष्ट इति प्रतिषेध एवास्ति इत्येतदेवाह – नायं ये परतः इति।

स्वरादित्यादि। आदिभूतात् स्वरात् नकारादिवर्णो द्वितीयोऽवयवो वचनाद् अत एव सूत्रादित्यर्थः। सर्वोद्दिष्टमिदं ज्ञापकं तथा च व्याख्यातमिति ॥५००।

## [वि० टी०]

न नबदराः। अन्तरङ्गोऽपि डकारः पूर्वं न भवति। अत एव प्रतिषेधादिति। ननु अर्दमाख्यातवान् 'आर्दीदत्' इत्यत्र नामधातोर्द्विर्वचनं चरितार्थम्, तत् कथम् अत

एव प्रतिषेधादित्युक्तम् ? सत्यम्, अत एव **हेमकरः** – अन्यथा मुख्यधातोः क्व सम्भवः इत्यस्याप्य**यमाशयः** – अन्येषां मुख्यधातुषु सम्भवः, अस्यापि मुख्यधातौ प्रतिषेधः क्व स्यादिति। अथ मुख्यधातौ प्रतिषेधश्चेत् तदा सर्वेषामादावन्ते वा दकारस्य पाठं कुर्यान्मध्यपाठान्मुख्येऽपि बोध्यम्। एतच्च न चारु, **चन्द्रेण (दुर्गवाक्येन)** विरोधात्। तथाहि – ननु ऋद्धमाख्यातवान् आर्दिधत्, इन्धमाख्यातवान् ऐन्दिधद् इति वचनं नामधातौ चरितार्थमित्याह – वार्णादिति। तेनोक्तम् – **'वार्णात् प्राकृतं बलीयः'** (कात० प० ८१) इति **टीकायां सिद्धान्तान्तरम्।** तन्मते कक्षानवतारे **पञ्जी** योज्या। कक्षायां तु **टीकासिद्धान्तो** देयः। नायं ये परत इति। ननु 'अये' इत्युपश्लेषलक्षणा सप्तमी भवतु, तथाप्यये परे नबदराणां द्विर्वचनं न भवतीत्यर्थे ये परे पुनर्द्विर्वचनं भवतीति। प्रोर्णोनूयते इति कथं तस्माद् ऊर्णोतेः प्रतिषेधो वक्तव्यः।

नैवम्, उपश्लेषलक्षणा सप्तमीयम्। उपश्लेषश्च नबदरा इति कार्यिणमपेक्ष्य बोद्धव्यम्, न धातुद्विर्वचनं कार्यमपेक्ष्यम्। अत एव अरार्यद् इत्यपि स्यादित्युक्तम्, अन्यथा आरर्यद् इत्युदाहरणमेव, न प्रत्युदाहरणं तदा आर्ययद् इत्यनिष्टं स्यात्। कार्यिसम्बन्धे तु कारणं श्रुतमेव। यदुक्तं **टीकायाम्** – संयोगस्यादिर्ये परे नायं रेफः औपश्लेषिकाधारत्वादिति, ऊर्णोतेरप्रतिषेधः। तथा च **वैयकारिका** –

**सप्तम्युपश्लेषभवापि कार्यिव्यपेक्षया कार्यवशा न सा हि।**
**आरर्यदित्याद्यपिनाप्यसूचि द्विरुक्तिरेषा चणि ये तु नैव॥**

**अस्यार्थः** – सप्तमीयम् उपश्लेषभवा कार्यिणो **व्यपेक्षया** कार्यिणमपेक्ष्य कार्यवशा न कार्यायत्ता नेत्यर्थः। हि जानीहि, आरर्यद् इत्याद्यपिना **वृत्तिकार**वचनेन च सूचितेत्यर्थः। यत एषा द्विरुक्तिश्चणि, ये तु नैव॥५००।

**[समीक्षा]**

'उन्दिदिषति, अड्डिडिषति, अर्चिचिषति, उब्जिजिषति' इत्यादि शब्दरूपों में द्वितीय वर्ण 'न्-द्-र्ब्' इन चार के द्विर्वचन – निषेधार्थ दोनों ही आचार्यों ने सूत्र बनाए है। अन्तर इतना ही है कि पाणिनि ने सूत्र में केवल 'न्-द्-र्' वर्णों का तथा ब् का वार्तिक सूत्र में वार्तिककार ने निषेध किया है – "न न्द्राः संयोगादयः" (अ० ६।१।३) – 'बकारस्याप्ययं प्रतिषेधो वक्तव्यः' (वा० सू०)। इन्द्रीयितुमिच्छति इन्द्रिद्रीयिषति इत्यादि नामधातुओं के भी प्रयोगों में यह नियम प्रवृत्त होता है। हेमकर आदि आचार्यों के भी मत व्याख्याकारों ने उद्धृत किए हैं। वृत्तिकार दुर्गसिंह ने एक उदाहरण देकर तादृश अन्य उदाहरणों के संग्रहार्थ निर्देश किया है – 'एवमन्येऽप्यनुसर्तव्याः'।

**[विशेष वचन]**

१. एवमन्येऽप्यनुसर्तव्याः। .......... स्वरादाद्याद् द्वितीयोऽवयवो वचनाद् गम्यते (दु० वृ०)।

२. अकारः सुखोच्चारणार्थ एव। ........ अट्ट अतिक्रमहिंसयोरिति दोपधं पठन्त्येके तेषाम् अट्टिटिषते इति (दु० टी०)।

३. स्वरादित्यादि आदिभूतात् स्वरात् नकारादिवर्णो द्वितीयोऽवयवो वचनाद् अत एव सूत्रादित्यर्थः। सर्वोद्दिष्टमिदं ज्ञापकं तथा च व्याख्यातमिति (वि० प०)।

४. अस्यार्थः – सप्तमीयमुपश्लेषभवा कार्यिणो व्यपेक्षया कार्यिणमपेक्ष्य कार्यवशा न कार्यायत्ता नेत्यर्थः (बि० टी०)।

**[रूपसिद्धि]**

१. **उन्दिदिषति** ।उन्द् + इट् + सन् + अन् + ति ।उन्दितुमिच्छति ।'उन्दी क्लेदने' (६।१६) धातु से इच्छा अर्थ में "धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्" (३।२।४) सूत्र द्वारा सन् प्रत्यय, 'इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः" (३।७।१), द्वितीय अवयव के रूप में 'न्दि' को द्विर्वचन प्राप्त होता है, उसमें प्रकृत सूत्र द्वारा न् के द्विर्वचन का निषेध हो जाने पर "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से 'दि' को द्विर्वचन, "पूर्वोऽभ्यासः" (३।३।४) से पूर्ववर्ती 'दि' की अभ्याससंज्ञा, "निमित्तात् प्रत्ययविकारागमस्थः सः षत्वम्" (३।८।२६) से सन्प्रत्ययस्थ सकार को षकारादेश, "ते धातवः" (३।२।१६) से 'उन्दिदिष' की धातुसंज्ञा, उससे वर्तमानासंज्ञक परस्मैपद प्रथमपुरुष–एकवचन 'ति' प्रत्यय, अन् विकरण तथा "अकारे लोपम्" (२।१।१७) से पूर्ववर्ती अकार का लोप।

२. **उब्जिजिषति** । उब्ज् + इट् + सन् + अन् + ति। उब्जितुमिच्छति। 'उब्ज् आर्जवे' (५।२७) धातु से इच्छार्थ में सन् प्रत्यय, इडागम, द्वित्वादि, 'उब्जिजिष' की धातुसंज्ञा, तिप्रत्यय, अन् विकरण तथा पूर्ववर्ती अकार का लोप।

३. **अड्डिडिषति** । अदृड् + इट् + सन् + अन् + ति । अड्डितुमिच्छति । 'अदृड् अभियोगे' (१।१२५) धातु से सन् प्रत्यय, इडागम, दकार को द्विर्वचन, कार्य का निषेध होने पर 'डि' को द्विर्वचन, अभ्याससंज्ञा, "तवर्गस्य षटवर्गाट्टवर्गः" (३।८।५) से द् को ड्, मूर्धन्य षकारादेश, धातुसंज्ञा तथा वर्तमानासंज्ञक ति-प्रत्यय।

४. **अर्चिचिषति** ।अर्च् + इट् + सन् + अन् + ति ।अर्चितुमिच्छति ।'अर्च् पूजायाम्' (१।५१) धातु से इच्छार्थ में सन् प्रत्यय, इडागम, रेफ के द्विर्वचन का निषेध होने पर 'चि' भाग का द्विर्वचन, सकार को षकारादेश, 'अर्चिचिष' की धातुसंज्ञा, वर्तमानासंज्ञक तिप्रत्यय, अन्विकरण तथा पूर्ववर्ती अकार का लोप।

५. **इन्द्रिद्रीयिषति** । इन्द्र + यिन् + इट् + सन् + अन् + ति । इन्द्रीयितुमिच्छति । 'इन्द्रमात्मन इच्छति' इस अर्थ में 'इन्द्रम्' शब्द से पर में "नाम्न आत्मेच्छायां यिन्" (३।२।५) से 'यिन्' प्रत्यय, समाससंज्ञा, "तत्स्था लोप्या विभक्तयः" (२।५।२) से अम् विभक्ति का लोप, यिन् – प्रत्ययगत अनुबन्धों का प्रयोगाभाव, "यिन्यवर्णस्य"(३।४।७८) से अ को इ, "नाम्यन्तानां यणायियिन्नाशीश्च्विचेक्रीयितेषु ये दीर्घः" (३।४।७०) से इ को दीर्घ, "ते धातवः" (३।२।१६) से 'इन्द्रीय्' की धातुसंज्ञा, 'इन्द्रीयितुमिच्छति' इस विग्रह में इन्द्रीय् धातु से "धातोर्वा तुमन्तादिच्छतिनैकर्तृकात्" (३।२।४) सूत्र द्वारा सन् प्रत्यय, इडागम, न् के द्विर्वचन का निषेध, 'द्री' अवयव का द्विर्वचन, अभ्याससंज्ञादि, ह्रस्व, 'इन्दिद्रीयिष' की पुनः धातुसंज्ञा, वर्तमानासंज्ञक प्रथमपुरुष – एकवचन ति – प्रत्यय, अन्विकरण तथा पूर्ववर्ती अकार का लोप ॥५००।

## ५०१. पूर्वोऽभ्यासः [३।३।४]

### [सूत्रार्थ]

धातु का द्विर्वचन होने पर पूर्ववर्ती रूप की अभ्याससंज्ञा होती है ॥५०१।

### [दु० वृ०]

धातोर्द्विरुक्तस्य यः पूर्वः सोऽभ्याससंज्ञो भवति ।पपाच, देहि ।अभ्यासप्रदेशाः – "**अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्**" (३।३।९) इत्येवमादयः ॥५०१।

### [दु० टी०]

पूर्वो० । द्विर्वचनमिह प्रस्तुतम् अर्थात् वस्त्वपेक्षया पूर्व इत्याह-द्विरुक्तस्य यः पूर्व इति तत्तु प्रथमानिर्दिष्टं पूर्वसूत्रे षष्ठीनिर्देशेन चेहार्थः। अर्थाद् विभक्तिविपरिणामो यथा – **'उच्चानि गृहाणि देवदत्तस्य'**। 'आमन्त्रयस्व एनं देवदत्तम्' इति गम्यते दिक्कृते संबन्धे दिग्योगलक्षणा पञ्चमी । इह तु स्वस्वामिसम्बन्धोऽवयवावयविसम्बन्धो वा यथा पूर्वं पुरुषं कार्यस्य पूर्वं छात्राणाम् आमन्त्रयस्वेति ॥५०१।

### [वि० प०]

पूर्वः। देहीति तु **'दाञ् दाने'** (२।८४)। पञ्चम्या हि अदादित्वादनो लुक्,

जुहोत्यादित्वाद् द्विर्वचनम्, **"दास्त्योरेऽभ्यासलोपश्च"** (३।४।५०) इत्यन्तस्यैत्त्वमभ्यासलोपश्च ।।५०१।

**[वि० टी०]**

पूर्वः। द्विर्वचनमिह प्रस्तुतम्, तदपेक्षया पूर्व इत्याह– द्विरुक्तस्येति। यत्र पूर्वादीनामवयववृत्तिता तदा तत्र न पञ्चमी। यथा कायस्य पूर्वं शिर इति। द्विरुक्तादिति न पञ्चमी। तथा च **टीकायां** दिक्कृते हि सम्बन्धे दिग्योगलक्षणा पञ्चमी। इह तु स्वंस्वामिसम्बन्धो वा, यथा पूर्वं कायस्य। पूर्वं छात्राणां समामन्त्रयस्वेति। ननु द्विरुक्तस्य धातोर्यः पूर्व इत्युक्ते कथं 'दिदरिद्रासति' इत्यत्राभ्यासकार्यम् ? सत्यम्। तत्र हि **हेमकरः** – यत्रैकस्वरधातोः समुदायस्य व्यपदेशिवद्भावाद् द्विर्वचनम्, तत्र द्विरुक्तस्य धातोः पूर्वमिति घटते, यत्रानेकस्वरधातोरवयवस्य द्विर्वचनम्, तत्र द्विरुक्तावयवस्य पूर्व इति सूत्रार्थो बोद्धव्य इति। **वृत्तौ** यदुक्तं तद् बाहुल्यादिति प्रतिपत्तव्यम्। धातुशब्देनावृत्त्या धात्वेकदेशोऽपि धातुः प्रतिपत्तव्य **इत्यन्ये** ।।५०१।

**[समीक्षा]**

'पपाच, देहि' इत्यादि शब्दरूपों में धातु का द्विर्वचन किए जाने पर पूर्ववर्ती रूप की अभ्याससंज्ञा दोनों ही आचार्यों ने की है। पाणिनि का भी समान ही सूत्र है– "पूर्वोऽभ्यासः" (अ० ६।१।४)। जिसका अभ्यास = द्विरुच्चारण किया जाए, उसे अभ्यास कहते हैं– 'अभ्यस्यते द्विरुच्चार्यते इत्यभ्यासः'। इस व्युत्पत्ति के आधार पर 'अभ्यास' संज्ञा अन्वर्थ मानी जाती है। अभि + अस् + घञ् – बाहुलकात् कर्मणि, उक्त अर्थ में पूर्वाचार्यों ने भी इसका प्रयोग किया है–

**काशकृत्स्नधातुव्याख्यान** – पूर्वोऽभ्यासः, अभ्यासस्य धुटां तृतीयाः प्रथमाः, ह्रस्वोऽभ्यासस्य, अभ्यासस्य ऋवर्णस्य इकारम्, अभ्यासाद् यु अभ्यस्ते (सू० ७७, ७९, ८०, ८१, ८३)।

**निरुक्त** – अभ्यासे भूयांसमर्थं मन्यन्ते। यथा 'अहो दर्शनीया अहो दर्शनीया' इति (१०।२७)।

**ऋक्तन्त्र** – दोऽभ्यासे (४।३।५)।

**अथर्ववेदप्रातिशाख्य** – अभ्यासस्य, अभ्यासस्य दीर्घश्छन्दसि (२।२।१९; ३।३।१३)।

अर्वाचीन आचार्यों ने 'थ' और 'खि' संज्ञाशब्दों का प्रयोग किया है–

**जैनेन्द्रव्याकरण** – पूर्वश्च, थः (४।३।६, ४)।

**मुग्धबोधव्याकरण** – द्वेः पूर्वः खिः (सू० ५३८)।

**[रूपसिद्धि]**

१. **पपाच** ।पच् + परोक्षा – अट् ।'डु पचष् पाके' (१।६०३) धातु से "परोक्षा" (३।१।२९) सूत्रद्वारा परोक्षासंज्ञक प्रथमपुरुष - एकवचन 'अट्' प्रत्यय, ट् - अनुबन्ध का प्रयोगाभाव, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से पच् - धातु का द्विर्वचन, प्रकृत सूत्र द्वारा पूर्ववर्ती पच् की अभ्याससंज्ञा, "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) से च् का लोप तथा "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधासंज्ञक अकार को दीर्घ आदेश।

२. **देहि** । दा + पञ्चमी – हि । 'डु दाञ् दाने' (२।८४) धातु से "पञ्चमी" (३।१।२६) सूत्र द्वारा मध्यमपुरुष - एकवचन 'हि' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, उसका "अदादेर्लुग् विकरणस्य" (३।४।९२) से लुक्, "जुहोत्यादीनां सार्वधातुके" (३।३।८) से दा को द्विर्वचन, प्रकृत सूत्र से पूर्ववर्ती दा की अभ्याससंज्ञा, "ह्रस्वः" (३।३।१५) से उसका ह्रस्व तथा "दाऽस्त्योरेऽभ्यासलोपश्च" (३।४।५०) से पच् - धातुगत अकार को एकार एवं अभ्यासलोप ॥५०१।

## ५०२. द्वयमभ्यस्तम् [३।३।५]

**[सूत्रार्थ]**

धातु का द्विर्वचन होने पर दोनों ही रूपों की 'अभ्यस्त' संज्ञा होती है ॥५०२।

**[दु० वृ०]**

धातोरभ्यास इतरश्च द्वयमभ्यस्तसंज्ञं भवति । ददति, ऐयरुः । द्वयमिति किम् ? परमात्रस्य मा भूत् । अन्यथा 'जुहूषति' इत्यत्राभ्यस्तस्य चेत्यभ्यासे संप्रसारणं न स्यात् । अभ्यस्तप्रदेशाः **"अभ्यस्तानामाकारस्य"** (३।४।४२) इत्येवमादयः ॥५०२।

**[दु० टी०]**

द्वय० । अभ्यास इतरश्चेति द्वाववयवौ यस्य समुदायस्य तद् द्वयम् । **'डु दाञ् दाने, ऋ सृ गतौ'** (२।८४, ७४), जुहोत्यादित्वाद् द्विर्वचनम्, **"अर्तिपिपर्त्योश्च"** (३।३।२५) इतीत्त्वे, **"अभ्यासस्यासवर्णे"** (३।४।५६) इतीय् । द्वयमित्यादि । सत्यपि पूर्वाधिकारे पूर्वस्याभ्यस्तसंज्ञायाः प्रयोजनाभावात् पूर्वोऽभ्यासं परोऽभ्यस्तमिति गम्यते । पूर्वापेक्षया च पर इति द्विर्वचनेन प्राग् भवितव्यम् – 'दित्सन्ति, अदित्सन्' इति । **"लोपोऽभ्यस्तादन्तिनः"** (३।५।३८), अनश्च उसादेशो न भवति, **"सनिमिमी०"** (३।३।३९) इत्यादिनाऽभ्यासलोपे द्वयाभावात् । **"असन्ध्यक्षरयोः"** (३।६।४०)

इत्यादिना स्थानिवद्भावेनाकारस्य व्यवधानाच्च ।**'द्वे अभ्यस्तम्'** इत्युक्ते व्यक्तिप्रधानत्वा-देकस्याभावेऽन्यस्य संज्ञायां प्रयोजनाभावस्तस्माद् द्वयमिति युक्तम् ॥५०२।

## [वि० प०]

द्वय०। ददतीति। डु दाञ्, अन्ति, द्विर्वचनम्। अभ्यस्तसंज्ञायाम् **"अभ्यस्तानामाकारस्य"**(३।४।४२)इत्याकारलोपः,**"लोपोऽभ्यस्तादन्तिनः"**(३।५।३८) इति च प्रवर्तते। ऐयरुरिति। 'ऋ गतौ' (१।२७५;२।७४), ह्यस्तन्यन्, पूर्ववद् द्विर्वचनम्, ऋवर्णस्याकारः, **"अर्तिपिपर्त्योश्च"** (३।३।२५) इत्यभ्यासस्येत्त्वम्, अन उस्, "सिजभ्यस्त०" (३।४।३१) इत्यादिना अन उसादेशः, **"अभ्यस्तानामुसि"** (३।५।६) इति गुणः, **"अभ्यासस्यासवर्णे"** (३।४।५६) इतीयादेशः, **"स्वरादीनां वृद्धिरादेः"** (३।८।१७) इति वृद्धिः। द्वयमित्यादि। सत्यपि पूर्वाधिकारे पूर्वस्यैवेयं संज्ञेति नाशङ्क्यते, तस्याभ्यासंज्ञयैव व्यवहारसिद्धौ अभ्यस्तसंज्ञायाः प्रयोजनाभावात्, किन्तु पूर्वोऽभ्यासः, परोऽभ्यस्तम् इति स्यात्।अस्तु को दोषः, ह्वेञः कृतसम्प्रसारणस्य द्विर्वचने सिद्धं जुहूषतीति चेत् तदयुक्तम्।पूर्वमन्तरेण परो न सम्भवतीति पूर्वं द्विर्वचनेन भवितव्यम्, अतः परस्याभ्यस्तत्वे सम्प्रसारणं पूर्वस्य न स्यात्, द्वयम्-ग्रहणे तु द्वाववयवौ यस्य समुदायस्य तद् द्वयमिति सर्वस्य भवति ॥५०२।

## [वि० टी०]

द्वयम्। अभ्यास इतरश्च द्वाववयवौ यस्य समुदायस्य तद् द्वयमिति। ननु 'द्वे अभ्यस्तम्' इति कथं न कृतम् ? नैवम्।एवं सति द्विर्वचनस्य व्यक्तिप्रधानत्वात् प्रत्येकं पूर्वस्य परस्य चाभ्यस्तसंज्ञायाः प्रयोजनं नास्ति। समुदायाश्रितत्वादभ्यस्तकार्यस्येति . अतो युक्तं द्वयमिति। तदुक्तं **टीकायाम्**– 'द्वे अभ्यस्तम्' इत्युक्ते व्यक्तिप्रधानत्वा-देकस्याभावेऽन्यस्य संज्ञायां प्रयोजनाभावः, तस्माद् **द्वयमिति युक्तमिति**।ततः परोऽभ्यस्तमिति स्यादिति। ननु द्विर्वचनं प्रस्तुतमिति द्विरुक्तस्येत्युक्तम्, ततश्च द्विरुक्तमभ्यस्तमिति कथमर्थो न स्यात् ? नैवम्, पूर्वसूत्रे पूर्वसम्बन्धेन द्विरुक्तस्येत्यवयवावयविसम्बन्धे षष्ठी, अत्रापि तदनुवृत्तौ तदेव युक्तमित्यदोषः। द्वयम् – ग्रहणे तु सर्वस्यैव भवतीति। ननु कथमेतद् यावता **"न सम्प्रसारणे"** (३।४।१७) इति प्रतिषेधोऽस्ति, कथं पूर्वस्य परस्य च भवतीत्युच्यते ? सत्यम्, **"न सम्प्रसारणे"** (३।४।१७) इति निषेधदूरीकरणार्थम् अभ्यस्तस्य चेत्यत्राभ्यस्तनिमित्तमिहाभ्यस्तमित्युपचारं करिष्यति, तदैव कृतसम्प्रसारणस्य द्विर्वचनमित्युभयत्र सम्प्रसारणं सिद्धं तर्हि द्वयम् – ग्रहणेन किम्,तेनैवोपचारेण सिद्धेः ? सत्यम्, यदि द्वयम् – ग्रहणं न स्यात् तदाऽभ्यस्तनिमित्तप्रत्ययोऽभ्यस्तमित्युपचारोऽपि न स्यात्। यतस्तत्पक्षे (द्वयम् – ग्रहणाभावे) अभ्यस्तनिमित्तं मुख्यमभ्यास एव।

तथाहि परोऽभ्यस्तम्, परश्च पूर्वमन्तरेण न भवतीति पूर्वस्याभ्यासस्य मुख्यं परम्परया चणादीनां निमित्तत्वं गौणम्, द्वयम्–ग्रहणे तु द्वयमभ्यस्तं द्वयस्य निमित्तं चण्–सनादिरेव, अभ्यस्तनिमित्तप्रत्यय इत्यभ्यस्तमित्युपचारः संगच्छते।**हेमकरेणाप्युक्तमिदं** चेत्, नैवम्। परस्याभ्यस्तत्वे मुख्यं कारणम् अभ्यास एवेति नोपचारः। कारणं ह्वयतेर्नित्यम् अभ्यस्तस्य चेति योगविभाग एव। द्विर्वचननिमित्ते कारितव्यवधान एव यथा स्यादित्युक्तत्वात्। तथा च **उमापतिः** पुनराह–

**द्वयंग्रहे तिष्ठति नात्र तत्राभ्यस्तं परं ह्वे विहितेऽस्य हुत्वे।**
**कृतार्थता स्यादिति लक्षणस्य न लक्षणा संश्च तया न लक्ष्यः॥**
**तस्मादिदं लक्षणयैव धातोर्हुत्वेऽग्रतो द्विर्वचनात् पदस्य।**
**सिद्धिं समावेशयितुं विधेयं द्वयस्य संज्ञाऽन्यफलाय नैव॥**

**अस्यार्थः**– अत्र द्वयंग्रहणे न तिष्ठति सति तत्र परं यदभ्यस्तं (ह्वे) इति रूपम्, अस्य हुत्वे विहिते सति सूत्रस्य कृतार्थताऽभूदिति हेतोर्न लक्षणा, मुख्यार्थबाधेन लक्षणायाः कृतत्वात्। ततः संश्च न लक्ष्यः स्यात्, तस्मादिदं द्वयंग्रहणम्, मुख्यार्थबाधे सति लक्षणार्थं तदेवाह– तस्मादित्यादि। तस्माद् द्वयंग्रहणबलादग्रतः प्राग् हुत्वे विहिते सति पदस्य सिद्धिं समावेशयितुमिदं द्वयंग्रहणं विधेयम्। यद्येवम्, सर्वस्य भवतीति कथं संगच्छते, नहि तदा पूर्वस्य परस्य च संप्रसारणं भूतम्, कृतसम्प्रसारणस्य द्विरुक्तत्वात्। नैवम्, सर्वस्य भवतीति द्वयस्य सम्प्रसारणे यद् रूपं तद् रूपं भवतीत्यर्थः। ननु द्वयम्-ग्रहणबलाद् द्वयोः पर्यायेण सम्प्रसारणं भविष्यति। कदाचित् पूर्वस्य सम्प्रसारणं परस्य निषेधः। कदाचित् परस्य सम्प्रसारणं पूर्वस्य निषेध इति। कथं तद्बलादुपचार इति ? नैवम्, **"द्वयमभ्यस्तम्"** (३।३।५) इत्युक्ते युगपदुभयोरभ्यस्तसंज्ञा न तु प्रत्येकमिति कथं पर्यायेण भवतीति चेत्, सत्यमेतत् (वार्त्तिकम्), नहि द्वयस्य समुदायस्य संज्ञाविधानेनावयवस्य संज्ञा न स्यात्। नहि 'ब्राह्मणेभ्यो धनं दीयताम्' इत्युक्ते प्रत्येकं ब्राह्मणाय धनं दीयते इति।

अथेष्टसत्त्वे पर्यायेण भविष्यतीत्यनिष्टकल्पना युक्तेति न स्यात्। अथ द्वयंग्रहणस्यान्यत् फलमस्ति, तत्कथं तद्बलाद् अभ्यस्तस्य चेत्यत्र लक्षणा भविष्यतीत्याह– द्वयस्य संज्ञाऽन्यफलाय नैवेति। द्वयस्याभ्यस्तसंज्ञान्यफलाय नैवेत्यर्थः। अथ कथमेतद् यावता द्वयोरभ्यस्तसंज्ञायामभ्यस्तानामकारस्येत्यनेन पूर्वस्य परस्य चाकारलोपः स्यात् ? न चोद्यम्, प्रत्यये परे लोपो विधीयते कथं व्यवधाने स्यात्, तत्र हि निमित्तेन लोपस्य संबन्धः कृतो न तु अभ्यस्तेनेति। तथा च **वार्त्तिकम्**–

**द्वयस्य संज्ञा विहितो न लोपोऽभ्यासे यदातो विहितो निमित्ते।**
**लोपस्य सम्बन्ध इह प्रतीतो हेतुस्वभावेन विचक्षणैश्च**॥इति।

**अस्यार्थः**– द्वयस्याभ्यस्तसंज्ञाविधानेऽभ्यासे आतः आकारस्य लोपो न स्यात्। यतो यस्मान्निमित्ते परलोपो विहितः। अथ निमित्तम् अभ्यस्तमिति वक्तव्यम्। तत्राह– लोपस्येत्यादि। इह लोपस्य हेतुस्वभावेन **विचक्षणैः** सम्बन्धः प्रतीतः प्रतीयते, न त्वभ्यस्तस्येत्यर्थः। न च वाच्यम्, द्वयम्–ग्रहणबलाद् व्यवहितेऽपि स्यात्, तद्बलादभ्यस्तेन सम्बन्धो वेति, यस्माद् इष्टार्थमुपादीयमानं शास्त्रं कथमनिष्टाय कल्प्यते इति। ननु टीकायां दित्सन्ति, अदित्सन्निति **"लोपोऽभ्यस्तादन्तिनः"** (३।५।३८), अनश्च उस् न भवतीति। अत्र स्थानिवद्भावादिति टीकावचनं न लगति, **'स्वरादेशः परनिमित्तकः पूर्वविधिं प्रत्येव'** (कात० प० ९), अयं तु परविधिः कुतः स्थानिवद्भावः ? तदयुक्तम्, अभिप्रायापरिज्ञानात्। अत्र स्थानिवद्भावः परनिमित्तादेश इति स्यात् **"सनि मिमी०"** (३।३।३९) इत्यादिना अभ्यासलोपे द्वयाभावादित्युक्तं तत् कथं 'द्वयस्य संज्ञान्यफलाय नैव' इत्यभाणि। न च वाच्यम्, परोऽभ्यस्तम्। पूर्वमन्तरेण परो न सम्भवतीति। पूर्वस्य लोपे न परः इति अभ्यासलोपेऽभ्यस्तसंज्ञा न भविष्यति। यतः पूर्वं द्विर्वचने द्विरुक्तस्य परोऽवयवो दाधातुर्भवत्येव। न चेदानीमभ्यासलोपे परावयवत्वहानिरिति पूर्वं परावयवत्वे इदानीमपि तथैव प्रतीतेः। न हि कस्यचिद् वृक्षस्य पूर्वावयवच्छेदेऽस्य परावयवो विद्यते इति न व्यवह्रियते।

कथमुक्तं द्वयाभावादिति **टीकायां** दुर्गवाक्ये वा द्वयंग्रहणे तु द्वयोर्भवतीति दित्सन्तीत्यत्र नलोपप्राप्तिरित्याह– द्वयाभावादिति। कथमुक्तं द्वयंग्रहणाभावेऽपि तस्य सिद्धेरिति। तस्मात् तदुक्तं सर्वत्रेष्टा**श्रयणं** पूर्वोक्तं च द्वयंग्रहणादृते इति **केचित्**। **वस्तुतस्तु** टीकायाम् अत एव जुहूषतीत्यत्र द्वयंग्रहणस्य फलं दृष्ट्वा परपक्षमाह– अकारलोपस्य परनिमित्तादेशः पूर्वस्मिन् स एवेति स्थानिवद्भावाद् व्यवधानता। अतो नकारलोपाभावोऽन उसादेशाभावः। **पण्डितः** पुनराचष्टे– सर्वस्यैव भवतीति जुहूषतीत्यत्र पूर्वस्य परस्य च भवति **"न सम्प्रसारणे०"** (३।४।१७) इति प्रतिषेधः, तन्न। **जातिपक्षे** द्वयंग्रहणबलात् **"न सम्प्रसारणे"** (३।४।१७) इत्यत्र न वर्तते। **"अभ्यस्तस्य"** (३।४।१५) चेत्यत्रोपचारो व्यक्तिपक्षे द्वयंग्रहणादिति। अथ **व्यक्तिपक्षेऽ**पि द्वयंग्रहणान्न सम्प्रसारणे इत्यस्य बाधा कथन्न क्रियते, नैवम्। व्यक्तिपक्षे प्रतिलक्ष्ये लक्षणानि भिद्यन्ते, तत एतल्लक्ष्यविषयस्य लक्षणस्य कृतार्थता स्यात्। **उपचारे** तु एतल्लक्ष्यविषये लक्षणस्य विषयो नास्त्येवेत्यदोषः। तथा चात्र **वार्त्तिकम्**–

**द्वयोर्यदुक्तं द्वयशब्दयोगे तज्जातिपक्षे न हि तन्निषेधः।**
**व्यक्तौ तु पक्षे द्वयकीर्तनं स्यान्निषेधबाधा कृतलक्षणैव ॥ इति।**

**अस्यार्थः**– द्वयशब्दयोगे द्वयोरभ्यस्तं यदुक्तं त**ज्जातिपक्षे** चेन्निषेधो नास्ति द्वयंग्रहणबलादिति शेषः। **व्यक्तौ तु पक्षे** द्वयकीर्तनं स्यात्, द्वयंग्रहणस्य प्रतिपादनं स्यात्, निषेधे या बाधा तया कृता या लक्षणा तदर्थं निषेधबाधाकृतलक्षणयैतदप्यविचारितचारु, यतो **जातिपक्षे**ऽभ्यस्तस्य चेति वचनम्, एवं च चरितार्थं सर्वत्र तथाभावप्रसङ्गादिति। ननु दित्सन्तीत्यादौ द्वयोः सतोर्नलोपः कथन्न स्यात् ? नैवम्, स्थानिवद्भावेनाकारस्य व्यवधानादिति **टीकायाम्** ॥५०२।

**[समीक्षा]**

'ददति, ऐयरुः, जुहूषति' इत्यादि द्विर्वचनस्थलों में आकारलोप, उसादेश, सम्प्रसारण आदि कार्यों के विधानार्थ पाणिनि तथा शर्ववर्मा दोनों ही आचार्यों ने द्विर्वचन के दोनों ही रूपों की अभ्यस्त संज्ञा की है। पाणिनि का सूत्र है– "उभे अभ्यस्तम्" (अ० ६।१।५)। कातन्त्रव्याकरण में 'द्विर्वचन' शब्द के प्रयोगानुसार तथा पाणिनीय व्याकरण में "एकाचो द्वे प्रथमस्य" (अ० ६।१।५) सूत्रगत 'द्वे' शब्द के प्रयोगानुसार अभ्यस्तसंज्ञा में 'द्वे' शब्द का प्रयोग नहीं किया गया है, क्योंकि इस प्रकार प्रत्येक की या क्रमशः पूर्व – पर की अभ्यस्तसंज्ञा होने लगती। व्याख्याकारों ने इस विषय में उमापति आदि आचार्यों के अभिमत उद्धृत किए हैं। यद्यपि लोक में जिस कार्य का अनेकशः अभ्यास किया जाता है, उसी के लिए अभ्यस्त शब्द का प्रयोग होता है, परन्तु शास्त्र में द्विरुक्त की अभ्यस्तसंज्ञा समादृत है। यास्क आदि पूर्वाचार्यों ने भी इसका व्यवहार किया है-

**काशकृत्स्नधातुव्याख्यान –** द्वयमभ्यस्तम् (सू० ७८)।

**निरुक्त –** अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम् (३।२)।
'एरिरे' इतीर्तिरुपसृष्टोऽभ्यस्तः (४।४)।
**'ररिवान्' रातिरभ्यस्तः (४।६१, ६२)।**
सरूरकं वा स्यात् सर्तेरभ्यस्तात् (६।६)।
रराणो रातिरभ्यस्तः (२।३)।

सूत्ररचना के अनुसार कातन्त्रकार ने काशकृत्स्न व्याकरण का अधिक अनुसरण किया है– ऐसा कहा जा सकता है।

**[विशेष]**

१. द्वे अभ्यस्तमित्युक्ते व्यक्तिप्रधानत्वादेकस्याभावेऽन्यस्य संज्ञायां प्रयोजनाभावस्तस्माद् द्वयमिति युक्तम् (दु० टी०)।

२. ह्वेञः कृतसम्प्रसारणस्य द्विर्वचने सिद्धं जुहूषतीति चेत् तदयुक्तम्, पूर्वमन्तरेण परो न सम्भवतीति पूर्वं द्विर्वचनेन भवितव्यम्, अतः परस्याभ्यस्तत्वे सम्प्रसारणं पूर्वस्य न स्यात्, द्वयंग्रहणे तु द्वाववयवौ यस्य समुदायस्य तद् द्वयमिति सर्वस्य भवति (वि० प०)।

**[रूपसिद्धि]**

१. **ददति**। दा + अन् - लुक् + अन्ति। 'डु दाञ् दाने' (२।८४) धातु से वर्तमानासंज्ञक परस्मैपद प्रथमपुरुष - बहुवचन 'अन्ति' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् – विकरण, "अदादेर्लुग् विकरणस्य" (३।४।९२) से उसका लुक्, "जुहोत्यादीनां सार्वधातुके" (३।३।८) से 'दा' का द्विर्वचन, "पूर्वोऽभ्यासः" (३।३।४) से पूर्ववर्ती 'दा' की अभ्याससंज्ञा, प्रकृत सूत्र से दोनों की अभ्यस्तसंज्ञा, "ह्रस्वः" (३।३।१५) से अभ्याससंज्ञक आकार को ह्रस्व, 'अभ्यस्तानामाकारस्य" (३।४।४२) से आकार का लोप तथा "लोपोऽभ्यस्तादन्तिनः" (३।५।३८) से अन्तिप्रत्ययगत नकार का लोप।

२. **ऐयरुः**। ऋ + अन् + ह्यस्तनी – अन्-उस्। 'ऋ गतौ' (२।७४) धातु से "ह्यस्तनी" (३।१।२७) सूत्र द्वारा ह्यस्तनीसंज्ञक (=लङ्) प्रथमपुरुषबहुवचन अन् – प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, "अदादेर्लुग् विकरणस्य" (३।४।९२) से उसका लुक्, "जुहोत्यादीनां सार्वधातुके" (३।३।८) से 'ऋ' धातु को द्विर्वचन, अभ्याससंज्ञा, अभ्यस्तसंज्ञा, "ऋवर्णस्याकारः" (३।३।१६) से ऋ को अ, "अर्त्तिपिपर्त्त्योश्च" (३।३।२५) से अकार को इकार, "अन उस् सिजभ्यस्तविदादिभ्योऽभुवः" (३।४।३१) से अन् को उस् आदेश, "अभ्यस्तानामुसि" (३।५।६) से ऋ को गुण अर्, "अभ्यासस्यासवर्णे" (३।४।५६) से अभ्याससंज्ञक इ को इय्, "स्वरादीनां वृद्धिरादेः" (३।८।१७) से इ को ऐ वृद्धि तथा "रसकारयोर्विसृष्टः" (३।८।२) से स् को विसर्गादेश।

३. **जुहूषति**। ह्वेञ् + सन् + वर्तमाना - ति। ह्वातुमिच्छति। 'ह्वेञ् स्पर्धायां शब्दे च' (१।६१३) से इच्छार्थ में "धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्" (३।२।४) से सन् प्रत्यय, इस अभ्यस्तनिमित्तक सन् प्रत्यय के परवर्ती होने पर "अभ्यस्तस्य च"

(३।४।१५) से ह्वे – धातुगत व् को सम्प्रसारण "चणूपरोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से 'हु' को द्विर्वचन, पूर्व की अभ्याससंज्ञा, "हो जः" (३।३।१२) से ह् को ज्, "तद् दीर्घमन्त्यम्" (४।१।५२) से हु – गत उकार को दीर्घ तथा "निमित्तात् प्रत्ययविकारागमस्थः सः षत्वम्" (३।८।२६) से सन्प्रत्ययस्थ सकार को षकारादेश ॥५०२।

## ५०३. जक्षादिश्च [३।३।६]

### [सूत्रार्थ)

'जक्ष - जागृ - दरिद्रा - चकास् - शास्' इन पाँच धातुओं की द्विर्वचन न होने पर भी अभ्यस्त संज्ञा होती है ॥५०३।

### [दु० वृ०]

जक्षादिरनभ्यस्तोऽप्यभ्यस्तसंज्ञो भवति । जक्षति, जाग्रति, दरिद्रति, चकासति, शासति । पञ्चैते **भाषायां** व्यवस्थिता इति ॥५०३।

### [दु० टी०]

जक्ष० । **'शासु अनुशिष्टौ'** (२।३९) इत्यतो **वृत्करणाद्** इत्याह-पञ्चैते इति। दीधीङ्वेवीङोरभ्यस्तसंज्ञायां प्रयोजनाभावाद् आदीध्यते, आवेव्यते । **"आत्मने चानकारात्"** (३।५।३९) इत्यनेनैव नलोपः सिद्धः। आदीधयुः, आवेवयुरिति **छान्दसत्वात्** ॥५०३।

### [वि० प०]

जक्षादिः। अनभ्यस्तोऽपीति । अद्विरुक्तत्वादित्यर्थः। इहापि पूर्ववदन्तेर्नकारलोपः, दरिद्रातेराकारलोपश्च प्रयोजनम् । **केचिद्** दीधीङ् – वेवीङोरपि अभ्यस्तसंज्ञामिच्छन्ति । तेन 'आदीध्यते, आवेव्यते' इत्यन्तेर्नकारलोपो भवति, तदयुक्तम् । **"आत्मने चानकारात्"** (३।५।३९) इति नलोपस्य सिद्धत्वात् । अथ 'आदीधयुः, आवेवयुः' इत्यन उसादेशः, **"अभ्यस्तानामुसि"** (३।५।६) इति गुणश्च भवति । अत्र किल **"व्यत्ययो बहुलम्"** इति वचनात् परस्मैपदम्, तदप्ययुक्तम् । **छान्दसत्वादस्य** प्रयोगस्येत्याह – पञ्चैते **भाषायां** व्यवस्थिता इति ॥५०३।

### [समीक्षा]

'जक्षति - जाग्रति' आदि में नकारलोप तथा 'दरिद्रति' में आकारलोप के विधानार्थ पाँच धातुओं की कातन्त्रकार ने तथा सात धातुओं की पाणिनि ने अभ्यस्तसंज्ञा की है । पाणिनि का सूत्र है – "जक्षित्यादयः षट्" (अ० ६।१।६) । तदनुसार

७ धातुएँ हैं– जक्ष - जागृ - दरिद्रा - चकास - शास – दीधीङ् – वेवीङ्। इनमें से कातन्त्रकार ने 'दीधीङ्, वेवीङ्' को छान्दस धातुएँ माना है तथा पूर्ववर्ती पाँच को ही लोकप्रयुक्त घोषित किया है। एतदर्थ वृत्तिकार दुर्गसिंह का यह वचन ध्यातव्य है– 'पञ्चैते भाषायां व्यवस्थिताः' इति।

**[विशेष वचन]**

१. पञ्चैते भाषायां व्यवस्थिता इति (दु० वृ०)।

२. आदीधयुः, आवेवयुरिति छान्दसत्वात् (दु० टी०)।

३. छान्दसत्वादस्य प्रयोगस्य (वि० प०)।

**[रूपसिद्धि]**

१. **जक्षति**। जक्ष् + अन् - लुक् + वर्तमाना - अन्ति। 'जक्ष भक्षहसनयोः' (२।३५) धातु से वर्तमानासंज्ञक प्रथमपुरुष – बहुवचन 'अन्ति' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् – विकरण, "अदादेर्लुग् विकरणस्य" (३।४।९२) से उसका लुक्, प्रकृत सूत्र से अभ्यस्तसंज्ञा तथा "लोपोऽभ्यस्ता-दन्तिनः" (३।५।३८) से अन्ति-प्रत्ययगत नकार का लोप।

२. **जाग्रति**। जागृ + अन् - लुक् + वर्तमाना – अन्ति। 'जागृ निद्राक्षये' (२।३६) धातु से वर्तमानासंज्ञक प्रथमपुरुष – बहुवचन अन्तिप्रत्यय, अन् - विकरण, उसका लुक्, अभ्यस्तसंज्ञा, नलोप तथा "रम् ऋवर्णः" (१।२।१०) से ऋकार को रकारादेश।

३. **दरिद्रति**। दरिद्रा + अन् – लुक् + वर्तमाना – अन्ति। 'दरिद्रा दुर्गतौ' (२।३७) धातु से अन्ति – प्रत्यय, अन् – विकरण, उसका लुक्, अभ्यस्तसंज्ञा, नलोप तथा "अभ्यस्तानामाकारस्य" (३।४।४२) से दरिद्राधातुगत आकार का लोप।

४. **चकासति**। चकास् + अन् – लुक् + वर्तमाना – अन्ति। 'चकासृ दीप्तौ' (२।३८) धातु से वर्तमानासंज्ञक अन्तिप्रत्यय, अन् – विकरण, उसका लुक्, अभ्यस्तसंज्ञा तथा नलोप।

५. **शासति**। शास् + अन् - लुक् + वर्तमाना – अन्ति। 'शासु अनुशिष्टौ' (२।३९) धातु से अन्तिप्रत्यय, अन् – विकरण, उसका लुक्, अभ्यस्तसंज्ञा तथा नकार – लोप॥५०३।

## ५०४. चण्परोक्षाचेक्रीयितसनन्तेषु [३।३।७]

**[सूत्रार्थ]**

चण् प्रत्यय, परोक्षासंज्ञक प्रत्यय, चेक्रीयितसंज्ञक प्रत्यय तथा सन् प्रत्यय के परवर्ती होने पर धातु का द्विर्वचन होता है॥५०४।

[दु० वृ०]

चणाद्यन्तेषु द्विर्वचनं भवत्यधिकारवशात्। अपीपचत्, औन्दिदत्, पपाच, पापच्यते, प्रोर्णोनूयते, पिपक्षति, अटिटिषति। अन्तग्रहणं संश्चेक्रीयितयोरपि द्विर्वचनार्थम्। तेन अर्थान् प्रतीषिषति, अटाट्यते ॥५०४।

[दु० टी०]

चण्०। चण् च परोक्षा च चेक्रीयितं च संश्च, ते अन्ते येषाम् इति विग्रहः। अन्तग्रहणमित्यादि। यद्यन्तग्रहणं न स्यात् तदा **परसप्तमीयं** सम्भाव्यते। संश्चेक्रीयितयोः पूर्वस्यैव द्विर्वचनं प्राप्नोति। अटिटिषतीत्यत्र च नेटो द्विर्वचनम्, सप्तम्युक्तत्वात्। चण्-परोक्षयोरन्तशब्देन सम्बन्धः, एकविभक्तिनिर्दिष्टत्वात्। अथानयोरकारकरणाद् विषय-सप्तमी चेद् अन्तग्रहणं **स्पष्टार्थम्**। सत्यामपि **विषयसप्तम्यां** 'जागराञ्चकार' इत्यनुप्रयोगस्यैव द्विर्वचनम्, सन्निधानादनुप्रकाशत्वाच्चेति। **अन्य** आह – चण् च परोक्षा च चेक्रीयितसनन्तश्चेति विग्रहः, संश्चेक्रीयितयोरन्तसम्बन्धसामर्थ्याद् **विषयसप्तमी,** इतरत्र तु **परसप्तमी** ॥५०४।

[वि० प०]

चण्०। चण् च परोक्षा च चेक्रीयितं च संश्चेति द्वन्द्वः। ते अन्ते येषामिति विग्रहः। अपीपचदिति। पचेर्हेताविन्, "**श्रिद्रुस्रुकमि०**" (३।२।२६) इत्यादिना चण्, द्विर्वचनम्, "**इन्यसमान०**" (३।५।४४) इत्यादिना ह्रस्वः, "**अलोपे०**" (३।३।३५) इत्यादिनाऽभ्यासे सन्वद्भावः, "**सन्यवर्णस्य**" (३।३।२६) इतीत्त्वम्, "**दीर्घो लघोः**" (३।३।३६) इति दीर्घः। औन्दिददिति। '**उन्दी क्लेदने**' (६।१६), पूर्ववद् इन्, चण्, "**स्वरादेर्द्वितीयस्य**" (३।३।२) इति "**न नबदराः संयोगादयोऽये**" (३।३।३) इति प्रतिषेधान्नकारवर्जितस्य द्विर्वचनम्, स्वरादीनां वृद्धिर्दीर्घो लघोर्न भवति, तत्रास्वरादेरिति प्रतिषेधात्। अन्तग्रहणमित्यादि। अन्यथा 'चण्परोक्षाचेक्रीयितसन्सु' इत्यत्र **परसप्तमीयं** स्यान्न विषयसप्तमी, ततः '**सप्तम्या निर्दिष्टे पूर्वस्य**' (कात० प० २१) इति संश्चेक्रीयितयोर्निमित्तभूतयोः पूर्वस्यैव द्विर्वचनं स्यात्, न संश्चेक्रीयितयोरिति। अन्तग्रहणे तु बहुव्रीहिणा धातवो निर्दिश्यन्ते, ततः संश्चेक्रीयितान्तधातुविषयं द्विर्वचनमिति विधीयमानं यथासम्भवं "**स्वरादेर्द्वितीयस्य**" (३।३।२) इति संश्चेक्रीयि-तयोरपि द्विर्वचनं भवति। "**ते धातवः**" (३।२।१६) इति तदन्तसमुदायस्य धातुत्वाच्चण् – परोक्षाभ्यामन्तशब्दस्य सम्बन्धे एकविभक्तिनिर्दिष्टत्वात्।

ननु सनोऽकारकरणादेव द्विर्वचनं भविष्यति, अकारस्यानन्यार्थत्वात्। तथा च तत्रोक्तम् – अकारोच्चारणं किम्? "**स्वरादेर्द्वितीयस्य**" (३।३।२) इति द्विर्वचनार्थम्।

एवं सति विषयसप्तमीयं विज्ञास्यते, न परसप्तमीति । तथा चेक्रीयितस्याकारो बोधयिष्यति, तस्यापि अनन्यप्रयोजनत्वादिति किमन्तग्रहणेनेति ? सत्यम्, एवं सत्यन्तग्रहणं **सुखार्थमेव** भवतीति । प्रतीषिषतीति । प्रतिपूर्वः **'इ गतौ'** (१।१०२) । प्रत्येतुमिच्छतीति सन्, सनो द्विर्वचनम्, **"सन्यवर्णस्य"** (३।३।२६) इतीत्त्वम् । 'अटाट्यते' इति साधितमेव ॥५०४।

**[बि० टी०]**

चण्परोक्षा० । अन्तग्रहणे तु बहुव्रीहिणा धातवो निर्दिश्यन्ते इति । ननु अन्तग्रहणं किं समीपार्थं वा अवयवार्थम् । समीपार्थं चेत् तदा संश्चेकीयितसमीपकस्य धातोर्द्विर्वचने कृते सति अन्तग्रहणास्थितौ परसप्तमीपक्षतो न भेदः, अन्तग्रहणमनर्थकमेव, परसप्तम्यैव सिद्धत्वात् । यदि अवयवार्थकं स्यात् तदा संश्चेक्रीयितयोर्धातोरवयवत्वं घटते । **"ते धातवः"** (३।२।१६) इति तदन्तसमुदायस्य धातुत्वाच्चण्परोक्षाभ्यां न घटते, न हि चण्परोक्षे धातोरवयवौ ? सत्यम्, एकोऽप्यन्तशब्दोऽर्थगत्योभयार्थभाग् भवति । यथा **"विरामव्यञ्जनादौ"** (२।३।६४) इत्यत्र सिविभक्तिरेकापि अर्थद्वयमभिदधाति विरामविषये व्यञ्जनादौ परत इति ।

अथ धातो**रवयवार्थपक्षे** बहुव्रीहिणा वारे सति धातुरधातुश्च समुदाय उच्यते । यद्येवं **पञ्जी** न लगति ? सत्यम्, बहुव्रीहिणा धातवो निर्दिश्यन्ते इति यदुक्तं तच्चेक्रीयितसनन्तमपेक्ष्य बोद्धव्यम् । तथा च **उमापतिः**–

**सप्तम्यसौ वैषयिकी न धातुः समासगम्यं समुदायमात्रम् ।**
**पञ्ज्यां प्रतीपं गदभाणि तत् संश्चेक्रीयितान्तत्वमपेक्ष्य बोध्यम् ॥**

**अस्यार्थः**– अन्तग्रहणादसौ सप्तमी वैषयिकी, समासगम्यं समुदायमात्रम्, न धातुरिति, तेनान्तग्रहणमवयवार्थमिति निश्चितमित्यर्थः । **पञ्ज्यां** धातवो निर्दिश्यन्ते इति यद् विरुद्धमुक्तं तत् संश्चेक्रीयितान्ततया बोध्यमिति । **केचिद्** धातुशब्देन लक्षणया धात्वादिसमुदायोऽप्युच्यते इति वदन्ति । ननु धातुसमुदायनिर्देशे फलमेव नास्ति, तत् कथमुक्तं तद्दोषप्रशमनार्थमाह – चण्परोक्षाभ्यामिति ? तथा च **वैयकारिका** –

**विभक्त्यभेदादिह चण्परोक्षाभ्यामन्तशब्दः सजतीति यच्च ।**
**अधातुनिर्देशननिष्फलत्वाद् दोषप्रमोषाय फलं तदुक्तम् ॥**

**अस्यार्थः** – विभक्तेरभेदाद् एकविभक्तिनिर्दिष्टत्वादन्तशब्दश्चण्परोक्षाभ्यां सह सजति संबध्नातीति **पञ्जिकायां** यदुक्तम्, तद्धातुनिर्देशफलाभाव इति यो दोषस्तत्प्रमोषाय खण्डनाय बोद्धव्यमिति । ततश्चेत्यादि । द्विर्वचनस्य सनन्तश्चेक्रीयितान्तश्च

धातुर्विषय इति । अथ विषयसप्तमी चेद् बुद्धिस्थे द्विर्वचनं स्यात् । ततश्च चिचीषतीत्यादौ पूर्वं द्विर्वचनेऽनेकस्वराद् विहितस्य सन आदिरिट् स्यात् ? नैवम्, **"नाम्यन्तानामनिटां सनि चानिटि"** (३।५।१७) इति ज्ञापकान्न बुद्धिस्थे द्विर्वचनं भविष्यति । अत एव **हेमकरेणोक्त**म् – अन्तग्रहणाद् विषयसप्तमी चेद् बुद्धिस्थिते कथन्न स्यात् प्रयोजनाभावादिति । एवं च सति **विषयसप्तमी** विज्ञास्यते इति । अथ संश्चेक्रीयिते प्रत्ययौ, तत् कथं धातोरवयवस्य द्विर्वचनस्य विषयाविति । **तदयमर्थः** - ततः कथं संश्चेक्रीयितयोर्द्विर्वचनम् ? सत्यम् । अत्राप्यर्थगत्या संश्चेक्रीयितान्तस्यैव द्विर्वचनमित्यदोषः ।

अन्तग्रहणं **सुखार्थमिति** दुःखं पुनः पूर्वोक्तमस्ति । ननु अकारकरणात् कथं विषयसप्तमी अकाराभावेऽपि प्रतीषिषतीत्यादौ कथमुपधालक्षणो गुण इटो न स्यात्, नैवम् । **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (कात० प० ४८) इति नात्र गुणः । अथाकारग्रहणाभावे अयियासदित्यादौ या प्रापणे, सनन्तादिनि चणि कृते **"इन्यसमान०"** (३।५।४४) इत्यादिना ह्रस्वः स्यात् । नैवम्, ऋदनुबन्धं **"न शास्वृदनुबन्धानाम्"** (३।५।४५) इत्यनेन निषेधो भविष्यति । न च वाच्यम् अपिपतिषदित्यादौ दीर्घो लघोर्भविष्यति । तत्र श्रुतत्वाच्चणि योऽभ्यास इति विशेषणात् । ननु चण्परोक्षाविषयं विधीयमानं द्विर्वचनं कथं व्यवहिते न भवति, जागराञ्चकार, इत्यत्र जागर्तेर्**द्विरुक्तिः** कथं न स्यात् । सत्यम्, सत्यामपि विषयसप्तम्यां 'जागराञ्चकार' इत्यनुप्रयोगस्यैव द्विर्वचनं सन्निधानादर्थप्रकाशादिति **टीकायाम्** । **अन्य** आह – चण् च परोक्षा च चेक्रीयितसनन्तश्चेत्यर्थे सति संश्चेक्रीयितयोरन्तशब्दसामर्थ्याद् **विषयसप्तमी,** इतरत्र **परसप्तमी** चेति **टीकायाम्** ॥५०४।

## [समीक्षा]

'अपीपचत्, पपाच, पापच्यते, पिपक्षति' इत्यादि शब्दरूपों के सिद्ध्यर्थ चण्-परोक्षासंज्ञक – चेक्रीयितसंज्ञक तथा सन् प्रत्यय के परे रहने पर द्विर्वचन का विधान पाणिनि तथा शर्ववर्मा दोनों ही आचार्यों ने किया है । पाणिनि ने चण् के लिए चङ्, परोक्षा के लिए लिट् तथा चेक्रीयित के लिए यङ् का प्रयोग किया है – "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्, परोक्षे लिट्, धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" (अ० ३।१।४८; २।११५; १।२२), इसके अतिरिक्त उक्त चार प्रत्ययों में द्वित्वविधायक तीन सूत्र पृथक् रूप में बनाए हैं– "लिटि धातोरनभ्यासस्य, सन्यङोः, चङि" (अ०३।१।८,९,११) । कातन्त्रकार ने चारों प्रत्ययों का एक ही सूत्र में जो संग्रह कर दिया है, उससे लाघव स्पष्ट है ।

**[विशेष वचन]**

१. अन्तग्रहणं संश्चेक्रीयितयोरपि द्विर्वचनार्थम् (दु० वृ०)।

२. अथानयोरकारकरणाद् विषयसप्तमी चेद् अन्तग्रहणं स्पष्टार्थम् (दु० टी०)।

३. अन्य आह– चण् च परोक्षा च चेक्रीयितसनन्तश्चेति विग्रहः संश्चेक्रीयितयोरन्तसम्बन्धसामर्थ्याद् विषयसप्तमी इतरत्र तु परसप्तमी (दु० टी०)।

४. एवं सत्यन्तग्रहणं सुखार्थमेव भवतीति (वि० प०)।

५. एकोऽप्यन्तशब्दोऽर्थगत्योभयार्थभाग् भवति (बि० टी०)।

६. केचिद् धातुशब्देन लक्षणया धात्वादिसमुदायोऽप्युच्यते इति वदन्ति (बि० टी०)।

७. अत एव हेमकरेणोक्तम्– अन्तग्रहणाद् विषयसप्तमी चेद् बुद्धिस्थिते कथन्न स्यात्, प्रयोजनाभावादिति। एवं च सति विषयसप्तमी विज्ञास्यते इति (बि० टी०)।

८. अन्तग्रहणं सुखार्थमिति, दुःखं पुनः पूर्वोक्तमस्ति (बि० टी०)।

९. सत्यामपि विषयसप्तम्यां 'जागराञ्चकार' इत्यनुप्रयोगस्यैव द्विर्वचनम्, सन्निधानादर्थप्रकाशादिति टीकायाम् (बि० टी०)।

**[रूपसिद्धि]**

१. **अपीपचत्**। अट्+पच्+इन्+चण्+दि। पचन्तं प्रायुक्त। 'डु पचष् पाके' (१।६०३) धातु से "धातोश्च हेतौ" (३।२।१०) सूत्र द्वारा इन् प्रत्यय, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधासंज्ञक पकारोत्तरवर्ती अकार को दीर्घ, "ते धातवः" (३।२।१६) से 'पाचि' की धातुसंज्ञा, अद्यतनीसंज्ञक परस्मैपद– प्रथमपुरुष– एकवचन 'दि' प्रत्यय, "अड् धात्वादिर्ह्यस्तन्यद्यतनी-क्रियातिपत्तिषु" (३।८।१६) से अडागम, "श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण् कर्तरि" (३।२।२६) से चण् प्रत्यय, अनुबन्धों का प्रयोगाभाव, प्रकृत सूत्र से द्विर्वचन, अभ्याससंज्ञादि, "अलोपे समानस्य सन्वल्लघुनीनि चण्परे" (३।३।३५) से सन्वद्-भाव, "सन्यवर्णस्य" (३।३।२६) से इत्त्व, "इन्यसमानलोपोपधायाः" (३।५।४४) से ह्रस्व, "दीर्घो लघोः" (३।३।३६) से दीर्घ, "कारितस्यानामिड्विकरणे" (३।६।४४) से कारितसंज्ञक इन् का लोप तथा दिप्रत्ययगत इकार का लोप।

२. **औन्दिदत्**। उन्द्+इन्+चण्+दि। उन्दन्तं प्रायुक्त। 'उन्दी क्लेदने'

(६।१६) धातु से इन्, अद्यतनीसंज्ञक दिप्रत्यय, चण् प्रत्यय, "स्वरादीनां वृद्धिरादेः" (३।८।१७) से उ को वृद्धि औ, "न नबदराः संयोगादयोऽये" (३।३।३) से न् के द्विर्वचन का निषेध, दि को द्वित्व तथा कारितलोप।

३. **पपाच**। पच्+परोक्षा– अट्। 'डु पचष् पाके' (१।६०३) धातु से परोक्षासंज्ञक परस्मैपद प्रथमपुरुष-एकवचन अट् प्रत्यय, द्विर्वचनादि तथा "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधावृद्धि।

४. **पापच्यते**। पच्+य+ते। पुनः पुनः अतिशयेन वा पचति। 'डु पचष् पाके' (१।६०३) धातु से "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) से क्रियासमभिहार अर्थ में चेक्रीयितसंज्ञक य–प्रत्यय, द्विर्वचनादि, 'पापच्य' की धातुसंज्ञा, वर्तमानासंज्ञक ते-प्रत्यय।

५. **प्रोर्णोनूयते**। प्र+ऊर्णु+य+ते। 'प्र' उपसर्गपूर्वक 'ऊर्णुञ् आच्छादने' (२।६४) धातु से य-प्रत्यय, द्विर्वचनादि, धातुसंज्ञा तथा वर्तमानासंज्ञक ते-प्रत्यय।

६. **पिपक्षति**। पच्+सन्+ति। पक्तुमिच्छति। 'डु पचष् पाके' (१।६०३) धातु से "धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्" (३।२।४) सूत्र द्वारा सन्प्रत्यय, द्विर्वचनादि, धातुसंज्ञा तथा वर्तमानासंज्ञक ति-प्रत्यय।

७. **अटिटिषति**। अट्+इट्+सन्+ति। अटितुमिच्छति। 'अट गतौ' (१।१०२) धातु से इच्छार्थक सन् प्रत्यय, इडागम, टि को द्विर्वचन, सन्–प्रत्ययगत सकार को मूर्धन्य षकारादेश, धातुसंज्ञा तथा वर्तमानासंज्ञक परस्मैपद प्रथमपुरुष– एकवचन ति-प्रत्यय ॥५०४।

## ५०५. जुहोत्यादीनां सार्वधातुके [३।३।८]

### [सूत्रार्थ]

सार्वधातुकसंज्ञक प्रत्यय के परे रहते जुहोत्यादिगणपठित धातुओं का द्विर्वचन उपपन्न होता है ॥५०५।

### [दु० वृ०]

जुहोत्यादीनां धातूनां सार्वधातुके परे द्विर्वचनं भवति। जुहोति, अजुहोत्, जुहवानि, जजनानि, जजनात्, अजजन्। 'चिक्लिद – चक्नस – चराचर – चलाचल – पतापत – वदावद–घनाघन–पाटुपटा वा' इति **नामभूताः संज्ञा रूढाः**। न च

क्लिदेर्नाम्युपधत्वात् कः। क्नसि–चरि–चलि–पति–वदि–हनि–पाटयतिभ्यो नाचूप्रत्ययो द्विर्वचनं **निपातनं** चेति ॥५०५।

**[दु० टी०]**

जुहो०। अदाद्यन्तर्गणो जुहोत्यादिः। तिब्ग्रहणं **सुखप्रतिपत्त्यर्थम्,** अन्यथा ह्वादीनामित्युक्ते ह्वेञोऽपि ग्रहणं संभाव्यते। अनूलुकीति न कृतम्, **प्रतिपत्तिगौरवात्**। जुहोत्यादीनां सार्वधातुके द्विर्वचनमप्राप्तम् अनेन विधीयते नात्रोक्तिबाधा पूर्वेणापि भवत्येव। अजुह्वद् इत्यादि। क्लिद्यति, चिक्लिदः। क्नस्यति, चक्नसः। चरतीति चराचरः, चलतीति चलाचलः। पततीति पतापतः। वदतीति वदावदः। हन्तीति घनाघनः। पाटयतीति पाटुपटः। **केचित्** 'पाटुपटः' इत्यादौ दीर्घत्वं नेच्छन्ति। पक्षे– चरः, चलः, पतः, वदः, हनः, पाटः। क्लिदक्नसोर्विभाषा नाभिधीयते ॥५०५।

**[वि० प०]**

जुहो० ।अदाद्यन्तर्गणो जुहोत्यादिः। 'हु दाने, ञि भी भये' (२।६८) इत्यादि। चिक्लिदेत्यादि। क्लिद्यति, क्नस्यति, चरति, चलतीत्यादि वाक्यम्। पक्षे चरः, चलः, पतः, पदः, हनः, पाटः। क्लिदक्नसोर्द्विर्वचनं विभाषा नाभिधीयते ॥५०५।

**[बि० टी०]**

जुहोति०। अथ जुहोतीत्यादीनां सार्वधातुके द्विर्वचनं चणादिषु, न द्विर्वचनमित्युक्त्या पूर्वसूत्रस्य बाधा कथं न स्यात्, नैवम्। सार्वधातुकेऽप्राप्तं द्विर्वचनं कथमन्यन्निवर्तयितुं शक्नोति। जजनानीति बहूदाहरणं **केचिद्** वदन्ति छन्दस्येवेति। तन्निरासार्थमिति **हेमकरः**। तिब्ग्रहणं **सुखप्रतिपत्त्यर्थम्**। अथ ह्वादीनामित्युक्ते ह्वेञोऽपि ग्रहणं संभाव्यते। अनूलुकीति न कृतं **प्रतिपत्तिगौरवाद्** इति **टीकायाम्**। न चेत्यादि। क्लिदेर्नाम्युपधत्वात् कः। अत्रापि द्विर्वचनं निपातनं चेति सम्बन्धनीयम् ॥५०५।

**[समीक्षा]**

'जुहोति, बिभेति' आदि शब्दरूपों के सिद्ध्यर्थ द्विर्वचनविधि आवश्यक है, इसे कातन्त्रकार ने प्रकृत सूत्र द्वारा 'हु' आदि धातुओं में साक्षात् निर्दिष्ट किया है। जबकि पाणिनि ने 'श्लु' के परवर्ती होने पर धातु का द्वित्व किया है। "श्लौ" (अ० ६।१।१०)। कातन्त्रीय धातुपाठ में 'हु' आदि धातुओं को अदादिगण (ह्वादिगण) में ही पढ़ा गया है। परन्तु पाणिनि ने भिन्न रूप में पढ़ा है। पाणिनि ने अदादिगण की धातुओं में 'शप्' विकरण का लुक् तथा जुहोत्यादिगणपठित धातुओं में शप् का श्लु विधान किया है। कातन्त्रकार ने उभयत्र 'अन्' विकरण

का लुक् ही किया है– "अदादेर्लुग् विकरणस्य" (३।४।९२)। शप् के 'लुक्–श्लु' विधायक पाणिनीय सूत्र इस प्रकार हैं– "अदिप्रभृतिभ्यः शपः, जुहोत्यादिभ्यः श्लुः" (अ० २।४।७२, ७५)। इस प्रकार पाणिनि ने जुहोत्यादिगण की धातुओं में श्लु करने के कारण ही "श्लौ" (अ० ६।१।१०) सूत्र द्वारा श्लु के पर में रहने पर द्वित्वविधान का निर्देश किया है। तदनुसार कातन्त्रकार को "जुहोत्यादीनामनूलुकि" – यह सूत्र बनाना चाहिए था, परन्तु टीकाकार ने इस प्रकार सूत्र बनाने पर प्रतिपत्तिगौरव की बात कहकर सूत्रकार का समर्थन किया है – 'अनूलुकीति न कृतम्, प्रतिपत्तिगौरवात्'।

**[विशेष वचन]**

१. 'चिक्लिद–चक्नस–चराचर–चलाचल–पतापत–वदावद–घनाघन– पाटुपटा वा' इति नामभूताः संज्ञा रूढाः (दु० वृ०)।

२. अदाद्यन्तर्गणो जुहोत्यादिः (दु० टी०, वि० प०)।

३. तिब्ग्रहणं सुखप्रतिपत्त्यर्थम् (दु० टी०; बि० टी०)।

४. अनूलुकीति न कृतम्, प्रतिपत्तिगौरवात् (दु० टी०)।

५. केचित् 'पाटुपटः' इत्यादौ दीर्घत्वं नेच्छन्ति (दु० टी०)।

६. जजनानीति बहूदाहरणं केचिद् वदन्ति छन्दस्येवेति (बि० टी०)।

**[रूपसिद्धि]**

१. **जुहोति**। हु+अनूलुक्+ति। 'हु दाने' (२।६७) धातु से वर्तमानासंज्ञक प्रथमपुरुष– एकवचन ति-प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन्–विकरण, "अदादेर्लुग् विकरणस्य" (३।४।९२) से उसका लुक्, प्रकृत सूत्र द्वारा 'हु' को द्विर्वचन, अभ्याससंज्ञा, "हो जः" (३।३।१२) से हकार को जकारादेश तथा "नाम्यन्तयोर्गुणः" (३।५।१) से उ को गुण।

२. **अजुहोत्**। अट्+हु+अनूलुक्+दि। 'हु दाने' (२।६७) धातु से ह्यस्तनी-संज्ञक परस्मैपद – प्रथमपुरुष – एकवचन 'दि' प्रत्यय, अडागम, अन्विकरण, उसका लुक्, प्रकृत सूत्र द्वारा 'हु' धातु को द्विर्वचन, अभ्याससंज्ञा, गुण, दि – प्रत्ययगत इकार का लोप तथा द् को त् आदेश।

३. **जुहवानि**। हु+आनि। 'हु दाने' (२।६७) धातु से पञ्चमीसंज्ञक आनि प्रत्यय, अन् विकरण का लुक्, प्रकृत सूत्र द्वारा द्विर्वचन, अभ्याससंज्ञा, गुण तथा अवादेश।

४. **जजनानि**। जन+अनूलुक्+आनि। 'जन जनने' (२।८०) धातु से पञ्चमीसंज्ञक परस्मैपद–उत्तमपुरुष–एकवचन 'आनि' प्रत्यय, अन् विकरण का लुक्, प्रकृत सूत्र से **द्विर्वचन** तथा अभ्यासकार्यादि।

५. **जजन्यात्। जन्+अनूलुक्+यात्**। 'जन जनने' (२।८०) धातु से सप्तमीसंज्ञक परस्मैपद – प्रथमपुरुष – एकवचन 'यात्' प्रत्यय, अन् विकरण का लुक्, प्रकृत सूत्र द्वारा द्विर्वचन तथा अभ्याससंज्ञक कार्य।

६. **अजजन्**। अट्+जन्+अन्+लुक्+दि। 'जन जनने' (२।८०) धातु से ह्यस्तनीसंज्ञक परस्मैपद– प्रथम पुरुष–एकवचन दि – प्रत्यय, अडागम, अन्–विकरण का लुक्, प्रकृत सूत्र द्वारा द्विर्वचन, अभ्याससंज्ञक कार्य तथा "व्यञ्जनाद् दिस्योः" (३।६।४७) से दि– प्रत्यय का लोप ॥५०५।

## ५०६. अभ्यासस्यादिर्व्यञ्जनमवशेष्यम् [३।३।९]

### [सूत्रार्थ]

द्विर्वचन के दो रूपों में जिस पूर्ववर्ती रूप की अभ्याससंज्ञा होती है, उसमें आदि व्यञ्जन ही सुरक्षित रहता है। फलतः अन्य व्यञ्जनों का लोप हो जाता है ॥५०६।

### [दु० वृ०]

अभ्यासस्यादिर्व्यञ्जनमवशेष्यम् = रक्षणीयं भवति। अनादिर्लोपनीय इत्यर्थः। शिश्राय, जग्लौ, बंभ्रम्यते। व्यञ्जनग्रहणमनादिवर्णमात्रस्य लोपो मा भूत्। कथम् आटतुः? अभ्यासजातेरवगतं **शेष्यम्**। शेष्यशब्दोऽत्र निवृत्तिप्रधानां स्थिति-माहे**त्यन्ये** ॥५०६।

### [दु० टी०]

अभ्या०। आदिशब्दो व्यञ्जनेन सह सम्बध्यमानोऽपि स्वं पुंलिङ्गं न जहात्येव। **केचिद्** आदौ व्यञ्जनम् आदिव्यञ्जनम् इति समस्यन्ति। अभ्यासस्येति वचनम् अनभ्यासस्य मा भूत्, आदिग्रहणं ततोऽन्येषां व्यञ्जनानामभ्यासे निवृत्त्यर्थम्। व्यञ्जनेत्यादि। अनादिस्वरस्य मा भूदित्यर्थ। न वक्तव्यम्– **"दीर्घोऽनागमस्य"** (३।३।२९) इति "गुणश्चेक्रीयिते" (३।३।२८) इति ज्ञापकात् सविकल्पान्यपि ज्ञापकानि भवन्ति। कथमित्यादि। यत्रैवादिर्व्यञ्जनं शिष्यते तत्रैवानादिनिवृत्तिरिति, नैवम्। नात्र व्यक्तिः किन्तर्हि जातिरित्याह– अभ्यासजातेरित्यादि। यत्र क्वचिद् आदिशेषस्य चरितार्थत्वात् सर्वत्रानादिनिवृत्तिरेव भवतीत्यवगतं शेष्यमिति। अवग्रहणमेव

जातेरवबोधकम्, अन्यथा शेष्यमित्युक्तेऽपि सिध्यत्येव। किञ्चात्रावग्रहणेन **"स्वरादेर्द्वितीयस्य"** (३।३।२) इति व्यक्तिरवधारिता भवति। क्वचिज्जातिः, क्वचिद् व्यक्तिः, क्वचिदुभयमिति लोकतः सिद्धमिति। ननु **सुखावबोधकं** शेष्यमित्यादि व्यक्तावपि न दोषः। यद्यपि आदिशेषस्योक्तितः प्राधान्यं प्रतिभाति, तथापि विधेयत्वादनादिनिवृत्तिरेव। **वस्तुतः** प्रधानं प्रतीयते इति, तर्हि जातेः कोऽन्यो भेदः इत्यवग्रहणं युक्तमिति ॥५०६।

**[वि० प०]**

अभ्यास०। अवशिष्यते **इत्यवशेष्यम्,** व्यञ्जनान्ताद् घ्यण्। ननु यद्यवशेष्यं रक्षणीयमित्यर्थः, तच्चादेः सिद्धमेव निवर्तकाभावात्, किमनेनेत्याह– अनादिर्लोपनीय इत्यर्थ इति आदेरवस्थाने सिद्धे यत् पुनर्विधानं तन्नियमार्थम्। आदिरेवावशिष्यते, न पुनरनादिरित्यर्थः। शिश्रायेत्यादि। **'भज श्रिञ् सेवायाम्'** (१।६०४), अट्, द्विर्वचनादिर्व्यञ्जनमवशेष्यम्, **"अस्योपधायाः०"** (३।६।५) इत्यादिना वृद्धिः। जग्लाविति। **'ग्लै हर्षक्षये'** (१।२५१), अट्, द्विर्वचनमादिर्व्यञ्जनमवशेष्यम्, अभ्यासे कवर्गस्य चवर्गः, आकारादट आवित्यौकारे कृते सन्ध्यक्षरे चेत्याकारलोपः। भ्रमेश्च गत्यर्थत्वात् कौटिल्य एवेति यशब्दे कृते द्विर्वचने **"अतोऽन्त०"** (३।३।३१) इत्यादिनाभ्यासेऽनुस्वारागमः। व्यञ्जनेत्यादि। आदिरवशेष्य इत्युक्ते विशेषाभावाद् वर्णमात्रमवशिष्यते, ततस्तज्जातीयत्वादमादेरपि वर्णमात्रस्य लोपो भवन् स्वरस्यापि स्याद् इत्यर्थः। ननु **"दीर्घोऽनागमस्य, गुणश्चेक्रीयिते, सन्यवर्णस्य"** (३।३।२९, २८, २६) इति ज्ञापकं स्वरस्य लोपो न भविष्यति। न ह्यभ्यासस्वरलोपे सति दीर्घादिकार्यमुपपद्यते स्थानिन एवाभावात्, नैवम्। सविकल्पान्यपि **ज्ञापकानि** भवन्ति, तर्हि आदिव्यञ्जनं यत्र नावशिष्यते तत्रानादिव्यञ्जनस्य केन प्रकारेण लोपः स्यात्, तस्यादिव्यञ्जनावशेषनिमित्तत्वादित्याह– कथमित्यादि।

एवं मन्यते– नात्राभ्यासव्यक्तिराश्रीयते, किन्तर्हि **जातिः,** जातेश्चैकत्वादभ्यासस्य क्वचिदेकलक्ष्ये 'पपाच' इत्यादौ चरितार्थत्वादादिव्यञ्जनावशेषः सर्वत्रानादिव्यञ्जननिवृत्तिं करोति। व्यक्तिवादनिबन्धनो हि क्वचिदादिशेषाभावेऽनादिव्यञ्जननिवृत्तिं विधुरयति। जातौ तु पदार्थे आदिशेषाभावस्यैवाभावादिति जातिपदार्थश्चावग्रहणादेवावधार्यते। अन्यथा 'शेष्यम्' इत्येवं सिद्धम्। एतदेव सूचयति– अवगतं शेष्यमिति। यदि पुनः क्वचिज्जातिः क्वचिद् व्यक्तिः क्वचिदुभयं **लोकतः** सिद्धम् इत्ययं पन्था आश्रीयते, तदा**ऽवग्रहणं सुखार्थमेवेति**। आटतुरिति। **'अट गतौ'** (१।१०२), अतुस्, द्विर्वचनम्, अभ्यासटकारलोपः, **"अस्यादेः सर्वत्र"**

(३।३।१८) इति दीर्घत्वे पुनः समानलक्षणो दीर्घः। **अन्ये** तु नावशब्दमाद्रियन्ते, व्यक्तिपक्षेऽपि शेष्यशब्दस्यैव सामर्थ्यं दर्शयतीत्याह – शेष्य इत्यादि। निवृत्तिः प्रधानं यस्यां स्थितौ सा तथोक्ता स्थितिरादिशेष उच्यते। **अयमर्थः**– यद्यप्यादिशेषस्य वाचनिकं प्राधान्यं प्रतिभासते, तथाप्यनादिनिवृत्तिरेव प्राधान्यं विधेयत्वात्। तेन यद्यपि क्वचिदादिशेषो न विद्यते, तथाप्यनादिनिवृत्तिरेव भवति, न हि निवृत्त्या आदिशेषोऽपेक्ष्यते प्रधानस्याप्रधानापेक्षत्वानुपपत्तेरिति ॥५०६।

**[बि० टी०]**

अभ्यासस्य०। तस्यादिव्यञ्जनावशेषनिमित्तत्वादिति। ननु संनियोगशिष्टत्वादनादिव्यञ्जनलोपो न भविष्यतीति कथं नोक्तम्। सत्यम्, अत्र **वैद्यकारिका**–

**अत्रादिशेषो वचनोत्त्थ एव तात्पर्यतोऽनादिनिवृत्तिराप्ता।**

**नास्ति द्वयोरत्र च सन्नियोगशिष्टत्वमेतेन पपावियेष ॥**

**अस्यार्थः**– अत्रादिशेषो वचनोत्त्थ एव शब्दप्रतिपादित इत्यर्थः। तात्पर्यादनादिनिवृत्तिरायाता, तेन हेतुना द्वयोः **सन्नियोगशिष्टत्वं** नास्तीति 'पपावियेष' इति सिद्धम्। पपावित्यत्रानादिलोपाभावः, 'इयेष' इत्यादिव्यञ्जनावशेषाभावो दर्शित इत्यर्थः। अथादिरवशेष्यमित्युक्ते कथमनादिव्यञ्जनाशेषोऽनादिव्यञ्जनलोपनिमित्तम्, निमित्तत्वेनानुपादानात्। तदभावे जातिनिर्देशेन किम्? आदिशेषाभावेऽनादिव्यञ्जनलोपस्य सिद्धत्वात्? सत्यम्, अत्र **वैद्यः**–

**अनादिसंलोपनिमित्ततादिशेषस्य शाब्दी न तु वास्तवी सा।**

**अभ्यासजात्याश्रयणे प्रयत्नः शेषानुपात्तावपि लोपयुक्तौ ॥**

**अस्यार्थः**– आदिशेषेऽनादिव्यञ्जनलोपस्य निमित्तता न **शाब्दी** किन्तु **वास्तवी**। आदिशेषोऽनादिव्यञ्जनलोपस्य निमित्तं यत् तन्न शाब्दम् अपि तु **वास्तवमि**त्यर्थः। अत एवाभ्यासजात्याश्रयणे प्रयत्नः कृत इत्यर्थः। [कस्यां सत्यां शेषस्यानुपात्तौ **वृत्तौ** आदिशेषाभाव इत्यर्थः। लोपयुक्तौ लोपार्थमित्यदोषः] ननु यथाभ्यासजातेरवशेषः, तथाऽभ्यासजातेरनादिव्यञ्जनस्य लोपः स्यात् तदा क्वचिद् अनादिलोपस्य सिद्धत्वात्। आटतुरित्यत्रानादिव्यञ्जनस्य लोपो मा भूत, नैवम्। **जातिपक्षे** स्वविशेषबाधकासत्त्वे सर्वत्रानुवृत्तौ को निषेधः (निषेद्धा)। तदेवोक्तं हेमकरेण – अथ **'शिष असर्वोपयोगे'** (९।२६७) इत्यस्य **धातूनामनेकार्थत्वाद्** रक्षायामपि **वृत्तिः**, तदेवास्तु। यदा तु असर्वोपयोगार्थो विवक्ष्यते। स च समुदायाभ्यास एकदेशानुपलङ्घनं तदोभयस्याभिधानशक्तिरिति जातिनिर्देशेन निर्वहति। तस्माद् आटतुरित्यादौ समुदयोऽभ्यासे

एकदेशस्यानुपलङ्घनं चैतत् ? सत्यम् । तदा समुदाय इत्येकदेशानुपलङ्घनं यत्तयोरर्थयोर्यथासंख्यं भवत् **सत्ता** समाश्रयणीयेत्यदोषः । तथा च **उमापतिः**–

**शेषो न रक्षा समुदाय इत्यादिरेकदेशानुपलङ्घनं चेत् ।**
**तदाभिधाशक्तिवशं द्वयं स्यात् तथाप्यदोषः श्रितसंभवत्वात् ॥**

इति **सुगमम्** ॥५०६।

**[समीक्षा]**

'पपाच, शिश्राय, जग्लौ, बंभ्रम्यते' इत्यादि रूपों के सिद्ध्यर्थ द्विर्वचन होने पर अभ्याससंज्ञक धातुओं के अन्तर्गत चकारादि द्वितीय व्यञ्जन वर्णों का लोप करना आवश्यक होता है, इसी की पूर्ति कातन्त्रकार तथा पाणिनि दोनों ही आचार्यों ने की है। पाणिनि का सूत्र है– "हलादिः शेषः" (अ० ७।४।६०)। अवशेष्य शब्द का 'रक्षणीय' अर्थ किया जाता है, अतः आदि व्यञ्जन से परवर्ती सभी का लोप उपपन्न होता है।

**[विशेष वचन]**

१. व्यञ्जनग्रहणमनादिवर्णमात्रस्य लोपो मा भूत् । - - - - - शेष्यशब्दोऽत्र निवृत्तिप्रधानां स्थितिमाहे**त्यन्ये** (दु० वृ०)।

२. आदिशब्दो व्यञ्जनेन सह सम्बध्यमानोऽपि स्वं पुंलिङ्गं न जहात्येव (दु० टी०)।

३. क्वचिज्जातिः क्वचिद् व्यक्तिः क्वचिदुभयमिति लोकतः सिद्धमिति (दु० टी०)।

४. अवशिष्यते इत्यवशेष्यम् । - - - - आदेरवस्थाने सिद्धे यत् पुनर्विधानं तन्नियमार्थम्– आदिरेवावशिष्यते न पुनरनादिरित्यर्थः (वि० प०)।

५. आदिरवशेष्य इत्युक्ते विशेषाभावाद् वर्णमात्रमवशिष्यते (वि० प०)।

६. यदि पुनः क्वचिज्जातिः क्वचिद् व्यक्तिः क्वचिदुभयं लोकतः सिद्धम् इत्ययं पन्था आश्रीयते, तदा अवग्रहणं सुखार्थमेवेति (वि० प०)।

७. अथ 'शिष असर्वोपयोगे' (९।२६७) इत्यस्य धातूनामनेकार्थत्वाद् रक्षायामपि वृत्तिः (बि० टी०)।

**[रूपसिद्धि]**

१. **शिश्राय** । श्रि + परोक्षा - अट् । 'श्रिञ् सेवायाम्' (१।६०४) धातु से

परोक्षासंज्ञक परस्मैपद-प्रथमपुरुष- एकवचन अट् प्रत्यय, "चण्परोक्षा-चेक्रीयितसनन्तेषु" (३।३।७) से श्रि-धातु को द्विर्वचन "पूर्वोऽभ्यासः" (३।३।४) से पूर्ववर्ती 'श्रि' की अभ्याससंज्ञा, प्रकृत सूत्र से 'शि' की रक्षा- र् का लोप, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से नामिसंज्ञक इकार को वृद्धि ऐ, तथा "ऐ आय्" (१।२।१३) से ऐकार को आय् आदेश।

२. **जग्लौ**। ग्लै+अट्। 'ग्लै हर्षक्षये' (१।२५१) धातु से परोक्षासंज्ञक परस्मैपद-प्रथमपुरुष-एकवचन अट् प्रत्यय, "सन्ध्यक्षरान्तानामाकारोऽविकरणे" (३।४।२०) से ऐकार को आकार, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से, 'ग्ला' को द्विर्वचन, "पूर्वोऽभ्यासः" (३।३।४) से पूर्ववर्ती 'ग्ला' की अभ्याससंज्ञा, प्रकृतसूत्र से 'गा' की रक्षा - ल् का लोप, "ह्रस्वः" (३।३।१५) से अभ्याससंज्ञक आकार को ह्रस्व, "कवर्गस्य चवर्गः" (३।३।१३) से ग् को ज्, "आकारादट औ" (३।५।४१) से अट् प्रत्यय के स्थान में औ आदेश तथा "सन्ध्यक्षरे च" (३।६।३८) से ग्ला-धातुगत आकार को लोप।

३. **बंभ्रम्यते**। भ्रम्+य+ते। कुटिलं भ्रमति। 'भ्रमु चलने' (१।५५८) धातु से "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) से चेक्रीयितसंज्ञक 'य' प्रत्यय, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से भ्रम् धातु को द्वित्व, अभ्याससंज्ञा, भ की रक्षा-'र-म्' का लोप, "द्वितीयचतुर्थयोः प्रथमतृतीयौ" (३।३।११) से भ् को ब्, "अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्य" (३।३।३१) से बकारोत्तरवर्ती अकार को अनुस्वार, "ते धातवः" (३।२।१६) से 'बंभ्रम्य' की धातुसंज्ञा तथा वर्तमानासंज्ञक आत्मनेपद-प्रथमपुरुष-एकवचन ते-प्रत्यय॥५०६।

## ५०७. शिट्परोऽघोषः [३।३।१०]

### [सूत्रार्थ]

शिट् से परवर्ती अघोषसंज्ञक वर्ण शेष रहता है, शिट् का लोप हो जाता है॥५०७।

[अघोषसंज्ञक वर्ण = क् ख्, च् छ्, ट् ठ्, त् थ्, प् फ्, श् ष्, स् (वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः-१।१।१)। शिट्संज्ञक वर्ण = श् ष् स् ह् (शिडिति शादयः- ३।८।३२]।

### [दु० वृ०]

शिटः परोऽघोषोऽवशेष्यो भवति। शिटो लोप इत्यर्थः। चुश्च्योत, तिष्ठेव, चस्कन्द। शिट्पर इति किम् ? पप्सौ। अनाद्यर्थोऽयमारम्भः॥५०७।

**[दु० टी०]**

शिट्० । 'शिटोऽघोषे' इति सिद्धे परग्रहणं सामीप्यषष्ठीशङ्कानिरासार्थम्, तेन ररक्षेति शिटः समीपस्य ककारस्य निवृत्तिः सिद्धा । तत्पुरुष एवायं न बहुव्रीहि, शिट्यघोष इत्यकरणात् । **'विधिनियमसम्भवे विधिरेव ज्यायान्'** (का० परि० ८४) इति वा । अनाद्यर्थोऽयमित्यादि । न चाघोषाणामनादित्वाल्लोपे प्राप्ते तन्निवृत्त्यर्थं वचनम्, विषयभेदादविरोधाच्च नानयोरुत्सर्गापवादतेति शिटोऽप्यवशेषः प्राप्नोति पूर्वेण, ततश्च 'पस्पर्श' इत्यादि न सिध्यति ? सत्यम् । अभ्यासकार्यिणमाश्रित्य समान एवायं विषयः इत्यपवादविज्ञानात् सिद्धम् । न ह्यप्राप्तादिशेषेऽभ्यासस्य **"शिट्परोऽघोषः"** (३।३।१०) इत्युच्यते, सत्यपि सम्भवे बाधनम् । यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इति कथम् उचिच्छिषति । **'उछी विपाशे** (१।६२; ५।२३) अन्तरङ्गत्वाच्छस्य द्वित्वे पश्चाद् द्विर्वचने सति नायं **"शिट्परोऽघोषः"** (३।३।१०) इति छस्यानादित्वाल्लोपे कृते **'निमित्ताभावे नैमित्तिकस्याप्यभावः'** (का० परि० २७) प्राप्नोति, नैवम् । पूर्वं चकारस्याभिनिवृत्तस्य श्रुतिरशक्या निवर्तयितुम्, न्यायोऽयमनित्यः पितुरभावेऽपि पुत्रस्य दर्शनात् ॥५०७।

**[वि० प०]**

शिट्परः । शिटः पर इत्यनेन पञ्चमीलक्षणस्तत्पुरुष एवायम्, न तु शिट् परो यस्मादिति बहुव्रीहिरिति दर्शयति, तदा हि परग्रहणमपनीय 'शिट्यघोषः' इति कुर्वीत । ननु तथापि शिट इति पञ्चम्येवास्ताम्, शिटः समीपलक्षणं षष्ठीमप्याशङ्केत, ततः शिटः समीपो योऽघोषः सोऽवशेष्यः इति वाक्यार्थे ररक्षेति रक्षेर्द्विर्वचने षकारसमीपः पूर्वः ककारोऽवशिष्यते । आरम्भो ह्ययमनाद्यर्थ इति शिटो लोप इत्यर्थ इति । कथमेतत्, इदं हि वचनमनादित्वादघोषस्य लोपे प्राप्ते तदवस्थानार्थमेव भवति । शिटस्तु पूर्वेणावशेषः प्राप्तः, न ह्यनेन तस्य बाधा शक्यते वक्तुं भिन्नविषयत्वेन विरोधाभावात् ? तदयुक्तम्, अभ्यासलक्षणमेकं कार्यिणमाश्रित्य समानविषयत्व-मेवेत्यपवादविषयत्वादेवायं पूर्वस्य बाधक इति । तिष्ठेवेति । यकारलोपे निमित्ताभावे नैमित्तिकास्याप्यभाव इति ठकारस्य थकारे **"द्वितीयचतुर्थयोः प्रथमतृतीयौ"** (३।३।११) इति भवति । अनाद्यर्थोऽयमिति । पूर्वेणादिशेषविधानादेवानादेरघोषस्यावशेषो न प्राप्नोति, अतस्तदर्थोऽयमिति ॥५०७।

**[बि० टी०]**

शिट् । शिट्पर इति किमिति । अत्र **वैद्यमते** शिट्परग्रहणेन किम्, अघोष इत्यास्ताम्, न चादिरघोषोऽवशेषो भवतीति वक्तव्यम्, पूर्वेण सिद्धत्वान्नियमार्थमिति

चेत् पूर्वत्रैव व्यञ्जनग्रहणमपनीय अघोषग्रहणं क्रियताम्, ततश्चानादिरघोषोऽवशेष्यो भवति। तथा च अनाद्यर्थोऽयमारम्भ इति वक्ष्यति। आदेरवशेषे सिद्धेऽनादिर्गृह्यमाणस्तदपेक्षयैव बोद्धव्यः। **यस्तु** वदति – शिट्पर इति। किं तत्पुरुष इति किमित्यर्थः, स निन्दनीयः। यावता मूलोदाहरणसिद्धौ प्रत्युदाहरणं योग्यम्, तदन्यथाकल्पनमयुक्तम्। तथा च तत् **कारिका** –

**पप्साविति प्रत्युदहारि वृत्तौ तच्छिट्परस्यैव विखण्डनेन।**
**भूते बहुव्रीहिसमासके तु स्यात् सिद्धिरस्येति वदन् विनिन्द्यः॥**

उक्तमस्य व्याख्यानम्, **तदसाम्प्रतम्, दुर्गवाक्येन** विरोधात्। तेन ह्येतदेव सूचितम् – शिट्पर इति किं तत्पुरुष इति किमित्यर्थः। उक्तं **कैश्चित्** – शिटः पर इति किमिति पाठो विद्यते, तत्पक्षे तत्पुरुषस्यैवायातम्। पप्साविति शिटः परत्वेनोदाहरणस्य दर्शितत्वात्। **अन्ये** तु चस्कन्द इत्यादौ प्रत्युदाहरणमुचितमित्याचक्षते। किञ्चाघोष इत्यनादिप्राप्ते कष्टमिति परोऽघोष इत्येव वक्तुं युज्यते, कथं समुदायखण्डनमिति ? यद् वा उदाहरणसिद्धौ प्रत्युदाहरणं तदपि नैवम्, यत्र सामान्यव्यावर्तकविशेषणं खण्ड्यते तत्रैव तस्य विषय इति। अत्र हि तत्पुरुषखण्डनेन बहुव्रीहिग्रहणे तत्र दूषणमित्यदोषः। कथमुदाहरणसिद्धिर्वक्तव्या न तु शिट् परो यस्माद् इत्यस्मिन् पक्षे नियमोऽयमिति शिट्यघोष इति कुर्वीतेति।

ननु शिट्परोऽघोष इत्यत्र परग्रहणाभावे समीपषष्ठ्यां ररक्षेत्यत्र शङ्का समुच्चारिता, तथात्रापि 'चस्कन्द, चिस्कन्दिषति' इत्यादौ शङ्का स्यादिति। नैवम्, तदा शिटीति परसप्तम्याऽघोषेऽभ्यासस्य पूर्वोऽवयवो गम्यते एव, अथवा परग्रहणे तु तत्पुरुष एवायं न बहुव्रीहिः। **'विधिनियमसम्भवे विधिरेव ज्यायान्'** (का० परि० ८४) इति नियमात्, तथा च **टीका**यामेवमुक्तम्। अथ समीपषष्ठ्यां पप्सावित्यत्रापि दूषणमिति **कश्चित्, 'विधिनियमसम्भवे विधिरेव ज्यायान्'** (का० परि० ८४) इति **अपरे**। ननु परग्रहणाभावे समीपषष्ठी शङ्कनीया घोषवतः साहचर्यान्न चकारो भवति तर्हि जकारोऽपि स्यादिति चेत् 'हकारेण चतुर्थाः सवर्णाः' इत्यस्ति। **अस्यार्थः** – हकारेण सह चतुर्थाः सवर्णा भवन्ति, ततश्च हकारस्य सवर्णो झकारो भविष्यति किं पृथग्योगेन ? सत्यम्। **शिक्षाश्रयणे प्रतिपत्तिगौरवं** स्यादिति तदेतत् **"कवर्गस्य चवर्गः"** (३।३।१३) इति सूत्रटीकायामुक्तम् ॥५०७।

**[समीक्षा]**

'चुश्च्योत, चस्कन्द, तिष्ठासति, पिस्पन्दिषते' इत्यादि शब्दरूपों में द्विर्वचन – अभ्याससंज्ञा होने पर 'स्-ष्-स्-ह्' के बाद आने वाले 'क्-ख्-, च्-छ' आदि वर्णों

के ही अवशेष रहने की आवश्यकता होती है– आदि व्यञ्जन के रूप में 'स्-श्' आदि की नहीं। एतदर्थ दोनों ही आचार्यों ने मुख्य सूत्र से भिन्न सूत्र बनाया है। पाणिनि का सूत्र है– "शर्पूर्वाः खयः" (अ० ७।४।६१)।

**[विशेष वचन]**

१. अनाद्यर्थोऽयमारम्भः (दु० वृ०)।

२. 'शिटोऽघोषः' इति सिद्धे परग्रहणं सामीप्यषष्ठीशङ्कानिरासार्थम् (दु० टी०)।

३. (शिट्परः) तत्पुरुष एवायं न बहुव्रीहिः (दु० टी०)।

४. नैवम्, पूर्वं चकारस्याभिनिवृत्तस्य श्रुतिरशक्या निवर्तयितुम्, न्यायोऽयमनित्यः, पितुरभावेऽपि पुत्रस्य दर्शनात् (दु० टी०)।

५. 'शिटः परः' इत्यनेन पञ्चमीलक्षणस्तत्पुरुष एवायम्, न तु शिट् परो यस्मादिति बहुव्रीहिरिति दर्शयति (वि० प०)।

६. उक्तमस्य व्याख्यानं तदसाम्प्रतम्, दुर्गवाक्येन विरोधात् (बि० टी०)।

७. शिक्षाश्रयणे प्रतिपत्तिगौरवं स्यादिति तदेतत् "कवर्गस्य चवर्गः" (३।३।१३) इति सूत्रटीकायामुक्तम् (बि० टी०)।

**[रूपसिद्धि]**

१. **चुश्च्योत**। श्च्युत्+अट् (परोक्षा)। 'श्च्युतिर् क्षरणे' (१।५) धातु से परोक्षासंज्ञक परस्मैपद – प्रथमपुरुष – एकवचन अट् प्रत्यय, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से धातु को द्विर्वचन, प्रकृत सूत्र से शकार – परवर्ती च् की रक्षा–श् का लोप, "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) से 'य्-त्' व्यञ्जनों का लोप तथा "नामिनश्चोपधाया लघोः" (३।५।२) से उपधासंज्ञक उकार को गुणादेश।

२. **तिष्ठेव**। ष्ठिव्+अट्। 'ष्ठिवु निरसने' (१।१९०; ३।४) धातु से परोक्षासंज्ञक परस्मैपद–प्रथमपुरुष–एकवचन अट् प्रत्यय, "धात्वादेः षः सः" (३।८।२४) से ष् को स्, 'निमित्ताभावे नैमित्तिकस्याप्यभावः' (का० परि० २७) इस न्याय के अनुसार ष् के निवृत्त हो जाने से तन्निमित्तक ठ् का थ् के रूप में परिणत होना, 'स्थिव्' का द्विर्वचन, अभ्याससंज्ञा, 'थि' की रक्षा– 'स्-व्' का लोप "द्वितीयचतुर्थयोः प्रथमतृतीयौ" (३।३।११) से थ् को त्, "निमित्तात् प्रत्ययविकारागमस्थः सः

षत्वम्'' (३।८।२६), "तवर्गस्य षाट्टवर्गाट् टवर्गः" (३।८।५) से थ् को ठ् तथा उपधासंज्ञक इकार को गुणादेश।

३. **चस्कन्द**। स्कन्द्+अट्। 'स्कन्दिर् गतिशोषणयोः' (१।२८१) धातु से परोक्षासंज्ञक अट् प्रत्यय, **धातु** को द्विर्वचन, अभ्याससंज्ञादि तथा "कवर्गस्य चवर्गः" (३।३।१३) से **ककार** को चकारादेश॥५०७।

## ५०८. द्वितीयचतुर्थयोः प्रथमतृतीयौ [३।३।११]

### [सूत्रार्थ]

अभ्याससंज्ञक शब्दरूप में स्थित द्वितीय-चतुर्थ वर्णों के स्थान में क्रमशः प्रथम–तृतीय वर्ण होते हैं॥५०८।

### [दु० वृ०]

अभ्यासद्वितीयचतुर्थयोः स्थाने प्रथमतृतीयौ भवतो यथासंख्यम् आन्तरतम्यात्। चखान, चिच्छेद, टिठकारयिषति, तस्थौ, पफाल, जुघोष, डुढौके, दध्यौ, बभार। कथम् ऊढमाख्यातवान्–औजढत्? **'असिद्धं बहिरङ्गमन्तरङ्गे'** (का० परि० ४३) इत्**येके**॥५०८।

### [दु० टी०]

द्वितीय०। कथमित्यादि। वहेः क्तो यजादित्वात् सम्प्रसारणं **"हो ढः, घढधभेभ्यस्तथोर्धोऽधः, ढे ढलोपः"** (३।६।५६; ८।३,६) इति। **"इन् कारितं धात्वर्थे, अयतन्यां च, स्वरादेर्द्वितीयस्य"** (३।२।९; ४।८३; ३।२) इति हकारयुक्तस्य तस्य द्विर्वचनम् इनि यत् कृतं तत् सर्वं स्थानिवदिति अकारवत एव समानलोपत्वादिनो भावः। ढकारो हि बहिरङ्गोऽन्तरङ्गे द्विर्वचने कर्तव्ये प्रकृतेः पूर्वं पूर्वं स्यादन्तरङ्गम् इति भावः। **एकेऽन्ये** इति। औजढदिति। तदयुक्तम्, इनि चणपेक्षत्वाद् द्विर्वचनस्य बहिरङ्गतैव। अथासिद्धवद् वक्तव्यम्, तदसत्। तथा च **वार्त्तिकम्**– "पूर्वत्रासिद्धीयमद्विर्वचने" इति द्विर्वचने तु पूर्वस्मिन् कार्ये कर्तव्ये परकार्यमसिद्धवन्न भवतीति **तन्त्रान्तरे,** तस्माद् औडढदिति भवितव्यम्, कथम् औडिददिति क्त्यन्तस्येदं रूपम्॥५०८।

### [वि० प०]

द्वितीय०। टिठकारयिषतीति ठकारमाचष्टे इतीन् कारितं धात्वर्थे इतीन्, ठकारयितुमिच्छतीति सन्, द्विर्वचनम्, **"सन्यवर्णस्य"** (३।३।२६) इतीत्त्वम्। कथमित्यादि। वहेः क्तप्रत्यये यजादित्वात् संप्रसारणं वकारस्योकारः। **"हो ढः, घढधभेभ्यस्तथोर्धोऽधः"** (३।६।५६; ८।३) इति तकारस्य धकारः, **"तवर्गस्य षाट्**

**टवर्गाद् टवर्गः"** (३।८।५) इति धस्य ढत्वम् **"ढे ढलोपो दीर्घश्चोपधायाः"** (३।८।६) इति ढकारलोपो दीर्घश्च। ततः– **"इनू कारितं धात्वर्थे"** (३।२।९) इतीन्, **"इनि लिङ्गस्य०"** (३।२।१२) इत्यादिनाऽन्त्यस्वरादिलोपः, अद्यतन्यां दि, चण्, **"स्वरादीनां वृद्धिरादेः"** (३।८।१७) इत्युकारस्यौकार इति। **'इनि यत् कृतं तत् सर्वं स्थानिवत्'** इति वचनाद् इनि लुप्तस्याकारस्य स्थानिवद्भावात् **"स्वरादेर्द्वितीयस्य"** (३।३।२) इत्यकारसहितस्य हकारस्य द्विर्वचनम्, **"हो जः'** (३।३।१२), समानलोपत्वान्न सन्वद्भावः। सिद्धान्तमाह– **'असिद्धं बहिरङ्गमन्तरङ्गे'** (का० परि० ४३) इति, **'प्रकृतेः पूर्वं पूर्वं स्यादन्तरङ्गम्'** (का० परि० ७१) इत्यन्तरङ्गे द्विर्वचने कर्तव्ये बहिरङ्गं ढत्वमसिद्धं स्यात्, अतो हकारस्य द्विर्वचनम्, परकार्यं तु ढत्वादिकम् प्रतिषिद्धमेवेति अकारवतो हकारस्य द्विर्वचनं न विरुध्यते। **एके अन्ये** इत्यर्थः।

**अयं** तु मन्यते– इनि चणपेक्षत्वाद् द्विर्वचनमेव बहिरङ्गम्, तद् ढत्वं तु न बाह्यमपेक्षते कथं बहिरङ्गं स्यात्। अथ असिद्धवद्भावस्योपसंख्यानादेवमुच्यते इति चेत्, न। तस्यापि द्विर्वचनेन प्रत्याख्यातत्वात्। यदाह **वार्त्तिकः**– **'पूर्वत्रासिद्धीयमद्विर्वचने'** इति द्विर्वचनादन्यत्र पूर्वस्मिन् कार्ये कर्तव्ये परकार्यमसिद्धं भवति, द्विर्वचने कर्तव्ये न भवतीति **तन्त्रान्तरे** प्रसिद्धिः, तस्माद् औडढद् इतीह भवितव्यम्। यदा क्तान्ताद् ऊढिशब्दाद् इनूचणौ, तदा औडिढदिति भवति ॥५०८।

## [बि० टी०]

द्वितीय०। कथम् औजढद् इति, असिद्धं बहिरङ्गम् इत्यस्य निर्गलितं **पञ्ज्यां** कथमित्यादिना समानलोपत्वान्न सन्वद्भाव इति पर्यन्तेन प्रतिपादयति। अत्र इनि यत् कृतं तत् सर्वं स्थानिवदिति। ननु कथमस्य विषयः अजान्तस्थापवर्गपरस्यावर्णे एव वेदितव्यम् इत्युक्तत्वात्, न ह्यत्रावर्णः परो विद्यते इति ढकाराकारस्य लुप्तत्वात्? सत्यम्, अत्र **केचिद्** आचक्षते– परिभाषाज्ञापनेऽवर्ण इति **विषयसप्तमी,** ततो लोपेऽपि बुद्धिस्थेऽवर्णः परो विद्यत एव। **अन्ये** पुनराहुः– अवर्णे परे जान्तस्थापवर्गाः परे यस्मादभ्यासात् तस्य भाविनः सम्बन्धिनि मूलधातौ तत् सर्वं स्थानिवदिति, एतेन पश्चादेवम्भूतोऽभ्यासो यस्य भावी तस्मिन् मूलधातौ स्थानिवदिति। एवं सति प्राक् स्थानिवद्भावे पश्चादवर्णे परेऽजान्तस्थापवर्गपरोऽभ्यासो विद्यते एव, पूर्वपक्षे त्ववर्णे विषयभूतेऽजान्तस्थापवर्गा योग्यतामपेक्ष्याभ्यासात् परे यस्य धातोः स्थानिवदिति।

**अपरे** तु एवं समादधुः– अजान्तस्थापवर्गा वर्णान्तरपरा भवन्तोऽवर्ण एव नान्यस्मिन्निति **नियमः**। यत्र त्वन्यः परो न भवति तत्र सुतरामेव भवति, अत एव **पञ्ज्याम्** अवर्ण एवेत्युक्तम्। **कुलचन्द्रो**ऽपि एतच्चाजान्तस्थापवर्गपरस्यावर्णे वेदितव्यमिति

**टीकापङ्क्तेरवर्ण** एवेत्यर्थ इत्याशयमभिहितवान्, युक्तोऽयं **पक्षः**। एवम् ओघमाचष्टे इतीनि चणि औजघदित्यादि बोध्यम्, अकारसहितहकारस्य द्विर्वचनमिति **पञ्ज्यां** यदुक्तं परिभाषाश्रयणात्, तत्कथमायातमित्याह– असिद्धं बहिरङ्ग इत्यादि। यद्यपि हकारस्य ढत्वं प्रकृत्याश्रितं तथापि प्रकृतिपूर्वकार्यत्वाद् द्विर्वचनमेवान्तरङ्गं ढत्वं तु बहिरङ्गमिति तदसिद्धं भवति। ततो हकारस्येत्यादि, ततोऽसिद्धत्वादित्यर्थः। हकारस्येति पूर्वं हकारस्य द्विर्वचनं यदुक्तं तत् सङ्गतमित्यर्थ इति **वाक्यशेषो** योजनीयः। ननु यदि द्विर्वचने प्रकृतिकार्ये कर्तव्ये ढत्वमसिद्धम्, तदा प्रत्ययकार्यस्य निमित्तत्वे ढत्वादिकमप्यसिद्धमित्याशङ्क्याह– परकार्यमित्यादि। ततोऽकारवतो हकारस्य द्विर्वचनं न विरुध्यते। यदि च ढत्वेऽसिद्धे परकार्यमसिद्धं स्यात् तदाविरोधः, विरोधे तु तदप्यसङ्गतम्। इदानीं विरोधाभावादकारवतो हकारस्य द्विर्वचनमि**त्याशयः**।

नन्वकारवतो हकारस्य द्विर्वचनं कथं धातुहकारस्य व्यञ्जनान्तत्वात्? नैवम्, अभिप्रायापरिज्ञानाद् धातुहकारस्य यो ढकारः स लुप्त एव, कथं तस्य पूर्वकार्ये कर्तव्ये तस्यासिद्धताऽविद्यमानस्य पौर्वापर्यव्यवहाराभावात्। तस्मात् क्तस्य यो ढकारः स इह आस्ते, स धातुहकारस्याप्युपचर्यते, ततश्च तस्य ढकारस्यासिद्धत्वे हकारस्य क्तस्य तकारः समायाति, तेन ह-तभागस्य द्विर्वचनम्। ननु तथाप्यतोऽकारवतो हकारस्येति कथं ह–तभागस्य द्विर्वचनं वक्तुं युज्यते? तथा च **टीकायाम्**– हकारयुक्तस्य क्तस्य तस्य द्विर्वचनमिति, सत्यमेतत्। परिणतोऽकारसहितहकार एव तिष्ठति, व्यञ्जनं तु लुप्यते इति बुद्धिमारोप्योक्तम्। **हेमकरो**ऽप्याह– यथाऽवर्णोपचारेत्यादि। आक्षेपात् तकारस्य द्विर्वचनम्, कथमन्यथा हकारोऽकारसहित इति **पण्डितः**। तथा च **वार्त्तिकम्**–

**विना तकारं न भवेद् द्विरुक्तिरकारयुक्तस्य तु हस्य यस्मात्।**
**आक्षेपतस्तस्य ततो द्विरुक्तिस्त्वकारवांस्तेन हि वा हकारः॥**

इति सुगमम्। तथा च तस्य **गुरोर्गुरुः**–

**धातोर्हि हः प्रत्ययगस्त्वकारो मध्यं परित्यज्य तयोर्द्विरुक्तिः।**
**ह-अस्वरूपस्य ततो द्विरुक्तिः सिद्धा न धात्वादिषु यन्न सिद्धा॥**

**अस्यार्थः**– धातोर्हकारः, अकारस्तु प्रत्ययगः। एवं मध्यं परित्यज्य तकारं त्यक्त्वा ह-अस्वरूपयोर्द्विरुक्तिः। तकारस्य द्विरुक्तिर्न स्यात्। हकारद्विरुक्तिरेव भवतीत्यर्थः। ननु धातुहकारस्य यो ढकारस्तस्यासिद्धत्वे तकारागमनं कथं भवति? तत्राह– धात्वादिषु यन्न सिद्धेति यद् यस्माद् धात्वादिषु कृतेषु असिद्धा द्विरुक्तिः।

पूर्वमेवा**स्याभिप्रायो व्याख्यातः। हेमकरेणाप्युक्तम्** – क्तस्य यो ढकारः स ह इत्युपचरिते हतस्य द्विर्वचनम्। **अन्ये** पुनराचक्षते – उपचरितहकारादेशिढकारस्यासिद्धत्वे हकारादेशिनः परेणाकारे विद्यमाने नैव द्विर्वचनं क्तस्य कृतढकारस्यासिद्धवद्भावात्। यद् वा **टीकाया**मुक्तम् – हकारयुक्तस्य तकारस्य तस्यापि हकारयुक्तस्य तस्य सम्बन्धिनो हकारस्येत्यर्थः। यथा **पञ्जिकायाम् "उशनःपुरुदंश०"** (२।२।२२) इत्यत्र कृतस्याप्यकारस्य लोपेन भवितव्यमित्युक्तम्। **हेमकरो**ऽपि क्वचिद् ह– इत्युपचरितहकारस्य द्विर्वचनमिति पाठ इति।

**अथवा** अयमपि पक्षः कस्यचित् **पञ्जीकृत** इति, **एके अन्ये** इत्यर्थः, **कातन्त्रैकदेशदर्शिन** इत्यर्थः। तद् दूषयन्नाह – अयं त्वित्यादि। अथ कथमिदं दूषणम्, परेणात्रासिद्धवद्भावस्योपसंख्यानं क्रियते, ततः परापेक्षत्वेऽपि पूर्वकार्यं पूर्वमन्तरङ्गमित्युच्यते। तदेवाह – अथेत्यादि। तदपि दूषयितुमाह – इति चेत्यादि। असिद्धीयमित्यादि। असिद्धमिवासिद्धीयम् असिद्धत्वात् सादृश्ये ईयप्रत्ययः। यथा कुशाग्रीयां बुद्धिमिति। अथ द्विर्वचनमिति **'नञा निर्दिष्टमनित्यम्'** (का० परि० ६७) इति क्वचिद् द्विर्वचनेऽप्यसिद्धवद्भावः, तत्पक्षमवलम्ब्य गदितं तत् कुतो **दूषण**मिति ? सत्यम्, अनित्यमाश्रित्यासिद्धवद्भावविधानं न **सर्वसम्मत**मिति सर्वासम्मतिरेव **दूषणम्** ॥५०८।

**[समीक्षा]**

'चखान, तस्थौ, जुघोष, दध्यौ, बभार' इत्यादि परोक्षाकालिक शब्दरूपों के सिद्ध्यर्थ अभ्याससंज्ञक खकारादि वर्गीयद्वितीय वर्णों के स्थान में ककारादि प्रथम वर्णादेश तथा घकारादि चतुर्थ वर्णों के स्थान में गकारादि तृतीय वर्णादेश की आवश्यकता होती है, जिसका विधान प्रकृत सूत्र में कातन्त्रकार ने किया है। एतदर्थ पाणिनि ने झल् वर्णों के स्थान में चर् तथा जश् आदेश किए हैं– "अभ्यासे चर्च" (अ० ८।४।५४)। ज्ञातव्य है कि 'चर्' प्रत्याहार में वर्गीय प्रथम वर्ण तथा 'जश्' प्रत्याहार में वर्गीय तृतीय वर्ण पठित हैं। 'झल्' प्रत्याहार के अन्तर्गत वर्गीय चतुर्थ-तृतीय-द्वितीय-प्रथम वर्ण एवं 'श्-ष्-स्-ह' वर्ण (२४ वर्ण) आते हैं। इस प्रकार २४ स्थानी तथा १० आदेशों की सङ्गति कथमपि संभव नहीं हो सकती। फलतः इसके पर्याप्त स्पष्टीकरण की आवश्यकता होती है। जिससे पाणिनीय निर्देश में गौरव ही कहा जा सकता है और कातन्त्रीय निर्देश में लाघव।

**[विशेष वचन]**

१. 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येके (दु० वृ०)।

२. यदाह वार्त्तिकः– 'पूर्वत्रासिद्धीयमद्विर्वचनम्' इति द्विर्वचनादन्यत्र पूर्वस्मिन् कार्ये कर्तव्ये परकार्यमसिद्धं भवति, द्विर्वचने कर्तव्ये न भवतीति तन्त्रान्तरे प्रसिद्धिः, तस्माद् औडढदिति इह भवितव्यम्। यदा क्तयन्ताद् ऊढिशब्दाद् इन्-चणौ, तदा औडिढदिति भवति (वि० प०; द्र० – दु० टी० अपि)।

३. कुलचन्द्रोऽपि ------ । हेमकरोऽप्याह – ---- इति पण्डितः। तथा च वार्त्तिकम् ----। तथा च तस्य गुरोर्गुरुः (बि० टी०)।

४. अथवा अयमपि पक्षः कस्यचित् पञ्जीकृतः इत्येके, अन्ये इत्यर्थः। कातन्त्रैकदेशदर्शिन इत्यर्थः (बि० टी०)।

**[रूपसिद्धि]**

१. **चखान**। खन् + परोक्षा – अट्। 'खनु अवदारणे' (१।५८४) धातु से परोक्षासंज्ञक परस्मैपद – प्रथमपुरुष – एकवचन 'अट्' प्रत्यय, द्विर्वचन, अभ्याससंज्ञादि, प्रकृत सूत्र से खकार को ककार, "कवर्गस्य चवर्गः" (३।३।१३) से ककार को चकार तथा "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधासंज्ञक अकार को दीर्घादेश।

२. **चिच्छेद**। छिद् + परोक्षा – अट्। 'छिदिर् द्विधाकरणे' (६।३) धातु से परोक्षासंज्ञक प्रथमपुरुष – एकवचन 'अट्' प्रत्यय, द्विर्वचनादि तथा "नामिनश्चोपधाया लघोः" (३।५।२) से उपधासंज्ञक इकार को गुणादेश।

३. **टिठ्कारयिषति**। ठकार + इन् + इट् + सन् + ति। ठकारं कर्तुमिच्छति। ठकार शब्द से "इन् कारितं धात्वर्थे" (३।२।९) सूत्र द्वारा इन् प्रत्यय, "इनि लिङ्गस्यानेकाक्षरस्यान्त्यस्वरादेर्लोपः" (३।२।१२) से ठकारोत्तरवर्ती अकार का लोप, "धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्" (३।२।४) से सन् प्रत्यय, "इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः" (३।७।१) से इट् का आगम, द्विर्वचनादि, प्रकृत सूत्र से ठकार को टकार, "सन्यवर्णस्य" (३।३।२६) से अभ्याससंज्ञक अकार को इकार, "निमित्तात् प्रत्ययविकारागमस्थः सः षत्वम्" (३।८।२६) से सकार को षकारादेश, धातुसंज्ञा, वर्तमानासंज्ञक ति-प्रत्यय तथा अन् विकरण।

४. **तस्थौ**। ष्ठा + परोक्षा – अट्। 'ष्ठा गतिनिवृत्तौ' (१।२६७) धातु से परोक्षासंज्ञक परस्मैपद – प्रथमपुरुष – एकवचन अट् प्रत्यय, "धात्वादेः षः सः"

(३।८।२४) से षकार को सकार, 'निमित्तापाये नैमित्तिकस्याप्यपायः' (का० परि० २७) के नियमानुसार ठकार को थकार, द्विर्वचनादि, प्रकृत सूत्र से थ् को त् तथा "आकारादट औ" (३।५।४१) से औकारादेश।

५. **पफाल**। फल+परोक्षा– अट्। 'ञि फला विशरणे' (१।१६५) धातु से परोक्षासंज्ञक अट् प्रत्यय, द्विर्वचनादि, प्रकृत सूत्र से फ् को प्, तथा "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधासंज्ञक अकार को दीर्घादेश।

६. **जुघोष**। घुष्+परोक्षा–अट्। 'घुषिर् विशब्दे' (१।२०५) धातु से परोक्षासंज्ञक अट् प्रत्यय, द्विर्वचनादि, प्रकृत सूत्र से घ् को ग्, "कवर्गस्य चवर्गः" (३।३।१३) से ग् को ज् तथा "नामिनश्चोपधाया लघोः" (३।५।२) से उपधासंज्ञक उकार को गुणादेश।

७. **डुढौके**। ढौकृ+ए। 'ढौकृ शब्दे' (१।३३२) धातु से परोक्षासंज्ञक 'ए' प्रत्यय, द्विर्वचनादि, "ह्रस्वः" (३।३।१५) से अभ्याससंज्ञक औकार को ह्रस्व = उ तथा प्रकृत सूत्र से ढ् को ड् आदेश।

८. **दध्यौ**। ध्या+परोक्षा–अट्। 'ध्यै चिन्तायाम्' (१।२७२) धातु से परोक्षासंज्ञक अट् प्रत्यय, "सन्ध्यक्षरान्तानामाकारोऽविकरणे" (३।४।२०) से ऐकार को आकार, द्विर्वचनादि, प्रकृत सूत्र से धकार को दकार तथा "आकारादट औ" (३।५।४१) से औकारादेश।

९. **बभार**। भृ+परोक्षा – अट्। 'डु भृञ् धारणपोषणयोः' (२।८५) धातु से परोक्षासंज्ञक अट् प्रत्यय। द्विर्वचनादि, प्रकृत सूत्र से भकार को बकार तथा ऋकार को वृद्ध्यादेश–आर्॥५०८।

## ५०९. हो जः [३।३।१२]

**[सूत्रार्थ]**

अभ्याससंज्ञक हकार के स्थान में जकारादेश होता है॥५०९।

**[दु० वृ०]**

अभ्यासहकारस्य जकारो भवति। जघान, जुहोति॥५०९।

**[दु० टी०]**

हो जः। ज इत्यकार उच्चारणार्थः। 'हकवर्गयोश्चवर्गः' इत्युक्ते हकारेण चतुर्थाः सवर्णा इति हकारस्य महाप्राणस्य घोषवतो नादवतश्च तादृशझकारोऽन्तरतमो भवत्येव, किन्तु शिक्षाश्रयणे प्रतिपत्तिगौरवं स्यात्॥५०९।

**[वि० प०]**

हो जः। जघान इति **"अभ्यासाच्च"** (३।६।३०) इति घत्वम् ॥५०९।

**[समीक्षा]**

'जघान, जुहोति' आदि शब्दरूपों के सिद्ध्यर्थ अभ्यासवर्ती हकार को जकारादेश की आवश्यकता होती है, इसी अपेक्षा की पूर्ति कातन्त्रकार ने प्रकृत सूत्र द्वारा की है। पाणिनि के अनुसार पहले अन्तरतम होने के कारण ह् को झ् तदनन्तर "अभ्यासे चर्च" (अ०८।४।५४) से जश्त्व करने पर झ् को ज् होता है। पाणिनि का सूत्र है– "कुहोश्चुः" (अ० ७।४।६२)। इस प्रकार पाणिनीय प्रक्रिया को गौरवाधायिनी कहा जा सकता है। टीकाकार दुर्गसिंह ने भी पाणिनीय प्रक्रिया को पूर्वपक्ष के रूप में उपस्थापित करके तदर्थ शिक्षावचन का स्मरण करने से जो प्रतिपत्तिगौरव होता है, इस कारण उसे उपेक्षणीय माना है– "हकवर्गयोश्चवर्गः इत्युक्ते 'हकारेण चतुर्थाः सवर्णाः' इति हकारस्य महाप्राणस्य घोषवतो नादवतश्च तादृश-झकारोऽन्तरतमो भवत्येव, किन्तु शिक्षाश्रयणे प्रतिपत्तिगौरवं स्यात्" (दु० टी०)।

**[रूपसिद्धि]**

१. **जघान**। हन्+परोक्षा–अट्। 'हन हिंसागत्योः' (२।४) धातु से परोक्षासंज्ञक परस्मैपद–प्रथमपुरुष– एकवचन अट्–प्रत्यय, द्विर्वचनादि, प्रकृत सूत्र से हकार को जकार, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधासंज्ञक अकार को दीर्घ तथा "अभ्यासाच्च" (३।६।३०) से हकार को घकारादेश।

२. **जुहोति**। हु+अन्–लुक्+ति। 'हु दाने' (२।६७) धातु से वर्तमानासंज्ञक ति–प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन्विकरण, "अदादेर्लुग् विकरणस्य" (३।४।९२) से उसका लुक्, "जुहोत्यादीनां सार्वधातुके" (३।३।८) से द्विर्वचन, अभ्याससंज्ञा, प्रकृत सूत्र से हकार को जकार तथा "नाम्यन्तयोर्धातु-विकरणयोर्गुणः" (३।५।१) से धातुगत उकार को गुणादेश ॥५०९।

## ५१०. कवर्गस्य चवर्गः [३।३।१३]

**[सूत्रार्थ]**

अभ्याससंज्ञक कवर्गीय वर्णों 'क्-ख्-ग्-घ्-ङ्' के स्थान में क्रमशः चवर्गीय वर्ण = 'च्-छ्-ज्-झ्-ञ्' आदेश के रूप में उपपन्न होते हैं ॥५१०।

**[दु० वृ०]**

अभ्यासकवर्गस्य चवर्गो भवति यथासङ्ख्यम्। चकार, चखान, जगाम, जघास, जुङ्वे ॥५१०।

**[दु० टी०]**

कवर्ग०। आन्तरतम्याद् वा प्रथमस्य प्रथम इति योज्यम्, द्वितीयचतुर्थयोः प्रथमतृतीयौ इति। 'कगङां चजञाः' इति कृते सिध्यति, **वर्गग्रहणं वैचित्र्यार्थम्**॥५१०।

**[वि० प०]**

कवर्गस्य०। जघासेति। **"वा परोक्षायाम्"** (३।४।८०) इत्यदेर्घस्लादेशः। जुङ्वे इति। 'कुङ खुङ गुङ' इत्यादि **दण्डको** धातुः। **'ङुङ् शब्दार्थः'** (१।४५८)। ङकार आत्मनेपदार्थः, परोक्षाया ए, **"स्वरादाविवर्णोवर्णान्तस्य"** (३।४।५५) इत्यादिना उव् ॥५१०।

**[बि० टी०]**

कवर्ग०। यथासङ्ख्यम् इति **वृत्तौ**, आन्तरतम्याद् वा प्रथमस्य प्रथम इत्यादि योज्यमिति **टीकायाम्। पक्षान्तरम् – "द्वितीयचतुर्थयोः प्रथमतृतीयौ"** (३।३।११) इति खघयोः कगौ, कगङां चजञाः इति कृते सिध्यति। **वर्गग्रहणं वैचित्र्यार्थम्** इति **टीकायाम्।** ननु द्वितीयचतुर्थयोः प्रथमतृतीयौ इति लाक्षणिकत्वाद् अनयोः कगयोः कथमनेन चवर्ग इति तस्य वर्गग्रहणबलात् खघयोरपि भवति, कथं **वैचित्र्यार्थमिति टीकायाम्** ? सत्यम्, **केचिद्** आचक्षते – एतादृशलाक्षणिकपरिभाषाभ्युपगमे **वैचित्र्यार्थम्** इत्युक्तम्। अभ्युपगमे तु तदेव फलम्, तदयुक्तम्। खघयोश्च वर्गत्वे लाक्षणिकत्वाद् द्वितीयचतुर्थयोः कथं प्रथमतृतीयाविति। किञ्च **'अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते'** (का० परि० ६४) इति द्वितीयचतुर्थयोः स्थाने प्रथमतृतीयाविति प्रथमो भवितुमर्हति, कथञ्च वर्गादेश इति। तस्माद् द्वितीयचतुर्थयोः प्रथमतृतीयाविति कृते खघयोः प्रयोजनाभावे यद् वर्गग्रहणं करोति, तत् प्रथमतृतीयत्वेऽपि वर्गग्रहणबलाल्लाक्षणिकयोः प्रथमतृतीययोर्भवतीति वैचित्र्यमर्थः प्रयोजनं यस्येति **टीकाशयः। हेमकर**स्यापि खघयोर्न प्रयोजनम् इत्येतेन वर्गग्रहणबलाल्लाक्षणिकस्यापि भवती**त्यभिप्रायः**॥५१०।

**[समीक्षा]**

'चकार, जगाम, जघास' आदि शब्दरूपों के सिद्ध्यर्थ अभ्याससंज्ञक 'क-ख-ग-घ-ङ' वर्णों के स्थान में 'च-छ-ज-झ-ञ' वर्ण आदेश के रूप में करना आवश्यक है। प्रकृत सूत्र से इसी आवश्यकता की पूर्ति की गई है। पाणिनि का

सूत्र है– "कुहोश्चुः" (अ० ७।४।६२)। पाणिनि ने उ-अनुबन्ध से वर्ग का बोध कराया है, जबकि कातन्त्र– (ते वर्गाः पञ्च पञ्च पञ्च –१।१।१०) के अतिरिक्त ऋक्प्रातिशाख्य (१।८), तैत्तिरीयप्रातिशाख्य (१।१०) तथा वाजसनेयिप्रातिशाख्य (१।६४) में भी यह वर्गसंज्ञा की गई है। टीकाकार के अनुसार 'कगङां चजञाः' यह सूत्र बनाना चाहिए, क्योंकि 'ख-घ' वर्णों के स्थान में 'क-ग' आदेश उपरिवर्ती "द्वितीयचतुर्थयोः प्रथमतृतीयौ" (३।३।११) होकर फिर उनके च-ज आदेश प्रकृत सूत्र से है। इस प्रकार सूत्रकार द्वारा जो वर्ग ग्रहण किया गया है, वह वैचित्र्यार्थ ही कहा जा सकता है।

**[विशेष वचन]**

१. द्वितीयचतुर्थयोः प्रथमतृतीयाविति (खघयोः कगौ), 'क-ग-ङां च-ज-ञाः' इति कृते सिध्यति, वर्गग्रहणं वैचित्र्यार्थम् (दु० टी०)।

२. हेमकरस्यापि खघयोर्न प्रयोजनमिति, एतेन वर्गग्रहणबलाल्लाक्षणिकस्यापि भवतीत्यभिप्रायः (बि० टी०)।

**[रूपसिद्धि]**

१. **चकार**। कृ+परोक्षा– अट्। 'डु कृञ् करणे' (७।७) धातु से परोक्षा-संज्ञक परस्मैपद-प्रथमपुरुष - एकवचन अट् प्रत्यय, द्विर्वचन, अभ्याससंज्ञा, "ऋवर्णस्याकारः" (३।३।१६) से अभ्याससंज्ञक ऋ को अ, प्रकृत सूत्र से ककार को चकार तथा "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से ऋ को वृद्धि = आर्।

२. **चखान**। खन् + परोक्षा – अट्। 'खनु अवदारणे' (१।५८४) धातु से परोक्षासंज्ञक अट् प्रत्यय, द्विर्वचनादि, प्रकृत सूत्र से ख् को छ्, "द्वितीयचतुर्थयोः प्रथमतृतीयौ" (३।३।११) से छ् को च्, तथा "अस्योपधाया०" (३।६।५) से उपधादीर्घ।

३. **जगाम**। गम् + परोक्षा–अट्। 'गम्लृ गतौ' (१।२७९) धातु से परोक्षा-संज्ञक अट् प्रत्यय, द्विर्वचनादि, प्रकृत सूत्र द्वारा गकार को जकार तथा उपधादीर्घ।

४. **जघास**। अद् – घस् + परोक्षा – अट्। 'अद भक्षणे' (२।१) धातु से परोक्षासंज्ञक अट् प्रत्यय, "वा परोक्षायाम्" (३।४।८०) से अद्धातु को घस्लृ आदेश, लृ अनुबन्ध का प्रयोगाभाव, द्विर्वचनादि, प्रकृत सूत्र से घ् को झ्,

"द्वितीयचतुर्थयोः प्रथमतृतीयौ" (३।३।११) से झ् को ज् तथा धातुगत उपधा का दीर्घादेश।

५. **जुङ्वे**। ङु+परोक्षा –अट्। 'ङुङ् शब्दे' (१।४५८) धातु से परोक्षासंज्ञक परस्मैपद – प्रथमपुरुष– एकवचन 'ए' प्रत्यय, द्विर्वचन, अभ्याससंज्ञा, प्रकृत सूत्र द्वारा ङ् को ञ् तथा "स्वरादाविवर्णोवर्णान्तस्य धातोरियुवौ" (३।४।५५) से उकार को उवादेश ॥५१०।

## ५११. न कवतेश्चेक्रीयिते [३।३।१४]

### [सूत्रार्थ]

'कु' धातु के अभ्यास में कवर्ग को चवर्गादेश नहीं होता है चेक्रीयितसंज्ञक 'य' प्रत्यय के परवर्ती होने पर ॥५११।

### [दु० वृ०]

कवतेरभ्यासस्य चेक्रीयिते परे चवर्गो न भवति। कोकूयते खरः। सविकरणनिर्देशात् कौतिकुवत्योर्मा भूत् – चोकूयते ॥५११।

### [दु० टी०]

न कवतेः। 'कुङ् खुङ् गुङ् घुङ् ङुङ् शब्दे' (१।४५८) भौवादिकः, 'टु क्षु रु कु शब्दे' (२।१०) आदादिकः, 'कुङ् शब्दे' (५।१०९)। **गणपाठे** शब्दार्थत्वेऽप्येषां कवतिरव्यक्ते शब्दे, कौतिश्च शब्दमात्रे, कुवतिरार्तस्वरेऽभिधीयते। चेक्रीयितलुकि तु चोकवीति मतम्। 'ये' इति सिद्धेऽभ्यासत्वाच्चेक्रीयितमेव गृह्यते। य**च्चेक्रीयितग्रहणं तन्मन्दमतिबोधार्थम्**॥५११।

### [वि० प०]

न क०। कौतीत्यादि। 'टु क्षु रु कु शब्दे' (२।१०, कुङ् शब्दे ५।१०९) तुदादौ, कुङ् खुङ् गुङ् घुङ् ङुङ् शब्दे' (१।४५८) भ्वादौ। यद्यप्येते शब्दार्थाः पठ्यन्ते, तथापि कौतिः शब्दमात्रे, कुवतिरार्तस्वरे, कवतिरव्यक्ते शब्दे इति अर्थविशेषो दृश्यते, ततो भौवादिकपरिग्रहार्थः सविकरणनिर्देशो युक्तः। कोकूयते खरः। पुनः पुनरव्यक्तशब्दं करोतीत्यर्थः ॥५११।

### [बि० टी०]

न कवतेः। ततो भौवादिकपरिग्रहार्थो युक्तः, सविकरणनिर्देश इति। अतोऽर्थविशेषाद् धातोरित्यर्थः। ननु भौवादिकपरिग्रहणाद् अर्थान्तरपठितस्य निरासः फलं किमिति नोक्तम्? सत्यम्। अत्र **हेमकरेणो**क्तम्– रूपभेदार्थं न तिप् कृतः,

कथन्तर्हि अर्थभेदोऽस्ति तदर्थमित्यर्थः। ननु रूपभेदोऽपि प्रयोजनम्, तत् कुतोऽर्थभेदः प्रयोजनमेव केवलं **पञ्ज्यामुक्तम्**? नैवम्, यदि रूपभेदोऽपि प्रयोजनं तदा रूपभेदे हि 'कोकूयते – चोकूयते' इत्येव भविष्यति। ततश्च तिपूनिर्देशमन्तरेणापि कुङ् इति कृते 'टु क्षु रु कु शब्दे' (२।१०) इत्यस्य निषेधम् अङनुबन्धत्वात्, ततस्तस्य चोकूयते। आदादिक – भौवादिकयोः 'कोकूयते' इत्यनेन प्रकारेण रूपद्वयं भवत्येवेति **हृदयम्**। 'ये' इति सिद्धेऽभ्यासत्वाच्चेक्रीयितमिति लभ्यते। यच्चेक्रीयितग्रहणं **तन्मन्दमतिबोधार्थमिति टीकायाम्**॥५११।

**[समीक्षा]**

'कुङ् शब्दे' (१।४५८) धातु से यप्रत्ययान्त 'कोकूयते' शब्दरूप के सिद्ध्यर्थ अभ्यासवर्ती ककार को चकारादेश करने की आवश्यकता नहीं होती है, परन्तु उपरितन सूत्र (३।३।१३) से प्राप्त चवर्गादेश का निषेध करना आवश्यक होता है, इसे दोनों ही आचार्यों ने समानरूप में किया है। पाणिनि का सूत्र है – "न कवतेर्यङि" (अ० ७।४।६३)। पाणिनि ने चेक्रीयितशब्द का प्रयोग न करके साक्षात् विहित यङ् प्रत्यय का ही पाठ किया है। दोनों ने ही सूत्र में 'कवति' रूप का पाठ करके अदादि तथा तुदादिगणपठित 'कु' धातु का निषेध सूचित किया है। अतः उन दोनों धातुओं से 'चोकूयते' यह चवर्गादेशविशिष्ट शब्द ही साधु माना जाएगा। वृत्तिकार दुर्गसिंह ने कहा भी है – "सविकरणनिर्देशात् कौतिकुवत्योर्मा भूत्-चोकूयते"।

**[विशेष वचन]**

१. 'ये' इति सिद्धेऽभ्यासत्वाच्चेक्रीयितमेव गृह्यते, यच्चेक्रीयितग्रहणं तन्मन्दमतिबोधार्थम् (दु० टी०; बि० टी०)।

२. यद्यप्येते शब्दार्थाः पठ्यन्ते, तथापि कौतिः शब्दमात्रे, कुवतिरार्तस्वरे, कवतिरव्यक्ते शब्दे इत्यर्थविशेषो दृश्यते। ततो भौवादिकपरिग्रहार्थः सविकरणनिर्देशो युक्तः (वि० प०)।

३. ततश्च तिप्–निर्देशमन्तरेणापि 'कुङः' इति कृते 'टु क्षु रु कु शब्दे' (२।१०) इत्यस्य निषेधम् अङनुबन्धत्वात्। ततस्तस्य 'चोकूयते'। आदादिक भौवादिकयोः 'कोकूयते' इत्यनेन प्रकारेण रूपद्वयं भवत्येवेति हृदयम् (बि० टी०)।

**[रूपसिद्धि]**

१. **कोकूयते** खरः। कु + य + ते। 'पुनः पुनः कवते' इस अर्थ में 'कुङ खुङ गुङ घुङ ङुङ शब्दे' (१।४५८) धातु से "क्रियासमभिहारे यशब्दश्चेक्रीयितम्"

(३।१।२१) से य–प्रत्यय, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से धातु को द्विर्वचन, "कवर्गस्य चवर्गः" (३।३।१३) से ककार को चकारादेश की प्राप्ति, प्रकृत सूत्र से उसका निषेध, "गुणश्चेक्रीयिते" (३।३।२८) से अभ्यासगत उकार को गुण, "नाम्यन्तानां यणा - - - - - - -" (३।४।७०) से धातुगत उकार को दीर्घ, "ते धातवः" (३।२।१६) से 'कोकूय' की धातुसंज्ञा तथा उससे वर्तमानासंज्ञक परस्मैपद – प्रथमपुरुष– एकवचन 'ते' प्रत्यय ॥५११।

## ५१२. ह्रस्वः [३।३।१५]

**[सूत्रार्थ]**

अभ्याससंज्ञक शब्द के अन्त में विद्यमान दीर्घ स्वर को ह्रस्व आदेश होता है ॥५१२।

**[दु० वृ०]**

स्वरान्तस्याभ्यासस्य ह्रस्वो भवति। तस्थौ, निनीषति, लुलूषति, डुढौके ॥५१२।

**[दु० टी०]**

ह्रस्वः। नात्र सामर्थ्यप्राप्तेन स्वरेणाभ्यासो विशिष्यते व्यवच्छेद्याभावात्, अभ्यासश्च स्वरान्त एव सम्भवतीत्याह– स्वरान्तस्याभ्यासस्येति। ढौकृ– डुढौके। एवं व्येञ्– विव्याय। चैत्रीयितुं गोनदीयितुं नौयमानीयितुमिच्छति– चिचैत्रीयिषति, जुगोनदीयिषति, नुनौयमानीयिषति ॥५१२।

**[समीक्षा]**

'तस्थौ, बुभूषति, निनीषति' इत्यादि शब्दरूपों के साधनार्थ अभ्यासान्त में वर्तमान 'आ-ई-ऊ' स्वरों का ह्रस्वविधान वाञ्छित होता है। इसकी पूर्ति दोनों ही आचार्यों ने की है। पाणिनि का भी यही सूत्र है– "ह्रस्वः" (अ० ७।४।५९)। इस प्रकार उभयत्र समानता है।

**[रूपसिद्धि]**

१. **तस्थौ**। स्था + परोक्षा – अट्। 'ष्ठा गतिनिवृत्तौ' (१।२६७) धातु से परोक्षासंज्ञक परस्मैपद-प्रथमपुरुष-एकवचन अट् प्रत्यय, **"धात्वादेः षः सः"** (३।८।२४) से मूर्धन्य षकार को दन्त्य सकारादेश, **'निमित्तापाये नैमित्तिकस्याप्यपायः'** (का० परि० २७) इस न्याय के अनुसार ठकार को थकार, **"चण् परोक्षाचेक्रीयितसनन्तेषु"** (३।३।७) से स्था को द्विर्वचन, पूर्ववर्ती 'स्था' की अभ्याससंज्ञा, **"शिट्परोऽघोषः"** (३।३।१०) से 'था' का शेष, प्रकृत सूत्र द्वारा

दीर्घ को ह्रस्व, "द्वितीयचतुर्थयोः प्रथमतृतीयौ" (३।३।११) से थ् को त्, अट् को औ तथा आकार को औ– परवर्ती औ का लोप।

२. **निनीषति** । नी+सन्+ति । नेतुमिच्छति ।**'णीञ् प्रापणे'** (१।६००) से सन् प्रत्यय, द्विर्वचन, अभ्याससंज्ञक दीर्घ ईकार को ह्रस्व, दन्त्य सकार को मूर्धन्यादेश, 'निनीष' की धातुसंज्ञा, वर्तमानासंज्ञक प्रथमपुरुष–एकवचन 'ति' प्रत्यय, अन् विकरण तथा "अकारे लोपम्" (२।१।१०) से षकारोत्तरवर्ती अकार का लोप।

३. **लुलूषति** । लू+सन्+ति । लवितुमिच्छति । 'लूञ् छेदने' (८।९) धातु से सन्, "उवर्णान्ताच्च" (३।७।३२) से अनिट्, द्विर्वचनादि, प्रकृत सूत्र से ह्रस्व, मूर्धन्यादेश, धातुसंज्ञा तथा ति-विभक्तिकार्य।

४. **डुढौके** । ढौकृ+परोक्षा–ए । 'ढौकृ गतौ' (१।३३२) धातु से परोक्षासंज्ञक आत्मनेपद– प्रथमपुरुष- एकवचन 'ए' प्रत्यय, द्विर्वचनादि, ह्रस्व, चतुर्थ ढ् को तृतीय ड् वर्णादेश ॥५१२।

## ५१३. ऋवर्णस्याकारः [३।३।१६]

### [सूत्रार्थ)

अभ्याससंज्ञक ऋवर्ण के स्थान में अकारादेश होता है ॥५१३।

### [दु० वृ०]

अभ्यास-ऋवर्णस्याकारो भवति । ववृधे, चक्रतुः ॥५१३।

### [दु० टी०]

ऋवर्ण० । वर्णग्रहणं किमर्थम्, अभ्यासविकारत्वाद् दीर्घस्य ह्रस्वत्वे सति सिध्यति । कॄ विक्षेपे, गॄ निगरणे– चिकरिषति, जिगरिषति । नैवम्, अकार इति सूत्रे कृते उरित्यभेदे उकारोऽकार इत्यपि विप्रतिपद्येत । ऋतोऽकार इत्युक्तेऽपि **ऋतः सौत्रधातोर**भ्यासस्येति शङ्क्यते । किञ्च अचीक्लृपदिति । परत्वादन्तरङ्गत्वाच्च कृते ऋकारे पश्चाद् द्विर्वचनम्, ऋकारलृकारयोः सावर्ण्यं **लोकोपचाराद्** यतः ऋकारे उच्चार्यमाणे शक्तिवैकल्याद् लृकारस्य श्रुतिर्नान्यस्येति युक्तं वर्णग्रहणम् ॥५१३।

### [वि० प०]

ऋवर्ण० ।अथ किमर्थं वर्णग्रहणम्, 'दीर्घस्य ह्रस्वः' इति ह्रस्वे कृते सिध्यति । कॄ विक्षेपे– चिकरिषतीति ।तदयुक्तम्, एवं सति षष्ठ्या उरिति निर्देशः स्यात्, ततः प्रथमेयमभेदनिर्देशादिति मन्यमान उकारोऽकार इत्यपि वाक्यार्थमाशङ्केत, तर्हि तकारमुच्चारणार्थं कृत्वा 'ऋतोऽकारः' इति चेत् तथापि **ऋत इति सौत्रस्य**

धातोरभ्यासस्येति प्रतिपद्येत। अपि च ऋकारऌकारयोः सवर्णसंज्ञा **लोकोपचाराद्** अस्तीत्युक्तम्। तेन अचीक्लृपदिति कृपेरन्तरङ्गत्वाल्लृकारे कृते पश्चाद् द्विर्वचनम्, ततः सवर्णपरिग्रहार्थं वर्णग्रहणमन्तरेण ऌकारस्य कथमकारः स्यात्, कृपेरिनि संज्ञापूर्वकस्य विधेरनित्यत्वादिह नाम्युपधलक्षणो गुणो न भवति, रश्रुतेर्लश्रुतिरिति वचनात्, ऋकारस्य ऌकारश्चणि द्विर्वचनम्, ऋवर्णस्याकारः, अलोपे समानलोपादिना सन्वद्भावादित्त्वम्, **"दीर्घो लघोः"** (३।३।३६) इति दीर्घः ॥५१३।

**[समीक्षा]**

'ववृते, ववृधे, चक्रतुः' आदि द्विर्वचन वाले रूपों के सिद्ध्यर्थ अभ्यास के अन्त में वर्तमान ऋवर्ण के स्थान में अकारादेश करने की आवश्यकता होती है। इसका विधान दोनों ही आचार्यों ने किया है। पाणिनि का सूत्र है– "उरत्" (अ० ७।४।६६)। टीकाकार दुर्गसिंह तथा पञ्जिकाकार त्रिलोचनदास ने कहा है कि 'उरकारः' ऐसा सूत्र बनाए जाने पर अभेदबुद्धि से 'उः' को प्रथमान्त मान लेने पर 'उ' के भी स्थान में अकारादेश प्रवृत्त होने लगेगा, इसलिए 'ऋवर्णस्याकारः' यह सूत्र किया गया है। यदि 'ऋतोऽकारः' ऐसा सूत्र होता तो उक्त आशङ्का का समाधान हो जाता, परन्तु 'ऋत' इस सौत्र धातु के भी अभ्यास में रहने पर उसके स्थान में अकारादेश प्रवृत्त हो सकता है। फलतः उक्त दोनों में से कोई भी अन्यतर प्रकार यहाँ नहीं अपनाया गया है। दोनों ही आचार्यों ने 'ऋ-ऌ' वर्णों की सवर्णसंज्ञा में लोकव्यवहार को कारण माना है।

**[विशेष वचन]**

१. 'उरकारः' इति सूत्रे कृते उरित्यभेदे उकारोऽकार इत्यपि विप्रतिपद्येत। 'ऋतोऽकारः' इत्युक्तेऽपि ऋतः सौत्रधातोरभ्यासस्येति शङ्क्यते (दु० टी०; वि० प०)।

२. ऋकारऌकारयोः सावर्ण्यं लोकोपचारादस्तीत्युक्तम् (दु० टी०, वि० प०)।

**[रूपसिद्धि]**

१. **ववृधे**। वृध्+परोक्षा-ए। 'वृधु वृद्धौ' (१।४८५) धातु से परोक्षासंज्ञक आत्मनेपद–प्रथमपुरुष - एकवचन 'ए' प्रत्यय, "सर्वत्रात्मने" (३।५।२१) से अगुण, 'वृध्' को द्विर्वचन, अभ्याससंज्ञा, धकारलोप तथा अभ्यासान्तवर्ती ऋकार को अकारादेश।

२. **चक्रतुः**। कृ+अतुस्। 'डु कृञ् करणे' (७।७) धातु से परोक्षासंज्ञक

परस्मैपद-प्रथमपुरुष-द्विवचन 'अतुस्' प्रत्यय, 'कृ' धातु को द्विर्वचन, अभ्याससंज्ञा, अभ्यासान्तवर्ती 'ऋ' को अकारादेश, "कवर्गस्य चवर्गः" (३।३।१३) से क् को च्, कृ-धातुगत ऋ को रेफ तथा "रेफसोर्विसर्जनीयः" (२।३।६३) से सकार को विसर्गादेश ॥५१३।

## ५१४. दीर्घ इणः परोक्षायामगुणे [३।३।१७]

**[सूत्रार्थ]**

अगुण परोक्षासंज्ञक प्रत्यय के पर में रहने पर अभ्यासवर्ती इण् धातु को दीर्घादेश होता है॥५१४।

**[दु० वृ०]**

इणो धातोरभ्यासस्य परोक्षायामगुणे दीर्घो भवति। ईयतुः, ईयुः। कृते द्विर्वचने इयो बाधकं यत्वमिति वचनम्। अगुण इति किम् ? इयाय, इययिथ ॥५१४।

**[दु० टी०]**

दीर्घ०। परोक्षायामगुण इति भिन्नाधिकरणा सप्तमी परोक्षायां विभक्तौ योऽगुणप्रत्ययस्तस्मिन्नित्यर्थः। कृते द्विर्वचन इति स्वरविधिः स्वरे द्विर्वचननिमित्ते कृते द्विर्वचने पश्चात् स्वरविधिर्यत्वमियादेशस्य बाधकं समानलक्षणो दीर्घो नास्तीति वचनमित्यर्थः। इण ईरिति सिद्धे दीर्घग्रहणम् उत्तरार्थं परोक्षायामेवेणोऽभ्यासस्य सम्भवात् परोक्षाग्रहणम**प्युत्तरार्थमेव**, तेन 'बुभूषति, बोभूयते' इति सिद्धम्। 'इयाय, इययिथ' इति परत्वादियादेशे कृते गुणिन्यपि दीर्घः प्राप्नोति, सामर्थ्यप्राप्तेन स्वरेणाभ्यासो विशिष्यते, तेन तदन्तविधिरित्यपि न युक्तम् ॥५१४।

**[वि० प०]**

दीर्घः। ननु अगुणायामिति निर्देशो युज्यते, परोक्षायाः स्त्रीलिङ्गत्वात् ? तदयुक्तम्। नेयं समानाधिकरणे सप्तमी किन्तर्हि भिन्नाधिकरणे। परोक्षायां विभक्तौ योऽगुणप्रत्ययस्तस्मिन्नित्यर्थः। न विद्यते गुणो यस्मिन्निति विग्रहः। 'ईयतुः, ईयुः' इति "इणश्च" (३।४।५६) इति यादेशः। अथ किमर्थमिदम्, यावता **'स्वरविधिः स्वरे द्विर्वचननिमित्ते'** (३।८।३०) कृते द्विर्वचने पश्चाद् धातोरियादेशे सवर्णदीर्घत्वे च सिद्धम्– ईयतुः, ईयुरिति ? तदयुक्तम्, **"इणश्च"** (३।४।५६) इति वचनाद् इयादेशस्य बाधकं यत्त्वमस्तीत्याह– कृत इत्यादि। अगुण इत्यादि। इहापि स्वरविधित्वात् कृते द्विर्वचने धातोर्वृद्धिगुणौ, **"अभ्यासस्यासवर्णे"** (३।४।५६) इत्यभ्यासस्येयादेशः। थलि च 'नित्यात्वतां स्वरान्तानाम्' इत्यादिवचनादिट् ॥५१४।

**[समीक्षा]**

'ईयतुः, ईयुः' आदि शब्दरूपों के सिद्ध्यर्थ अभ्यासगत ह्रस्व इकार को दीर्घ ईकार के विधान की आवश्यकता होती है। दोनों ही आचार्यों ने इस वाञ्छित आदेश के लिए सूत्र बनाए हैं। पाणिनि का सूत्र है– "दीर्घ इणः किति" (अ० ७।४।६९)।

**[रूपसिद्धि]**

१. **ईयतुः**। इण् + परोक्षा – अतुस्। 'इण् गतौ' (२।१३) धातु से परोक्षासंज्ञक परस्मैपद-प्रथमपुरुष-द्विवचन 'अतुस्' प्रत्यय, द्विर्वचन, अभ्याससंज्ञक 'इ' को दीर्घ, "इणश्च" (३।४।५६) से मूलभूत 'इ' धातु को 'य्' आदेश तथा "रेफसोर्विसर्जनीयः" (२।३।६३) से विसगदिश।

२. **ईयुः**। इण् + उस्। 'इण् गतौ' (२।१३) धातु से परोक्षासंज्ञक प्रथमपुरुष-बहुवचन 'उस्' प्रत्यय, द्विर्वचन, "स्वरादाविवर्णो०" (३।४।५५) से मूलभूत 'इ' धातु को इय् आदेश, "समानः सवर्णे दीर्घीभवति परश्च लोपम्" (१।२।१) से समानलक्षण दीर्घ तथा स् को विसगदिश ॥५१४।

## ५१५. अस्यादेः सर्वत्र [३।३।१८]

**[सूत्रार्थ]**

गुणी तथा अगुण सभी परोक्षासंज्ञक प्रत्ययों के परे रहते अभ्यास के आदि में अकार को दीर्घ आदेश होता है॥५१५।

**[दु० वृ०]**

परोक्षायां सर्वत्र गुणिन्यगुणे चाभ्यासस्यादेरस्य दीर्घो भवति। आट, आटतुः, आटिथ। अस्येति किम् ? इयेष, उवोष। आदेरिति किम् ? पपाच ॥५१५।

**[दु० टी०]**

अस्या०। यस्य परोऽस्ति स आदिः, इह व्यपदेशिवद्भाव एव अकारेऽकारस्य लोपे प्राप्ते ऋकारे चारादेशे प्राप्ते दीर्घोऽयमुच्यते ॥५१५।

**[वि० प०]**

अस्यादेः। इयेषेति। **'इषु इच्छायाम्'** (५।७०), नाम्युपधलक्षणगुणे कृते पूर्ववदभ्यासस्येय् ॥५१५।

**[समीक्षा]**

'आट, आटतुः' इत्यादि शब्दरूपों के सिद्ध्यर्थ अभ्यासवर्ती ह्रस्व अकार को दीर्घ आकारादेश की अपेक्षा होती है। दोनों ही आचार्यों ने सूत्रों में इसका निर्देश किया है। पाणिनि का सूत्र है– "अत आदेः" (अ० ७।४।७०)।

**[रूपसिद्धि]**

१. **आट**। अट्+परोक्षा-अट्। 'अट गतौ' (१।१०२) धातु से परोक्षासंज्ञक परस्मैपद-प्रथमपुरुष-एकवचन 'अट्' प्रत्यय, द्विर्वचन, अभ्यासकार्य, प्रकृतसूत्र से ह्रस्व अकार को दीर्घ तथा "समानः सवर्णे दीर्घीभवति परश्च लोपम्" (१।२।१) से समानलक्षण दीर्घ-अलोप।

२. **आटतुः**। अट्+परोक्षा-अतुस्। 'अट गतौ' (१।१०२) धातु से परोक्षासंज्ञक परस्मैपद प्रथमपुरुष – द्विवचन 'अतुस्' प्रत्यय, द्विर्वचन, अभ्यासकार्य, दीर्घ तथा सकार को विसर्गादेश।

३. **आटिथ**। अट्+परोक्षा-थल्। 'अट गतौ' (१।१०२) धातु से परोक्षासंज्ञक परस्मैपद–मध्यमपुरुष – एकवचन 'थल्' प्रत्यय, इडागम, द्विर्वचन, अभ्यासकार्य तथा दीर्घादेश ॥५१५।

**५१६. तस्मान्नागमः परादिरन्तश्चेत् संयोगः [३।३।१९]**

**[सूत्रार्थ]**

दीर्घीभूत अभ्यास से पर में नकारागम होता है धातु से पूर्व, यदि धातु के अन्त में संयोगसंज्ञा हो एवं परोक्षासंज्ञक प्रत्यय पर में हो तो ॥५१६।

**[दु० वृ०]**

तस्माद् दीर्घीभूतादभ्यासात् परादिर्नकारागमो भवति, धातोरन्तश्चेत् संयोगः स्यात् परोक्षायां परतः। आनञ्ज, आनञ्जतुः, आनञ्जुः। आनर्च्छ, आनर्च्छतुः, आनर्च्छुः। तस्मादिति किम्? आञ्छ, आञ्छतुः, आञ्छुः। नायमकारलोपस्य बाधको दीर्घः। अन्तश्चेत् संयोग इति किम्? आटतुः ॥५१६।

**[दु० टी०]**

तस्मात्०। अन्जू-आनञ्ज। ऋच्छ-'आनर्च्छ' इत्यन्तरङ्गत्वाच्छस्य द्वित्वे प्रथमे च कृते द्विर्वचनम्; ततः **"ऋच्छ ऋतः"** (३।६।१७) इति गुणः। तस्मादित्यादि। आछि आयामे, समानलक्षणो दीर्घः। **"असन्ध्यक्षरयोः"** (३।६।४०) इत्यस्याविषयत्वान्न पुनस्तस्मादित्यनेन दीर्घमात्रं निर्दिश्यते व्यवच्छेद्याभावात् परस्यादित्वे अर्थाद्

आकारोऽभ्यासोऽन्तरोऽवधिरेवेति पञ्चम्यर्थोऽपि युज्यते। **आगमग्रहणं सुखार्थम्।** तस्य नोऽन्त इत्यास्ताम्, किमिह परादिरित्यनेन ? सत्यम्, **उत्तरार्थम्**। अन्यथा आरतुरित्यत्र **'स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवत्'** (का० परि० ९) इति ऋकारस्य रत्वे नकारागमः प्रसज्येत, न च स्वरत्वान्नकारागमोऽन्तरङ्गो वर्णत्वाद् रेफोऽन्तरङ्ग इति। अथ **'प्रकृत्याश्रितमन्तरङ्गम्'** (का० परि० ७२) इति मन्यते, एवं च सति **'निमित्ताभावे नैमित्तिकस्याप्यभावः'** (का० परि० २७) इति मतद्वयं विगणय्य वक्ष्यति– कथम् आरतुः, निमित्ताभावादिति। अथ **"ऋच्छ ऋतः"** (३।६।१७) इति दीर्घं कृत्वा अर्तेर्गुण उच्यते, वचनात् **प्रतिपत्तिगौरवं** स्यात्। अन्तसंयोग इति सिद्धे चेद्ग्रहणं **सुखार्थम्** ॥५१६।

## [वि० प०]

तस्मात्०। आनञ्जेति।अन्जू, अट्, द्विर्वचनम्, अभ्यासलोपः, **"असन्ध्यक्षरयोरस्य तौ तल्लोपश्च"** (३।६।४०) इति बाधित्वा **"अस्यादेः सर्वत्र"** (३।३।१८) इति दीर्घः। ततो नित्यत्वादन्तरङ्गत्वाच्च परलोपं बाधित्वा अनेन नकारागमः। एवम् आनर्च्छेति। ऋच्छेरन्तरङ्गत्वाच्छस्य द्विर्भावे कृतेऽघोषे प्रथमः इति चान्तसंयोगो भवति, ऋवर्णस्याकारे कृते ऋवर्णेऽरं बाधित्वा पूर्ववद् दीर्घः। ततः **"ऋच्छ ऋतः"** (३।६।१७) इति गुणे कृते नकारागमः। तस्मादित्यादि। **'आछि आयामे'** (१।५५), इदनुबन्धत्वान्नागमः। अभ्यासस्य ह्रस्व इति कृते समानलक्षणोऽत्र दीर्घः, तस्माद्ग्रहणेन दीर्घमात्रं न परामृश्यते, किन्तर्हि **"असन्ध्यक्षरयोरस्य"** (३।६।४०) इत्यादिना प्राप्तस्याकारलोपस्यापवादोऽनन्तरसूत्रविहितो दीर्घस्तेनेह न भवति। यदि पुनरन्तरङ्ग-त्वात् पूर्वसूत्रविहितो विशिष्टो दीर्घः प्रवर्तते इत्युच्यते, **अर्थवशाद् विभक्तिविपरिणामो** भविष्यति, तदा तस्माद् ग्रहणं **सुखार्थमिति** ॥५१६।

## [वि० टी०]

तस्माद् अन्तरङ्गत्वाच्चेति। ननु कथमिदमुक्तम्, वर्णत्वादकारलोप एवान्तरङ्ग इति ? नैवम्, **'वार्णात् प्राकृतं बलीयः'** (का० परि० ८१) प्रकृत्याश्रितत्वान्नकारागम एवान्तरङ्ग इति ऋच्छेरन्तरङ्गत्वादिति। ननु कथमिदमुक्तम्, विना द्विर्भावेण नकारागम एव न प्राप्नोति, ततोऽवश्यमेव द्विर्भावः पूर्वभावीति ? सत्यम्। अत्र **हेमकरेणोक्तम्**– द्विर्भावं प्रत्यन्तरङ्गचिन्ता कृता **'असिद्धं बहिरङ्गम्'** (का० परि० ४३) इति शङ्कादोषाद् एतेनास्याप्यन्तरङ्गेऽस्य परिभाषाया अवतारो नास्तीति प्रतिपादितम्। ऋवर्णेऽरं बाधित्वा पूर्ववद् दीर्घः।

ननु अरः पूर्वम् "**ऋच्छ ऋतः**" (३।६।१७) इति गुणः कथं न स्यात्, अथारो वर्णत्वादन्तरङ्गमिति चेद् '**वार्णात् प्राकृतं बलीयः**' (का० परि० ८१) इति गुण एव भवितुमर्हति ? सत्यम्, **पञ्जिकायां** कक्षानवतारे प्रलपितमिदम्। **वस्तुतस्तु** अरं बाधित्वा गुण एव प्राग् भवति। एवं च सति असन्ध्यक्षरविधेर्बाधकत्वादेवात्र दीर्घविधिः, न तु ऋवर्णे प्राप्तस्यारादेशस्येति, अत एव नायम् अकारलोपस्य बाधको दीर्घः इति यदुक्तं तदेव स्पष्टयति तस्माद्ग्रहणेनेत्यादि। ननु यद्यकारलोपबाधकाद् दीर्घान्नकारागमस्तदा 'आनृधे' इत्यादि कथम्, न ह्यत्राकारलोपस्य बाधको दीर्घः ? सत्यम्। अत्र **वैद्यः**–

**अलोपबाधात्मकमात्रदीर्घान्न नागमः किन्तु स पूर्वदीर्घात्।**
**अस्य प्रवृत्तिश्च न यत्र सिद्धिस्तेनानृधेकादिपदस्य सिद्धिः॥**

**अस्यार्थः**– नकारागमोऽलोपबाधात्मकमात्रदीर्घात् केवलाकारलोपबाधकदीर्घान्न भवति, किन्तु स नकारागमः पूर्वदीर्घात् तच्छब्दस्यानुभूतपरामर्शित्वात् पूर्वदीर्घश्चाकारलोपस्य बाधकः, अरोऽपि बाधकः। ननु आञ्छतुरित्यादौ समानदीर्घबाधको दीर्घः कथन्न स्याद् इत्याह– तस्येति। तस्य दीर्घस्य प्रवृत्तिर्यत्र न स्यात्तत्रैव दीर्घस्य सिद्धिः, तत्रैव पूर्वेण दीर्घः क्रियते। अत्र तु समानलक्षणो दीर्घोऽस्त्येव किन्तेन दीर्घविधानेनेति भावः। न च वक्तव्यम्– दीर्घसिद्धावपि नकारागमार्थं पूर्वेणापवादकत्वात् तद्बाधको दीर्घः स्यात्। यथा नाम्यन्तानामित्यत्र गुणनिषेधबाधनार्थं दीर्घस्यापि दीर्घ इति वक्ष्यति। यतस्तस्माद् ग्रहणव्यावृत्तिबलात् पूर्वेण न दीर्घः। तेन समानलक्षणबाधको दीर्घो भवति। अत एव "**अस्यादेः सर्वत्र**" (३।३।१८) इत्यत्र **हेमकरेणो**क्तम्। असन्ध्यक्षरविधेर्ऋवर्णेऽरोऽपि बाधकोऽयमिति। तेनेति अकारलोपबाधकत्वेन हेतुना आनृधेकादिपदसिद्धिरित्यर्थः।

ननु यदि दीर्घविधौ च तस्माद्ग्रहणव्यावृत्तिबलात् पूर्वेण दीर्घ इत्युक्तम्, तदा **पञ्जिकायां** यदि पुनरन्तरङ्गत्वादिति पक्षस्तदा तस्मादिति **सुखार्थं** भवतीति कथं वक्ष्यति ? सत्यम्, एवं तदानीं वक्तव्यम्– दीर्घो बाधको भवन्नेतत्प्रकरणविहितस्य कार्यस्य श्रुतत्वात्, तर्हि अरादेशस्य बाधको न भवितुमर्हतीति न देश्यम्। ऋकारे चेति वचनादेवारादेशस्य बाधको दीर्घः प्रतिपत्तव्यः। यद्येवं **वृत्तौ** नायमकारलोपस्य बाधको दीर्घ इति कथमुक्तम् ? सत्यम्। तत्र **पण्डितः**–

**अलोपबाधा यदिह प्रविष्टा प्रायेण यद् वा खलु भाविता सा।**
**तस्या अभावेऽपि ततः प्रसिद्धा सिद्धिङ्गतान्यानृध इत्यमूनि॥**

**अस्यार्थः**– यस्मादलोपबाधा प्रायेण प्रविष्टा तत् तस्मात् सा भाविता, अतस्तस्या अभावेऽपि बाधा प्रसिद्धेति यदुक्तम्, तत् समानदीर्घमपेक्ष्य मया पुनः पूर्वमुक्तोऽस्य **समाधिरे**वेति। ननु आगमग्रहणं किमर्थम्, परादिः परावयव इत्युक्ते आगमत्वलब्धेरिति। नैवम्, परस्यादिवर्णो नकारो भवतीत्युक्ते कथमागमत्वम्, नैवम्। तदा परादेरिति कुर्यात् ? सत्यम्। **सुखार्थ**मागमग्रहणमिति **टीकायां** चेद्ग्रहणमपि तथैव। नन्वन्तग्रहणं किमर्थम् अर्थादन्त एव संयोगो गम्यते। नैवम्, अन्तग्रहणाद् धात्वन्त एव संयोगो भवतीति प्रतिपत्त्यर्थम्, तेन आश्वान् मुखम् इत्यत्र क्वन्सुप्रत्ययेन संयोगे न भवतीति **पण्डितः**। तथा च **वार्त्तिकम्** –

**धात्वङ्गभावादिह चेन्न चान्तो विशेषणं स्यात् क्वन्सोश्च सङ्गे।**
**संयोगसत्त्वेन भवेन्नकार आश्वान् मुखं केवलमेव दोषः॥**

**अस्यार्थः**– अन्तग्रहणाद् धात्वङ्गसंयोगो यदि भवति, तदैवेह पुनः क्वन्सोः सङ्गे धात्वङ्गाभावात्, धात्वङ्गं चेद् अन्तविशेषणं न स्यात् तेन संयोगसत्त्वे एव नकारो न स्यात् कुतस्तत्र आश्वान् मुखमित्यत्र दोषः स्यात्॥५१६।

**[समीक्षा]**

'आनञ्ज, आनञ्जतुः, आनञ्जुः, आनर्च्छ, आनर्च्छतुः, आनर्च्छुः' इत्यादि शब्दरूपों के सिद्ध्यर्थ अभ्यास के बाद मूलभूत स्वरादि धातु से पूर्व नकारागम की आवश्यकता होती है। इसकी पूर्ति दोनों ही आचार्यों ने की है। पाणिनि का सूत्र है– "तस्मान्नुड् द्विहलः" (अ० ७।४।७१)। इस प्रसङ्ग में व्याख्याकारों ने 'हेमकर-वैद्य- पण्डित' आदि आचार्यों के भी विविध मत उद्धृत किए हैं।

**[विशेष वचन]**

१. नायमकारलोपस्य बाधको दीर्घः (दु० वृ०)।

२. वचनात् प्रतिपत्तिगौरवं स्यात् (दु० टी०)।

३. अन्तसंयोग इति सिद्धे चेद्ग्रहणं सुखार्थम् (दु० टी०)।

४. अर्थवशाद् विभक्तिविपरिणामो भविष्यति तदा तस्माद्ग्रहणं सुखार्थमिति (वि० प०)।

५. पञ्जिकायां कक्षानवतारे प्रलपितमिदम्। वस्तुतस्तु अरं बाधित्वा गुण एव प्राग् भवति (बि० टी०)।

६. सुखार्थमागमग्रहणमिति टीकायां चेद्ग्रहणमपि तथैव (बि० टी०)।

**[रूपसिद्धि]**

१. **आनञ्ज** । अन्ज् + परोक्षा - अट् । 'अन्जू व्यक्तिम्रक्षणगतिषु' (६।१७) धातु से परोक्षासंज्ञक परस्मैपद – प्रथमपुरुष – एकवचन अट् प्रत्यय, द्विर्वचन, अभ्यासकार्य, 'न्-ज्' का लोप, "अस्यादेः सर्वत्र" (३।३।१८) से दीर्घ (आ अन्ज् अ), प्रकृत सूत्र से न - आगम, न् को अनुस्वार तथा "वर्गे वर्गान्तः" (२।४।४५) से अनुस्वार को ञ् आदेश।

२. **आनञ्जतुः** । अन्ज् + परोक्षा – अतुस् । पूर्ववत् प्रक्रिया, स् को विसर्गादेश ।

३. **आनञ्जुः** । अन्ज् + परोक्षा – उस् । पूर्ववत् प्रक्रिया तथा सकार को विसर्गादेश ।

४. **आनर्च्छ** । ऋच्छ + परोक्षा – अट् । 'ऋच्छ गतौ' (१।२७९) धातु से परोक्षासंज्ञक परस्मैपद-प्रथमपुरुष – एकवचन 'अट्' प्रत्यय, द्विर्वचन, अभ्यासकार्य "ऋवर्णस्याकारः" (३।३।१६) से अभ्याससंज्ञक ऋ को 'अ' आदेश, "ऋच्छ ऋतः" से ऋ को गुण, "अस्यादेः सर्वत्र" (३।३।१८) से दीर्घ तथा प्रकृत सूत्र से नकारागम ।

५. **आनर्च्छतुः** । ऋच्छ् + परोक्षा – अतुस् । पूर्ववत् प्रक्रिया तथा सकार को "रेफसोर्विसर्जनीयः" (२।३।६३) से विसर्गादेश ।

६. **आनर्च्छुः** । ऋच्छ् + परोक्षा – उस् । पूर्ववत् प्रक्रिया तथा सकार को विसर्गादेश ।।५१६।

## ५१७. ऋकारे च [३।३।२०]

**[सूत्रार्थ]**

दीर्घीभूत अभ्यास से पर में नकारागम होता है ऋकार के तथा परोक्षासंज्ञक प्रत्यय के परवर्ती होने पर ।।५१७।

**[दु० वृ०]**

तस्माद् दीर्घीभूतादभ्यासात् परादिर्नकारागमो भवति ऋकारे च परोक्षायाम् । आनृधे, आनृधाते, आनृधिरे । कथम् आरतुः, निमित्ताभावात् ।।५१७।

**[वि० प०]**

ऋकारे ।**'ऋधु वृद्धौ'** (३।७९), ऋवर्णस्याकारो दीर्घश्च पूर्ववत् ।कथमित्यादि । **'ऋ सृ गतौ'** (१।२७४, २७५), अभ्यासऋवर्णस्याकारे कृते दीर्घत्वे च ऋकारे नागमः प्राप्नोतीति । अथ नित्यत्वाद् **"रमृवर्णः"** (१।२।१०) इति रेफे कृते

ऋकारो नास्तीति चेत् तथापि **'स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवत्'** (का० परि० ९) इति स्यात्, तदयुक्तम्। नकारागमो हि परादिर्भवति। परादित्वं च परावयवत्वमुच्यते, ततः परविधिरेवायं न पूर्वविधिरिति कथं स्थानिवद्भावस्यावकाशः। एतदर्थमेव पूर्वसूत्रे परादिग्रहणम्, अन्यथा तस्मान्नोऽन्तश्चेत् संयोग इत्येवं सूत्रमाचक्षीत, किं परादिग्रहणेनेति। अथ **'परान्नित्यं नित्यादन्तरङ्गं बलीयः'** (का० परि० ५१) इति रेफात् पूर्वमन्तरङ्गो नकारागम एव स्यात्। अन्तरङ्गत्वं पुनरस्य प्रकृत्याश्रितत्वात्। अथवा **'आगमादेशयोरागमविधिर्बलवान्'** (का० परि० ४०) इत्युच्यते इति चेदेवमस्तु, तथापि रत्वे पुनर्निमित्ताभावे नैमित्तिकस्याप्यभावो भविष्यतीत्याह– निमित्ताभावादिति। **अन्ये** तु **"ऋच्छ ऋतः"** (३।६।१७) इति सूत्रं पठन्ति, तदा किल ऋ–ऋच्छ ऋत इति विभागे ऋच्छेरर्तेश्च ऋतो गुण इति सूत्रार्थे ऋकाराभावादर्तेर्नकारागमो न भवति ॥५१७।

**[समीक्षा]**

'आनृधे, आनृधाते, आनृधिरे' आदि शब्दरूपों की सिद्धि तभी सम्भव है, जब अभ्यास के बाद धातुगत 'ऋ' से पूर्व नकार की उपस्थिति हो। कातन्त्रकार ने इसकी पूर्ति नकारागम से तथा पाणिनि ने नुडागम से की है– "तस्मान्नुड् द्विहलः" (अ० ७।४।७१)। इसके अनुसार दीर्घीभूत अभ्यास से उत्तरवर्ती दो हल् वाली अङ्गसंज्ञक धातु को नुडागम होता है। फलतः 'आनङ्ग, आनञ्ज' आदि में नुडागम प्रवृत्त होता है। 'आनृधे' इत्यादि शब्दरूपों में 'ऋध्' धातु दो हल् वाली नहीं है, अतः नुडागम बाधित होगा। इसका समाधान काशिकाकार आदि ने 'ऋ' में उसके एकदेश रेफ की कल्पना करके प्रस्तुत किया है– "ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते। तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति– आनृधतुः, आनृधुः" (काशिका० ७।४।७१)। कातन्त्रकार ने स्पष्टावबोधार्थ एक स्वतन्त्र सूत्र की रचना की है।

**[विशेष वचन]**

१. कथम् आरतुः, निमित्ताभावात् (दु० वृ०)।

२. नकारागमो हि परादिर्भवति। परादित्वं च परावयवत्वमुच्यते, ततः परविधिरेवायं न पूर्वविधिरिति (वि० प०)।

**[रूपसिद्धि]**

१. **आनृधे**। ऋध्+परोक्षा–ए। 'ऋधु वृद्धौ' (३।७९) धातु से परोक्षासंज्ञक

आत्मनेपद – प्रथमपुरुष – एकवचन 'ए' प्रत्यय, द्विर्वचन, अभ्यासकार्य, "ऋवर्णस्याकारः" (३।३।१६) से अभ्याससंज्ञक ऋ को अ, "अस्यादेः सर्वत्र" (३।३।१८) से दीर्घ तथा प्रकृत सूत्र से नकारागम।

२. **आनृधाते**। ऋधू + परोक्षा – आते। पूर्ववत् प्रक्रिया।

३. **आनृधिरे**। ऋधू + परोक्षा – इरे। पूर्ववत् प्रक्रिया ॥५१७।

## ५१८. अश्नोतेश्च [३।३।२१]

### [सूत्रार्थ]

दीर्घीभूत अभ्यास से पर में अश् धातु के रहने पर परादि नकारागम होता है, परोक्षासंज्ञक प्रत्यय के परवर्ती होने पर ॥५१८।

### [दु० वृ०]

तस्माद् दीर्घीभूतादभ्यासादश्नोतेश्च परादिर्नकारागमो भवति परोक्षायां परतः। व्यानशे, व्यानशाते, व्यानशिरे। सविकरणनिर्देशादश्नातेर्न स्यात्– आशतुः ॥५१८।

### [दु० टी०]

अश्नोतेः। पूर्ववत् संयोगार्थं वचनम्। अथ किमर्थमिदं प्रागन्तश्चेत् संयोग इत्युच्यते, अनेनैवासंयोगान्तस्य नागमो नास्तीति अनुमीयते न चाश्नोतिग्रहणम् अश्नातिनिवृत्त्यर्थम्, नाश्नातेरित्यकरणाद् ऋकारे चेति वचनाच्च ? सत्यम्। **प्रतिपत्तिगौरवं** स्यात् ॥५१८।

### [वि० प०]

अश्नोतेः। विपूर्वः 'अशू व्याप्तौ' (४।२२), रुचादित्वादात्मनेपदम् ॥५१८।

### [बि० टी०]

अश्नोतेः। अश्नोते रूपमिदम्, अश्नोतेरात्मनेपदित्वात् क्वन्सुर्न स्यात्। क्वन्सुर्हि परस्मैपदम्। तथा च– 'इतरः परस्मैपदमर्थात्' इति वक्ष्यति। तेनाश्नोतेश्चेति नकारो न भवति। ननु पूर्वसूत्रादन्तश्चेत् संयोग इत्यनेन किम् ? अश्नोतेश्चेति वचनादन्तसंयोगो लभ्यते, न चाश्नातिनिवृत्त्यर्थम् अश्नोतेश्चेति वचनम्, तदा पूर्वसूत्रे अश्नोतेश्चेति विदध्यात्। किञ्च ऋकारे चेति यद् वचनम्, तदेवात्रान्तसंयोगबाधकं भविष्यति ? सत्यम्। **प्रतिपत्तिगौरवनिरासार्थमिति** ॥५१८।

**[समीक्षा]**

वि–उपसर्गपूर्वक 'अशू व्याप्तौ' (४।१७) धातु से परोक्षासंज्ञक प्रत्ययों के आने पर विना नकारागम किए 'व्यानशे, व्यानशाते' आदि शब्दरूपों की सिद्धि सम्भव नहीं है। अतः दोनों ही आचार्यों ने सूत्रों में इसकी व्यवस्था की है। पाणिनि का सूत्र है– "अश्नोतेश्च" (अ० ७।४।७२)। 'अश्नोतेः' पाठ में नु–विकरण का उपादान है। अतः स्वादिगणपठित 'अशू व्याप्तौ' धातु ही ग्राह्य होगी, क्र्यादिगणपठित 'अश भोजने' (८।४३) धातु नहीं। उससे तो नकारागमरहित 'आश, आशतुः, आशुः' रूप सिद्ध होंगे।

**[रूपसिद्धि]**

१. **व्यानशे**। वि+अश्+परोक्षा–ए। वि–उपसर्गपूर्वक 'अशू व्याप्तौ' (४।१७) धातु से परोक्षासंज्ञक आत्मनेपद-प्रथमपुरुष-एकवचन 'ए' प्रत्यय, द्विर्वचन, अभ्याससंज्ञादि, दीर्घ, प्रकृत सूत्र से नकारागम तथा इकार को यकारादेश।

२. **व्यानशाते**। वि+अश्+परोक्षा– आते। पूर्ववत् प्रक्रिया।

३. **व्यानशिरे**। वि+अश्+परोक्षा–इरे। पूर्ववत् प्रक्रिया ॥५१८।

## ५१९. भवतेरः [३।३।२२]

**[सूत्रार्थ]**

परोक्षासंज्ञक प्रत्यय के परवर्ती होने पर अभ्याससंज्ञक 'भू' – घटित उकार को अकारादेश होता है ॥५१९।

**[दु० वृ०]**

भवतेरभ्यासस्य परोक्षायामकारो भवति। बभूव, बभूवतुः, बभूवुः ॥५१९।

**[दु० टी०]**

भवते०। भवतेरिति कर्तृनिर्देशात् कर्तर्येव परोक्षायामकारो न भावकर्मणोरिति। बुभूवे छात्रेण, अनुबुभूवे कम्बलो बटुना। **अन्य** आह– भुवोऽकार इति। तन्मतेन 'बभूवे, अनुबभूवे' इति भवितव्यम्। न च वक्तव्यम्– विकरणनिर्देशो भौवादिकपरिग्रहार्थ इति, नहि अस्तेर्भूभावस्य विकरणेन योगो दृश्यते, असार्वधातुकविषयत्वात् ॥५१९।

**[वि० प०]**

भवतेः। बभूवेति। **"भुवो वोऽन्तः परोक्षाद्यतन्योः"** (३।४।६२) इति वकारागमः। अभ्यासे **"द्वितीयचतुर्थयोः प्रथमतृतीयौ"** (३।३।११) इति बकारः।

अथ किमर्थं श्तिपा निर्देशः, 'भुवोऽद्' इत्युच्यताम्? सत्यम्। भवतेरिति कर्तृपदनिर्देशात् कर्तर्येव परोक्षायामकारो भवति, न भावकर्मणोरिति प्रदर्शनार्थः श्तिपा निर्देशः। तेन 'बुभूवे छात्रेण, अनुबुभूवे कम्बलो वटुना' इति सिद्धम्। **यस्त्वाह**– भुवोऽकार इति। **तन्मते** सामान्यनिर्देशाद् भावकर्मणोरप्यकारो भवत्येवेति। ननु कथमयं कर्तृनिर्देशो यावता धातुस्वरूपनिर्देशमात्रे **इकिश्तिपो** ज्ञापिता इति। तदयुक्तम्, नहीयता कर्तृनिर्देशापह्नवो युज्यते '**कर्तरि** कृतः' इत्युत्सर्गसिद्धशास्त्रस्य बाधितुमशक्यत्वात्। अन्यथा विकरणोऽपि कथं स्यात्।

न च वक्तव्यम्– शकारानुबन्धबलादेव विकरण इति, स हि सार्वधातुकार्थो न विकरणार्थः। यदाह **पाणिनिः– "तिङ्शित् सार्वधातुकम्"** (अ० ३।४।११३) इति। अत एव पकारोऽप्यनुवध्यते, अन्यथा हि "**सार्वधातुकमपित्**" (अ० १।२।४) इति वचनाद् अपानुबन्धं सार्वधातुकमगुणमेवेति, कथम् 'अर्तिकरोति-वेत्ति' इत्यादिषु श्तिपा निर्देशे गुणः स्यात्। ननु कर्ता हि नाम व्यापारवान् भवति, न चेह श्तिप्प्रत्ययेन निर्दिश्यमानस्य धातोर्व्यापार उपलभ्यते, तत् कथं कर्तृनिर्देश इति? तदयुक्तम्। अभिप्रायापरिज्ञानात्। कर्तृनिर्देशादिति कर्तरि निर्देशः कर्तृनिर्देश इति विग्रहार्थः। न तु कर्तृनिर्देश इत्येतदुक्तं भवति। कर्तरि सिद्धस्य भवतेरित्यस्य शब्दस्य निर्देशो न कर्ताऽत्र निर्दिष्ट इति। ननु विरुद्धमिदं कर्तरि निर्देशः शब्दस्य न तु कर्ताऽत्र निर्दिष्ट इति। न तावद् विरुद्धम्, **न हि सर्वे शब्दाः व्युत्पत्त्यर्थमभिदधति,** व्युत्पत्तीनां यथाकथञ्चिदपि संभवात्। तथाहि यथा यज्ञे एनं देयादिति यज्ञदत्तशब्दो व्युत्पाद्यते, न चात्र धातोर्व्युत्पत्त्यनुसारिणोऽर्थस्य प्रतीतिः, अपि तु कश्चित् पुरुष एव प्रतीयते। अथ संज्ञानुरोधादिह व्युत्पत्त्यर्थस्त्यज्यते अन्यथा संज्ञैव न गम्यते इति चेदेवं तर्हि धातुस्वरूपानुरोधादिहापि किमिति कर्ता न त्यज्यते, तर्ह्यत्र बाह्यस्य व्यङ्ग्यस्य कर्तुरवगमे धातुस्वरूपं प्रतीयते। उदाहरणमात्रं चात्र यज्ञदत्त इति। अन्येऽप्यत्र कृतव्युत्पत्तयो बहुलमर्थान्तरे दृश्यन्ते। यदपि **गेहेनर्दिनोक्तं नेतरै**रिदमुक्तमिति, तदप्ययुक्तम्। न ह्यनुक्तमिति त्यज्यते किन्तर्हि अयुक्तमिति गृह्यते किन्तर्हि युक्तमिति।

किञ्च **वृद्धकातन्त्रैरुक्तं** चेदं **शाकटायनोऽपि** पूर्वपक्षे स्थितः प्राह– भूव्यथोरदिति सूत्रे **केचिद्** भवतिव्यथोरदिति निर्देशमिच्छन्ति। तत्र किं न भवतीति कर्तृनिर्देशात् कर्तर्येव लिटि भुवोऽकारो भवति, न भावकर्मणोरिति। तस्मात् कर्तरि कृतः इत्युत्सर्गस्यानतिक्रमणीयत्वात् कर्तृनिर्देश एवायमित्यत्रार्थे यत्नः आस्थेयः, न पुनरस्यापह्नवो युक्त इति। यद्येवम्, "**अश्नोतेश्च**" (३।३।२१) इत्यत्रापि कर्तृनिर्देशो-

ऽस्तीति भावकर्मणोर्नकारागमो न स्यात् ? तदयुक्तम् । तत्र हि श्तिपूनिर्देशस्तद्रूपोपलक्षितधातुस्वरूपप्रतिपादनतया धात्वन्तरव्युदासाय भवन्नर्थान्तरार्थो भवितुमर्हतीति । एवमन्यत्रापि श्तिपः प्रयोजनं यथासंभवमूह्यम् । इह तु अनन्यार्थत्वात् तस्येदमुच्यते इति सर्वं **समञ्जसम्** ॥५१९।

**[वि० टी०]**

भवतेः । **"कर्तरि कृत्"** (४।६।४६) इत्युत्सर्गशास्त्रस्य बोधितत्वादिति । ननु इकिश्तिपो ज्ञापकादेव सिद्धाः, ततश्चाख्याते विहिता अपि भवितुमर्हन्तीति । नैवम्, शकारानुबन्धबलात् कृत्प्रकरणं बोद्धव्यमिति कृत्त्वमविरुद्धम् । न च वक्तव्यम्, विकरणनिर्देशो भौवादिकपरिग्रहार्थ इति, न हि अस्तेर्भुवो विकरणेन योगो दृश्यते, असार्वधातुकविषयत्वादिति, **टीकायां** विकरणनिर्देशेनेति । यस्य विकरणान्तरं सम्भवति स एव व्यावृत्यते, अस्तेरादेशस्य भुवो विकरणाभावः कुतो व्यावृत्तिविषय इति । तदेव **पण्डितेनोक्तम्** –

**भुवोऽस्तिजातस्य तु बाधनाय न स्यात् कथं वा भवति प्रयोगः।**
**असंभवो वैकरणो भुवोऽस्तेर्बाधाद्वयोर्वैकरणोऽस्ति यत्र ॥५१९।**

**[समीक्षा]**

'बभूव, बभूवतुः, बभूवुः' इत्यादि द्विर्वचनघटित शब्दरूपों के सिद्ध्यर्थ अभ्याससंज्ञक उकार को अकारादेश करने की आवश्यकता होती है। इसकी पूर्ति पाणिनि तथा शर्ववर्मा दोनों ही आचार्यों ने समान सूत्र बनाकर की है। पाणिनि का सूत्र है– "भवतेरः" (अ० ७।४।७३)। अतः उभयत्र समानता है। इस सूत्र के 'भुवोऽत्, भुवोऽकारः' इत्यादि न्यासों की भी कल्पना आचार्यों द्वारा की गई है। वृद्धकातन्त्र आचार्यों द्वारा उद्धृत मत का शाकटायन द्वारा जो समर्थन किया गया है, उसकी भी यहाँ चर्चा की गई है। प्रसङ्गतः व्युत्पत्तिलभ्य अर्थों की अर्थान्तरपरता भी दिखाई गई है। गेहेनर्दी (पतञ्जलि) के भी एक अभिमत को उचित नहीं ठहराया गया है।

**[विशेष वचन]**

१. विकरणनिर्देशो भौवादिकपरिग्रहार्थ इति, नहि अस्तेर्भूभावस्य विकरणेन योगो दृश्यतेऽसार्वधातुकविषयत्वात् (दु० टी०)।

२. भवतेरिति कर्तृपदनिर्देशात् कर्तर्येव परोक्षायामकारो भवति, न भावकर्मणोरिति प्रदर्शनार्थः श्तिपा निर्देशः (वि० प०)।

३. यस्त्वाह 'भुवोऽकारः' इति, तन्मते सामान्यनिर्देशाद् भावकर्मणोरप्यकारो भवत्येवेति (वि० प०)।

४. कर्ता हि नाम व्यापारवान् भवति (वि० प०)।

५. न हि सर्वे शब्दा व्युत्पत्त्यर्थमभिदधति, व्युत्पत्तीनां यथाकथंचिदपि सम्भवात् (वि० प०)।

६. अन्येऽप्यत्र कृतव्युत्पत्तयो बहुलम् अर्थान्तरे दृश्यन्ते। यदपि गेहेनर्दिनोक्तं नेतरैरिदमुक्तमिति, तदप्ययुक्तम् (वि० प०)।

७. वृद्धकातन्त्रैरुक्तं चेदं शाकटायनोऽपि पूर्वपक्षे स्थितः प्राह – भूव्यथोरदिति (वि० प०)

८. कर्तरि कृत इत्युत्सर्गस्यानतिक्रमणीयत्वात् कर्तृनिर्देश एवायम् इत्यत्रार्थे यत्न आस्थेयः, न पुनरस्यापह्नवो युक्त इति (वि० प०)।

९. एवमन्यत्रापि श्तिपः प्रयोजनं यथासम्भवमूह्यम्। इह त्वनन्यार्थत्वात् तस्येदमुच्यते इति सर्वं समञ्जसम् (वि० प०)।

**[रूपसिद्धि]**

१. **बभूव**। भू+परोक्षा – अट्। 'भू सत्तायाम्' (१।१) धातु से परोक्षासंज्ञक प्रथमपुरुष – एकवचन अट्-प्रत्यय, "भुवो वोऽन्तः परोक्षाद्यतन्योः" (३।४।६१) से भू के अन्त में वकार, द्विर्वचन, पूर्ववर्ती 'भू' की अभ्याससंज्ञा, दीर्घ को ह्रस्व, भकार को बकार तथा प्रकृत सूत्र से उकार को अकार।

२. **बभूवतुः**। भू+परोक्षा – अतुस्। पूर्ववत् प्रक्रिया तथा "रेफसोर्विसर्जनीयः" (२।३।६३) से सकार को विसर्गादेश।

३. **बभूवुः**। भू+परोक्षा – उस्। पूर्ववत् प्रक्रिया तथा सकार को विसर्गादेश ॥५१९।

## ५२०. निजिविजिविषां गुणः सार्वधातुके [३।३।२३]

**[सूत्रार्थ]**

'निज्-विज्-विष्' धातुओं के अभ्यास में विद्यमान इकार को गुणादेश होता है, सार्वधातुकसंज्ञक प्रत्ययों के परे रहते ॥५२०।

**[दु० वृ०]**

निज्यादीनामभ्यासस्य सार्वधातुके परे गुणो भवति, अर्थाद् इकारस्य। नेनेक्ति, नेनिज्यात्। वेवेक्ति, वेविज्यात्। अनेनेक्, अवेवेक्। वेवेष्टि, वेवेष्टु ॥५२०।

[दु० टी०]

निजिविजि० । निजामिति कृत्वा वृच्छब्द आद्रियताम्, बहुवचनेन च **'निजिर् शौचपोषणयोः, विजिर् पृथग्भावे, विष्लृ व्याप्तौ'** (२।८१,८२,८३) एते त्रय एवावसीयन्ते । किन्तु **प्रतिपत्तिगौरवं** स्यात् । एदिति सिद्धे गुणग्रहणं **स्पष्टार्थम्।** अभ्यासविकारत्वाद् व्यञ्जनलोपे सतीकारस्य एकार इति भावः । अनूलुकीति सिद्धे सार्वधातुकमपि तथैव ॥५२०।

[वि० प०]

निजि० । अर्थादिकारस्येति । कथमेतदिह विशेषाभावाद् व्यञ्जनस्यैव कथं न स्याज्जकारस्य तालव्यस्यैकारः षकारस्य मूर्धन्यस्य अरिति । तथा च व्यञ्जनस्य गुणनिषेधार्थं नाम्यन्तयोरिति नामिग्रहणं वक्ष्यति । न चेह तदस्तीति । तस्माद् विशेषविधित्वाद् अभ्यासलोपापवादो गुण एव स्यात् । नैतदेवम्, इहाभ्यास-विकारेष्वपवादो नोत्सर्गं बाधते इति अनागमग्रहणेन ज्ञापयिष्यति । तेनाभ्यासलोपे वर्णान्तस्य विधिरिति न्यायादिकारस्यैव गुण इत्यदोषः । **'निजिर् शौचपोषणयोः, विजिर् पृथग्भावे, विष्लृ व्याप्तौ'** (२।८१,८२,८३), जुहोत्यादित्वाद् द्विर्वचनं यथायोगं **"चवर्गस्य किरसवर्णे"** (३।६।५५) षाट्टवर्गश्च भवति ॥५२०।

[वि० टी०]

निजि० । निजामिति बहुवचने गणे **वृत्करणे** निजिविजिविषस्त्रय एवावसीयन्ते, किन्तु **प्रतिपत्तिगौरवं** स्यात् । एदिति सिद्धे गुणग्रहणं **स्पष्टार्थम्** । अनूलुकीति कृते सिद्धे सार्वधातुकग्रहणं तथैवेति **टीका** । वर्णान्तस्य विधिरिति न्यायादिकारस्यैवेति **पञ्जिकायाम्** । अत्रारो गुणस्यैकदेशेनान्तरतमं कोऽपि स्थानी विद्यत इति न स्यात् । योऽपि यकारः सोऽपि लुप्तः, अतो न अर् गुणो भवितुमर्हति, किन्त्वकारस्य ओकारस्य गुणस्यैकदेशान्तरतमो विद्यते । तथा च एकारस्यैकारस्तत्र वर्णान्तस्य विधिरित्यनेन इकारस्यैकारो न तु ओकारस्यौकार इत्यर्थः । ननु निव्योर्गुणः सार्वधातुके स्यादिति विप्रतिपद्येत, सार्वधातुके योऽभ्यास इत्यपि **प्रतिपत्तिगौरवं** स्यात् ॥५२०।

[समीक्षा]

'निज्–विज्–विष्' धातुओं से वर्तमाना आदि सार्वधातुकसंज्ञक प्रत्ययों में 'नेनेक्ति, वेवेक्ति, वेवेष्टि' इत्यादि शब्दरूपों के सिद्ध्यर्थ अभ्यासवर्ती इकार को एकारादेश की अपेक्षा होती है । इसी की पूर्ति कातन्त्रकार ने प्रकृत सूत्र द्वारा की है । पाणिनि का एतदर्थ सूत्र है – "निजां त्रयाणां गुणः श्लौ" (अ० ७।४।७५) ।

टीकाकारों ने 'गुणः' के स्थान में 'एत्' की तथा 'सार्वधातुके' के स्थान में 'अनूलुकि' पाठ की उद्‌भावना तो की है, परन्तु व्याख्यानबल से सूत्रकार के ही पाठ को सङ्गत बताया है।

**[विशेष वचन]**

१. निजामिति कृत्वा वृच्छब्द आद्रियताम्, बहुवचनेन च निजिर् - - विजिर् - - - विष्लृ - - । एते त्रय एवावसीयन्ते, किन्तु प्रतिपत्तिगौरवं स्यात् (दु० टी०)।

२. एदिति सिद्धे गुणग्रहणं स्पष्टार्थम्, अनूलुकीति सिद्धे सार्वधातुकमपि तथैव (दु० टी०, बि० टी०)।

३. अभ्यासलोपे वर्णान्तस्य विधिरिति न्यायादिकारस्यैव गुण इत्यदोषः (वि० प०)।

**[रूपसिद्धि]**

१. **नेनेक्ति**। निज् + अनूलुक्+ ति। 'निजिर् शौचपोषणयोः' (२।८१) धातु से वर्तमानासंज्ञक परस्मैपद-प्रथमपुरुष-एकवचन 'ति' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, "अदादेर्लुग् विकरणस्य" (३।४।९२) से उसका लुक्, "जुहोत्यादीनां सार्वधातुके" (३।३।८) से द्विर्वचन, अभ्यासकार्य, प्रकृत सूत्र से अभ्यासवर्ती इकार को गुण, "नामिनश्चोपधायाः" (३।५।२) से मूलभूत धातुगत इकार को गुण तथा "चवर्गस्य किरसवर्णे" (३।६।५५) से जकार को ककारादेश।

२. **नेनिज्यात्**। निज् + सप्तमी - यात्। 'निजिर् शौचपोषणयोः' (२।८१) धातु से सप्तमीसंज्ञक परस्मैपद-प्रथमपुरुष-एकवचन 'यात्' प्रत्यय, अन्-लुक्, द्वित्व, अभ्याससंज्ञादि, अभ्याससंज्ञक इकार को गुण तथा मूल धातुगत इकार को "सप्तम्यां च" (३।५।२३) सूत्रद्वारा गुण का निषेध।

३. **वेवेक्ति**। विज् + अनूलुक्+ ति। 'विजिर् पृथग्भावे' (२।८२) धातु से वर्तमानासंज्ञक तिप्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

४. **वेविज्यात्**। विज् + सप्तमी-यात्। 'विजिर् पृथग्भावे' (२।८२) धातु से सप्तमीसंज्ञक यात् - प्रत्यय तथा अन्य प्रक्रिया 'नेनिज्यात्' की तरह।

५. **अनेनेक्**। अट् + निज् + ह्यस्तनी-दि। 'निजिर् शौचपोषणयोः' (२।८१) धातु से ह्यस्तनीसंज्ञक परस्मैपद-प्रथमपुरुष-एकवचन 'दि' प्रत्यय, "अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु" (३।८।१६) से धातुपूर्व अडागम, अनूलुक्,

द्वित्व, दोनों इकारों को गुण, "चवर्गस्य किरसवर्णे" (३।६।५५) से जकार को ककार तथा "व्यञ्जनाद् दिस्योः" (३।६।४७) से दि-प्रत्यय का लोप।

६. **अवेवेक्**। अट् + विज् + ह्यस्तनी–दि। 'विजिर् पृथग्भावे' (२।८२) धातु से ह्यस्तनीसंज्ञक दिप्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

७. **वेवेष्टि**। विष् + अनूलुक् + ति। 'विष्लृ व्याप्तौ' (२।८३) धातु से वर्तमानासंज्ञक प्रथमपुरुष-एकवचन ति-प्रत्यय, अन् विकरण, उसका लुक् तथा अन्य प्रक्रिया पूर्ववत्।

८. **वेवेष्टु**। विष् + अनूलुक् + पञ्चमी–तु। अन्य प्रक्रिया पूर्ववत्।।५२०।

## ५२१. भृञ्हाङ्माङामित् [३।३।२४]

### [सूत्रार्थ]

'भृञ् – हाङ्-माङ्' इन तीन धातुओं के अभ्यास में विद्यमान अकार को इकारादेश होता है, सार्वधातुकसंज्ञक प्रत्यय के पर में रहने पर।।५२१।

### [दु० वृ०]

भृञ्हाङ्माङामभ्यासस्य सार्वधातुके परे इद् भवति। बिभर्त्ति, बिभृयात्। जिहीते, अजिहीत। मिमीते, अमिमीत।।५२१।

### [दु० टी०]

भृञ्०। हाङिति ङकारोपादानाद् **'ओ हाक् त्यागे'** (२।७१) इत्यस्य न भवति, जहाति। भृञ्माङोस्त्वनुबन्धो **विस्पष्टार्थ** एव भवति, **"जुहोत्यादीनां सार्वधातुके"** (३।३।८) इत्यभ्यासस्य सम्भवात्।।५२१।

### [वि० प०]

भृञ्०। इहापि पूर्ववद् द्विर्वचनम् **"उभयेषामीकारो व्यञ्जनादावदः"** (३।४।४४) इति हाङ्माङोरीत्वम्, ह्यस्तन्यामडागमः।।५२१।

### [बि० टी०]

भृञ्०। भृञ्हाङिति ङकारोपादानाद् **'ओ हाक् त्यागे'** (२।७१) इत्यस्य न ग्रहणम्। भृञ्-हाङोर्ञङानुबन्धौ विस्पष्टार्थाविति **टीकायाम्**। अत्रैव **वार्त्तिकः** –

**हाङो ङकारो हि विशेषणार्थस्त्यागार्थहाधातुरनेन हेयः।**
**तदन्ययोः सम्भवदर्शनार्थमस्तीति संज्ञाबलजा द्विरुक्तिः।।**

इति सुगमम्।।५२१।

**[समीक्षा]**

'बिभर्त्ति, जिहीते, मिमीते' इत्यादि 'भृञ्–हाङ्–माङ्' इन तीन धातुओं के शब्दरूपों की सिद्धि के लिए अभ्यास में इकारादेश की आवश्यकता होती है। इसी की पूर्ति कातन्त्रकार ने सूत्र में तीनों धातुओं का पाठ करके की है। पाणिनि ने पूर्ववर्ती (अ० ७।४।७५) सूत्र में जिस प्रकार 'निजाम्' पद पढ़कर उससे तीन धातुओं का ग्रहण किया है, उसी प्रकार प्रकृत "भृञामित्" (अ० ७।४।७६) सूत्र में 'भृञाम्' पद से तीन धातुओं का बोध कराया है। कातन्त्रीय व्याख्याकार इस प्रकार के निर्देश को प्रतिपत्तिगौरवाधायक मानते हैं। अतः उनकी दृष्टि में आचार्य शर्ववर्मा का सूत्रपाठ समीचीन है। तीनों धातुओं के अनुबन्ध स्पष्टार्थक हैं।

**[विशेष वचन]**

१. हाङिति ङकारोपादानाद् 'ओ हाक् त्यागे' (२।७१) इत्यस्य न भवति (दु० टी०, बि० टी०)।

२. भृञ्माङोस्त्वनुबन्धो विस्पष्टार्थ एव भवति (दु० टी०, बि० टी०)।

**[रूपसिद्धि]**

१. **बिभर्त्ति**। भृ + अन्लुक् + वर्तमाना–ति। 'डु भृञ् धारणपोषणयोः' (२।८५) धातु से वर्तमानासंज्ञक परस्मैपद–प्रथमपुरुष–एकवचन ति–प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, "अदादेर्लुग् विकरणस्य" (३।४।९२) से उसका लुक्, द्वित्व, अभ्याससंज्ञा, "ऋवर्णस्याकारः" (३।३।१६) से अभ्याससंज्ञक ऋकार को अकार, "द्वितीयचतुर्थयोः प्रथमतृतीयौ" (३।३।११) से भकार को बकार, प्रकृत सूत्र से अकार को इकार तथा "नाम्यन्तयो०" (३।५।१) इत्यादि से मूलभूत धातुगत ऋ को गुणादेश।

२. **बिभृयात्**। भृ + अन्लुक् + सप्तमी–यात्। "सप्तम्यां च" (३।५।२३) से अगुण तथा अन्य प्रक्रिया पूर्ववत्।

३. **जिहीते**। हा + अन्लुक् + ते। 'ओ हाङ् गतौ' (२।८७) धातु से वर्तमानासंज्ञक आत्मनेपद–प्रथमपुरुष–एकवचन 'ते' प्रत्यय, अन् का लुक्, द्वित्व, अभ्याससंज्ञा, ह्रस्व, हकार को जकार, प्रकृत सूत्र से इत्त्व तथा "उभयेषामीकारो व्यञ्जनादावदः" (३।४।४४) से मूलभूत धातुगत आकार को ईकारादेश।

४. **अजिहीत**। हा + अन्लुक् + ह्यस्तनी–त। 'ओ हाङ् गतौ' (२।८७) धातु से ह्यस्तनीसंज्ञक त-प्रत्यय, अडागम तथा अन्य प्रक्रिया पूर्ववत्।

५. **मिमीते**। मा+अनुलुक्+वर्तमाना–ते। 'माङ् माने शब्दे च' (२।८६) धातु से वर्तमानासंज्ञक 'ते' प्रत्यय, अन् विकरण, उसका लुक्, द्वित्व, अभ्याससंज्ञा, ह्रस्व, प्रकृत सूत्र से इत्त्व, तथा मूलधातुगत आकार को ईकारादेश।

६. **अमिमीत**। अट्+माङ्+ह्यस्तनी–त। 'माङ् माने शब्दे च' (२।८६) धातु से ह्यस्तनीसंज्ञक आत्मनेपद-प्रथमपुरुष-एकवचन त-प्रत्यय, अडागम तथा अन्य प्रक्रिया पूर्ववत्॥५२१।

## ५२२. अर्त्तिपिपर्त्त्योश्च [३।३।२५]

**[सूत्रार्थ]**

'ऋ' तथा 'पृ' धातु के अभ्याससंज्ञक अकार को इकारादेश होता है। सार्वधातुकसंज्ञक प्रत्यय के परे रहते॥५२२।

**[दु० वृ०]**

अनयोरभ्यासस्य सार्वधातुके परे इद् भवति। इयर्त्ति, इयृयात्। पिपर्त्ति, पिपृयात्। पृथग्योगो वैचित्र्यार्थः॥५२२।

**[दु० टी०]**

अर्त्ति०। **'ऋ सृ गतौ, पृ पालनपूरणयोः'** (१।२७४,२७५; २।७०) ऋपृभृञ्-हाङ्माङामिदिति सिद्धे पृथग्योगस्तिप्निर्देशश्च **सुखार्थः**॥५२२।

**[वि० प०]**

अर्त्ति०। **'ऋ सृ गतौ, पृ पालनपूरणयोः'** (१।२७४, २७५; २।७०) एतावपि जुहोत्यादिकौ अर्त्तेरिकारे कृते **"अभ्यासस्यासवर्णे"** (३।४।५६) इतीय्। 'इयृयात्' इति यात् सप्तम्याः॥५२२।

**[बि० टी०]**

अर्त्ति०। अर्त्तीत्यत्र द्विर्वचनाभावः सूत्रत्वात्। अथ द्विर्वचनविकरणनिर्देशात् सामान्येन भौवादिकस्यापि ऋधातोरभ्यासस्य न कथं दीर्घः? नैवम्, सार्वधातुकेऽ-भ्यासस्याभावात्। ननु चेक्रीयितलुकि अर्त्तीत्यादौ दीर्घः स्यात्? सत्यम्, सार्वधातुके योऽभ्यासस्तस्यैव दीर्घः श्रुतत्वात्। अत्र सार्वधातुकनिमित्तात् प्राक् प्रत्ययलोपलक्षणन्यायाच्चेक्रीयिते द्विर्वचनं जुहोत्यादिकस्य ऋधातोर्ग्रहणेऽपि स एव न्याय इति। अत एव **पञ्जीकृता** पिपर्त्तिना साहचर्याद् आदादिकस्य ग्रहणमिति नोक्तम्? तथा च **टीकायाम्**– 'ऋपृभृञ्हाङ्माङामित्' इति सिद्धे पृथग्योगस्तिब्निर्देशश्च **सुखार्थ** इति॥५२२।

**[समीक्षा]**

'ऋ – पॄ' धातुओं से अभ्याससंज्ञक अकार को इकारादेश विना किए 'इयर्त्ति–पिपर्त्ति' आदि शब्दरूप सिद्ध नहीं हो सकते, अतः दोनों ही आचार्यों ने इसका समानरूप में निर्देश किया है। पाणिनि का भी यही सूत्र है– "अर्त्तिपिपर्त्योश्च" (अ० ७।४।७७)। पूर्ववर्ती सूत्र के साथ इस सूत्र को भी मिलाकर पढ़ना चाहिए था, परन्तु पृथक् रूप में इस सूत्र को सुखपूर्वक अवबोधार्थ पढ़ा गया है। टीकाकार के इस विचार की अपेक्षा वृत्तिकार दुर्गसिंह का उल्लेख अधिक समीचीन है, जिसमें इस पृथक् योग को वैचित्र्यार्थ बताया गया है।

**[विशेष वचन]**

१. पृथग्योगो वैचित्र्यार्थः (दु० वृ०)।

२. पृथग्योगस्तिब्निर्देशश्च सुखार्थः (दु० टी०)।

**[रूपसिद्धि]**

१. **इयर्त्ति**। ऋ +अनूलुक् + वर्तमाना – ति। 'ऋ सृ गतौ' (२।७४) धातु से वर्तमानासंज्ञक परस्मैपद-प्रथमपुरुष-एकवचन ति–प्रत्यय, अन् विकरण, उसका लुक्, द्विर्वचन, "ऋवर्णस्याकारः" (३।३।१६) से अभ्याससंज्ञक ऋकार को इकार, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से मूल धातु को गुण तथा "अभ्यासस्यासवर्णे" (३।४।५६) से इकार को इयादेश।

२. **इयृयात्**। ऋ+ अनूलुक् + सप्तमी–यात्। 'ऋ गतौ' (२।७४) धातु से सप्तमीसंज्ञक यात्-प्रत्यय, अनूलुक्, "सप्तम्यां च" (३।५।२३) से धातु को अगुण तथा अन्य प्रक्रिया पूर्ववत् ॥५२२।

३. **पिपर्त्ति**। पॄ + अनूलुक् + वर्तमाना –ति। 'पॄ पालनपूरणयोः' (२।७०) धातु से वर्तमाना ति-प्रत्यय, अनूलुक्, द्विर्वचन, ऋ को अ, अ को इ तथा मूलधातुगत ऋकार को गुणादेश।

४. **पिपृयात्**। पॄ + यात् (सप्तमी)। 'पॄ पालनपूरणयोः' (२।७०) धातु से सप्तमीसंज्ञक यात् – प्रत्यय, "सप्तम्यां च" (३।५।२३) से धातु को अगुण तथा अन्य प्रक्रिया पूर्ववत् ॥५२२।

# ५२३. सन्यवर्णस्य [३।३।२६]

**[सूत्रार्थ]**

सन् प्रत्यय के परे रहते अभ्याससंज्ञक अकार को इकारादेश होता है ॥५२३।

**[दु० वृ०]**

सनि परे योऽभ्यासस्तस्यावर्णस्येद् भवति । पिपक्षति, पिपासति । सन्यभ्यासस्येति किम् ? पापचिषते ॥५२३।

**[दु० टी०]**

सन्य० । पापचिषते इति । पापचितुमिच्छतीति वाक्ये सन् **"यस्यानति"** (३।६।४८) इति चेक्रीयितलोपे इडागमः । वर्णग्रहणं **निर्देशसुखप्रतिपत्त्यर्थम्,** अन्यथा अभ्यासविकारत्वाद् दीर्घस्य ह्रस्वत्वे पिपासतीति सिध्यति । **'पूर्वपरयोः परो विधिर्बलवान्'** (कलाप०, पृ० २३१।५०) इति परशब्दस्येष्टविषयत्वाद् व्यञ्जनावशेषादिके कृतेऽप्येवम् एतद्दर्शनद्वयमाश्रित्य वर्णग्रहणमिति **अन्ये** । इहाभ्यासविधौ तदन्तविधेर-चोदितत्वाद् **"निजिविजिविषां गुणश्चेक्रीयिते"** (३।३।२३) च नामिन एव गुणग्रहणस्य दृष्टविषयत्वात् । मीमांसते इति परत्वादित्त्वम्, ततो दीर्घः । अभ्यासे भवः आभ्यासो वा इकार एवोच्यते, **"अत् त्वरादीनां च"** (३।३।३७) इति तत्राकारेऽकारस्य लोपाद् वा, वेष्टि-चेष्टि ईच्च गण इति **मतान्तरम्** ॥५२३।

**[वि० प०]**

सन्य० । वर्णग्रहणाद् दीर्घस्यापि भवति तेन पिपासति, ननु चाभ्यासविकारत्वाद् ह्रस्वे सिध्यति किं वर्णग्रहणेन ? सत्यम्, **निर्देशसुखप्रतिपत्त्यर्थं** वर्णग्रहणम् । पापचिषते इति पापच्यशब्दाच्चेक्रीयितान्तात् पापचितुमिच्छतीति सन्, अस्य च लोपे **"यस्यानति"** (३।६।४८) इति यलोपः, इडागमश्च । इह सनः श्रुतत्वात् सनि योऽभ्यासस्तस्य भवति । अयं तु चेक्रीयितेऽभ्यासः पश्चात् सन् ॥५२३।

**[बि० टी०]**

सनि० । सनीत्यादि० । ननु ह्रस्वत्वे कृते सति सिध्यति किं वर्णग्रहणेनेति वक्तुं युज्यते । कथम् अभ्यासविकारत्वाद् इति हेतुः, वर्णग्रहणाभावे ह्रस्वोऽन्त्यस्यैव प्राप्नोति । सन्यभ्यासविकारत्वादित्यवर्णग्रहणेऽपि दीर्घस्यापि कार्यमिति **हेमकरः । केचिद्** इदमाचक्षते अवर्णग्रहणे सत्त्वेऽपि अभ्यासविकारत्वाद् ह्रस्वत्वेऽपि सिध्यति, तदा किं वर्णग्रहणेनेति, **निर्देशसुखप्रतिपत्त्यर्थं** वर्णग्रहणमिति । ननु अकारकरणमपि व्यर्थम्,

यस्माद् इवर्णस्यैव विधानमनर्थकम् । उवर्णस्यापि भविष्यति, उवर्णस्य जान्तस्थेत्यनेन ? सत्यमेतत्, **केचिद् 'अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते'** (का० परि० ६४) इति मन्यन्ते, तदा परत्वाद् अभ्यासस्य व्यञ्जनावशेषं बाधित्वा व्यञ्जनस्य स्यादिति **तन्मतम**वलम्ब्याकारग्रहणं कृतम्, तथा **तन्मते** वर्णग्रहणमपि पिपासतीत्यादौ परत्वाद् ह्रस्वत्वं बाधित्वा इत्त्वार्थमिति ॥५२३।

**[समीक्षा]**

'पच्, पा, यज्' आदि धातुओं से 'पिपक्षति, पिपासति, यियक्षति' इत्यादि सन्प्रत्ययान्त शब्दरूपों के सिद्ध्यर्थ अभ्यासघटित अकार के स्थान में इकारादेश की आवश्यकता होती है। इसका निर्देश दोनों ही आचार्यों ने किया है। पाणिनि का सूत्र है– "सन्यतः" (अ० ७।४।७९)। कातन्त्रकार ने तपरकरण न करके जो 'वर्ण' शब्द का पाठ किया है उसे व्याख्याकारों ने सुखावबोधार्थ माना है। उसके कारण 'पिपासति' इत्यादि में दीर्घ आकार को भी इकारादेश प्रवृत्त होता है।

**[विशेष वचन]**

१. वर्णग्रहणं निर्देशसुखप्रतिपत्त्यर्थम् (दु० टी०, वि० प०, बि० टी०)।

२. एतद्दर्शनद्वयमाश्रित्य वर्णग्रहणमित्यन्ये (दु० टी०)।

३. वर्णग्रहणाद् दीर्घस्यापि भवति, तेन-पिपासति (वि० प०)।

४. केचिद् 'अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते' इति मन्यन्ते, तदा परत्वादभ्यासस्य व्यञ्जनावशेषं बाधित्वा व्यञ्जनस्य स्यादिति तन्मतमवलम्ब्याकारग्रहणं कृतम्, तथा तन्मते वर्णग्रहणमपि पिपासतीत्यादौ परत्वाद् ह्रस्वत्वं बाधित्वा इत्त्वार्थमिति (बि० टी०)।

**[रूपसिद्धि]**

१. **पिपक्षति**। पच् + सन् + वर्तमाना-ति। पक्तुमिच्छति। 'डु पचष् पाके' (१।६०३) धातु से इच्छा अर्थ में "धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्" (३।२।४) से सन् प्रत्यय, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से द्विर्वचन, पूर्ववर्ती 'पच्' की अभ्याससंज्ञा – च् का लोप, प्रकृत सूत्र से अभ्यासघटित अकार को इकार "चवर्गस्य किरसवर्णे" (३।६।५५) से चकार को ककार, "निमित्तात् प्रत्ययविकारागमस्थः सः षत्वम्" (३।८।२६) से सकार को षकार, 'क् – ष्' संयोग से क्षकार, "ते धातवः" (३।२।१६) से 'पिपक्ष' की धातुसंज्ञा, वर्तमानासंज्ञक

प्रथमपुरुष – एकवचन ति-प्रत्यय, अन् विकरण तथा "अकारे लोपम्" (२।१।१७) से पूर्ववर्ती अकार का लोप।

२. **पिपासति**। पा+सन्+वर्तमाना–ति। पातुमिच्छति। 'पा पाने' (१।२६४) धातु से इच्छार्थ में सन् प्रत्यय, द्विर्वचनादि, प्रकृत सूत्र से अभ्यासस्थ आकार को इकार, धातुसंज्ञा तथा विभक्तिकार्य ॥५२३।

## ५२४. उवर्णस्य जान्तस्थापवर्गपरस्यावर्णे [३।३।२७]

### [सूत्रार्थ]

सन्प्रत्ययनिमित्तक अभ्यासघटित उकार के स्थान में इकारादेश होता है यदि उस उवर्ण के बाद ज–अन्तस्था (य् र् ल् व्) – पवर्गीय वर्ण हो और उसके अनन्तर अवर्ण हो तो ॥५२४।

### [दु० वृ०]

सनि परे योऽभ्यासस्तस्योवर्णस्य जान्तस्थापवर्गपरस्यावर्णे परे इद् भवति। 'जु' इति **सौत्रो**ऽयं धातुः– जिजावयिषति। यु–यियविषति, यियावयिषति। रु–रिरावयिषति। लूञ्–लिलावयिषति। पूञ्–पिपावयिषति। पूङ्स्तु-पिपविषते। भू-बिभावयिषति। उवर्णस्येति किम् ? बोभविषति। वचनमिदं ज्ञापनार्थम्–इनि यत् कृतं तत् सर्वं स्थानिवदिति, तेन जुहावयिषतीत्यादयः सिद्धाः। 'श्रुस्रुद्रुप्रुप्लुच्युङां वा वक्तव्यम्'। शिश्रावयिषति, शुश्रावयिषति। सिस्रावयिषति, सुस्रावयिषति। दिद्रावयिषति दुद्रावयिषति। पिप्रावयिषति, पुप्रावयिषति। पिप्लावयिषति, पुप्लावयिषति। चिच्यावयिषति, चुच्यावयिषति ॥५२४।

### [दु० टी०]

उवर्ण०। जश्च अन्तस्था च पवर्गश्च ते परे यस्माद् वर्णादिति। **"जुचङ्क्रम्य०"** (४।४।३२) इत्यादिना **सौत्रो** धातुरिति। असम्भवादिना व्यवधानमिति गम्यते। यद्येवम् अन्तरङ्गत्वादिनि वृद्धावादेशे पश्चाद् द्विर्वचनम्। कथम् अभ्यासस्यासवर्ण इत्याह– वचनमित्यादि। अन्यथा **"सन्यवर्णस्य"** (३।३।२६) इत्यनेनैव सिद्धमिति भावः। तेनेत्यादि। 'हु दाने' (२।६७), हेताविन्। तुमन्तात् सन्। एवं **'टु क्षु रु कु शब्दे'** (२।१०)– चुक्षावयिषति। ष्टुञ्– तुष्टावयिषति। भृशं भवति बोभूः, क्विप्, तद्वदाचरितुमिच्छतीति कृतायिलोपात् सन्, चेक्रीयितलुगन्ताद् वा। **"सन्यभ्यासस्य"** इति सम्बन्धो **विशेषप्रतिपत्तिगौरवं** स्यादित्युवर्णग्रहणम्। टु ओँ श्वि-शुशावयिषति। **"कारिते च संश्चणोः"** (३।४।१३) इति सम्प्रसारणम्। एतच्च **ज्ञापकम्**– अजान्तस्थापवर्गपरस्यावर्णे वेदितव्यम्। अन्यथा अचिकीर्तद् इति न

सिध्यति। पवर्ग इति परम्परया सप्तमीनिर्देशे **विशेषणप्रतिपत्तिगौरवं** स्यादिति परग्रहणम् औपश्लेषिकाधिकरणत्वात्तु जुङ्-जिजावयिषते। पूङ–पिपविषते। **"स्मिङ्पूङ्०"** (३।७।११) इत्यादिनेट्। यियविषति। **"श्रूर्णु०"** (३।७।३३) इत्यादिना इट् पक्षे। वर्णग्रहणमिदं ज्ञापयति-सेटि सनि गुणात् प्राग् द्विर्वचनम्, तेन प्रोर्णुनविषतीत्यादि सिद्धम्। श्रुरित्यादि। श्रु श्रवणे, शु स्रु दु द्रु गतौ, प्रुङ् प्लुङ् च्युङ् गतौ। वक्तव्यं व्याख्येयम्। उवर्णस्येति योगविभागात् तेनैषामेवावर्णे विभाषेति ॥५२४।

**[वि० प०]**

उवर्णस्य। जश्च अन्तस्था च पवर्गश्च जान्तस्थापवर्गास्ते परे यस्माद् उवर्णादिति विग्रहः। **'जु' इति सौत्रो धातुः। "जुचङ्क्रम्य०"** (४।४।३२) इत्यादिना सूत्रे भवः **सौत्रः**, न पुनर्गणपरिपठितः इति भावः। जिजावयिषतीति हेताविन्। जावयितुमिच्छतीति सन्, इनि कृतस्य स्थानिवद्भावात् 'जु' इत्यस्य द्विर्वचनम्। ततः उकारस्याकारे परे जकारे इकारः। यियविषतीति। **'यु मिश्रणे'** (२।६)। यवितुमिच्छतीति सनि कृते **"इवन्तर्ध०"** (३।७।३३) इत्यादिना पक्षे इट्, द्विर्वचनम्, ततो गुणे अकारे परे अन्तस्थायकारे च इकारः। पिपावयिषतीत्यादि पूर्ववत्। पिपविषते इति। "स्मिङ्पूङ्०" (३।७।११) इत्यादिना इट्। बोभविषतीति। भवतेश्चेक्रीयितान्ताद् 'बोभूयते' इति क्विप्, अस्य च लोपे **"य्वोर्व्यञ्जनेऽये"** (४।१।३५) इति यलोपः। बोभूरि-वाचरतीत्यायिः, तस्यायेश्च लोपः, ततो धातुत्वाद् बोभवितुमिच्छतीति सन्। चेक्रीयितलुगन्तादेवायं सन्निति।

अथ किमर्थमिदं यावता अन्तरङ्गत्वादिन्प्रत्यये वृद्ध्यावादेशयोः कृतयोः पश्चाद् आकारवतो द्विर्वचनम्। ततः "सन्यवर्णस्य" (३।३।२६) इतीत्त्वे सिद्धमित्याह– वचनमित्यादि। 'हु दाने' (२।६७) इति वृद्ध्यावादेशेऽप्युकारवतोऽस्य द्विर्वचनमिति भावः। एतच्च ज्ञापकम् अजान्तस्थापवर्गपरस्यावर्ण एव वेदितव्यः। तेन 'अचिकीर्तत्' इति सिद्धम्। तथाहि **"कीर्त्तीषोः त्तिः"** (४।५।८६) इति निर्देशादिनीरादेशो ज्ञापितः, स चेत् स्थानिवत् स्यात् तदेदं न सिध्यति, न चात्र सन्वद्भावस्य विषयो लघुनीत्यस्य व्यावृत्तिबलादिति। इदं तर्हि किमित्युदाहृतं 'यियविषति, पिपविषते' इत्यप्यन्तरङ्गत्वात् सेटि सनि गुणेन प्राग् भवितव्यम्, अतोऽनिनि कृतत्वाद् द्विर्वचनमकारयुक्तस्यैवेति **"सन्यवर्णस्य"** (३।३।२६) इतीत्त्वं भविष्यतीति ? सत्यम्। अवर्ण इति ह्रस्वदीर्घसमुदाय उच्यते, तत्र ह्रस्वस्य विधेर्विषयो दर्शितः। यदि चात्र पूर्वं गुणः स्यात् तदा वर्णग्रहणम् अनर्थकं स्याद् अतो वर्णग्रहणेनैव ज्ञापयति – सेटि सनि गुणात् प्राग् द्विर्वचनमिति। तेन 'प्रोर्णुनविषति'

इति सिद्धम्। श्रु इत्यादि वक्तव्यं व्याख्येयम्। इह **योगविभागादियमिष्टसिद्धिरिति** भावः ॥५२४।

**[बि० टी०]**

उवर्णस्य०। उवर्णस्येति किमिति **वृत्तिः।** ननु सनि परतो योऽभ्यासः इत्युक्तम्, ततो यथा उवर्णो न भवति तथा सन्यभ्यासोऽपि न भवति ? सत्यम्। न ह्यत्र सन् प्रत्ययः श्रुतः, किन्त्वधिकारानुमितः कुतः सनि योऽभ्यासस्तस्येति वक्तुं पार्यते, येन बोभविषतीति प्राप्तिर्नास्तीत्युच्यते। अथ सन्यभ्यासस्येति पूर्वं श्रुतम्, अत्रापि तदेव वर्तते चेत् तर्हि **पराश्रयणार्थमिति हेमकरः**। पराश्रयणमिति। **परो** हि सन्यभ्यासस्येति श्रुतव्याख्यानं न मन्यते, किन्तु सनि परतोऽभ्यासस्य य उवर्णस्तस्येति **वृत्तिपाठः।** तन्मतमवलम्ब्य प्रत्युदाहरणमिति भावः। **पण्डितः** पुनराह– उवर्णस्येति किम्। वर्णग्रहणं किमित्यर्थः। तदा ओरिति कृतम्। ओरिति ङस आदिलोपः सूत्रत्वादिति प्रतिपत्तौ ओकारस्येकारो भवतीत्यर्थे कथं सन्यभ्यासस्येति वक्तुं युज्यते, असम्बन्धादिति। तथा च **वार्त्तिकम्**–

**वर्णग्रहेऽस्मिन् कृतखण्डनेऽस्मिन् ओरूपनिर्देशनमाह तस्मिन्।**
**ओतो यदा स्यान्न तदास्ति सन्यभ्यासेति संयोज्यमपप्रयोगात्॥**

इति सुगमम्।

वस्तुतोऽत्र सनि परतोऽभ्यासस्येति **वृत्तौ** पाठः, न तु सनि परतो योऽभ्यास इति। वर्णग्रहणस्थितौ तत्सम्बन्धव्यावृत्तेरभावात्। अत्रोक्तम्– उवर्णस्येति किम्, यदि पूर्वसम्बन्ध इह क्रियते, तदा **वर्णग्रहणं सुखार्थम्**। एतच्च ज्ञापकमिति। ननु द्विर्वचनात् प्राग् इनि यत् कृतं तत् सर्वं स्थानिवदिति स्थानिवद्भावो विधीयते, तदा अजान्तस्थापवर्गपरस्येति कस्य विशेषणं भवतु ? सत्यम्। अवर्णे परे अजान्तस्थापवर्गायोग्यतयाऽभ्यासात् परे यस्य मूलधातोरिति बहुव्रीहिणा मूलधातुरुक्त इति **पण्डितः**। तथा च **वार्त्तिकम्**–

**अवर्णपूर्वाजमुखं परं स्यादभ्यासतो योग्यतया तु यस्य।**
**धातोर्बहुव्रीहिसमासगम्यः स मूलधातुर्न ततोऽस्ति दोषः॥**

**अस्यार्थः** – अवर्णपूर्वमजमुखमजान्तस्थादिकम्। ( अजान्तस्थापवर्गपर ) योग्यतयाभ्यासात् परस्य (परो) यस्य धातोर्बहुव्रीहिसमासगम्यः स मूलधातुरिति, ततो न दोष इति। उवर्ण इति अजान्तस्थापवर्गाणां विशेषणम् उवर्ण इत्यादि-पङ्क्तिर्युज्यते इत्यवधिरशुद्धः। अत्र यस्येति यदुक्तं परयोग– पञ्चम्येव युज्यते।

**अन्ये** पुनरिदमाचक्षते – अजान्तस्थापवर्गपरस्य भाविनोऽभ्यासस्यावर्ण एव परतो वर्तमानस्य संबन्धिनो मूलधातोरेतज्ज्ञापकमित्यर्थः। वर्णग्रहणं ज्ञापयति – सेटि सनि गुणात् प्राग् द्विर्वचनमित्यर्थः। ननु किमर्थमिदमुच्यते यावता स्वरविधिः स्वरे द्विर्वचन-निमित्ते कृते द्विर्वचन इति वचनात् प्राग् द्विर्वचनं भविष्यति ? सत्यम्, अत्र **पण्डितवार्त्तिकं** यत् –

**स्वरादिके सेटि सनि स्वरस्य विधानतः प्राग् भवति द्विरुक्तिः।**
**तथापि तज्ज्ञापकमादृतं तत् स्वरादि कार्यी न भवेन्निमित्तम्॥**
**ऋधातुजातेट् सनि तद्द्विरुक्तेः पूर्वं विधिः स्यात् स्वरसङ्गतस्तत्।**
**पश्चाद् द्विरुक्तिः सनि कार्यितापि निमित्तता बीज इवाङ्कुरादेः**॥इति।

**अस्यार्थः**– सेटि सनि स्वरादिके स्वरादौ स्वरस्य विधानतः विधानाद्धेतोः प्राग् द्विरुक्तिर्भवति, अतः प्राग् द्विरुक्तिज्ञापने किमिति **पूर्वपक्षः। सिद्धान्तमाह**– तथापीत्यादि। ज्ञापकमन्तरेणाग्रतो द्विर्वचनसिद्धावपि तज्ज्ञापकमादृतम्, तस्माद् वर्णग्रहणसामर्थ्यात् स्वरादिप्रत्ययः कार्यी, न निमित्तम्, अर्थाद् द्विर्वचनस्य निमित्तं न भवेदिति बोधयति।

एतेन किं साधितमित्याह– ऋधातुजातेट्सनि विषये तद्द्विरुक्तेस्तस्येटो द्विर्वचनात् पूर्वं प्राक् स्वरसङ्गतो विधिस्तस्मात् परं हि व्यञ्जनेऽर्थान्तरे सति इटो द्विरुक्तिरिति। इह कार्यी कथं निमित्तम्। तत्राह– कार्यिताप्यर्थादिटस्तथापि निमित्तता अङ्कुरादेरिव। यथा अङ्कुरादेर्बीजं कार्यी अपि निमित्तमिति। ननु 'स्वरविधिः स्वरे' इत्यत्रैव शास्त्रे कार्यिणो निमित्तत्वं नास्ति। तथा च 'कार्यी निमित्तं कार्यम्' इत्युक्तम्। अतः 'अरिरिषति' इत्यादौ प्राग् द्विर्वचनं न भविष्यति, किं वर्णग्रहणेन कृतम्, नैवम्। श्रुतत्वादवर्णपर एव वेदितव्यमिति **दुर्गवाक्यम्। योगविभागादिय-मिष्टसिद्धिरिति** उवर्णस्यावर्ण इत्येको योगः जान्तस्थापवर्गपरस्येति द्वितीयः।

उवर्णस्यावर्ण इति कृतेऽनेकवर्णव्यवहिते कथं भवतु ? नैवम्, अत्र पक्षे अवर्ण इति विषयसप्तमीति **हेमकरः। वस्तुतस्तु** उवर्णस्येति एको योगः कर्तव्यः, लक्ष्यानुसारेण श्रुप्रभृतीनामेव भविष्यति। योगविभागस्य कारणम् उवर्णस्येति वर्णग्रहणम् इति **हेमकरः**। अन्यथा दीर्घस्य ह्रस्वत्वे सति किं वर्गग्रहणेनेति। ननु योगविभागं प्रति वर्णग्रहणस्य सामर्थ्यं किं केवलाक्षराधिक्येन भण्यते ? नैवम्, वर्णग्रहणं बहुविषयावबोधकं सद् योगविभागमेव बोधयति। तन्न युक्तमुत्पश्यामः। तस्मादभ्यासविकारेष्वपवादो नोत्सर्गं बाधते इति (न) मन्यते, तस्माद् वर्णग्रहणं

दीर्घार्थमिति वक्तव्यम्, कथं **योगविभागार्थमिति** ? तथा च **टीकायाम्– "सन्यवर्णस्य"** (३।३।२६) इत्यत्र हि वर्णग्रहणस्य **तन्मते** प्रयोजनमुक्तम्, तस्माद् वर्णस्येति विशेष्यस्य पूर्वनिर्देशो बोधयति ॥५२४।

**[समीक्षा]**

'जु-यु-रु-पू' आदि धातुओं के सन्प्रत्ययान्त 'जिजावयिषति, यियावयिषति, रिरावयिषति, पिपावयिषति' आदि शब्दरूपों के अभ्यास में विद्यमान उकार को इकारादेश की अपेक्षा होती है। इसे ही दोनों आचार्यों ने सूत्रों में विहित किया है। पाणिनि का सूत्र है– "ओः पुयण्ज्यपरे" (अ० ७।४।८०)। यहाँ 'जु' इस सौत्र धातु का ग्रहण किया जाता है। कातन्त्र में भी इसे सौत्र धातु के रूप में ही स्वीकार किया गया है। इसमें हेमकर आदि आचार्यों के विविध मत प्रस्तुत किए गए हैं। अनेक श्लोकवार्त्तिक उद्धृत किए गए हैं। इष्टसिद्धि के लिए योगविभाग की चर्चा की गई है।

**[विशेष वचन]**

१. 'जुचङ्क्रम्य०' इत्यादिना सौत्रो धातुरिति। असम्भवादिना व्यवधानमिति गम्यते (दु० टी०)।

२. सन्यभ्यासस्येति सम्बन्धो विशेषप्रतिपत्तिगौरवं स्याद् इति उवर्णग्रहणम् (दु० टी०)।

३. पवर्ग इति परम्परया सप्तमीनिर्देशे विशेषणप्रतिपत्तिगौरवं स्यादिति परग्रहणम् (दु० टी०)।

४. वर्णग्रहणमिदं ज्ञापयति– सेटि सनि गुणात् प्राग् द्विर्वचनम्, तेन प्रोर्णुनविषतीत्यादि सिद्धम् (दु० टी०)।

५. 'जु' इति सौत्रो धातुः "जुचङ्क्रम्य०" (४।४।३२) इत्यादिना सूत्रे भवः सौत्रः, न पुनर्गणपरिपठितः इति भावः (वि० प०)।

६. वर्णग्रहणेनैव ज्ञापयति– सेटि सनि गुणात् प्राग् द्विर्वचनमिति (वि० प०)।

७. इह योगविभागादियमिष्टसिद्धिरिति भावः (वि० प०)।

८. वर्णग्रहणं सुखार्थम् (बि० टी०)।

९. योगाविभागादियमिष्टसिद्धिरिति 'उवर्णस्यावर्णे' इत्येको योगः 'जान्तस्थापवर्गपरस्य' इति द्वितीयः (बि० टी०)।

१०. तस्माद् वर्णग्रहणं दीर्घार्थमिति वक्तव्यम्, कथं योगविभागार्थमिति ? (बि० टी०)।

[रूपसिद्धि]

१. **जिजावयिषति**। जु+इन्+सन्+ति। जवन्तं प्रयोक्तुमिच्छति। 'जु' इस सौत्र धातु से "धातोश्च हेतौ" (३।२।१०) से इन् प्रत्यय, उ को वृद्धि, आव् आदेश, सन् प्रत्यय, इडागम, "इनि यत् कृतं तत् सर्वं स्थानिवत्" के अनुसार 'जु' को द्विर्वचन, प्रकृत सूत्र से अभ्यासगत उकार को इकार इडागमघटित इ को गुण, अयादेश, सकार को मूर्धन्यादेश, 'जिजावयिष' की "ते धातवः" (३।२।१६) से धातुसंज्ञा, वर्तमानासंज्ञक तिप्रत्यय, अन् विकरण तथा पूर्ववर्ती अकार का लोप।

२. **यियविषति**। यु+सन्+ति। यवितुमिच्छति। 'यु मिश्रणे' (२।६) धातु से इच्छार्थ में "धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्" (३।२।४) से सन् प्रत्यय, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से 'यु' को द्विर्वचन, प्रकृत सूत्र से अभ्यासगत उकार को इकार, इडागम, धातुगत उकार को गुण, अवादेश, सकार को मूर्धन्यादेश, धातुसंज्ञा तथा ति–विभक्तिकार्य।

३-८. **यियावयिषति। रिरावयिषति। लिलावयिषति। पिपावयिषति। पिपविषते। बिभावयिषति।** क्रमशः इनन्त यु, रु, लूञ्, पूञ्, पूङ् तथा भू धातुओं से इच्छार्थक सन् प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्॥५२४।

## ५२५. गुणश्चेक्रीयिते [३।३।२८]

[सूत्रार्थ]

चेक्रीयितसंज्ञक प्रत्यय के पर में रहने पर अभ्यास को गुणादेश होता है॥५२५।

[दु० वृ०]

चेक्रीयिते योऽभ्यासस्तस्य गुणो भवति। चेचीयते, पोपूयते, बेभिदिता। वर्णान्तत्वान्नामिन एव॥५२५।

[दु० टी०]

गुण०। बेभिदितेति। **"यस्यानिनि"** (३।६।४८) इति यलोपे प्रत्ययलोपलक्षणमिति भावः। वर्णान्तत्वादिति। अर्थादेकवर्ण इह गुणोऽन्ते भवति **'स्थानेऽन्तरतमः'** (का० परि० १८) इति न्यायात्। **केचिच्चे**क्रीयितेन धातुं विशेषयन्ति, चेक्रीयितान्ते धातोरभ्यासस्येति तेषां **भाषायामपि** चेक्रीयितलुगन्तस्येति मतं

बोभवीति, बेभिदीति। अत्र चेक्रीयितेऽभ्यास इति विशेषणबलादेव संगृहीतं गुणं प्रत्ययनिमित्तत्वात् **"लुग्लोपे न प्रत्ययकृतम्'** (कलाप० २२२।६९) इति नोपतिष्ठते। चेक्रीयितग्रहणं **सुखार्थम्,** ये योऽभ्यासः इत्युक्तेऽपि 'जुहुयात्' इत्यत्राप्रसङ्ग एव सार्वधातुकेऽभ्यासत्वात् ॥५२५।

**[वि० प०]**

गुणः। **बेभिदितेति**। अस्य च लोपे **"यस्यानिनि"** (३।६।४८) इति यलोपः। अत्र चेक्रीयितलोपेऽपि चेक्रीयिते योऽभ्यासः इति विशेषणबलादेव गुणो भवति। इह चेक्रीयितेऽभ्यासे ऋवर्णस्याभावाद् अर् नास्तीति पारिशेष्यादेकार ओकारश्च गुणः स चैकवर्णोऽर्थादन्ते भवन्नामिन एव भवति ॥५२५।

**[बि० टी०]**

गुणः। चेक्रीयिते योऽभ्यास इति **वृत्तिः**। तस्य च फलं 'बेभिदिता' इति "यस्यानिनि" (३।६।४८) इति यलोपः। अत्र 'चेक्रीयिते योऽभ्यासः' इति विशेषणबलादेव भवतीति **पञ्ज्याम्। टीकायां** तु **"यस्यानिनि"** (३।६।४८) इति यलोपे प्रत्ययलोपलक्षणमिति भावः इत्युक्तम्, कथमेतत् संगच्छते ? सत्यम्, **टीकायां** स्वमतमुक्तम्, **वृत्तौ** कस्यचिन्मतमिति। स हि चेक्रीयितेन धातुं विशेषयति चेक्रीयितान्त-धातोरभ्यासस्येत्यर्थः। बोभवीतीत्यत्र चेक्रीयितान्तत्वाभावे चेक्रीयिते योऽभ्यास इत्युक्तवान् ॥५२५।

**[समीक्षा]**

'चेचीयते, लोलूयते, बोभवीति' इत्यादि चेक्रीयित-चर्करीतप्रत्ययान्त धातुरूपों के सिद्ध्यर्थ अभ्यासघटित नामिसंज्ञक वर्णों के गुणादेश की अपेक्षा होती है। इसके विधानार्थ उभयत्र सूत्रनिर्देश उपलब्ध होता है। पाणिनि का सूत्र है– "गुणो यङ्लुकोः" (अ० ७।४।८२)। 'चेक्रीयिते योऽभ्यासः' इति वृत्तिवचन के बल पर 'बोभवीति, बेभिदिता' आदि प्रयोगों में 'य' का लोप हो जाने पर भी गुण प्रवृत्त होता है, यहाँ 'लुग्लोपे न प्रत्ययकृतम्' (कलाप० २२२।६९) यह परिभाषा प्रवृत्त नहीं होती है। टीकाकार के अनुसार 'ये योऽभ्यासः' यह सूत्र बनाना चाहिए।

**[विशेष वचन]**

१. अर्थाद् एकवर्ण इह गुणोऽन्ते भवति 'स्थानेऽन्तरतमः' इति न्यायात् (दु० टी०)।

२. भाषायामपि चेक्रीयितलुगन्तस्येति मतम् (दु० टी०)।

३. चेक्रीयितग्रहणं सुखार्थम् । 'ये योऽभ्यासः' इत्युक्तेऽपि जुहुयादित्यत्राप्रसङ्ग एव सार्वधातुकेऽभ्यासत्वात् (दु० टी०)।

४. पारिशेष्यादेकार ओकारश्च गुणः, स चैकवर्णोऽर्थादन्ते भवन्नामिन एव भवति (वि० प०)।

५. टीकायां स्वमतमुक्तम्, वृत्तौ कस्यचिन्मतमिति (बि० टी०)।

६. बोभवीतीत्यत्र चेक्रीयितान्तत्वाभावे चेक्रीयिते योऽभ्यासः इत्युक्तवान् (बि० टी०)।

**[रूपसिद्धि]**

१. **चेचीयते** । चि + य + ते । 'चिञ् चयने' (४।५) धातु से 'पुनः पुनश्चिनोति' इस अर्थ में "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) से चेक्रीयितसंज्ञक 'य' प्रत्यय "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७)से धातु को द्विर्वचन, पूर्ववर्ती धातु की अभ्याससंज्ञा, प्रकृत सूत्र से अभ्यासघटित इकार को गुण, "नाम्यन्तानां यणायिन्नाशीश्च्विचेक्रीयितेषु ये दीर्घः" (३।४।७०) से मूलधातुगत इकार को दीर्घ, "ते धातवः" (३।२।१६) से 'चेचीय' की धातुसंज्ञा, वर्तमानासंज्ञक प्रथमपुरुष-एकवचन 'ते' प्रत्यय, अन् विकरण तथा पूर्ववर्ती अकार का लोप।

२. **पोपूयते** । पू+ य+ ते । 'पूञ् पवने' (८।८) धातु से 'भृशं पुनाति' इस अर्थ में चेक्रीयितसंज्ञक य–प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

३. **बेभिदिता** । भिद्+ य+ श्वस्तनी–त । 'भिदिर् विदारणे' (६।२) धातु से 'पुनः पुनर्भेत्ता' अर्थ में चेक्रीयितसंज्ञक य–प्रत्यय, द्विर्वचन, अभ्याससंज्ञा, लोप, "अस्य च लोपः" (३।६।४९) से अकारलोप, "यस्यानिनि" (३।६।४८) से यकारलोप, 'प्रत्ययलोपे प्रत्ययलक्षणम्' (कलाप० २२७।५४) इस न्याय के अनुसार प्रकृत सूत्र से अभ्यासघटित इकार को गुण तथा इडागम् ॥५२५।

## ५२६. दीर्घोऽनागमस्य [३।३।२९]

**[सूत्रार्थ]**

चेक्रीयितसंज्ञक प्रत्यय के पर में रहने पर आगमरहित अभ्यास को दीर्घादेश होता है ॥५२६।

**[दु० वृ०]**

चेक्रीयिते योऽभ्यासस्तस्यानागमस्य दीर्घो भवति । पापच्यते । अनागमस्येति

किम् ? वनीवच्यते, वरीवृश्च्यते । अनागमस्येति वचनमभ्यासविकारेष्वपवादो नोत्सर्गं बाधते इति ज्ञापनार्थम्, तेन 'मीमांसते' इत्यादयः सिद्धाः ॥५२६।

[दु० टी०]

दीर्घः । इह परिशिष्टस्याकारस्य दीर्घोऽवसीयते । **मतान्तरे** तु सजातीयस्यैव स्वरस्य दीर्घ इति दीर्घग्रहणं न **सुखार्थ**मुच्यते । न भविष्यत्यागमो यस्य स इहानागम उच्यते, वर्तमानेनागमेनासम्बन्धात् । ननु चापवादत्वादागमे सति ह्रस्वान्तत्वाभावान्न दीर्घो भविष्यति, किं प्रतिषेधेनेत्याह – अनागमस्येत्यादि । यस्त्विमां परिभाषां नादरयति, तस्य वर्तमानेनैवागमेन सम्बन्धो व्यञ्जनावशेषादिर्भवति भिन्नविषयत्वात् । पूर्ववच्चेक्रीयितलुगन्तस्य पापचीति । अत्रापि जहातेर्नेच्छन्ति-जहाति, जहीति । पक्षे ईट् ॥५२६।

[वि० प०]

दीर्घो० । न भविष्यत्यागमो यस्य **सोऽनागमः** । 'वनीवच्यते' इति **"वन्चिस्रन्सि०"** (३।३।३०) इत्यादिना नीरागमो भविष्यतीति मत्वा न पूर्वं दीर्घः प्रवर्तते । एवं व्रश्चेरपि ग्रह्यादित्वात् सम्प्रसारणे **"ऋमतो रीः"** (३।३।३४) । ननु चापवादत्वात् पूर्वमागमे सति अभ्यासस्य ह्रस्वान्तत्वाभावादेव न भविष्यतीति किं निषेधेनेत्याह – अनागमस्येत्यादि । तेन **"मानुबधदानुशान्भ्यो दीर्घश्चाभ्यासस्य"** (३।२।३) इति विहितस्य दीर्घस्यापवादत्वेऽपि **"सन्यवर्णस्य"** (३।३।२६) इत्युत्सर्गः प्रवर्तते ततो दीर्घ इति । तथा च तत्रैव दर्शितम्, अत एव न भविष्यत्यागमो यस्येति विग्रहो दर्शितः, वर्तमानेनागमेनासम्बन्धात् तदसम्बन्धश्चापवादानां पश्चात् प्रवृत्तेरिति ॥५२६।

[बि० टी०]

दीर्घः । 'आ' इति सिद्धे दीर्घग्रहणं **सुखार्थम्** । यस्तु **'अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते'** (का० परि० ६४) इति मन्यते, तन्मते दीर्घग्रहणं स्वरजातीयस्य स्यान्न व्यञ्जनस्येत्येतदर्थम् । ननु अपवादत्वात् पूर्वमेवागम इत्यादि कथमपवादत्वम्, भिन्नस्थानत्वात् । नैवम्, अभ्यासमाश्रित्य कार्यद्वयविधानाद् यथाकथञ्चिदेकवाक्यतायाम् उक्तिबाधा भवति, एतेन **'येन नाप्राप्तौ यो विधिरारभ्यते, स तस्य बाधकः'** (व्या० परि० ४२) इति भिन्नविषये यथाकथञ्चिदेकवाक्यतायां न्यायोऽयमभ्युपगमः । यथा **"शिट्परोऽघोषः"** (३।३।१०) इति । अत एव **दुर्गवाक्ये** नात्र प्राप्त्यपवादत्वादित्युक्तम् । अत एव न भविष्यति आगमो यस्येत्यादि । **यस्त्विमां** परिभाषां नाद्रियते, **तन्मते** न विद्यते आगमो यस्येति ॥५२६।

**[समीक्षा]**

'पापच्यते, यायज्यते' इत्यादि चेक्रीयितप्रत्ययान्त शब्दरूपों के सिद्ध्यर्थ अभ्यासघटित अकार को दीर्घादेश करने की आवश्यकता होती है। इसकी पूर्ति दोनों ही व्याकरणों में की गई है। पाणिनि का सूत्र है– "दीर्घोऽकितः" (अ० ७।४।८३)। पाणिनि ने जितने कित् आगम किए हैं, वे कातन्त्र व्याकरण में अनुबन्धरहित हैं, अतः पाणिनि ने 'अकितः' शब्द का तथा शर्ववर्मा ने 'अनागमस्य' शब्द का उपादान किया है। 'री-नी' आदि आगमों के होने पर अभ्यास ह्रस्वान्त नहीं रहेगा, अतः 'अनागमस्य' यह प्रतिषेध व्यर्थ होकर ज्ञापित करता है कि अभ्यास-विकारों में अपवादविधि सामान्यविधि को बाधित नहीं करती है। इसीलिए मान्वधदानशान्भ्यो दीर्घश्चाभ्यासस्य" (३।२।३) सूत्रविहित दीर्घादेशरूप अपवाद के रहने पर भी "सन्यवर्णस्य" (३।३।२६) से प्राप्त इत्त्वादेशरूप सामान्यविधि प्रवृत्त होती ही है। अतः 'मीमांसते, दीदांसते' इत्यादि शब्दरूप उपपन्न होते हैं।

**[विशेष वचन]**

१. अनागमस्येति वचनम् 'अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते' इति ज्ञापनार्थम् (दु० वृ०)।

२. दीर्घग्रहणं न सुखार्थमुच्यते (दु० टी०)।

३. 'आ' इति सिद्धे दीर्घग्रहणं सुखार्थम् (बि० टी०)।

**[रूपसिद्धि]**

१. **पापच्यते**। पच्+ चेक्रीयित–य+ते। 'डु पचष् पाके' (१।६०३) धातु से 'पुनः पुनः पचति' इस अर्थ में चेक्रीयितसंज्ञक यप्रत्यय, द्विर्वचन, अभ्यासकार्य, प्रकृत सूत्र से अभ्यासगत ह्रस्व अकार को दीर्घ, "ते धातवः" (३।२।१६) से 'पापच्य' की धातुसंज्ञा, वर्तमानासंज्ञक आत्मनेपद-प्रथमपुरुष-एकवचन 'ते' प्रत्यय, अन्-विकरण तथा पूर्ववर्ती अकार का लोप ॥५२६।

## ५२७. वन्चिस्रन्सिध्वन्सिभ्रन्सिकसिपतिपदिस्कन्दामन्तो नीः [३।२।३०]

**[सूत्रार्थ]**

वन्च्–स्रन्स्–ध्वन्स्–भ्रन्स्–कस्–पत्–पद् तथा स्कन्द् धातु के अभ्यास के अन्त में 'नी' आगम होता है चेक्रीयितसंज्ञक 'य' प्रत्यय के परवर्ती होने पर ॥५२७।

**[दु० वृ०]**

एषाञ्चेक्रीयिते योऽभ्यासस्तस्यान्तो नीर्भवति। वनीवच्यते, सनीस्रस्यते, दनीध्वस्यते, बनीभ्रस्यते, चनीकस्यते, पनीपत्यते, पनीपद्यते, चनीस्कद्यते। दीर्घविधानाद् गुणो नाशङ्क्यते ॥५२७।

**[दु० टी०]**

वन्चि०। **'वञ्चु चन्चु'** इति **दण्डको धातुः। स्रन्सु-भ्रन्सु अवस्रंसने, ध्वन्सु गतौ, कस गतौ, पल शल पत्लृ पथे च गतौ, 'वन्चु चन्चु तन्चु त्वन्चु म्रुन्चु ग्रुन्चु म्रुचु म्लुचु ग्लुन्चु षस्ज गतौ' (१।४९)। पद गतौ** (१।४८१, ४८२, ५६८, ५५४; ३।१०७), **'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते'** (का० परि० ४७) इत्याह– दीर्घ इत्यादि। चेक्रीयितलुगन्तस्यापि इति मतान्तरम्। वनीवञ्चीतीत्यादि ॥५२७।

**[समीक्षा]**

'वनीवच्यते, सनीस्रस्यते, दनीध्वस्यते, बनीभ्रश्यते, चनीकस्यते, पनीपद्यते' इत्यादि शब्दरूपों की सिद्धि तब तक सम्भव नहीं है, जब तक 'वन्च्, स्रन्स्, ध्वन्स्' धातुओं के अभ्यासान्त में 'नी' की उपस्थिति न हो। इसकी पूर्ति कातन्त्रकार ने 'नी' आगम से तथा पाणिनि ने 'नीक्' आगम से की है। पाणिनि का सूत्र है– "नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्" (अ० ७।४।८४)। इस प्रकार उभयत्र समानता है। इस सूत्र पर त्रिलोचनदास की 'विवरणपञ्जिका' तथा सुषेण विद्याभूषण की 'कलापचन्द्र' या बिल्वेश्वर आचार्य की टीका उपलब्ध नहीं है।

चेक्रीयितलुगन्त में भी यह 'नी' आगम प्रवृत्त होता है। अतः 'वनीवञ्चीति' इत्यादि शब्दरूप भी सिद्ध होते हैं। टीकाकार दुर्गसिंह ने इसे स्पष्ट किया है– "चेक्रीयितलुगन्तस्यापीति **मतान्तरम्**। 'वनीवञ्चीति' इत्यादि।

**[रूपसिद्धि]**

१. **वनीवच्यते**। वन्च्+य+ते। पुनः पुनरतिशयेन वा वञ्चते। 'वन्चु प्रलम्भने' (९।१२३) धातु से "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) सूत्र द्वारा चेक्रीयितसंज्ञक 'य' प्रत्यय, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से धातु को द्विर्वचन, "पूर्वोऽभ्यासः" (३।३।४) से पूर्ववर्ती 'वन्च्' की अभ्याससंज्ञा, "अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" (३।३।९) से 'न्-च्' का लोप, प्रकृत सूत्र से अभ्यास के अन्त में 'नी' आगम, धातुघटित न् का लोप, "ते धातवः" (३।२।१६) से 'वनीवच्य' की धातुसंज्ञा, वर्तमानासंज्ञक 'ते' प्रत्यय तथा 'अन्' विकरणादि।

२. **सनीस्रस्यते**। स्रन्स्+य+ते। 'स्रन्सु अवस्रंसने' (१।४८१) धातु से क्रियासमभिहार अर्थ में 'य' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

३. **दनीध्वस्यते**। ध्वन्स्+य+ते। 'ध्वन्सु गतौ च' (१।४८२) धातु से चेक्रीयितसंज्ञक 'य' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

४. **बनीभ्रस्यते**। भ्रन्स्+य+ते। 'भ्रन्सु अवस्रंसने' (१।४८१) धातु से चेक्रीयितसंज्ञक 'य' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

५. **चनीकस्यते**। कस्+य+ते। 'कस गतौ' (१।५६८) धातु से क्रियासमभिहार अर्थ में चेक्रीयितसंज्ञक 'य' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

६. **पनीपत्यते**। पत्+य+ते। 'पत्लृ गतौ, पत गतौ' (१।५५४; ९।१८१) धातु से 'य' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

७. **पनीपद्यते**। पद्+य+ते। 'पद गतौ' (३।१०७) धातु से क्रियासमभिहार अर्थ में य–प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

८. **चनीस्कद्यते**। स्कन्द्+य+ते। 'स्कन्दिर् गतिशोषणयोः' (१।२८१) धातु से चेक्रीयितसंज्ञक 'य' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्॥५२७।

## ५२८. अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्य [३।३।३१]

### [सूत्रार्थ]

अनुनासिकान्त धातु से चेक्रीयितसंज्ञक 'य' प्रत्यय के परे रहते अभ्यासघटित अकार के अन्त में अनुस्वार प्रवृत्त होता है॥५२८।

### [दु० वृ०]

अनुनासिकान्तस्य धातोश्चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति। बंभण्यते, बंभणिता। यंयम्यते, यंयमिता। तकार उच्चारणार्थः। प्रतिपदोक्तग्रहणात्– बाभाम्यते। पुनरन्तग्रहणमनुस्वारस्यापि स्थित्यर्थम्॥५२८।

### [दु० टी०]

अतो०। तकार **उच्चारणार्थ** इति। न पुनः **"तपरस्तत्कालस्य"** (अ० १।१।७०) इति भूतपूर्वदीर्घनिवृत्त्यर्थो वचनाद् दीर्घत्वं तद्दर्शनस्यानादरात्। अथ कथन्तर्हि **'भाम क्रोधे'** (१।४०३) इत्यस्य द्विर्वचने ह्रस्वत्वे न भवतीत्याह – प्रतिपदोक्तग्रहणादिति। **'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्'** (का० परि० ७५) इत्यर्थः। अथवा अतः परो योऽनुनासिकः स एवान्तो यस्येति सम्बन्धः। यथा 'तेतिम्यते, जोघुण्यते' इत्यत्र न भवति, तथेहापीत्यर्थः। परस्य द्वयमेव पक्षो ज्यायान्। **'मव्य मव बन्धने'**

(१।१६२), मामव्यते। अन्यथा अन्तस्था द्विप्रभेदाः-सानुनासिका निरनुनासिकाश्चेति। यथा चल– चंचल्यते, तय– तंतय्यते, मव–मंमव्यते, तथात्रापि प्राप्नोति। इह तु सानुनासिकस्य **छन्दस्येव** दर्शनादित्यदोषः। तथा च **पदकारो**ऽप्याह– 'ऽमोऽतोयम्' इति न्याय्यः पक्षः। कथं भृशं चलति चञ्चल इति? **रूढित्वात्**। 'जंगमीति, वंवनीति' **मतान्तरम्** ॥५२८।

**[वि० प०]**

अतः। बंभणितेति। पूर्ववदस्य च लोपे **"यस्यानि"** (३।६।४८) इति यलोपः। 'बाभाम्यते' इति **'भाम क्रोधे'** (१।४०३), अभ्यासस्य ह्रस्वत्वे कृते लाक्षणिकोऽयमकार इति ततो दीर्घः। पूर्वसूत्रादन्तग्रहणं वर्तते। अत एवागमत्वे लब्धे यत् पुनरन्तग्रहणं तन्नागमार्थम् अपि तु विरत्यर्थं ततो **"वर्गे तद्वर्गपञ्चमं वा"** (१।४।१६) इत्यस्य विषयत्वादनुस्वारः पक्षे तिष्ठतीत्याह– पुनरन्तेत्यादि ॥५२८।

**[वि० टी०]**

अतः। तकार **उच्चारणार्थः**। इह पुनः **"तपरस्तत्कालस्य"** (अ० १।१।७०) 'बाभाम्यते' इत्यनुस्वाराभावार्थः। **"अवर्ण इवर्णे"** (१।२।२) इत्यत्र वर्णग्रहणादेतद्वचनस्यानादरात्, तर्हि कथं बाभाम्यते इत्याह– प्रतिपदोक्तग्रहणादिति। अन्तस्थानां सानुनासिकत्वं नाद्रियते, **छान्दसत्वादिति**। 'चाचल्यते, तातय्यते, मामव्यते' इत्येव भवति। चञ्चल इति, **रूढित्वात्**। ये तु अन्तस्था द्विप्रभेदाः सानुनासिका निरनुनासिकाश्चेति मन्यन्ते, **तन्मते** 'यंयम्यते' इत्यादि। ननु **तन्मते** मव्यधातोः 'मामव्यते' इति कथम्? सत्यम्। अतो योऽनुनासिकः स एवान्तो यस्येत्यपि मन्यन्ते, ततश्च योऽतः परः सोऽन्तो नास्ति यश्चान्तः नातः पर इति। ननु 'जंघन्यते' इत्यत्र **"अभ्यासाच्च"** (३।६।३०) इति कथं घत्वम्, अनुस्वारेण व्यवधानात्, यतोऽन्तोऽनुस्वारोऽकारग्रहणेन ग्रहणात्। नैवम्, अवयवावयवोऽपि समुदायस्यावयव इत्यदोषः ॥५२८।

**[समीक्षा]**

'तंतन्यते, जंगम्यते, रंरम्यते' इत्यादि प्रयोगों के साधनार्थ 'तन्, गम्, रम्' आदि धातुओं के अभ्यासान्त में अनुस्वार का होना आवश्यक है। इसकी पूर्ति कातन्त्रकार ने अनुस्वारागमनिर्देश से तथा पाणिनि ने नुगागमविधान से की है। पाणिनि का सूत्र है– "नुगतोऽनुनासिकान्तस्य" (अ० ७।४।८५)। नुगागम करने से पाणिनि को "आद्यन्तौ टकितौ, नश्चापदान्तस्य झलि" (अ० १।१।४६; ८।३।२४) ये दो सूत्र और भी अपेक्षित होते हैं। इस प्रकार कातन्त्रकार के

निर्देश में लाघव तथा पाणिनि के विधान में गौरव सन्निहित है। 'बाभाम्यते' में अनुस्वारागम नहीं होता है क्योंकि वहाँ अभ्यासान्त में ह्रस्व अकार लाक्षणिक है प्रतिपदोक्त नहीं और लाक्षणिक-प्रतिपदोक्त में से प्रतिपदोक्त का ही ग्रहण होता है लाक्षणिक का नहीं। पूर्वसूत्र से 'अन्त' शब्द की अनुवृत्ति करके ही अभीष्टसिद्धि होने पर पुनः इस सूत्र में 'अन्त' शब्द का उपादान सिद्ध करता है कि "वर्गे तद्वर्गपञ्चमं वा" (१।४।१६) सूत्र द्वारा अनुस्वार के स्थान में मकारादि आदेश तो होते ही हैं, पक्ष में अनुस्वार की भी स्थिति बनी रहती है। इन दोनों ही तथ्यों का स्पष्टीकरण पञ्जिकाकार त्रिलोचनदास ने इस प्रकार किया है– "बाभाम्यते इति। भाम क्रोधे। अभ्यासस्य ह्रस्वत्वे कृते लाक्षणिकोऽयमकार इति, ततो दीर्घः। पूर्वसूत्रादन्तग्रहणं वर्तते, अत एवागमत्वे लब्धे यत् पुनरन्तग्रहणं तन्नागमार्थम् अपि तु विरत्यर्थम्, ततो "वर्गे तद्वर्गपञ्चमं वा" (१।४।१६) इत्यस्य विषयत्वादनुस्वारः पक्षे तिष्ठति" (वि० प०)।

**[विशेष वचन]**

१. पुनरन्तग्रहणमनुस्वारस्यापि स्थित्यर्थम् (दु० वृ०)।

२. अन्तस्था द्विप्रभेदाः– सानुनासिका निरनुनासिकाश्च (दु० टी०; वि० प०)।

३. तकार उच्चारणार्थः (दु० वृ०; बि० टी०)।

४. अवयवावयवोऽपि समुदायस्यावयव इत्यदोषः (बि० टी०)।

**[रूपसिद्धि]**

१. **बंभण्यते**। भण् + य + ते। पुनः पुनरतिशयेन वा भणति। 'भण् शब्दे' (१।१४६) धातु से क्रियासमभिहार अर्थ में "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) से 'य' प्रत्यय, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से धातु को द्विर्वचन, अभ्याससंज्ञा, णकार का लोप, अभ्यासान्त में अनुस्वारागम, "ते धातवः" (३।२।१६) से 'बंभण्य' की धातुसंज्ञा, वर्तमानासंज्ञक 'ते' प्रत्यय तथा अन्-विकरणादि कार्य।

२. **बंभणिता**। भण् + य + ता। **यप्रत्ययान्त 'भण शब्दे'** (१।१४६) धातु से (बंभण्य) श्वस्तनीसंज्ञक प्रथमपुरुष– एकवचन 'ता' प्रत्यय, इडागम तथा यलोप।

३. **यंयम्यते**। यंयम् + य + ते। 'यम उपरमे' (१।१५८) धातु से चेक्रीयितसंज्ञक 'य' प्रत्यय, द्विर्वचनादि, अनुस्वारागम, धातुसंज्ञा तथा विभक्तिकार्य।

४. **यंयमिता** । यंयम्य+ता । 'यम उपरमे' (१।१५८) धातु से क्रियासमभिहार अर्थ में 'य' प्रत्यय, द्विर्वचनादि, अनुस्वारागम, धातुसंज्ञा तथा विभक्तिकार्य ॥५२८।

## ५२९. जपादीनां च [३।३।३२]

### [सूत्रार्थ]

चेक्रीयितसंज्ञक 'य' प्रत्यय के परे रहते 'जप' इत्यादि धातुओं के अभ्यासान्त अकार को अनुस्वारागम होता है ॥५२९।

### [दु० वृ०]

'जप' इत्येवमादीनां चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति। जंजप्यते, जंजपिता । जंजभ्यते, जंजभिता । 'जप-जभ-दह-दन्श्-भन्ज्-पश' षडेते **जपादयः** ॥५२९।

### [दु० टी०]

जपा० । **'जप मानसे च, जभ जृभि गात्रविनामे, दह भस्मीकरणे, दन्श दशने, भन्जो आमर्दने'** (१।१३५, ३९३, २४३, २९०; ६।१३)। पशिरयमगण-निर्दिष्टोऽप्यत एव **गणवचनाद्** धातुरवसीयते । चेक्रीयितलुकि नलोपार्थं दशिं लुप्तानुषङ्गं पठन्ति **मतान्तरवादिनः**– दंदशीति ॥५२९।

### [वि० प०]

जपा० । **जप मानसे, जभ जृभि गात्रविनामे, दह भस्मीकरणे, दन्श् दशने** (१।१३५, ३९३, २४३, २९०)। एभ्यो लुपादेर्गर्ह्यादिति गर्ह्येऽर्थे यशब्दः । गर्हितं जपतीत्यादि वाक्यम् । **'भन्जो आमर्दने'** (६।१३) । पशिरिह पठ्यते, स चागणपरि-पठितोऽप्यत एव वचनाद् धातुरवसीयते ॥५२९।

### [बि० टी०]

जपादीनाम् । पशिरिह पठ्यते, स चागणपठितोऽपीति । ननु **'पश बाधने'** (९।१३९) पशधातुर्गणे पठितस्तत् कथमिदम् ? नैवम्, **अभिप्रायापरिज्ञानात् पूर्वैर्गणकारै**र्गणेऽयं न पठितः, आधुनिकैस्तु जपादिपाठाद् गणे लिखित इति भावः । तथा च **धातवश्च द्विधा**– गणपठिताः, अगणपठिताश्च । केचिदत्र दशीति कृतानुषङ्गलोपं पठन्ति ।दंदशीत्यत्र चेक्रीयितलुकि **'लुग्लोपे न प्रत्ययकृतम्'**(कलाप० २२२।६९) इति निषेधाद् अनुषङ्गलोपो न स्यादिति तद्बलादनुषङ्गलोप इति ॥५२९।

**[समीक्षा]**

'जंजप्यते, जंजभ्यते' इत्यादि चेक्रीयितान्त प्रयोगों के साधनार्थ अभ्यासान्त में अनुस्वार की अपेक्षा होती है। इसकी पूर्ति कातन्त्रकार ने अनुस्वारागम से तथा पाणिनि ने नुगागम से की है। पाणिनि ने वाञ्छित छह धातुओं का सूत्र में स्पष्टतया नामोल्लेख किया है, जबकि कातन्त्रकार ने जपादिगण स्वीकार किया है। इस प्रकार पाणिनि ने नुगागम–अनुस्वार तथा छह धातुओं का पृथक्त्वेन पाठ करके गौरव को प्रदर्शित किया है, परन्तु कातन्त्रकार ने अनुस्वार एवं जपादिगण का निर्देश करके लाघव को अपनाया है। पाणिनि का एतद्विषयक सूत्र है– "जपजभदहदशभञ्जपशां च" (अ० ७।४।८६)।

**[विशेष वचन]**

१. पशिरयमगणनिर्दिष्टोऽपि, अत एव गणवचनाद् धातुरवसीयते (दु० टी०, वि० प०; बि० टी०)।

२. पूर्वैर्गणकारैर्गणेऽयं न पठितः, आधुनिकैस्तु जपादिपाठाद् गणे लिखित इति भावः (बि० टी०)।

३. धातवश्च द्विधा– गणपठिताः, अगणपठिताश्च (बि० टी०)।

**[रूपसिद्धि]**

१. **जंजप्यते**। जप् + य + ते। गर्हितं जपति। 'जप मानसे च' (१।१३१) धातु से गर्हा अर्थ में चेक्रीयितसंज्ञक 'य' प्रत्यय, द्विर्वचनादि, अभ्यासान्त में अनुस्वारागम, धातुसंज्ञा तथा विभक्तिकार्य।

२. **जंजपिता**। जप् + य + श्वस्तनी–ता। 'जंजप्य' इस चेक्रीयित प्रत्ययान्त धातु से श्वस्तनीसंज्ञक 'ता' प्रत्यय, इडागम, "अस्य च" (३।६।४९) से अकारलोप तथा "यस्यानिनि" (३।६।४८) से यलोप।

३. **जंजभ्यते**। जभ् + य + वर्तमाना – ते। 'जभ गात्रविनामे' (१।३९३) धातु से क्रियासमभिहार अर्थ में चेक्रीयितसंज्ञक 'य' प्रत्यय, द्विर्वचनादि, अभ्यासान्त में अनुस्वारागम, 'जंजभ्य' की "ते धातवः" (३।२।१६) से धातुसंज्ञा तथा विभक्तिकार्य।

४. **जंजभिता**। जंजभ्य + इट् + श्वस्तनी–ता। चेक्रीयितप्रत्ययान्त 'जंजभ्य' धातु से श्वस्तनीसंज्ञक 'ता' प्रत्यय, इडागम, "अस्य च लोपः" (३।६।४९) से अकारलोप तथा "यस्याननि" (३।६।४८) से यकारलोप ॥५२९।

## ५३०. चरफलोरुच्च परस्यास्य [३।३।३३]

**[सूत्रार्थ]**

चेक्रीयितसंज्ञक 'य' प्रत्यय के परे रहते 'चर–फल' धातुओं के अभ्यासान्तवर्ती अकार को अनुस्वारागम तथा उससे परवर्ती अकार को उकारादेश होता है ॥५३०।

**[दु० वृ०]**

चरफलोश्चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति, परस्यास्योच्च भवति । चंचूर्यते, चंचुरिता । पंफुल्यते, पंफुलिता ॥५३०।

**[दु० टी०]**

चर० । **'अभ्र वभ्र मभ्र चर रिवि रवि धवि गत्यर्थाः'** (१।१८९), **'फल निष्पत्तौ'** (१।१७६), **'दल ञि फला विशरणे'** (१।१६५)। द्वयोरपि ग्रहणमत्र **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि० ४८) इति नाद्रियते । चकारोऽनुवर्तते सविशेषणार्थस्य समुच्चयार्थस्येति **एके**। गर्हितं चरति चंचूर्यते । **"नामिनो र्वोः"** (३।८।१४) इत्यादिना दीर्घो भवत्येव । **तपरकरणं सुखनिर्देशार्थम्** । **यस्तु** चेक्रीयितलुगन्तं भाषायाम् इच्छति स आह– तपरत्वात् 'पंफुल्ति' इत्यत्र गुणो न भवति । यद्येवं 'चंचूर्ति' इत्यत्र दीर्घमपि बाधेत, तदा प्रतिषेधोऽयं भवति । परग्रहणमभ्यासनिवृत्त्यर्थम् । अकारग्रहणं चरिफलिभ्यां **'येन विधिस्तदन्तस्य'** (का० परि० ३) इति निवृत्त्यर्थम् । अस्येति किम् ? फलन्तं प्रयुङ्क्ते फालयतीति फालयते, क्विप्, तदन्ताद् **"आयेश्च लोपः"** इति मतम्, ततश्चेक्रीयितं चाफाल्यते, चाफालीति । **'एकदेशविकृतस्यानन्यवद्भावात्'** (का० परि० १) फालोऽपि प्राप्नोतीति ॥५३०।

**[वि० प०]**

चर० । 'चंचूर्यते' इति । **"नामिनो र्वोः"** (३।८।१४) इत्यादिना दीर्घः, **'फल निष्पत्तौ, दल ञि फला विशरणे'** (१।१७६, १६५) वा । न ह्यत्र **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि० ४८) इत्यादृतम् ॥५३०।

**[बि० टी०]**

चर० । परग्रहणमभ्यासनिवृत्त्यर्थम् । अस्येति पदं चरफलोरन्तस्य मा भूद् इत्येतदर्थम् उपधादीर्घस्यापि निवृत्त्यर्थम् । यथा फलन्तं प्रयुङ्क्ते फालयति, ततः क्विप्, तदन्तादायिः, आयेश्च लोपः । ततश्चेक्रीयिते पाफाल्यते । लुप्ते च पाफालीति । एकदेशविकृतस्यानन्यवद्भावात् प्राप्नोतीत्यर्थः । उदिति । तपरकरणं **सुखप्रतिपत्त्यर्थम्** ।

यस्तु चेक्रीयितलुगन्तं **भाषाया**मिच्छति, स आह – पंफुलीत्यत्र **"अभ्यस्तस्य चोपधायाः"** (३।५।८) इति गुणो न भवति। 'चंचूर्यते' इति, सूत्रे दीर्घो विधीयते इति ॥५३०।

**[समीक्षा]**

'चंचूर्यते, पंफुल्यते' इत्यादि चेक्रीयितप्रत्ययान्त शब्दों के साधनार्थ अभ्यासान्त में अनुस्वार की तथा 'चर्-फल्' धातुओं की उपधा में वर्तमान अकार के स्थान में उकारादेश की अपेक्षा होती है। इसका समाधान कातन्त्रकार ने एक ही सूत्र में दोनों कार्यों का निर्देश करके प्रस्तुत किया है, जबकि पाणिनि के नुगागम तथा उकारादेश का निर्देश पृथक् पृथक् सूत्रों में दृष्ट है – "चरफलोश्च, उत्परस्यातः" (अ० ७।४।८७, ८८)। इस प्रकार पाणिनि के नुगागम–अनुस्वारादेश तथा सूत्रद्वयनिर्देश गौरव के ही बोधक हैं, परन्तु इनकी अपेक्षा अनुस्वारागम एवं एक ही सूत्र में दो कार्यों का उपादान लाघवाधायक ही कहा जाएगा।

**[विशेष वचन]**

१. परग्रहणमभ्यासनिवृत्त्यर्थम्। चरिफलिभ्यां येन विधिस्तदन्तस्येति निवृत्त्यर्थम् (दु० टी०)।

२. तपरकरणं सुखप्रतिपत्त्यर्थम् (बि० टी०)।

३. यस्तु चेक्रीयितलुगन्तं भाषायामिच्छति (बि० टी०)।

**[रूपसिद्धि]**

१. **चंचूर्यते**। चर्+य+ते। गर्हितं चरति। 'चर गत्यर्थः' (१।१८९) धातु से क्रियासमभिहार अर्थ में "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) से चेक्रीयितसंज्ञक 'य' प्रत्यय, द्विर्वचनादि, प्रकृत सूत्र से अभ्यासान्त में अनुस्वारागम, धातुस्थ अकार को उकार, "नामिनो र्वोरुपधाया दीर्घ इकः" (३।८।१४) से उकार को दीर्घ, "ते धातवः" (३।२।१६) से 'चंचूर्य' की धातुसंज्ञा तथा विभक्तिकार्य।

२. **चंचुरिता**। चंचूर्य+श्वस्तनी–ता। चेक्रीयितप्रत्ययान्त 'चर गत्यर्थः' (१।१८९) धातु से श्वस्तनीसंज्ञक प्रथमपुरुष–एकवचन ता–प्रत्यय, इडागम, अकार–यकारलोप।

३. **पंफुल्यते**। फल्+य+वर्तमाना–ते। पुनः पुनरतिशयेन वा फलति। **'फल निष्पत्तौ'** (१।१८६) धातु से क्रियासमभिहार अर्थ में चेक्रीयितसंज्ञक य–प्रत्यय, द्विर्वचनादि, अभ्यासान्त में अकार को अनुस्वारागम, 'पंफुल्य' की धातुसंज्ञा तथा विभक्तिकार्य।

४. **पंफुलिता** । पंफुल्य + श्वस्तनी–ता । चेक्रीयितप्रत्ययान्त 'पंफुल्य' धातु से श्वस्तनीसंज्ञक ता–प्रत्यय तथा अन्य विभक्ति–आदि कार्य ॥५३०।

## ५३१. ऋमतो रीः [३।३।३४]

### [सूत्रार्थ]

ऋकारघटित धातु के अभ्यासान्त में अकार को 'री' आगम होता है चेक्रीयितसंज्ञक 'य' प्रत्यय के परे रहते ॥५३१।

### [दु० वृ०]

ऋमतो धातोश्चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तो रीर्भवति । नरीनृत्यते, परीपृच्छ्यते ॥५३१।

### [दु० टी०]

ऋमतः । ऋर्विद्यतेऽस्येति **ऋमान्** । यदि नित्ययोगे मन्तुरयं नृतीप्रभृतीनामेव स्यात्, अथ संसङ्गे प्रच्छिप्रभृतीनामेव स्याद् अन्तरङ्गत्वात्, सम्प्रसारणे तु पश्चाद् द्विर्वचने सति ? सत्यम् । तदेतदावर्तनादेव सिद्धम्, उभयत्र वन्चेरिति । द्विरुक्तिकाले नित्यं वा ऋमानिति भावः । नरीनृतीति, परीपृच्छीति मतम् । रिरौ च चेक्रीयित-लुकि, कृञ्– चरिकर्त्ति, चर्कर्त्ति । वृञ्–वरिवर्त्ति, वर्वर्ति । ऋमत इति किम् ? कॄ विक्षेपे–चाकर्तीति ॥५३१।

### [वि० प०]

ऋमतः । ऋर्विद्यते यस्य स **ऋमान्** इति । नित्ययोगे मन्तुरयम्, आवृत्त्या संसङ्गेऽपि विधीयते, **व्याख्यानात्** । तेन परीपृच्छ्यते इति । प्रच्छेः सम्प्रसारणे कृतेऽपि भवति । अन्यथा नृतीप्रभृतीनामेव स्यात् ॥५३१।

### [बि० टी०]

ऋमतः । आवृत्त्या संसङ्गे च विधीयते इति । ननु आवृत्तौ किं कारणं तदिति, येन लाक्षणिकस्यापि ग्रहणम् । अतः ऋत इत्येव युज्यते । तत्राह– व्याख्यानादिति । **व्याख्यानं** च 'ऋतो रीः' इत्येव करणम्, न च ऋदन्तस्य धातोरिति वक्तव्यम् । **"ऋत ईदन्तश्च्विचेक्रीयितयिन्नायिषु"** (३।४।७२) इत्यनेन ईकारागमे रेफस्य ऋदन्तत्वानुपपत्तेः, न तु ऋतधातोः, स्वरादित्वेन चेक्रीयिताभावात् । अर्थाद् ऋकारसहितस्य धातोरिति बोद्धव्यम् । एवञ्च सति लाक्षणिकपरिग्रहो न भविष्यति किं मन्तुविधानेन ? तद्बलात् संसङ्गेऽपि ततो लाक्षणिकस्यापीत्यर्थः, द्विरुक्तिकाले नित्यं वा ऋमान् इति भावः । **टीकायां सिद्धान्तान्तरम्** ऋमत इति किम्–चाकर्तीति । केयमत्र शङ्का ? तथा च **वार्त्तिकम्**–

**ऋ ऋस्वरूपो भवतीह यत्र स ऋद्ग्रहेणादृत एव धातुः।**
**ऋदन्तभावोऽर्थनिबन्धनेन शेषश्च चाकर्त्तिपदे प्रसङ्गः॥**

एतच्चासङ्गतमिति लक्ष्यते यस्माद् ऋमतो रीति सूत्रनिर्देशबलाल्लाक्षणिक-ऋकारयुक्तमपि भवतीति यदुक्तम्, तदसङ्गतं स्यात्, न तु ऋकारान्तरमस्ति। **वयं** तु ब्रूमः– ऋमतो रीति विदध्यात्, ऋकारेण सह वर्तते इति सहग्रहणं व्याप्त्यर्थम्, तेन लाक्षणिकस्यापि ग्रहणम्, अन्यथा ऋमतो रीति कृतं स्यात्। किन्तु सर्त इति कृते ऋकारेण वर्तते इत्यपि प्रतिपद्यते। ततः **'कृ विक्षेपे'** (५।२१) चाकर्तीति स्यादिति। **केचिद्** आचक्षते– ऋमत इत्युक्त्वाऽस्य व्यावृत्तिरिति ॥५३१।

**[समीक्षा]**

'वरीवृत्यते, नरीनृत्यते, परीपृच्छ्यते' इत्यादि शब्दरूपों के सिद्ध्यर्थ अभ्यासान्त में 'री' का होना अपेक्षित है। इसकी पूर्ति कातन्त्रकार ने 'री' आगम से तथा पाणिनि ने 'रीक्' आगम से की है। उनका सूत्र है– "रीगृदुपधस्य च" (अ० ७।४।९०)। पाणिनि का 'ऋदुपध' पाठ 'वृत्–वृध्-नृत्' आदि धातुओं के लिए तो समीचीन है, परन्तु 'वरीवृश्च्यते, परीपृच्छ्यते' आदि में 'रीक्' आगम के लिए 'रीग् ऋत्वतः इति वक्तव्यम्' यह वार्त्तिक बनाना ही पड़ता है। इस सन्दर्भ में कातन्त्रकार का 'ऋमतः' यह पाठ ही अधिक युक्तिसङ्गत कहा जाएगा।

**[विशेष वचन]**

१. यदि नित्ययोगे मन्तुरयं नृतीप्रभृतीनामेव स्यात् (दु० टी०)।

२. नित्ययोगे मन्तुरयमावृत्त्या संसङ्गेऽपि विधीयते व्याख्यानात् (वि० प०)।

३. सहग्रहणं व्याप्त्यर्थम्, तेन लाक्षणिकस्यापि ग्रहणम् (बि० टी०)।

**[रूपसिद्धि]**

१. **नरीनृत्यते**। नृत+य+वर्तमाना–ते। पुनः पुनरतिशयेन वा नृत्यति। 'नृती गात्रविक्षेपे' (३।७) धातु से क्रियासमभिहार अर्थ में चेक्रीयितसंज्ञक 'य' प्रत्यय, द्विर्वचनादि, अभ्यासान्त अकार को री–आगम, 'नरीनृत्य' की धातुसंज्ञा तथा विभक्तिकार्य।

२. **परीपृच्छ्यते**। प्रच्छ्+य–ते। पुनः पुनरतिशयेन वा पृच्छति। 'प्रच्छ ज्ञीप्सायाम्' (५।४९) धातु से चेक्रीयितसंज्ञक 'य' प्रत्यय, द्विर्वचनादि, "ऋवर्णस्याकारः" (३।३।१६) से ऋ को अ, उसको 'री' आगम, धातु को गुणाभाव, धातुसंज्ञा तथा विभक्तिकार्य ॥५३१।

## ५३२. अलोपे समानस्य सन्वल्लघुनीनि चण्परे [३।३।३५]

**[सूत्रार्थ]**

समानसंज्ञक वर्ण का लोप न होने पर लघुधात्वक्षर के परे रहते अभ्यास को सन्वत् कार्य होता है इन् प्रत्यय के परवर्ती होने पर, यदि उस इन् प्रत्यय के बाद चण् प्रत्यय विद्यमान हो तो ॥५३२।

**[दु० वृ०]**

समानसंज्ञकस्यालोपे सति लघुनि धात्वक्षरेऽभ्यासस्येनि चण्परे सन्वत् कार्यं भवति। अपीपचत्, अलीलवत्, अशिश्रवत्। अलोपे समानस्येति किम् ? अचकथत्। कथं पटुमाख्यातवान् अपीपटत्। वृद्धौ सन्ध्यक्षरलोपः। लघुनीति किम् ? अततक्षत्। कथम् अजीजागरत् ? अनेकवर्णव्यवधानेऽपि लघुनि स्यादेवेति मतम्। "अत् त्वरादीनां" चेति वचनात्। इनीति किम् ? अचकमत। इनीति जातिनिर्देशाद् वादितवन्तं प्रयोजितवान् अवीवदद् वीणां परिवादकेनेति इनीनो लोपेऽपि स्यात्। चण्पर इति किम् ? रिरमयिषति। दीर्घो लघोर्मा भूत् ॥५३२।

**[दु० टी०]**

अलोपे०। **"सन्यवर्णस्य, उवर्णस्य जान्तस्थ०"** (३।३।२६,२७) इत्याभ्यां योगाभ्यां "श्रुस्रुद्रुप्रु०" इत्यादिना च योगविभागेन प्राप्तं कार्यम् अतिदिश्यते इति। क्रमेणोदाहरणं सूचयति। अचकथदिति **'कथ वाक्यप्रबन्धे'** (९।१७४), चुरादावदन्तः। अस्य च लोपे सति स्थानिवद्भावाद् व्यवधानतैव कथं प्रत्युदाहरणम्। तथा कथामाचष्टे इति विवक्षायामपि। नैवम्, यथा लघुनीत्यस्य **प्रत्युदाहरणम्** – अततक्षदित्यनेकवर्णव्यवधानेऽपि भवति, तथेदमपीति भावः। किञ्च दृशदमाख्यातवान् अददृशत्। नात्र स्थानिवद्भावोऽन्त्यस्वरादिलोपत्वात्। कथम् अजीजागरदिति। अत्राप्याकारस्य दीर्घत्वाद् गुरुत्वम्, नैवम्। यथा अचीकरदित्यादौ ककारादिना व्यवधाने भवति, तत्रात्रापि गकाराकारे लघावित्यर्थः। तदयुक्तम्, येन नाव्यवधानं तेन व्यवहितेऽपि स्यात्, वचनप्रामाण्याददिति, येन नियतभावेनैकेन वर्णेन व्यवधानमशक्यपरिहारं तदेवाश्रीयते, न पुनरनेकेन वर्णेनेति पक्षं दूषयन्नाह – अनेकेनेत्यादि। **मतं** मतान्तरमेतत्। अजजागरद् इति भवितव्यम् – 'अचिक्वणत्, अचिक्रमम्' इत्यादावनेकव्यञ्जनव्यवधाने **ज्ञापकमेतत्**। न च सर्वोद्दिष्टमत्वरादीनां चेति भावः।

अचकमतेति। कमिमात्राच्चण्, यदीनूग्रहणं न स्याद् इहापि स्यादिति मतम्। ननु चण् परो यस्मादिति बहुव्रीहिणा अर्थाद् इनेव गम्यते, किमिन्ग्रहणेन। न च

चण् चासौ परश्चेति विग्रहः, तदा चणीति विदध्यात्। तर्हि इनीति **जाति**निर्देशादिति नोपपद्यते, आधारग्रहणे हि **जाति**रवसीयते। अथ गोबलीवर्दन्यायेन इन्जाते-र्निमित्तत्वेनाश्रयणम्, **प्रतिपत्तिरियं गरीयसीति** इन्ग्रहणम्। इन्ग्रहणे तु सति परग्रहणं विशेषणपरम्परागौरवनिरासार्थम्। न विद्यते समानलोपो यस्मिन्निति सामानाधिकरण्ये-ऽप्युच्यमाने **प्रतिपत्तिगौरवं** स्यात्। चण्, परग्रहणम् **उत्तरार्थं** क्रियमाणमिहापि **सुखप्रतिपत्त्यर्थं** भवतीत्याह – चण्परेत्यादि। रमेरिन्, मानुबन्धत्वाद् ह्रस्वः॥५३२।

**[वि० प०]**

अलोपे०। अपीपचदिति। पचेर्हेताविन्, चण्, **"इन्यसमानलोपोपधाया ह्रस्वश्चणि"** (३।५।४४) इति ह्रस्वः। कृते द्विर्वचने सन्वद्भावाद् इत्त्वम्, **"दीर्घो लघोः"** (३।३।३६) इति दीर्घः। **"उवर्णस्य जान्तस्थापवर्गपरस्यावर्णे"** (३।३।२७) इति सनि विहितं कार्यम्, **"श्रुस्रुद्रुप्रुप्लुच्युङां वा वक्तव्यम्"** इत्यनेन च सनि विहितमिति दर्शयन्नाह – अलीलवदित्यादि पूर्ववत्। अचकथदिति। **'कथ वाक्यप्रबन्धे'** (९।१७४) अदन्तः, चुरादित्वादिन्, अस्य च लोपे स्थानिवद्भावादुपधाया दीर्घो न भवति। इहाकारलोपे दीर्घविधौ **"न पदान्त०"** (अ० १।१।५८) इत्यादिना स्थानिवद्भावप्रतिषेधो नाभिधीयते। वृद्धौ सन्ध्यक्षरलोप इति तत्र नामिग्रहणं बहुवचनं वा लिङ्गार्थमिति वक्ष्यति। तेन लिङ्गस्यापि वृद्धिः। सन्ध्यक्षराणां न समानसंज्ञेति सन्वद्भावो भवति। अततक्षदिति संयोगपरत्वात् तकारस्याकारो गुरुः। कथमित्यादि। अत्राप्याकारस्य दीर्घत्वाद् गुरुत्वम् इति मन्यते, नैवम्। यथा अचीकरदित्यादौ ककारादिव्यञ्जनव्यवहितेऽप्यकारे लघौ भवति। एवम् अनेकवर्णव्यवहितेऽपि गकारस्याकारे लघौ भवतीत्यर्थः। अत् त्वरादीनां चेति वचनादिति। तद्धि वचनम् अतत्वरदित्यादौ सन्वद्भावापवादस्य विधानार्थमुच्यते।

यदि चानेकवर्णव्यवहिते लघौ सन्वद्भावो न स्याद् इहाप्यनेकवर्णेन त्वशब्देन व्यवहितेऽकारे न भवतीति अलम् अत् त्वरादीनां चेति वचनेन। मतमिति मतान्तरमित्यर्थः। अयं पुनर्मन्यते अजजागरदिति भवितव्यम्। यतो येन नाव्यवधानं तेन व्यवहितेऽपि स्यादिति। अचीकरदित्यादौ एकवर्णेन व्यवधानमशक्यपरिहारं वचनप्रामाण्यादाश्रीयते न त्वनेकेनेति। यत् पुनः 'अत् त्वरादीनां च' इति वचनं तद् 'अचीक्वणद् अचीक्रमत्' इत्यादावनेकव्यञ्जनव्यवधाने **ज्ञापकं** समानविषयत्वान्न तु सर्वोद्दिष्टमिति भावः। अचकमत इति। कममात्राच्चण्। ननु चण्परो यस्मादिति बहुव्रीहिणा अर्थादिन्नेवावसीयते, न तु चण् चासौ परश्चेति कर्मधारयः, तदा चणीति विदध्यात्। तस्माद् अचकमतेति केवलचणि परग्रहणादेव न भविष्यति

किमिनूग्रहणेन तर्हि नाधारमन्तरेण जातिरवसीयते इति जातिनिर्देशार्थमेवेनूग्रहणम्, ततः किमित्याह– इनीत्यादि। जातेरेकत्वान्नित्यत्वाच्च सर्वदावस्थानमिति नास्ति समानलोपता, न हीह जातिव्यतिरिक्तः समानोऽस्ति, येन तल्लोपे सन्वद्भावप्रतिषेधः स्यात्। अथ जातिव्यक्त्योरनन्यत्वमिति **साङ्ख्यसिद्धान्त**स्येहाश्रयणाद् इनीनो लोपस्तत्रास्तीति। लोप इति तु वचनं व्यक्तेस्तिरोभावनिबन्धनम्, न तु सर्वथा तत्र लोपोऽस्तीति। तथा चाहुः **साङ्ख्याः**– नासदुत्पद्यते न च सद् विनश्यति उत्पत्तिविनाशयोराविर्भावतिरोभावस्वरूपत्वादिति। चणूपर इत्यादि। रमेरिनि मानुबन्धत्वाद् ह्रस्वः। एतेनोत्तरार्थं क्रियमाणं चणूपरग्रहणम् इहापि **सुखार्थं** भवतीति दर्शितम् ॥५३२।

**[वि० टी०]**

अलोपे०। ननु **परिभाषावृत्तौ** प्राग् द्विर्वचनं साध्यते। तथाहि योऽनादिष्टादिति, लघुनीतिग्रहणं ज्ञापकम्। एतदुक्तम्-यदीयं परिभाषा नास्ति तदा लघुनीतिग्रहणं किमर्थम्, स्थानिवद्भावादेव सर्वत्र गुरूपधत्वात् तस्माल्लघुनीतिग्रहणं ज्ञापकमस्याः। तन्न, स्वरविधित्वादेवादौ द्विर्वचनं स्यात् **स्वन्मते** तु प्राग् ह्रस्व इति विरोधः? सत्यम्, **परपक्ष**मवलम्ब्योक्तम्। **परो** हि 'स्वरविधिः स्वरः' इत्यादौ श्रुतव्याख्यानमाश्रीयते इति। समानसंज्ञकस्यालोप इति **वृत्तिः**। ननु अचीकरदित्यादौ इनो लोपे समानलोपत्वात् सन्वद्भावः कथं स्यात् चेत्, **"इन्यसमानलोपोपधायाः"** (३।५।४४) इत्यत्र इनूग्रहणम् इनूसामान्यार्थम् इति वक्ष्यति। तत इनो लोपे समानलोपत्वं नास्ति। ननु तथापि इन् सामान्यार्थत्वात् ज्ञापकं चेनि इनो लोपे भविष्यति, चणादाविनो लोपे समानलोपत्वान्न सन्वद्भावः। तथा च **दुर्गः**– इनीनो लोपेऽपि स्यात्? सत्यम्? अलोप इति भावसप्तमीयं भावसप्तम्यां च प्राक् स्थितौ सिद्धिः। तथा च **"यस्य च भावेन भावलक्षणम्"** (अ० २।३।३७) इति **पाणिनिः**। यस्य च भावेन क्रियया क्रियान्तरं लक्ष्यते, ततः सप्तमी, तच्च लक्षणं पूर्ववर्तित्वे सम्भवति।

अत्र इनो लोपः पश्चात्, प्राग् लोपे तु स्थानिवद्भावात् **"इन्यसमान०"** (३।५।४४) इत्यादिना ह्रस्वस्यानर्थक्यप्रसङ्गः समानलोपत्वात्। एवं च लघुनीत्यपि भावसप्तमी दृष्टकल्पनावशात्। एतेन इनि चणि योऽभ्यासः स कथम्भूतः लघुधात्वक्षरपरः इति लघुनि धात्वक्षरे परस्मिन् योऽभ्यासः इत्यर्थः। अभ्याससञ्ज्ञाप्राप्तौ लघुधात्वक्षरं परे विद्यते चेदिति ॥५३२।

**[समीक्षा]**

'अचीकरत्, अपीपचत्, अपीपवत्, अलीलवत्, असिस्रवत्' इत्यादि शब्दरूपों के सिद्ध्यर्थ अभ्यासघटित अकार-उकार को इकारादेश की अपेक्षा होती है। इकारादेश

सन् प्रत्यय के परे रहते ही होता है – "सन्यवर्णस्य, उवर्णस्य जान्त:स्थापवर्गपरस्यावर्णे" (३।३।२६, २७) सूत्रों द्वारा। चण् प्रत्यय होने पर सन्वद्भाव मानकर इसकी पूर्ति दोनों व्याकरणों में की गई है। पाणिनि का सूत्र है – सन्वल्लघुनि चङ्परेऽनग्लोपे" (अ० ७।४।९३)। यह ज्ञातव्य है कि पाणिनीय चङ् के लिए कातन्त्रकार ने चण् प्रत्यय स्वीकार किया है।

**[विशेष वचन]**

१. आधारग्रहणे हि जातिरवसीयते (दु ० टी०)।

२. प्रतिपत्तिरियं गरीयसीति इन्ग्रहणम् (दु० टी०)।

३. इन्ग्रहणे तु सति परग्रहणं विशेषणपरम्परागौरवनिरासार्थम् (दु० टी०)।

४. चण्, परग्रहणमुत्तरार्थं क्रियभागमिहापि सुखप्रतिपत्त्यर्थं भवति (दु० टी०)।

५. सन्ध्यक्षराणां न समानसंज्ञेति सन्वद्भावो भवति (वि० प०)।

६. नाधारमन्तरेण जातिरवसीयते इति जातिनिर्देशार्थमेवेन्ग्रहणम् (वि० प०)।

७. जातेरेकत्वान्नित्यत्वाच्च सर्वदावस्थानमिति नास्ति समानलोपता। न हीह जातिव्यतिरिक्तः समानोऽस्ति (वि० प०)।

८. जातिव्यक्त्योरनन्यत्वमिति साङ्ख्यसिद्धान्तस्येहाश्रयणात् (वि० प०)।

९. तथा च साङ्ख्याः – नासदुत्पद्यते न च सद् विनश्यति, उत्पत्तिविनाशयोराविर्भावतिरोभावस्वरूपत्वात् (वि० प०)।

१०. चण्परग्रहणमिहापि सुखार्थं भवति (वि० प०)।

**[रूपसिद्धि]**

१. **अपीपचत्**। अट् + पच् + इन् + चण् + त। पचन्तं प्रायुक्त। 'डु पचष् पाके' (१।६०३) धातु से इन् प्रत्यय, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधादीर्घ, अद्यतनीसंज्ञक परस्मैपद प्रथमपुरुष - एकवचन 'दि' प्रत्यय, "अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु" (३।८।१६) से अडागम, "श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण् कर्तरि" (३।२।२६) से चण् प्रत्यय, सन्वद्भाव, धातु को ह्रस्व, द्विर्वचनादि, "सन्यवर्णस्य" (३।३।२६) से अभ्यासघटित अकार को इकार, 'दीर्घो लघोः" (३।३।३६) से दीर्घ, इन् का लोप एवं इकारलोप-तकारादेश।

२. **अलीलवत्**। अट् + लू + इन् + चण् + दि। लुनन्तं प्रायुक्त। 'लूञ् छेदने' (८।९) धातु से इन् प्रत्यय, नामिसंज्ञक ऊ को वृद्धि औ, आवादेश, धातुसंज्ञा, अद्यतनीसंज्ञक दि-प्रत्यय, अडागम, चण् प्रत्यय, ह्रस्व, द्विर्वचनादि, सन्वद्भाव, अभ्यासघटित अकार को इकार, दीर्घ, इन् का लोप, इकारलोप तथा द् को त् आदेश।

३. **अशिश्रवत्** । अट् + श्रु + इन् + चण् + अद्यतनी–दि । श्रवन्तं प्रायुङ्क्त । 'श्रु श्रवणे' (१।२७८) धातु से इन् प्रत्यय, वृद्धि, आवादेश, धातुसंज्ञा, अद्यतनीसंज्ञक दि–प्रत्यय, अडागम, चण्प्रत्यय, ह्रस्व, द्विर्वचनादि, सन्वद्भाव, अभ्यासघटित अकार को इकार, इन् का लोप, इकारलोप तथा दकार को तकारादेश ॥५३२।

## ५३३. दीर्घो लघोः [३।३।३६]

**[सूत्रार्थ]**

धातुसंबन्धी समानसंज्ञक वर्ण का लोप न होने पर लघुवर्णान्त अभ्यास के स्थान में दीर्घ होता है, लघुरूप धातुस्वर से पर में इन् प्रत्यय हो तथा उससे परवर्ती चण् प्रत्यय हो तो ॥५३३।

**[दु० वृ०]**

समानसंज्ञकस्यालोपे सति लघ्वन्तस्याभ्यासस्य लघुनि धात्वक्षरे इनि चण्परे दीर्घो भवति । अपीपचत्, अजूहवत् । लघोरिति किम् ? अतित्रपत् ॥५३३।

**[दु० टी०]**

दीर्घः । इहास्वरादेर्धातोरिति वक्तव्यम् । ऊर्णुञ्-प्रोर्णुनवत् । ऊरुमाख्यातवान् 'ऐरुरत्' इति । तन्न वक्तव्यम्, **"जपादीनां च"** (३।३।३२) इत्यतश्चकारो **मण्डूकप्लुत्या** वर्तते सोऽनुक्तसमुच्चयार्थ इति । ननु अभ्यासविकारेष्विति यः परिभाषां नाश्रयति **तन्मतेन**, 'अपीपचत्' इति प्रागेव कथं दीर्घो न भवति सन्वद्भावस्य 'अचिक्वणत्' इत्यादिविषयत्वात् कथं बाधकः, अस्यान्यत्रापि विषयत्वात् । 'अबूबुधत्, अबूभुजत्' इत्यादौ परत्वादपि दीर्घत्वे कृते "सन्यवर्णस्य" (३।३।२६) इति नित्यमित्त्वम् इति न दोषः इति मन्यते ॥५३३।

**[वि० प०]**

दीर्घः । 'अजूहवत्' इति ह्वेञो हेताविन्, चण्, द्विर्वचनम्, **"ह्वयतेर्नित्यम्"** (३।४।१४) इति तिप्–निर्देशस्य स्वरूपग्राहकत्वात् "शाच्छासाह्वा०" (३।६।२१) इत्यादिना आयिर्न भवति, तेनैव सम्प्रसारणम् किं वा 'हु दाने' अस्य वृद्धावावादेशे इनि कृतस्य स्थानिवद्भावात् हु– द्विर्वचनम् । शेषं पूर्ववत् । 'अतित्रपत्' इति **'त्रपूष् लज्जायाम्'** (१।३८३) पूर्ववद् इन्नादिकं कार्यम् । इह संयुक्ते त्रशब्दे परे इकारो गुरुः ॥५३३।

**[समीक्षा]**

'अपीपचत्, अजूहवत्' इत्यादि शब्दरूपों के सिद्ध्यर्थ अभ्यास में समानसंज्ञक

इकारादि को दीर्घविधान की अपेक्षा होती है। इसकी पूर्ति दोनों आचार्यों ने की है। पाणिनि का भी यही सूत्र है – "दीर्घो लघोः" (अ० ७।४।९४)। इस प्रकार उभयत्र समानता है।

**[विशेष वचन]**

१. जपादीनां चेत्यतश्चकारो मण्डूकप्लुत्या वर्तते सोऽनुक्तसमुच्चयार्थ इति (दु० टी०)।

२. तिप् – निर्देशस्य स्वरूपग्राहकत्वात् (वि० प०)।

**[रूपसिद्धि]**

१. **अपीपचत्।** अट् + पच् + इन् + चण् + अद्यतनी – दि। इन् प्रत्ययान्त पच्-धातु (पाचि) से अद्यतनीसंज्ञक परस्मैपद प्रथमपुरुष–एकवचन दि - प्रत्यय, अडागम, चण्प्रत्यय, "इन्यसमानलोपोपधाया ह्रस्वश्चणि" (३।५।४४) से अभ्यासघटित दीर्घ आकार को ह्रस्व, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से द्विर्वचन, अभ्यासादिकार्य, (३।३।३५) से सन्वद्भाव, "सन्यवर्णस्य" (३।३।२६) से अभ्यासघटित अकार को इकार, प्रकृत सूत्र से ह्रस्व इकार को दीर्घ आदेश।

२. **अजूहवत्।** अट् + ह्वेञ् + इन् + चण् + अद्यतनी – दि। ह्वयन्तं प्रायुक्त 'ह्वेञ् स्पर्धायां शब्दे च' (१।६१३) धातु से "धातोश्च हेतौ" (३।२।१०) से कारितसंज्ञक इन् प्रत्यय, "ह्वयतेर्नित्यम्" (३।४।१४) से एकारसहित वकार को सम्प्रसारण उकार, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से वृद्धि, आवादेश, 'हावि' की "ते धातवः" (३।२।१६) से धातुसंज्ञा, अद्यतनीसंज्ञक परस्मैपद प्रथमपुरुष–एकवचन दि–प्रत्यय 'अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु" (३।८।१६) से अडागम, "श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण् कर्तरि" (३।२।२६) से चण् प्रत्यय, "ह्रस्वश्चणि" (३।५।४४) से अभ्यासघटित दीर्घ आकार को ह्रस्व, द्विर्वचन, "हो जः' (३।३।१२) से ह् को ज्, सन्वद्भाव, प्रकृत सूत्र से लघु उकार को दीर्घ आदेश ॥५३३॥

## ५३४. अत् त्वरादीनां च [३।३।३७]

**[सूत्रार्थ]**

'त्वर्' आदि धातुओं के अभ्यास को अत् आदेश होता है लघुसंज्ञक धात्वक्षर तथा इन् प्रत्यय के परे होने पर, यदि उस इन् प्रत्यय के बाद चण् प्रत्यय हो तो ॥५३४॥

**[दु० वृ०]**

त्वरादीनामभ्यासस्य लघुनि धात्वक्षरे इनि चण्परेऽद् भवति। अतत्वरत्, असस्मरत्। त्वर्, स्मृ, दॄ, प्रथ, म्रद, स्तॄ, स्पश्, वा वेष्टि, चेष्टि। ईप्स गणः ॥५३४॥

**[दु० टी०]**

अत्० । **'ञि त्वरा सम्भ्रमे, स्मृ चिन्तायाम्, दॄ भये'** (१।५००, ५२१, ५२२), अददरत् । 'त्वरादीनाम्' इति सिद्धे च तकारयत्नादिह दीर्घो लघोर्न भवति, तकारपरो हि स्वभावात् स्वरूपग्राहको लक्षणान्तरस्यापि बाधकः इत्यर्थः । **'प्रथ प्रख्याने'** (१।४९१) अपप्रथत् । **'म्रद मर्दने'** (१।४९३) अमम्रदत् । **'स्तृञ् आच्छादने'** (८।१०) अतस्तरत् । 'स्पश' इति **गणपाठादिह** धातुर्वेदितव्यः । अपस्पशदिति । एषामकारः सन्वद्भावापवादार्थः । वा वेष्टि चेष्टि इति । **'वेष्ट वेष्टने, चेष्ट चेष्टायाम्'** (१।३६३, ३५३) अनयोरप्राप्तेऽकारे विभाषया पाठः । अविवेष्टत्, अवीवेष्टत् । अचचेष्टत्, अचिचेष्टत् ।ईच्च गणः इति ।'गण संख्याने'(९।१७६) चुरादावदन्तः, तत्राकारस्यापि लोपे समानलोपत्वादित्त्वं दीर्घत्वं च न प्राप्नोतीति गणे पाठः ।चकारो **विभाषाख्यापनार्थः** । अजीगणत्, अजगणत् इति । **एके** त्वेते **गणसूत्रे** न स्तः इति मन्यन्ते इति । **उभयप्रमाणवादी** तु पठति ।।५३४।

**[वि० प०]**

अत् त्वरा० । एवं 'दॄ भये' (१।५२२), अददरत् । 'त्वरादीनाम०' इति सिद्धे तकारोपादानादिह **"दीर्घो लघोः"** (३।३।३६) इत्यपि बाध्यते । तकारपरो हि वर्णः स्वभावात् स्वरूपग्राहको दृष्टस्तेन विरूपो न भवतीत्यर्थः । प्रथ– अपप्रथत् । म्रद–अमम्रदत् ।स्तृ-अतस्तरत् ।स्पश–अपस्पशत् ।अयमगणनिर्दिष्टोऽप्यत्र गणपाठाद् धातुरवसीयते ।एषामकारः सन्वद्भावापवादार्थः ।वा वेष्टि चेष्टीति ।अनयोरप्राप्तोऽकारः पक्षे विधीयते । अववेष्टत्, अविवेष्टत् । अचचेष्टत्, अचिचेष्टत् । पक्षेऽभ्यासस्य ह्रस्वत्वमिकारः । ईच्च गण इति । **'गण संख्याने'** (९।१७६) चुरादावदन्तस्तत्रास्य च लोपे समानलोपत्वात् सन्वद्भावो नास्ति । इत्त्वं दीर्घत्वं च न स्याद् इति ईकारः पक्षे विधीयते । चकारो वेत्यनुकर्षणार्थोऽजीगणत्, अजगणत् ।।५३४।

**[समीक्षा]**

'असस्मरत्, अतत्वरत्, अतस्तरत्, अपस्पशत्, अचचेष्टत्, अजगणत्' इत्यादि शब्दरूपों के सिद्ध्यर्थ अभ्यासान्त में अकार की अपेक्षा होती है। जिसकी पूर्ति कातन्त्रकार तथा पाणिनि दोनों ने ही अत् आदेश से की है। पाणिनि के एतदर्थ तीन सूत्र हैं – "अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम्, विभाषा वेष्टिचेष्ट्योः, ई च गणः" (अ० ७।४।९५-९७)। इन तीन सूत्रों में पठित १० धातुओं का कातन्त्रकार ने एक त्वरादिगण मान लिया है। इस प्रकार पाणिनीय ३ सूत्रों के लिए कातन्त्रकार ने एक ही सूत्र बनाकर लाघव अपनाया है।

**[विशेष वचन]**

१. तकारपरो हि स्वभावात् स्वरूपग्राहको लक्षणान्तरस्यापि बाधकः इत्यर्थः (दु० टी०)।

२. चकारो विभाषाख्यापनार्थः। अजीगणत्, अजगणत्। एके त्वेते गणसूत्रे न स्तः इति मन्यन्ते इति। उभयप्रमाणवादी तु पठति (दु० टी०)।

३. तकारपरो हि वर्णः स्वभावात् स्वरूपग्राहको दृष्टस्तेन विरूपो न भवतीत्यर्थः (वि० प०)।

**[रूपसिद्धि]**

१. **अतत्वरत्**। अट्+त्वर्+इन्+चण्+दि। त्वरमाणं प्रायुक्त। 'ञि त्वरा सम्भ्रमे' (१।५००) धातु से इन् प्रत्यय, उपधावृद्धि, 'त्वारि' की धातुसंज्ञा, अद्यतनीसंज्ञक परस्मैपद प्रथमपुरुष – एकवचन दि-प्रत्यय, अडागम, चण् प्रत्यय, ह्रस्व, द्विर्वचन, अभ्याससंज्ञादि, सन्वद्भाव, "सन्यवर्णस्य" (३।३।२६) से प्राप्त इत्त्व को बाधकर प्रकृत सूत्र से अत्त्व, इन् प्रत्यय का लोप, दि-प्रत्ययस्थ इकार का लोप तथा दकार को तकारादेश।

२. **असस्मरत्**। अट्+स्मृ+इन्+चण्+दि। स्मरन्तं प्रायुक्त। 'स्मृ ध्यै चिन्तायाम्' (१।२७२) धातु से इन् प्रत्यय, वृद्धि, 'स्मारि' की धातुसंज्ञा, अद्यतनीसंज्ञक, परस्मैपद प्रथमपुरुष–एकवचन दि-प्रत्यय, अडागम, चण् प्रत्यय, ह्रस्व, द्विर्वचन, अभ्याससंज्ञादि, "ऋवर्णस्याकारः" (३।३।१६) से ऋ को अकार, सन्वद्भाव। इत्त्व को बाधकर प्रकृत सूत्र से अत्त्व तथा इन् प्रत्यय का लोप॥५३४।

## ५३५. इतो लोपोऽभ्यासस्य [३।३।३८]

**[सूत्रार्थ]**

इस सूत्र से अभ्यासलोप का अधिकार प्रारम्भ होता है॥५३५।

**[दु० वृ०]**

इतः सूत्रादारभ्याभ्यासस्य लोपो भवत्यधिकृतं वेदितव्यम्, तेन पूर्वोक्ते सन्वद्भावे सत्ययं न स्यात्। अमीमपत्, अदीदपत्। पुनरभ्यासग्रहणं समस्तलोपार्थम्॥५३५।

**[दु० टी०]**

इतो०।इत इत्यादि।अधिकारोऽयमापादपरिसमाप्तेर्विधिर्वा, अस्मात् सूत्रादारभ्य सूत्रान्तरेषु योऽभ्यासस्तस्यानेन लोपो विधीयते इति "सनि मिमीमादारभलभशकपतपदामिस् स्वरस्याभ्यासलोपश्च" इत्यास्ताम्, किमितो ग्रहणेन, अभ्यासलोपश्च वर्तिष्यत एव।

इतोग्रहणम् अवध्यर्थम् । तेन सन्वद्भावादभ्यासलोपो न भवतीति 'अमीमपत्' इत्यादौ चेत्, तदसत् । पूर्वस्याभ्याससन्मात्राश्रयिणः कार्यस्यातिदेशादिह सन्नियोगशिष्टस्य कुतः प्राप्तिरिति ? सत्यम् । **प्रतिपत्तिगौरवनिरासार्थमेव** । पुनरित्यादि । अभ्यासस्याभ्यासस्येति **वाक्यार्थः** । एकेनाभ्यासस्यान्तलोपे प्राप्ते द्वितीयेन समस्तस्य भवतीत्यर्थः । ननु च द्विप्रयोगपक्षे अनर्थान्तरवाचित्वादनर्थकत्वमेवानभ्यासस्य स्थाने द्विर्वचनपक्षेऽपि श्रूयते समुदाय एवार्थवान्, ततश्च नानर्थक्ये वर्णान्तविधिरिति ? सत्यम् । अभ्यासेऽनर्थकेऽपि तदन्तविधिः प्रतिपत्तव्यः, अन्यथा "**भृञ्हाङ्माङामित्**" (३।३।२४) इत्यादौ दोषः स्यात् ॥५३५।

**[वि० प०]**

इतः । अथ किमर्थमिदम् इतो ग्रहणं "सनि निमीमादारभलभशकपतपदामिस् स्वरस्याभ्यासलोपश्च" इत्येकमेव सूत्रमुच्यताम्, अभ्यासलोपश्चानुवर्तिष्यते एवेत्याह – इतः सूत्रादित्यादि । अन्यथा "**अलोपे समानस्य**" (३।३।३५) इत्यादिना सन्वद्भावोऽस्तीति 'अचीकरत्' इत्यादावभ्यासस्येत्त्ववदिनि चण्परे मिञादीनाम् अभ्यासलोप इसादेशश्च प्राप्नोतीति । 'अमीमपत्' इति । '**मिञ् मिङ्**' वा इन्, "**मीनातिमिनोति०**" (३।४।२२) इत्यादिना आकारे मारूपो वा धातुः "**अर्त्तिह्रीब्ली०**" (३।६।२२) इत्यादिना पकारागमः, चणादि पूर्ववत् । अभ्यासग्रहणं दृष्टानुवृत्तिकतया वर्तत एवेत्याह – पुनरित्यादि । अन्यथा अन्तस्यैव लोपः स्यात् । न च वक्तव्यम् – '**नानर्थक्ये वर्णान्तस्य विधिः**' इति समस्तस्य लोपो भविष्यति यस्मादिहानर्थकस्याप्यभ्यासस्य तदन्तविधिरिष्यते । कथमन्यथा "**भृञ्हाङ्माङामित्**" (३।३।२४) इत्यादौ तदन्तकार्यं स्यात् इति ॥५३५।

**[बि० टी०]**

इतो० । इतः सूत्रादिति **वृत्तिः** । नन्वत्र इतोग्रहणाभावेऽपि पूर्वसूत्रेणाभ्यासलोपो न भविष्यति तर्हि मीञादीनां सन्वद्भावे लोपः स्यात् । यथा अमीमपत् । नैवम्, **व्यक्तिपक्षे** एतल्लक्ष्यविषयाणां लक्षणानामानर्थक्यमापद्येत । तस्मात् "**सनि मिमी०**" (३।३।३९) इत्यादिसूत्रस्य सनि विषये नातिदिष्टे सनीति चेत्, जातिपक्षाङ्गीकाराद् दोषावसर इत्याह – इत इति **वृत्तिः** ॥५३५।

**॥ इति बिल्वेश्वरकृतटीकायां तृतीये आख्याताध्याये तृतीयो द्विर्वचनपादः समाप्तः ॥**

**[समीक्षा]**

'मित्सति, आरिप्सते, धिप्सति, मोक्षते' इत्यादि शब्दरूपों में अभ्यासलोप के विधानार्थ 'अभ्यासलोप' के अधिकार की आवश्यकता होती है, इसकी पूर्ति दोनों आचार्यों ने की है। अन्तर यह है कि जिन चार सूत्रों में अभ्यासलोप की आवश्यकता है, उन सूत्रों को बनाने के बाद पाणिनि ने यह अधिकारसूत्र "अत्र लोपोऽभ्यासस्य" (अ० ७।४।५८) प्रस्तुत किया है, अतः सूत्र में 'अत्र' शब्द का उल्लेख है, परन्तु कातन्त्रकार ने अधिकार उपस्थापित करके सम्बद्ध सूत्र बाद में बनाए हैं, अतः 'इतः' शब्द का प्रयोग किया है। जैसे 'आङ्' उपसर्ग पूर्वक 'रभ्' धातु से सन् प्रत्यय, द्वित्व, अभ्यासकार्य से 'र रभ् स' इस स्थिति में धातुघटित अकार को इस् तथा अभ्यासलोप आदि करने पर 'आरिप्सते' प्रयोग निष्पन्न होता है। इसी प्रकार 'ईप्सति, धीप्सति, शिक्षति, मोक्षते' आदि में भी 'ईत्–इस्–गुण' के अतिरिक्त अभ्यासलोप भी प्रवृत्त होता है।

**[विशेष वचन]**

१. पुनरभ्यासग्रहणं समस्तलोपार्थम् (दु० वृ०)।

२. प्रतिपत्तिगौरवनिरासार्थमेव (दु० टी०)॥५३५।

## ५३६. सनि मिमीमादारभलभशकपतपदामिस् स्वरस्य [३।३।३९]

**[सूत्रार्थ]**

'मि - मी - मा - दा - रभ् - लभ् - शक् - पत् - पद्' धातुओं के स्वर को इस् आदेश तथा अभ्यासलोप होता है सन् प्रत्यय के पर में रहने पर॥५३६।

**[दु० वृ०]**

मिञादीनां स्वरस्य सनि परे इसादेशो भवति अभ्यासलोपश्च। डु मिञ्– मित्सति। मीञ् मीङ् वा – प्रमित्सति, प्रमित्सते। मा इति मेङ्माङोरपि ग्रहणम्। प्रमित्सते, उपमित्सते। दासंज्ञकः- दित्सति, धित्सति। रभ् - आरिप्सते। लभ् - आलिप्सते। शक्लृ शक - शिक्षति। पत्लृ पत – पित्सति। पद – पित्सते। कथं पिपतिषति ? सनीति द्विसकारोऽयं निर्देशो व्यक्तिर्वेति। प्रतिरित्सतीति वक्तव्यम्। प्रतिपूर्वो राधो हिंसायाम्॥५३६।

**[दु० टी०]**

सनि०। **'मीङ् हिंसायाम्'** (३।८५) इति दैवादिकोऽपि मित्सति। **केचिद्** मिनोतिं न पठन्ति। "स्वरान्तानां सनि" (३।८।१२) इति दीर्घत्वे मीरूपस्य सम्भवात्

'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' (का० परि० ७१) इत्यनित्येयं परिभाषेति । मिङ्-मीङ्-मीञां ग्रहणम्, 'मा माने' (२।२६) इत्यस्य निरनुबन्धस्य न भवति, 'माङ् माने मेङ् प्रतिदाने' (२।८६; १।४६२) अनयोरपीत्यर्थः । **केचिल्लुग्-**विकरणस्य मीमासतीति मन्यन्ते, यथासम्भवं "सस्य सेऽसार्वधातुके तः" (३।६।९३) **"स्कोः संयोगाद्योरन्ते च"** (३।६।५४) इति स्वरस्येति वक्तव्यम् – सवदिशनिवृत्त्यर्थम् । सूसनीति द्विसकारोऽयमिति स इति लुप्तसप्तमीको निर्देशः सि सनि सकारादौ सनीत्यर्थः । व्यक्तिर्वेति व्यत्तयन्तरापन्ने न भवति जातेरनाश्रयणात् **"इवन्तर्द्ध०"** (३।७।३३) इत्यादिना पतेरिट् पक्षे । प्रतिरित्सतीति वक्तव्यम् = **व्याख्येयम्**, तच्च योगविभागादित्यर्थः । तेन **'राधो हिंसायाम्'** इति किम् ? आरिरात्सति गुरून् ।।५३६।

### [वि० प०]

सनि० । मेङ्माङोरपि ग्रहणम्, मा माने इत्यस्य निरनुबन्धकस्य तावद् भवति । 'माङ् माने, मेङ् प्रतिदाने' (२।८६;१।४६२) इत्यनयोरपीति **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि० ४८) इति परिभाषा नाद्रियते इत्युक्तम् । **"सस्य सेऽसार्वधातुके तः"** (३।६।९३), "स्कोः संयोगाद्योरन्ते च" (३।६।५४) इति यथासम्भवम् इसः सकारस्य तकारो लोपश्च भवति । कथमित्यादि । **"इवन्तर्द्ध०"** (३।७।३३) इत्यादिना पक्षे इट् । स इति लुप्तसप्तमीकं पदम्, तस्य परगमने सूसनि इति द्विसकारोऽयं निर्देशो भवति । सि सनि सकारादौ सनीत्यर्थः । अयमिडागमे कृते इकारादिर्वर्तते इटस्तद्ग्रहणेन ग्रहणात् । व्यक्तिर्वेति इटा व्यक्त्यन्तरत्वम-स्येत्यर्थः । प्रतिरित्सतीति वक्तव्यं व्याख्येयम्, तत्पुन**र्योगविभागाद**त्यर्थः । तेन प्रतिपूर्वराधो हिंसायामेव भवति, अन्यत्र आरिरात्सति गुरुन् ।।५३६।

### [समीक्षा]

'मित्सति, मित्सते, दित्सति, आरिप्सते, शिक्षति, पित्सति' आदि शब्दरूपों के सिद्ध्यर्थ अभ्यासलोप तथा धातुघटित स्वर को इस् आदेश की आवश्यकता होती है । इसकी पूर्ति दोनों व्याकरणों में की गई है । पाणिनि का सूत्र है– "सनि मीमाघुरभलभशकपतपदामच इस्" (अ० ७।४।५४) । यहाँ यह ध्यातव्य है कि अभ्यासलोप की प्रवृत्ति के लिए पाणिनि ने "अत्र लोपोऽभ्यासस्य" (अ० ७।४।५८) सूत्र द्वारा अधिकार का विधान बाद में किया है, जबकि कातन्त्रकार ने यह अधिकार इससे पूर्व ही किया है ।

### [विशेष वचन]

१. 'मा' इति मेङ्माङोरपि ग्रहणम् (दु० वृ०) ।

२. केचिन्मिनोतिं न पठन्ति, स्वरान्तानां सनीति दीर्घत्वे मीरूपस्य सम्भवात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति अनित्येयं परिभाषेति (दु० टी०)।

३. प्रतिरित्सतीति वक्तव्यं व्याख्येयम्, तच्च योगविभागादित्यर्थः (दु० टी०; वि० प०)।

**[रूपसिद्धि]**

१. **मित्सति** । मि + सन् + अन् + ति । मातुमिच्छति । 'डु मिञ् प्रक्षेपणे' (४।४) धातु से इच्छा अर्थ में "धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्" (३।२।४) से सन् प्रत्यय, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से द्विर्वचन, प्रकृत सूत्र द्वारा अभ्यासलोप – इकार को इसादेश, "सस्य सेऽसार्वधातुके तः" (३।६।९३) से सकार को तकार, "ते धातवः" (३।२।१६) से 'मित्स' की धातुसंज्ञा तथा विभक्तिकार्य ।

२. **प्रमित्सति, प्रमित्सते** । प्र + मी + सन् + अन् + ति, ते । 'मीञ् हिंसायाम्' (८।७) या 'मीङ् हिंसायाम्' (३।८५) धातु से सन् प्रत्यय, द्विर्वचन, अभ्यासकार्य, धातुसंज्ञा तथा विभक्तिकार्य ।

३. **प्रमित्सते, उपमित्सते** । प्र + मा + सन् + अन् + ते । 'मेङ् प्रतिदाने' (१।४६२) तथा 'माङ् माने शब्दे च – माङ् माने' (२।८६; ३।९१) धातुओं से सन् प्रत्यय, द्विर्वचन, अभ्यासकार्य, धातुसंज्ञा तथा विभक्तिकार्य ।

४-५. **दित्सति, धित्सति** । दा + सन् + अन् + ति । धा + सन् + अन् + ति । 'डु दाञ् दाने' (२।८४) तथा 'डु धाञ् धारणपोषणयोः' (२।८५) धातुओं से सन् प्रत्यय, द्विर्वचन, अभ्यासकार्य, धातुसंज्ञा तथा विभक्तिकार्य ।

६. **आरिप्सते** । आ + रभ् + सन् + अन् + ते । आङ् उपसर्गपूर्वक 'रभ राभस्ये' (१।४७१) धातु से सन् प्रत्यय, द्विर्वचन, अभ्यासकार्य, धातुसंज्ञा तथा विभक्तिकार्य ।

७. **आलिप्सते** । आ + लभ + सन् + अन् + ते । आङ् उपसर्गपूर्वक 'डु लभष् प्राप्तौ' (१।४७२) धातु से सन् प्रत्यय, द्विर्वचन, अभ्यासकार्य, धातुसंज्ञा तथा विभक्तिकार्य ।

८. **शिक्षति** । शक + सन् + अन् + ति । 'शक्लृ शक्तौ' (४।१५) या 'शक क्षमायाम्' (३।११८) धातु से सन् प्रत्यय, द्विर्वचन, अभ्यासकार्य, धातुसंज्ञा तथा विभक्तिकार्य ।

९. **पित्सति** । पत् + सन् + अन् + ति । पतितुमिच्छति । 'पत्लृ गतौ' (१।५५४) धातु से इच्छा अर्थ में सन् प्रत्यय, द्विर्वचन, अभ्यासकार्य, धातुसंज्ञा तथा विभक्तिकार्य ।

१०. **पित्सते** । पद् + सन् + अन् + ते । 'पद गतौ' (३।१०७) धातु से इच्छार्थक सन् प्रत्यय, द्विर्वचन, अभ्यासकार्य, धातुसंज्ञा तथा विभक्तिकार्य ॥५३६।

## ५३७. आप्नोतेरीः [३।३।४०]

**[सूत्रार्थ]**

सन् प्रत्यय के परे रहते आप् - धातुघटित स्वर को ई – आदेश तथा अभ्यासलोप होता है ॥५३७।

**[दु० वृ०]**

आप्नोतेः स्वरस्य ईर्भवति सनि परे, अभ्यासलोपश्च । ईप्सति । ऋधिज्ञप्योरीरीतौ वक्तव्यौ सनि सकारादौ । ईर्त्सति, ज्ञीप्सति ॥५३७।

**[दु० टी०]**

आप्नो० । **'आप्लृ व्याप्तौ'** (४।१४), तिपा निर्देशः **सुखार्थ** एव "**आपितपि०**"इत्यादिना प्रतिषिद्धेट्त्वात् सकारादिरेव सन्निति । "**ऋधिज्ञप्योः**" इति **'ऋधु वृद्धौ, ज्ञा अवबोधने'** (३।७९; ८।३१), इन्, "**अर्तिह्री०**" (३।६।२२) इत्यादिना पकारागमः । मारणादिषु ज्ञा "मानुबन्ध०" (३।४।६५) इति ह्रस्वश्च । यथासंख्यम् ईरीताविति "**नामिनो र्वोः**" (३।८।१४) इति दीर्घः सिद्धः । ईरो दीर्घोच्चारणं प्रक्रियागौरवनिरासार्थम् । ईदिति तपरः **सुखार्थ** एव, ऋधेरभिधानमाश्रयणीयम् । ज्ञपेश्च **'प्रच्छ ज्ञीप्सायाम्'** (५।४९) इति **गणवचनात्** सिद्धिरिति भावः । ज्ञपेरिनोऽपीत्त्वे कृते ज्ञीप्सतीति न सिध्यति, नैवम् । परत्वादिनो लोप एव ईत्त्वस्यावकाशः । आद्यस्वरे इनो लोपस्य चकारेणाध्याहारेणेति, किं चोद्यपरिहारेणेति । सकारादाविति किम् ? अर्दिधिषति, जिज्ञपयिषति । "**इवन्तर्द्ध०**" (३।७।३३) इत्यादिना इट् पक्षे ॥५३७।

**[वि० प०]**

आप्नोतेः । ऋधिज्ञप्योरित्यादि । **'ऋधु वृद्धौ, ज्ञा अवबोधने'** (३।७९; ८।३१), इन्, पूर्ववत् पकारागमः । "**मारणतोषणनिशामनेषु ज्ञा**" (१।५२५) इति मानुबन्धत्वाद् ह्रस्वः, ज्ञप–मानुबन्धश्चेति चौरादिको वा यथाक्रममनयोः स्वरस्य 'ईर्-ईत्' इत्येतौ भवतः । ईदिति तकारः **सुखनिर्देशार्थ** एव, वक्तव्यौ व्याख्येयौ ऋधेरभिधानात् ज्ञपेश्च । **'प्रच्छ् ज्ञीप्सायाम्'** (५।४९) इति गमकारवचनादित्यर्थः । सनि सकारादावित्येव, अन्यत्र न भवति । अर्दिधिषति, जिज्ञपयिषतीति "**इवन्तर्द्ध०**" (३।७।३३) इत्यादिना पक्षे इट् ऋधेर्नाम्युपधत्वाद् गुणे कृते "**स्वरादेर्द्वितीयस्य**" (३।३।२) इति द्विर्वचनम् ॥५३७।

**[समीक्षा]**

'ईप्सति' शब्द के साधनार्थ धातुघटित आकार को ईकारादेश–अभ्याससलोप की आवश्यकता होती है। एतदर्थ दोनों ही आचार्यों ने सूत्र बनाए हैं। पाणिनि का सूत्र है–"आप्ज्ञप्यृधामीत्" (अ० ७।४।५५)। पाणिनि ने 'आप्' धातु के अतिरिक्त भी 'ज्ञप्–ऋध्' इन दो धातुओं का पाठ किया है, परन्तु कातन्त्रकार ने केवल 'आप्' धातु को ही ईकारादेशविधानार्थ स्वीकार किया है। इसलिए वृत्तिकार दुर्गसिंह ने एक वार्त्तिक वचन पढ़ा है – "ऋधिज्ञप्योरीरीतौ वक्तव्यौ सनि सकारादौ"। इसमें ऋध् धातु में ईर् तथा ज्ञप् धातु में ईत् आदेश निर्दिष्ट है। इस प्रकार कातन्त्रकार के 'ई - ईर् - ईत्' तीन आदेश पाणिनीय ईत् आदेश की अपेक्षा अधिक सार्थक हैं।

**[विशेष वचन]**

१. तिपा निर्देशः सुखार्थ एव (दु० टी०)।

२. ईरो दीर्घोच्चारणं प्रक्रियागौरवनिरासार्थम्। ईदिति तपरः सुखार्थ एव ऋधेरभिधानमाश्रयणीयम् (दु० टी०)।

३. ईदिति तकारः सुखनिर्देशार्थ एव (वि० प०)।

४. ज्ञपेश्च प्रच्छ ज्ञीप्सायाम् इति गणकारवचनादित्यर्थः (वि० प०; दु० टी०)।

**[रूपसिद्धि]**

१. **ईप्सति**। आप् + सन् + अन् + ति। आप्तुमिच्छति। 'आप्लृ व्याप्तौ' (४।१४) धातु से इच्छा अर्थ में "धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्" (३।२।४) से सन् प्रत्यय, "चण्परोक्षाचेक्रीयितसनन्तेषु" (३।३।७) से द्विर्वचन, "पूर्वोऽभ्यासः" (३।३।४) से पूर्ववर्ती आप् की अभ्याससंज्ञा, धातुघटित आकार को ईकार तथा अभ्याससलोप, 'ईप्स' की धातु संज्ञा तथा विभक्तिकार्य ॥५३७।

## ५३८. दन्भेरिच्च [३।३।४१]

**[सूत्रार्थ]**

सकारादि सन् प्रत्यय के परे रहते दन्भ्धातुघटित स्वर को इत् – ईत् आदेश तथा अभ्याससलोप उपपन्न होता है ॥५३८।

**[दु० वृ०]**

दन्भेः स्वरस्य इद् भवति चकारादीच्च सनि परेऽभ्याससलोपश्च। धिप्सति, धीप्सति। सनि सकारादाविति किम्? दिदम्भिषति। मुचोऽकर्मकस्योद् वा वक्तव्यः। मोक्षते वत्सः स्वयमेव, मुमुक्षते वत्सः स्वयमेव, आनुकूल्यात् कर्मकर्तृत्वम् ॥५३८।

[दु० टी०]

दन्भेः । **'दन्भु दम्भे'** (४।१९) सनि **"इवन्तर्द्ध०"** (३।७।३३) इत्यादिना इट् पक्षे, **"सनि चानिटि"** (३।५।९) इति चकारादगुणत्वम् । 'मुचोऽकर्मकस्योद् वा वक्तव्यः' इति मुचेरकर्मकस्य यः स्वरस्तस्य ओकारो वा भवति अभ्यासलोपश्च । वक्तव्यम् = व्याख्येयम् । 'मोक्ष असने' (९।१५०) इति चुरादौ **'घुषिर् विशब्दने'** (९।१४६) इति प्रतिषेधाच्चुरादेरिन् पक्षे इति किरादिवचनादात्मनेपदम् । **'इच्छामन्तरेण च न क्रिया'** इतीच्छा गम्यते मुक्तिक्रियां प्रति आनुकूल्यात् कर्मकर्तृत्वेन, विवक्ष्यते स्वमोचकत्वात् । तदा मुक्षिरकर्मको भवति । यदा **'मुच्लृ मोक्षणे'** (५।७) मोक्तुमिच्छति इति सन्, तदा सनन्तस्य कर्मकर्तृस्थत्वादात्मनेपदम् ॥५३८।

[वि० प०]

दन्भेः । **"सनि चानिटि"** (३।५।९) इत्यत्र चकारादनामिनोऽपि क्वचिदिति सनोऽगुणत्वमुच्यते, तेन दन्भेरनुषङ्गलोपः । **"तृतीयादेर्घढधभान्तस्य"** (३।६।१००) इत्यादिना दकारस्य धकारः । सनि सकारादावित्येव – दिदम्भिषति, अत्रापि पूर्ववद् इट् पक्षे । मुच् इत्यादि । मोक्तुमिच्छतीति सन् । द्विर्वचने धातोरकारस्योकारोऽभ्यासलोपश्च । पक्षे **"सनि चानिटि"** (३।५।९) इति गुणप्रतिषेधोऽस्त्येव । किरादिश्रन्थिग्रन्थिसनन्ताः कर्मकर्तृस्था इति रुचादित्वादात्मनेपदम् । आनुकूल्यात् कर्मकर्तृत्वमिति । मोक्तुमिष्यमाणे वत्सोऽप्रतिकूलतया । स्वमोचकत्वाद् यदा स्वयमेव मुच्यते इति कर्मकर्तृत्वेन विवक्ष्यते, तदा मुचिरयमकर्मको भवति । तदेतन्न वक्तव्यम् । **'मोक्ष असने'** (९।१५०) इति चौरादिकेन सिद्धम् । **'घुषिर् विशब्दने'** (९।१४६) इति विशब्दनप्रतिषेधाच्चुरादेरिन् विभाषितः । किराद्याश्रयणात् पूर्ववदात्मनेपदम् । अथान्तरेण सन्प्रत्ययमिच्छार्थः कथं गम्यते इति चेन्नैवम् । इच्छामन्तरेण क्रिया न सम्भवतीति क्रियावशादेवेच्छार्थोऽपि संभाव्यते । मुचेस्तु पक्षे 'मुमुक्षते' इत्यस्त्येव ॥५३८।

[समीक्षा]

'धिप्सति, धीप्सति' शब्दरूपों के सिद्ध्यर्थ सन् प्रत्यय के परे रहने पर 'दन्भ्' धातुघटित अकार स्वर को इकार-ईकार आदेश करने की आवश्यकता होती है । इसका विधान दोनों व्याकरणों में किया गया है । पाणिनि का सूत्र है – "दम्भ इच्च" (अ० ७।४।५६) । अतः उभयत्र समानता है ।

**[विशेष वचन]**

१. मुचोऽकर्मकस्योद् वा वक्तव्यः– मोक्षते वत्सः स्वयमेव, मुमुक्षते वत्सः स्वयमेव। आनुकूल्यात् कर्मकर्तृत्वम् (दु० वृ०)।

२. इच्छामन्तरेण च न क्रियेतीच्छा गम्यते, मुक्तिक्रियां प्रत्यानुकूल्यात् कर्मकर्तृत्वेन विवक्ष्यते स्वमोचकत्वात्, तदा मुचिरकर्मको भवति (दु० टी०)।

३. इच्छामन्तरेण क्रिया न सम्भवतीति क्रियावशादेवेच्छार्थोऽपि सम्भाव्यते (वि० प०)।

**[रूपसिद्धि]**

१. **धिप्सति, धीप्सति** । दन्भ् + सन् + अन् + ति । दम्भितुमिच्छति । 'दन्भु दम्भे' (४।१९) धातु से इच्छार्थक सन् प्रत्यय, द्विर्वचन, "इवन्तर्द्धभ्रस्जदन्भुश्र्यूर्णुभर-ज्ञपिसनितनिपतिदरिद्रां वा" (३।७।३३) से अनिट्, "सनि चानिटि" (३।५।९) से अगुण, "अनिदनुबन्धानामगुणेऽनुषङ्गलोपः" (३।६।१) से अनुषङ्गलोप, प्रकृत सूत्र से धातुघटित अकार को इकार–ईकार–अभ्यासलोप, "तृतीयादेर्घढधभान्तस्य धातोरादिचतुर्थत्वं सध्वोः" (३।६।१००) से द् को ध्, "अघोषेष्वशिटां प्रथमः" (३।८।९) से भ् को प्, "ते धातवः" (३।२।१६) से 'धिप्स-धीप्स' की धातु संज्ञा तथा विभक्तिकार्य ॥५३८।

## ५३९. दिगि दयतेः परोक्षायाम् [३।३।४२]

**[सूत्रार्थ]**

परोक्षासंज्ञक विभक्ति के परे रहते 'देङ्' धातु को 'दिगि' आदेश तथा अभ्यासलोप होता है ।। ५३९।

**[दु० वृ०]**

देङः परोक्षायां दिग्यादेशो भवति अभ्यासलोपश्च । तिपा धातुरेव निर्दिश्यते । दिग्ये, दिग्याते, दिग्यिरे । 'दय दाने' इत्यस्यामा व्यवधानाद् दयाञ्चक्रे ॥५३९।

**॥ इति दौर्गसिंह्यां वृत्तौ तृतीये आख्याताध्याये तृतीयो द्विर्वचनपादः समाप्तः ॥**

●

**[दु० टी०]**

दिगि० । अविभक्तिकोऽयमादेशः सस्वरः । तिपेत्यादि । यदि देङ इत्युच्यते स्वरस्येत्यधिकारात् स्वरस्यैव स्थाने स्याद् इति भावः । अथ निर्देशस्य समानत्वात्

**'दय दाने'** (१।४०८) इत्यस्य न कथं ग्रहणमित्याह– दयेत्यादि। **"दययासश्च"** (३।२।१८) इत्यनेन य आम्, तेन व्यवधानादित्यर्थः। न हि दिग्यादेशेन द्विर्वचनस्य बाधेत्यभ्यासलोप उच्यते। अन्यथा "जेर्गिः सन्परोक्षयोः" (३।६।३१) इत्यादौ द्विर्वचनं न स्यात्। जिगीषति, जिग्ये। अथ तत्र जातिः। इह व्यक्तिराश्रीयते इति किमनेन यत्नेनेति ॥५३९।

**॥ इति दुर्गसिंहविरचितायां कातन्त्रवृत्तिटीकायामाख्याताध्याये तृतीये तृतीयो द्विर्वचनपादः समाप्तः ॥**

●

**[वि० प०]**

दिगि०। इकारोक्तः सविभक्तिरादेशोऽस्वर इति न्यायान्मा भूदस्वर इति दिगीति लुप्तविभक्तिकमुच्यते। अथ देङः इत्युच्यतां किं तिपा निर्देशेन ? सत्यम्। स्वरस्येत्यधिकाराद् देङः स्वरस्यैव स्यान्न धातोरित्याह– तिपेत्यादि। तेन धातुसमुदायस्यैवादेशः सिद्धो भवति। यद्येवं निर्देशस्य तुल्यत्वाद् 'दय दाने' (१।४०८) इत्यस्य कथन्न ग्रहणमित्याह – दयेत्यादि। "दययासश्च" (३।२।१८) इत्यनेनाम्प्रत्ययेन व्यवधानादित्यर्थः ॥५३९।

**॥ इति श्रीमत्त्रिलोचनदासकृतायां कातन्त्रवृत्तिपञ्जिकायाम् आख्याताध्याये तृतीये तृतीयो द्विर्वचनपादः समाप्तः ॥**

●

**[समीक्षा]**

'दिग्ये, दिग्याते, दिग्यिरे' शब्दरूपों के सिद्ध्यर्थ पाणिनि 'दीङ्' धातु को तथा कातन्त्रकार 'देङ्' धातु को 'दिगि' आदेश करते हैं। पाणिनि का सूत्र है– "दयतेर्दिगि लिटि" (अ० ७।४।९)। अन्तर यह है कि कातन्त्रकार ने प्रकृत अभ्यासलोपाधिकार के ही अन्तर्गत इसका विधान किया है, जिससे अभ्यासलोप या द्विर्वचन के लिए उपायान्तर की कल्पना नहीं करनी पड़ती है, जबकि भिन्न प्रकरण में इसे प्रस्तुत करने से उपायान्तर की कल्पना करनी पड़ती है। दिगि आदेश किए जाने के कारण द्विर्वचन नहीं होता हैं– "दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यते" (काशिकावृत्ति ७।४।९)।

**[विशेष वचन]**

१. तिपा धातुरेव निर्दिश्यते (दु० वृ०)।

२. अविभक्तिकोऽयमादेशः सस्वरः (दु० टी०)।

३. अथ तत्र जातिः। इह व्यक्तिराश्रीयते इति किमनेन यत्नेनेति (दु० टी०)।

४. इकारोक्तः सविभक्तिरादेशोऽस्वर इति न्यायान्मा भूदस्वर इति दिगीति लुप्तविभक्तिकमुच्यते।

**[रूपसिद्धि]**

१. **दिग्ये**। देङ् + परोक्षा – ए। 'देङ् पालने' (१।४६३) धातु से परोक्षासंज्ञक आत्मनेपद – प्रथमपुरुष - एकवचन 'ए' प्रत्यय, द्विर्वचन प्रकृत सूत्र से 'दिगि' आदेश–अभ्यासलोप तथा "य इवर्णस्यासंयोगपूर्वस्यानेकाक्षरस्य" (३।४।५८) से इ को य् आदेश।

२-३. **दिग्याते, दिग्यिरे**। देङ् + परोक्षा – आते। देङ् + परोक्षा – इरे। द्विर्वचनादि प्रक्रिया पूर्ववत्॥ ५३९।

**॥ इत्याख्याताध्याये तृतीये समीक्षात्मको द्विर्वचनाख्यतृतीयः पादः समाप्तः॥**

●

॥श्रीः॥

# परिशिष्टम् – १ (अ) = रुचादिगणः

## ४९२. कर्तरि रुचादिङानुबन्धेभ्यः [३।२।४२]

**[दु० वृ०]**

रुचादिभ्यो ङानुबन्धेभ्यश्च कर्तर्यभिधेये आत्मनेपदानि भवन्ति। रोचते, वर्द्धते। शीङ्-शेते, चक्षिङ् – आचष्टे। रुच इत्यनुदात्तानुबन्धोपलक्षणम्। ऊर्ध्वमादत्ते इत्युदात्तः, तद्विपरीतश्चानुदात्तः। उदात्तानुदात्तयोर्मिश्रश्च समाहारो **लोकोपचारात्**। तेन रुचप्रकारेभ्योऽपि भवन्ति। आदिग्रहणाच्च – निविशते, परिक्रीणीते।

## ४९२।१. नेर्विश्

**[दु० वृ०]**

उपसर्गान्नेः परो विशती रुचादिर्भवति। निविशते गृहं कपोतः। अर्थवत्त्वात् प्रतिपदोक्तत्वात् प्रत्यासन्नत्वाच्च उपसर्गादिति लभ्यते। सर्वत्रैवं बोध्यम्। नेरिति किम्? विशति, परिविशति। उपसर्गादिति किम्? मधुनि विशन्ति भ्रमराः॥४९२।१।

**[दु० टी०]**

नेर्विश्। कथं मधुनि विशन्ति भृङ्गाः। क्रियायोगितया प्रत्यासत्तेरुपसर्गस्य नेर्ग्रहणमर्थवत्त्वात् प्रतिपदोक्तत्वाच्चेति॥४९२।१।

**[वि० प०]**

नेर्विश्०। कथं 'मधुनि विशन्ति भ्रमराः' इत्ययमपि नेः परो विशतिर्वर्तते इति? नैवम्, क्रियाद्योतकतया प्रत्यासन्नस्य नेरुपसर्गस्यैव ग्रहणम् अर्थवत्त्वात् प्रतिपदोक्तग्रहणाच्चेति। अयं तु नामिनः स्वर इति न्वागमे सति अनर्थको लाक्षणिकश्चेति॥४९२।१।

**[क० च०]**

नेर्विश्। ननु विश्धातोरनुदात्तानुबन्धः क्रियताम्, किमादिग्रहणबलात् पृथग् यत्नेन? नैवम्। 'प्रविशति, परिविशति' इत्यादावात्मनेपदप्रसङ्गात्। क्रियाद्योतकतयेति **पञ्जी**। ननु यदि द्योतकत्वेऽपि नेरुपसर्गस्यार्थवत्त्वमुच्यते, तदा सप्तमीसम्बन्धिनो नेः साक्षादेवाधिकरणवाचित्वात् कथमत्र न भवतीत्याह – प्रतिपदोक्तत्वाच्चेति चकारेण धातूपसर्गयोरन्तरङ्गसम्बन्धित्वाद् इत्यपि सूच्यते॥४९२।१।

## ४९२/२. परिव्यवेभ्यः क्रीञ्

**[दु० वृ०]**

परिव्यवेभ्य उपसर्गेभ्यः परः क्रीञ् रुचादिर्भवति। परिक्रीणीते, विक्रीणीते, अवक्रीणीते। परिसाहचर्यादनव्ययपक्षिवाचकस्य वेर्न ग्रहणम्। तेन वनं बहुवि क्रीणातीत्यत्र न भवति, अनुपसर्गत्वात्॥४९२।२।

**[दु० टी०]**

परिव्य०। परिक्रीणीते, विक्रीणीते, अवक्रीणीते। **'वनं बहुवि क्रीणाति'** इति पूर्ववद् व्याख्येयम्। पर्यवसाहचर्याद् वा वेरुपसर्गस्य ग्रहणम्। बहवो वयः पक्षिणो यस्मिन्निति॥४९२।२।

**[वि० प०]**

परिव्य०। परिक्रीणीते, विक्रीणीते, अवक्रीणीते। **"उभयेषामीकारः"** (३।४।४४) इत्यादिना ईकारः। **'वनं बहुवि क्रीणाति'** इत्यत्र न भवति अनव्ययेन प्रत्यासत्तेरयोगादिति उक्तम्। बहवो वयो यस्मिन् वने तद् वनं **बहुवि**। बहुपक्षिकमित्यर्थः॥४९२।२।

**[क० च०]**

परिव्य०। पूर्वसूत्रवदत्रापि **वृत्तावुदाहृतत्वात्** 'परिक्रीणीते' इति नोदाहृतम्, प्रत्यासत्तेरयोगादिति। धातूपसर्गयोरन्तरङ्गसम्बन्ध एवेह प्रत्यासत्तिः। पर्यवयोरुपसर्गयोः साहचर्याद् वेरिह उपसर्गस्यैव ग्रहणम्। न चोपपरिक्रीणाति अवक्रीणन्तमित्यत्र **'अव रक्ष पालने'** (१।२०२) इत्यस्य हौ परे अवेति रूपे सति पर्यवयोरपि व्यभिचार इति वाच्यम्। उपरिशब्दे परिशब्दस्य निरर्थकत्वात्, अवेति क्रियापदस्य च लाक्षणिकत्वादिति नियमार्थमिदम्॥४९२।२।

## ४९२/३. विपराभ्यां जिः

**[दु० वृ०]**

विपराभ्यामुपसर्गाभ्यां परो जयती रुचादिर्भवति। विजयते, पराजयते। उपसर्गादिति किम्? वनं बहुवि जयति। सेना परा जयति। परा उत्कृष्टेत्यर्थः॥४९२।३।

**[दु० टी०]**

विपरा०। विजयते, पराजयते। तृतीयया वा विपराभ्यां जयतिर्विशिष्यते, अन्योऽन्यसाहचर्याद् वा उपसर्गयोर्ग्रहणम्। वनं बहुवि जयति, सेना परा जयति। परा उत्कृष्टा इत्यर्थः॥४९२।३।

**[वि० प०]**

विपरा० । विजयते, पराजयते । जयतीत्यर्थः । इहापि पूर्ववद् उपसर्गयोरेव ग्रहणाद् 'वनं बहुवि जयति, सेना परा जयति' इत्यत्र भवति । परा उत्कृष्टा इत्यर्थः । अथवा विपराभ्यामिति विशेषणे तृतीया । विपराभ्यां विशिष्टो जयतिरित्यर्थः । विशेषणं च धातोरुपसर्ग एव युज्यते ॥४९२।३।

**[क० च०]**

विप० । विपराभ्यामिति पञ्चमी । अथवेति **पक्षान्तरम्।** विशिष्टत्वं चात्रान्तरङ्ग-सम्बन्धः । **वस्तुतस्तु** एकस्मिन्नव्ययगणे पठितयोरेवात्र ग्रहणम् । अत एव **टीकायामपि** साहचर्यादित्युक्तम् । यथा 'रामलक्ष्मणौ' इत्युक्ते भ्रात्रोर्दाशरथ्योरेव ग्रहणम् ॥४९२।३।

## ४९२/४. आङो दाञ अनात्मप्रसारणे

**[दु० वृ०]**

आङ उपसर्गात् परो ददाती रुचादिर्भवति । अनात्मप्रसारणे गम्यमाने-धनमादत्ते, विद्यामादत्ते । अनात्मप्रसारणं किम् ? मुखं व्याददाति छात्रः, नदी कूलं व्याददाति । आत्मग्रहणं किम् ? व्याददते पिपीलिकाः पतङ्गस्य मुखम् । परप्रसारणे प्रतिषेधं-बाधनार्थम् ॥४९२।४।

**[दु० टी०]**

आङो दा० । आदत्ते । अनात्मप्रसारण इति किम् ? आस्यं व्याददाति छात्रः, व्याददाति मुखं विपादिका, व्याददाति मुखं पिपीलिका, व्याददाति कूलं नदी, विवृणोतीत्यर्थः । अनात्मग्रहणं किम् ? व्याददते पिपीलिकाः पतङ्गस्य मुखम् ॥४९२।४।

**[वि० प०]**

आङो दाञ० । आदत्ते । जुहोत्यादित्वाद् द्विर्वचनम्, अभ्यस्तानामाकारलोपः । अनात्मप्रसारण इति किम् ? मुखं व्याददाति छात्रः, व्याददाति नदी कूलम् । आत्मग्रहणं किम् ? परप्रसारणे प्रतिषेधो मा भूत् – व्याददाति पिपीलिका पतङ्गस्य मुखम् । **"आत्मने चानकारात्"** (३।५।३९) इति नलोपः ॥४९२।४।

**[क० च०]**

आङो० । आत्मशब्दोऽत्र आत्मीयवचनः । न च कर्तुरात्मसम्बन्धप्रसारणमित्यर्थः । कथं किं 'व्यादत्स्व विहङ्ग भीमवदनम्' इत्यत्र आत्मप्रसारणे आत्मनेपदमिति ? सत्यम् । दाञ्धातोरुभयपदित्वात् । तर्हि अनेन सूत्रेण किं कृतमिति चेद् अनात्मप्रसारणे आत्मनेपदमेवेति **नियमार्थ**मिति । यद्यपि दाञ्धातोरेव आत्मप्रसारणवृत्तिता, न तु दानादिधातोः । तथापि नकारः **सुखार्थः** इति ॥४९२।४।

# ४९२/५. गमिन् क्षान्तौ

**[दु० वृ०]**

पूर्वसूत्राद् आङ् अनुवर्तते । आङः परो गमिरिनन्तो रुचादिर्भवति क्षान्तौ प्रतीक्षायां गम्यमानायाम् । आगमयस्व तावत् । मानुबन्धत्वाद् ह्रस्वः । कञ्चित् कालं प्रतीक्षस्व इत्यर्थः ॥४९२।५।

**[दु० टी०]**

गमिन्० । आङ् इत्यनुवर्तते । आगमयस्व मा त्वरिष्ठाः । सहस्व कञ्चित् कालमित्यर्थः । ननु चेन्ग्रहणं किमर्थम्, कालहरणान्नागमिरिनन्त एव वर्तते ? सत्यम्, **सुखप्रतिपत्त्यर्थमेव** । नात्र परापकारमर्षणादिः क्षमा विधीयते ॥४९२।५।

**[वि० प०]**

गमिन्० । आङिति वर्तते । गमिन्निति इनन्तो निर्देशः, मानुबन्धत्वाद् ह्रस्वः । **क्षान्तिरिह** प्रतीक्षाकालहरणमुच्यते । आगमयस्व तावत् कञ्चित् कालं क्षमस्व प्रतीक्षस्वेत्यर्थः ॥४९२।५।

**[क० च०]**

गमिन्० । क्षान्ताविति किम् ? आगमयति माम् ॥४९२।५।

# ४९२/६. नुप्रच्छौ

**[दु० वृ०]**

आङः परौ नु-प्रच्छौ रुचादी भवतः । आनुते शृगालः । उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः । आपृच्छते गुरून् शिष्यः । आराधयतीत्यर्थः ॥४९२।६।

**[दु० टी०]**

नुप्र० । आङ् इत्येव । आनुते शृगालः, आपृच्छते गुरुम् । नौतिरत्रोत्कण्ठापूर्वके शब्दने वर्तते ॥४९२।६।

**[वि० प०]**

नुप्र० । आङित्येव वर्तते । आनुते शृगालः । उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः । आपृच्छते गुरून्, आराधयतीत्यर्थः ॥४९२।६।

**[क० च०]**

नुप्र० । असम्भवात् क्षान्तिरिह नानुवर्तते । आमन्त्रित इत्यर्थः । आङः प्रच्छिः कुशलप्रश्न इति **कुलचन्द्रः** । आमन्त्रण इति **प्राञ्चः** । **'आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलम्'** (मेघ० - १।१२) इति **मेघदूतः** ॥४९२।६।

## ४९२/७. अनुपरिभ्यां च क्रीड्

### [दु० वृ०]

अनुपरिभ्यामाङश्च परः क्रीड् रुचादिर्भवति । अनुक्रीडते, परिक्रीडते, आक्रीडते । 'क्रीडते नागराजः' इति प्रयोगदर्शनादनुपसर्गादपि क्रीडतेरात्मनेपदं चकारादिति बोद्धव्यम् ॥४९२।७।

### [दु० टी०]

अनुपरि० । चकार आङोऽनुकर्षणार्थः । अनुक्रीडते, परिक्रीडते, आक्रीडते । माणवकमनुक्रीडतीति । माणवकेन सह क्रीडतीत्यर्थः । कर्मप्रवचनीयोऽयमनुर्बहिरङ्गः अनुपरिभ्यामाङा च युक्तः क्रीडिति ॥४९२।७।

### [वि० प०]

अनुपरि० । अनुपरिभ्यां च क्रीड्, चकारादाङश्चेति । अनुक्रीडते, परिक्रीडते, आक्रीडते । इहापि पूर्ववद् उपसर्गग्रहणाद् बालकमनुक्रीडतीत्यत्र न भवति । सहार्थे कर्मप्रवचनीयोऽयमनुशब्दः । बालकेन सह क्रीडतीत्यर्थः ॥४९२।७।

### [क० च०]

अनुपरि० । कथं **'शल्लक्यामस्थिभागस्थलबलरहितः क्रीडते नागराजः'** इति, सत्यम् । अपप्रयोग इति **महान्तः** । चकारादिति **शरणदेवः** ॥४९२।७।

## ४९२/८. समोऽकूजने

### [दु० वृ०]

सम उपसर्गात् परः क्रीडती रुचादिर्भवति । अकूजने – अव्यक्तशब्दकरणभिन्नेऽर्थे गम्यमाने । संक्रीडन्ते कुमाराः । अकूजन इति किम् ? संक्रीडति शकटः । अव्यक्तशब्दं करोति ॥४९२।८।

### [दु० टी०]

समो० । क्रीडतीत्येव । संक्रीडन्ते कुमाराः । अकूजन इति किम् ? संक्रीडन्ति शकटानि, अव्यक्तशब्दं कुर्वन्तीत्यर्थः । शिक्षेर्जिज्ञासायामिति न वक्तव्यम् – विद्यासु शिक्षते, धनुषि शिक्षते । **'शिक्ष विद्योपादाने'** (१।४२८) इत्यात्मनेपदिना सिद्धम्, विद्योपादानस्य ज्ञातुमिच्छामन्तरेणासम्भवात् ॥४९२।८।

### [वि० प०]

समो० । कूजनम् अव्यक्तशब्दकरणम्, ततोऽन्यदकूजनम्, संक्रीडन्ते कुमाराः । अकूजन इति किम् ? संक्रीडति शकटः । अव्यक्तशब्दं करोतीत्यर्थः ॥४९२।८।

## ४९२/९. अपस्किरः

**[दु० वृ०]**

अपपूर्वात् किरतेस्तौदादिकाद् धातोः प्राक् सुडिति । 'अपस्किरः' इति तिब्लोपे निर्देशः । ससुट् कृधातू रुचादिर्भवति । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा निवासार्थी । सर्वत्रापाच्चतुष्पाच्छकुनिषु हृष्टभक्ष-निवासार्थिष्वालेखने सुडागमः । ससुडिति किम् ? अपकिरति ॥४९२।९।

**[दु० टी०]**

अपस्किर० । अदन्तोऽयमेकदेशोऽनुक्रियते, तिब्लोपं कृत्वा वा निर्देशः । अपस्किरते । अपाच्चतुष्पाच्छकुनिषु हृष्टभक्षनिवासार्थिषु सुट् । सुट् किमर्थम् ? अपकिरति ॥४९२।९।

**[वि० प०]**

अपस्किरः । अपपूर्वस्य **'कृ विक्षेपे'** (५।२१) इति तौदादादिकस्य तिलोपं कृत्वा निर्देशः । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा निवासार्थी । अपाच्चतुष्पाच्छकुनिषु हृष्टभक्षनिवासार्थिषु सुडागमो दृश्यते । सुडागमनिर्देशः किम् ? अपकिरति तृणानि ॥४९२।९।

## ४९२/१०. गत्यनुकरणे ह्रञ्

**[दु० वृ०]**

गत्यनुकरणं **सादृश्यम्** । तस्मिन्नर्थेऽभिधीयमाने ह्रञ् रुचादिर्भवति । अश्वाः पैतृकमनुहरन्ते, गावो मातृकमनुहरन्ते । पितृवदश्वा गच्छन्ति, मातृवद् गावो गच्छन्तीत्यर्थः । ऋकारान्तादागतेऽर्थे क्रीतादित्वादिकण् आदिलोपश्च । गतिग्रहणं किम् ? रूपादीनामनुकरणे न स्यात् । पितरमनुहरन्ति रूपेण पुत्राः ॥४९२।१०।

**[दु० टी०]**

गत्यनु० । पैतृकमनुहरन्ते अश्वाः, मातृकं गावोऽनुहरन्ते । ऋकारान्तादागतेऽर्थे इकणं व्युत्पादयन्ति । गतिग्रहणं किमर्थम् ? पितरमनुहरन्ति रूपादिनेति भावः ॥४९२।१०।

**(वि० प०)**

गत्यनु० । पैतृकमनुहरन्ते अश्वाः, मातृकमनुहरन्ते गावः । पितुरागतं **पैतृकम्**, मातुरागतं **मातृकम्** । ऋकारान्तादागतेऽर्थे क्रीतादित्वादिकण्, आदिलोपो दृश्यते । पितृवन्मातृवच्च अश्वा गावश्च गच्छन्तीत्यर्थः । गतिग्रहणं किम् ? रूपादीनामनुकरणे मा भूत् – रूपेण पितरमनुहरन्ति पुत्राः ॥४९२।१०।

[क० च०]

गत्यनु० । यदा गतिविषयेऽनुकरणं भवति तदा हृञ्धातू रुचादिर्भवतीत्यर्थः। सादृश्यमात्रेऽपि दृश्यते प्रयोगः। **'जलधिमनुहरते सरः'** इति **भाषावृत्तिः** ।।४९२।१०।

## ४९२/११. आशिषि नाथ

[दु० वृ०]

आशिष्येव नाथती रुचादिर्भवति। **सर्पिषो** नाथते। सर्पिर्मे भूयादित्याशास्ते। आशिषीति किम् ? माणवकमनुनाथति, याचते इत्यर्थः। आत्मनेपदिषु पाठात् सिद्धे निममोऽयम्-आशिष्येव नाथतेरात्मनेपदमिति। ["यत्तु **'नाथसे किमु पतिं न भूभृतः'** इति **किरातार्जुनीये। "दीनस्त्वामनुनाथते कुचयुगं पत्रावृतं मा कुरु"** इति प्रयोगौ साधू इति **काव्यप्रकाश**कारस्तदिदं चिन्त्यते। **"समर्थनाशिषोः"** (३।१।१९) इत्यत्र **वृत्तौ** इष्टाशंसनमपि प्रार्थनमेवेत्युक्तम्, तदा प्रार्थनायामपि आशंसायामेवात्मनेपदम्। अन्यत्र परस्मैपदमेवेति नियमः" इति पाठान्तरम्] ।।४९२।११।

[दु० टी०]

आशिषि०। आशिष्येव नाथतिरिति नियमार्थो **गणपाठः**। सर्पिषो नाथते। सर्पिर्मे भूयाद् इत्याशास्ते इत्यर्थः। आशिषीति किम् ? माणवकम् उपनाथति, याचते इत्यर्थः ।।४९२।११।

[वि० प०]

आशि०। नाथतेरात्मनेपदिनोऽपीह पाठो **नियमार्थः**। आशिष्येव नाथते इति। सर्पिषो नाथते। सर्पिर्मे भूयाद् इत्याशास्ते इत्यर्थः। आशिषीति किम् ? माणवकम् उपनाथति, याचते इत्यर्थः।४९२।११।

[क० च०]

आशिषि०। उपतापैश्वर्ययोरपि नाथधातोर्यदनुदात्तानुबन्धकरणं तत्तु रुचादेश्च व्यञ्जनादेरिति युप्रत्ययार्थम्। कथं याचनायाम् **'नाथसे किमु पतिं न भूभृतः'** इति **भारविः**। तथा **'आनाथते मुखरुचिम्, संनाथते'** इति च **काव्यान्तरम्**? सत्यम्, अपप्रयोग इति **काव्यप्रकाशः**। 'नाथसे' इति **पठन्त्येके। अन्ये** तु आशिष्यात्मनेपदमेव, अन्यत्र तूभयपदमेवेति नियममाहुः। **वस्तुतस्तु** याचनमप्याशंसनमिति **चन्द्रगोमी**। अस्माभिरप्ययमर्थः **"समर्थनाशिषोश्च"** (३।१।१९) इत्यत्राङ्गीकृतः। यत्तु **पञ्ज्याम्** आशिषीति किम् ? माणवकमुपनाथतीति प्रत्युदाहरणे 'याचते' इत्युक्तम्, तत्र याचनम् (अभ्यर्थनम्) अनुनय इति बोध्यम् ।।४९२।११।

## ४९२/१२. शपथे शप

**[दु० वृ०]**

शपथो मिथ्यानिरसनम्, तस्मिन् गम्यमाने शप रुचादिर्भवति। छात्राय शपते कुमारी। शपथ इति किम् ? शपति भृत्यं राजा, आक्रोशतीत्यर्थः ॥४९२।१२।

**[दु० टी०]**

शप०। छात्राय **शपते, उपल**म्भयति अवगमयति मिथ्या निरस्यतीत्यर्थः। प्रेमजिज्ञासमानाभ्यस्ताभ्यः समशेरत कामिनः इति छात्रस्य शरीरं स्पृशामीत्येवं या शपथं करोति सैवमुच्यते इ**त्येके**। उपलम्भनं प्रकाशनमि**त्यन्ये**। अन्यत्र छात्रं शपति आक्रोशतीत्यर्थः।४९२।१२।

**[वि० प०]**

शपथे०। शपथो मिथ्यानिरसनम्। छात्राय शपते कुमारी। सम्भाव्यमानव्यलीका कुमारी छात्रस्य विपरीतज्ञाननिवृत्तये मिथ्या निरस्यतीत्यर्थः। अथवा छात्रस्य शरीरं स्पृशामीत्येवं या शपथं करोति सैवमुच्यते। शपथ इति किम् ? छात्रं शपति, आक्रोशतीत्यर्थः ॥४९२।१२।

**[क० च०]**

शप०। वाचा शरीरस्पर्शनं शपथ इति **पाणिनि**मतमवलम्ब्याह – अथवेति, सैवमुच्यते इत्यत्रैवंशब्देन कुमारी शपते इति वाक्यसमुदायो नोच्यते, अन्यथा पङ्क्तिरियं न संगच्छते। ननु **माघे – "शपमानाय न चेदिभूजुजे"** इत्याक्रोशने कथम् आनश्प्रत्ययः ? सत्यम्, **"शक्तिवयस्ताच्छील्ये"** (४।४।९) इति शानङिति न दोषः। **वस्तुतस्तु** उभयपदित्वादाक्रोशनेऽप्यात्मनेपदं स्यादेव। सूत्रं तु शपथेऽत्रात्मनेपदमेव यथा स्यात्। तर्हि कथं **'सख्यः ! शपामि यदि किञ्चिदपि स्मरामि'** इति **भारवौ**। **'सुरतैः शपेयम्'** इति च **घटकर्परे** च परस्मैपदमिति, नियमासामर्थ्यादात्मनेपदमेव स्यात् ? सत्यम्, चक्षिङो द्व्यनुबन्धकरणादेकानुबन्धकरणेऽनित्यमपीति **केचित्**। तन्न, शपधातोरप्युदात्तानुदात्तत्वेन द्व्यनुबन्धकत्वात तस्माद् गम्यते प्रत्ययनियमोऽयम्। **तन्मते**ऽपि सिद्धमिदम्। तथाहि शपथ एवात्मनेपदं नान्यार्थे इति नियमेन शपथे परस्मैपदमपि चेत् **तन्मते** 'शपमानाय' इति **माघप्रयोगे** आक्रोशने कथमात्मनेपदमिति चेत् शक्त्यादिवचनात् शानङिति **पूर्वसिद्धान्त** एवास्ताम् [**'प्रजेति त्वां शशाप सा'** इति **रघुश्लोके** शपथार्थकत्वाभावान्नात्मनेपदम्] ॥४९२।१२।

## ४९२/१३. प्रतिज्ञानिर्णयप्रकाशनेषु स्थाः

**[दु० वृ०]**

**प्रतिज्ञा** अभ्युपगमः, **निर्णयो** निश्चयः, **प्रकाशः** स्वाभिप्रायप्रकटनम्। एष्वर्थेषु

वर्तमानस्तिष्ठती रुचादिर्भवति । [1]नित्यं शब्दमातिष्ठते, अभ्युपगच्छतीत्यर्थः । त्वयि तिष्ठते विवादः, निश्चिनोतीत्यर्थः । तिष्ठते कन्या छात्रेभ्यः, स्थित्वा स्वाभिप्रायं प्रकाशयतीत्यर्थः ॥४९२।१३।

**[दु० टी०]**

प्रतिज्ञा० । 'अभ्युपगमः **प्रतिज्ञा,** संशयितस्य वस्तुनो निश्चयः **निर्णयः,** अभिप्रायप्रकटनं **प्रकाशनम्'** एषु गम्यमानेष्विति । नित्यं शब्दमातिष्ठते, त्वयि तिष्ठते विवादः, तिष्ठते कन्या छात्रेभ्यः । एवं छात्रैः सह तिष्ठति, अवस्थानं करोति येनाभिप्रायस्तस्या ज्ञायते इति ॥४९२।१३।

**[वि० प०]**

प्रतिज्ञा० । **प्रतिज्ञा** अभ्युपगमः, अङ्गीकार इत्यर्थः । संशयितस्य वस्तुनो निश्चयो **निर्णयः,** स्वाभिप्रायप्रकटनं **प्रकाशनम्।** नित्यं शब्दमातिष्ठते, त्वयि तिष्ठते विवादः, तिष्ठते कन्याच्छात्रेभ्यः । तथा तिष्ठत्यवस्थानं करोति येनाभिप्रायं तस्या ज्ञायते इत्यर्थः ॥४९२।१३।

**[क० च०]**

प्रतिज्ञा० । **धातूनामनेकार्थत्वात्** प्रतिज्ञादयोऽर्थास्तिष्ठतिनाप्यभिधीयन्ते, तत्र च आङ्पूर्वस्यैव स्वभावात् प्रतिज्ञायां वृत्तिः । अत एव 'स्था प्रतिज्ञाने' इति वार्त्तिकम् । निश्चयो निर्णय इति । अत्र लक्षणया निश्चयाय मतिर्निश्चय उच्यते । तथा च,

**जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः ।**
**असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥ इति भारविः ।**

**अयमर्थः** – एनं सुयोधनम् अर्थसिद्धिः कथन्न जहातु यः सुयोधनः संशय्य विवादहेतौ वस्तुनि संशयितो भूत्वा कर्णशकुनिप्रभृतिषु निर्णेतृत्वेनाभिमतेषु स्वपक्षान्तरं परित्यज्य तिष्ठते, अन्यपक्षं परित्यज्य तैरुपदर्शितपक्षस्यैव समाश्रयणादिति **न्यासकृता** व्याख्यातम् । **पाणिनिस्तु "स्थेयाख्यायामात्मनेपदम्"** (अ० १।३।२३) इत्याचष्टे । विवादपदनिर्णेता **स्थेय** इति **रूढिः।** [तथा **भट्टिकाव्येऽपि 'त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयम्'** इत्यत्र प्रीतिरस्ति न वेति संशयेनान्यसन्देहः स्थेयः किन्तु प्रीतिरस्त्येवेति **जयमङ्गला** ] ॥४९२।१३।

## ४९२।१४. समवप्रविभ्यः

**[दु० वृ०]**

एभ्य उपसर्गेभ्यः परस्तिष्ठती रुचादिर्भवति । अप्रतिज्ञाद्यर्थमिदम् । सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते ॥४९२।१४।

---

१. कुत्रचिद् वृत्तौ नित्यं शब्दमातिष्ठन्ते मीमांसकाः । नित्यं शब्दं प्रतिजानते इत्यर्थः, इत्यादि पाठभेदो दृश्यते ।

**[दु० टी०]**

समव० । सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते । अप्रतिज्ञाद्यर्थं वचनम् ॥४९२।१४।

## ४९२/१५. उदोऽनूर्ध्वचेष्टायाम्

**[दु० टी०]**

अनूर्ध्वपरिस्पन्दलक्षणव्यापारे वर्तमानस्तिष्ठती रुचादिर्भवति मुक्तावुत्तिष्ठते साधुः, संग्रामे उत्तिष्ठते वीरः । उद्यमं करोतीत्यर्थः । अनूर्ध्वेति किम् ? आसनादुत्तिष्ठति अतिथिः । चेष्टायामिति किम् ? ग्रामाच्छतमुत्तिष्ठति । उत्पद्यते इत्यर्थः । परिस्पन्दनं हि **चेष्टो**च्यते ॥४९२।१५।

**[दु० टी०]**

उदोऽनू० । ऊर्ध्वचेष्टायां न वर्तते धातुश्चेत् । मुक्तावुत्तिष्ठते, मुक्त्यर्थं चेष्टते इत्यर्थः । अनूर्ध्वेति किम् ? आसनादुत्तिष्ठति । चेष्टायाम् इति किम् ? ग्रामाच्छतमुत्तिष्ठति, शतमुत्पद्यते इत्यर्थः । कथम् उत्तिष्ठते सेना, सम्भवतीति गम्यते । सैनिकानामियं चेष्टा न सेनाया आत्मीयो व्यापार इति ॥४९२।१५।

**[वि० प०]**

उदोऽनू० । ऊर्ध्वचेष्टायामिति । ऊर्ध्वपरिस्पन्दनलक्षणे व्यापारे धातुश्चेन्न वर्तते इति विमुक्तावुत्तिष्ठते । संग्रामे उत्तिष्ठते, तत्रोद्यमं करोतीत्यर्थः । अनूर्ध्वेति किम् ? आसनादुत्तिष्ठति । चेष्टायामिति किम् ? ग्रामाच्छतमुत्तिष्ठति, उत्पद्यते इत्यर्थः । परिस्पन्दनं हि **चेष्टो**च्यते ॥४९२।१५।

**[क० च०]**

उदो० । अथ **'उत्तिष्ठते वासुकिनापि दष्टः'** इत्यत्रोर्ध्वचेष्टायां कथमात्मनेपदम् ? नैवम्, नात्रोर्ध्वगमनम्, किन्तु प्रबोधनमिति ॥४९२।१५।

## ४९२/१६. उपान्मन्त्रेण

**[दु० वृ०]**

उपात् परो मन्त्रकरणकस्तिष्ठती रुचादिर्भवति । **मन्त्रो** गायत्र्यादिः । उपतिष्ठतीत्यर्थस्य करणम् । गायत्र्या सूर्यमुपतिष्ठते । मन्त्रेणेति तृतीयानिर्देशः किम् ? गायत्रीमुपतिष्ठति । अकर्मकश्चेति यावदुपादिति वर्तते ॥४९२।१६।

**[दु० टी०]**

उपान्मन्त्रेण । **मन्त्रो** गायत्र्यादिः । उपतिष्ठतीत्यर्थस्य करणं सावित्र्योपतिष्ठते । तृतीया किम् ? सावित्रीमुपतिष्ठति ॥४९२।१६।

**[वि० प०]**

उपान्मन्त्रेण । **मन्त्रो** गायत्र्यादिः, स चेदुपतिष्ठतीत्यस्य करणम् । गायत्र्या सूर्यमुपतिष्ठते । मन्त्रेणेति तृतीयानिर्देशः किम् ? गायत्रीमुपतिष्ठति । अकर्मकश्चेति यावद् उपादिति वर्तते ॥४९२।१६।

## ४९२/१७. पथ्याराधनयोश्च

**[दु० वृ०]**

उपात् परस्तिष्ठती रुचादिर्भवति पथि कर्तरि आराधने च गम्यमानेऽर्थे । अयं पन्थाः स्रुघ्नमुपतिष्ठते । स्रुघ्नं नाम ग्रामं प्रयातीत्यर्थः । आदित्यमुपतिष्ठते, पूजादिना आराधयतीत्यर्थः । [सङ्गतकरणमैत्रीकरणयोरित्यपि न वक्तव्यम्, आराधनेनैव सिद्धत्वात् । रथिकानुपतिष्ठते, सङ्गतकरणेन रथिकानाराधयतीत्यर्थः । महामात्रानुपतिष्ठते, मैत्रीकरणेन महामात्रानाराधयतीत्यर्थः । सङ्गतकरणमुपश्लेषः, **मैत्रीकरणं** चान्तरेणापि उपश्लेषमिति भेदः] ॥४९२।१७।

**[दु० टी०]**

पथ्या० । पथि कर्तरि आराधने च वर्तमानात् तिष्ठतेरित्यर्थः । अयं पन्थाः स्रुघ्नमुपतिष्ठते, प्रयातीत्यर्थः । आदित्यमुपतिष्ठते, पूजादिना आराधयतीत्यर्थः । रथिकानुपतिष्ठते । सङ्गतकरणेन रथिकानाराधयतीत्यर्थः । महामात्रानुपतिष्ठते । मैत्रीकरणेन महामात्रानाराधयतीत्यर्थः ॥४९२।१७।

**[वि० प०]**

पथ्या० । पति कर्तरि आराधने च गम्यमाने इत्यर्थः । अयं पन्थाः स्रुघ्नमुपतिष्ठते, प्रयातीत्यर्थः । आदित्यमुपतिष्ठते, पूजादिना आराधयतीत्यर्थः । सङ्गतकरण-मैत्रीकरणयोश्चेति न वक्तव्यम्, आराधनेनैव सिद्धत्वात् । पथिकानुपतिष्ठते । सङ्गतकरणेन पथिकानाराधयतीत्यर्थः । महामात्रानुपतिष्ठते । मैत्रीकरणेन महामात्रानाराधयतीत्यर्थः । सङ्गतकरणम् उपश्लेषो **मैत्रीकरणं** चान्तरेणाप्युपश्लेषमिति भेदः ॥४९२।१७।

**[क० च०]**

पथ्या० । एकापि सप्तमी अर्थवशाद् द्विधा भिद्यते अभिधेये विषये चेत्याह – कर्तरीति ॥४९२।१७।

## ४९२/१८. वा लिप्सायाम्

**[दु० वृ०]**

उपात् परस्तिष्ठती रुचादिर्भवति वा लिप्सायां गम्यमानायाम् । भिक्षुको धार्मिकमुपतिष्ठते उपतिष्ठति वा । भिक्षामहं लभेयमिति धार्मिकम् उपगच्छती-त्यर्थः ॥४९२।१८।

**[दु० टी०]**

वा लिप्सा० । भिक्षुको धार्मिकमुपतिष्ठते उपतिष्ठति वा । लिप्सायां गम्यमानायाम्, लिप्साविषये उपगमनार्थो धार्मिकमुपतिष्ठते तिष्ठति वा भिक्षालाभायेति ॥४९२।१८।

**[वि० प०]**

वा लिप्सा० । भिक्षुको धार्मिकमुपतिष्ठते उपतिष्ठति वा । भिक्षामहं लभेयमिति कृत्वा धार्मिकमुपगच्छतीत्यर्थः ॥४९२।१८।

## ४९२/१९. अकर्मकश्च

**[दु० वृ०]**

उपात् परोऽकर्मकस्तिष्ठती रुचादिर्भवति । वेति न वर्तते, 'उभयोर्विभाषयोर्मध्ये यो विधिः स नित्यः' इति वचनात् । भोजनकाल उपतिष्ठते । अन्यत्र – राजानमुपतिष्ठति । स्थेति निवृत्तम् ॥४९२।१९।

**[दु० टी०]**

अकर्मकश्च । इहापि उपात् स्था इत्येव । भोजनकाल उपतिष्ठते, अन्यत्र- राजानमुपतिष्ठति ॥४९२।१९।

**[वि० प०]**

अकर्मक० । भोजनकाल उपतिष्ठते । अन्यत्र राजानमुपतिष्ठति । स्थेति निवृत्तम् ॥४९२।१९।

**[क० च०]**

अकर्मक० । वा न वर्तते, उत्तरत्र वा–ग्रहणात् । उत्तरत्र कार्य्यिणां गमादीनां पाठादिति चकारस्य तूत्तरसूत्रे प्रयोजनं वक्ष्यति ॥४९२।१९।

## ४९२/२०. समो गमृच्छिप्रच्छिस्वृश्रुवेत्त्यर्त्तिदृशः

**[दु० वृ०]**

समः परे अकर्मका एते धातवो रुचादयो भवन्ति । सङ्गच्छते, समृच्छते, सम्पृच्छते । ग्रह्यादित्वात् सम्प्रसारणम् । संस्वरते, संशृणुते । (**श्रुवः शृ च** - ३।२।३५ - श्रादेशः) । वेत्तीति निर्देशाद् **'विद ज्ञाने'** (२।२७)– संवित्ते । अर्तीति निर्देशात् **'ऋ प्रापणे च'** (१।२७५) इति भ्वादौ, **'ऋ सृ गतौ'** (२।७४) इति जुहोत्यादौ, द्वयोरपि ग्रहणम् अविशेषात् । समृच्छते (अर्त्तेर्ऋच्छः ३।६।७७- इति ऋच्छादेशः – समियृते । ["अर्त्तिपिपर्त्त्योश्च" ३।३।२५ इति इकारः, "अभ्यासस्यासवर्णे" ३।४।५६ - इति इयादेशः], सम्पश्यते [**"दृशेः पश्यः"** ३।६।७६ इति पश्यादेशः] । अकर्मका इत्येव – सङ्गच्छति सुहृदं प्रियः ॥४९२ ।२०।

**[दु० टी०]**

समो गमृ० । गम्लृ-सङ्गच्छते । ऋच्छ-समृच्छते । प्रच्छ-सम्पृच्छते । स्वृ-संस्वरते । श्रु–संशृणुते । विद ज्ञाने-संवित्ते । विद्लृ उभयपदी–संविन्दति, संविन्दते । अर्त्तीति भ्वादौ ऋ प्रापणे च, ऋ सृ गताविति जुहोत्यादौ । नात्र साहचर्यम् – समियृते, समारत । दृशिर्-संपश्यते । अकर्मक इत्येव – संगच्छति सुहृदम् ॥४९२।२०।

**[वि० प०]**

समो० । संगच्छते, समृच्छते, संपृच्छते । प्रच्छेर्ग्रह्यादित्वात् सम्प्रसारणम् । संस्वरते, संशृणुते । **"श्रुवः शृ च"** (३।२।३५) । वेत्तीति निर्देशाद् **'विद ज्ञाने'** (२।२७) - संवित्ते । अर्त्तीति निर्देशाद् **'ऋ प्रापणे च'** (१।२७५) इतिभ्वादौ, **'ऋ सृ गतौ'** (२।७४) इति जुहोत्यादौ, द्वयोरपि ग्रहणम् अविशेषात् । समृच्छते, अर्त्तेः– समियृते । **"अर्त्तिपिपर्त्त्योश्च'** (३।३।२५) इत्यभ्यासस्येकारे कृते **"अभ्यासस्यासवर्णे"** (३।४।५६) इतीयादेशः । सम्पश्यते इति दृशेः पश्यः । अकर्मक इत्येव-संगच्छति सुहृदं प्रियः ॥४९२।२०।

**[क० च०]**

समो गम्० । अविशेषादिति । यद्यपि अलोपाद् आदादिकस्यैव ग्रहणं योग्यम्, तथापि रुचादेरा**कृतिगणत्वाद्** भौवादिकस्यापि ग्रहणमिति । **वस्तुतस्तु** तिपो धातुस्वरूपविधानात् कर्तरि विधीयमानत्वं नास्ति । अथ **"कर्तरि कृतः"** (४।६।४६) इति सामान्यवचनाद् भविष्यति चेत्, न । कर्तुः प्रतीयमानत्वाभावात् । ततश्च कर्तरि विहितसार्वधातुकत्वाभावादेव प्राप्तिर्नास्ति कुतस्तल्लोपाभावाद् आदादिकत्वनिश्चयः । तर्हि कथं भवतिरत्र प्राप्तौ सकर्मकः । वनतितनोतीत्यादौ च **विकरणो** दृश्यते ? सत्यम् । **"भवतेरः"** (३।३।२२) इति ज्ञापकात् क्वचिद् भवत्यपि चेद् अत्रापि स्यात् ? नैवम् । ज्ञापकज्ञापितविधेरनित्यत्वात् । अकर्मका इत्येवेति । तर्हि कथं सकर्मके आत्मनेपदम् – **'न सम्पपृच्छे गमनाय सत्वरा सखीजनं संददृशे न चापरा'** इति **व्यासवाक्ये** । अथ **'सन्ददृशे सदृशं रमणम्'** इत्यत्र **अनर्घराघवे** । **'द्रक्ष्येऽहं परमेश्वरि ! त्रिपथगे ! भागीरथि ! स्वं वपुः'** इति **वाल्मीके –**

**स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः ।**
**सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ॥**

इति **भारवौ** ? सत्यम् ।

**व्यासवाक्ये** 'सखीजनात्' इति पाठः कर्तव्यः, ततश्च ल्यब्लोपे पञ्चमी । सखीजनं प्राप्येत्यर्थ इति **शरणदेवः । वामनचरिते** तु – 'तां प्राप्य' इत्यध्याहार्यम्' ततश्च रमणमित्यधिगम्य सदृशं योग्यं यथा स्यात् तथा **'संददृशे'** इति व्याख्यातव्यम् । तच्चैक्यम्

इत्यत्र चातुर्वर्ण्यादिवत् स्वार्थे यण् ततश्च एकमित्यर्थे सति कर्तृविशेषणत्वेन क्रियाविशेषणत्वेन वा व्याख्येयम् । **अनर्घराघवे** तु कर्मव्यतीहारो विवक्षित इति **महान्तः** । रक्षांसीत्यत्र इतिशब्दः षष्ठ्यर्थे ततश्च 'रक्षांसि सन्ति' इत्यस्य सम्बन्धश्रवणवन्तो वयम् इत्यर्थः । **शङ्कराचार्य**प्रयोगे तु समो निमित्तत्वेऽपि यद् व्यतिक्रमं निर्दिशति, तत् क्वचित् समोऽभावोऽपि अकर्मकश्चेत्यत्र चकारात् सकर्मकेभ्योऽपि, अयं तु **सिद्धान्तो** देयः । अन्यत्रापि रुचादे**राकृतिगणत्वाद् वा । भारवौ** तु हितादिति पञ्चमी, हितजनादित्यर्थः, न तु हितानिति द्वितीयाबहुवचनम् । हितमिति पाठे तु क्रियाविशेषणम् अधिपशब्दस्य विशेषणं वा । **वस्तुतो हि वररुच्यादिमते** नास्ति अकर्मकाधिकारः ॥४९२।२०।

## ४९२/२१. उपसर्गादस्यत्यूहौ वा

### [दु० वृ०]

उपसर्गादस्यत्यूहौ रुचादी भवतो वा । निरस्यते, निरस्यति । समूहते, समूहति । अकर्मक इत्येव । निरस्यति शत्रून्, समूहति पदार्थान् ॥४९२।२१।

### [दु० टी०]

उपसर्गात् – निरस्यति, निरस्यते । समूहति, समूहते । अकर्मक इत्येव – निरस्यति शत्रून्, समूहति पदार्थान् ॥४९२।२१।

### [वि० प०]

उपसर्गादस्यत्यूहौ वा । निरस्यन्ते, निरस्यति । समूहते, समूहति । अकर्मक इत्येव । निरस्यति शत्रून्, समूहति पदार्थान् ॥४९२।२१।

### [क० च०]

उप० । अस्यतेरात्मनेपदार्थम् ऊहतेश्च परस्मैपदार्थं वा वचनम् – समूहति पदार्थमिति । ननु कथमत्र परस्मैपदम् – ऊहतेर्नित्यमात्मनेपदित्वात् प्रत्युदाहरणेऽप्यात्मनेपदस्यैव योग्यत्वात् ? सत्यम्, 'समूहते पदार्थान्' इति आत्मनेपदेनैव प्रत्युदाहरणम्, प्रत्युदाहरणे परस्मैपदपाठस्तु अशुद्ध एव । अतः **कुलचन्द्रोऽपि** सकर्मकयोस्तु यथाप्राप्तमित्युक्तवान् । **वस्तुतो वररुच्यादिमते**ऽकर्मकाधिकारो नास्त्येव, अतः सकर्मकेऽपि विकल्प इति । अकर्मकाधिकारेऽपि चकारात् सकर्मकेऽपि विकल्पः । अत एव **'अनुत्तरप्यूहति पण्डितो जनः'** इति **भारविः** । अत्रापिशब्दस्योपसर्गाभावादायिलोपे परस्मैपदमिति कथं **'सन्ततं तिमिरमिन्दुरुदासे, दिशः समूहन्निव दिग्विकीर्णम्'** इति ? सत्यम्, विस्मृतलक्षणत्वादिति **कुलचन्द्रः । अन्ये** तु 'पच्यते मासान्' इतिवत् पूर्वं कर्माविवक्षयेत्याहुः । **अस्मन्मते** चकाराद् इत्युक्त एव **सिद्धान्तः** ॥४९२।२१।

## ४९२/२२. आङो यमहनौ स्वाङ्गकर्मकौ च

**[दु० वृ०]**

आङः परौ यमहनौ अकर्मकौ स्वाङ्गकर्मकौ च रुचादी भवतः। आयच्छते, आहते। **"धुटि हन्तेः सार्वधातुके"** (३।४।४७) इति नलोपः। स्वाङ्गकर्मकौ च – आयच्छते पादम्, आहते उरः। अन्यस्मिन् कर्मणि न भवति। आयच्छति रज्जुम्, आहन्ति वृषलम्। कथम् 'आयच्छति पादं देवदत्तस्य, आहन्ति शिरो विष्णुमित्रस्य' ? सत्यम्, नेह पारिभाषिकम् 'अद्रवं मूर्तिमत्' इत्यादि स्वाङ्गम्, अपि तु स्वस्य आत्मनोऽङ्गम्। अतः परस्याङ्गे कर्मणि न भवति, तत् पुनर्व्याख्यानादिति ।।४९२।२२।

**[दु० टी०]**

आङ्०। आङो यमहनौ स्वाङ्गकर्मकौ चेति। आयच्छते, आहते। आयच्छते पादम्, आहते उरः। अन्यस्मिन् कर्मणि – आयच्छति रज्जुम्, आहन्ति वृषलम्। स्वाङ्गग्रहणं किम् ? छात्रो मित्रस्य पाणिम् आहन्ति। नात्र पारिभाषिकः स्वाङ्गशब्दः 'अद्रवं मूर्तिमत् स्वाङ्गम्' इति ।।४९२।२२।

**[वि० प०]**

आङो यम०। आङः परौ यमहनावकर्मकौ स्वाङ्गकर्मकौ च रुचादी भवतः इत्यर्थः। आयच्छते, आहते। **"धुटि हन्तेः सार्वधातुके"** (३।४।४७) इति नलोपः। स्वाङ्गकर्मकौ च– आयच्छते पादम्, आहते उरः। अन्यस्मिन् कर्मणि न भवति। आयच्छति रज्जुम्, आहन्ति वृषलम्। कथम् आयच्छति पादं देवदत्तस्य, आहन्ति शिरो देवदत्तस्येति ? सत्यम्। नेदं पारिभाषिकम् **'अद्रवं मूर्तिमद्'** इत्यादि स्वाङ्गम्, अपि तु स्वस्य आत्मनोऽङ्गं स्वाङ्गम्। अतः परस्याङ्गे कर्मणि न भवतीति तत् पुनर्व्याख्यानादिति ।।४९२।२२।

**[क० च०]**

आङः। वा न वर्तते कार्यिनिमित्तयोर्व्यतिक्रमनिर्देशात्, तयोर्वेत्यत्र वाग्रहणाद् वा। 'आयच्छते' इति दीर्घीभवतीत्यर्थः। आहते, आयातीत्यर्थः। व्याख्यानादिति। **आचार्यपारम्पर्या**दित्यर्थः। कथं **भारवौ– 'गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः'** इत्यत्र पराङ्गकर्मण्यात्मनेपदमा ? सत्यम्। स्खलितमिति **कुलचन्द्रः**।'आपेदे' इति **भागवृत्तिकृत्** पठति। **शरणदेवस्तु** 'विषमविलोचनस्य भुजाभ्यां गाण्डीवी स्वं वक्ष आजघ्ने' इत्याह, तन्न, अर्थासङ्गतेः।

**अपरे** तु 'विषमविलोचनस्य' इत्यनादरे षष्ठी, विषमविलोचनमनादृत्य तत्समीपे वा भुजाभ्यां वक्ष आजघ्ने आस्फोटितवानित्यर्थः। इदमपि न चारुतरम्, न हि

भुजाभ्यां कोऽप्यास्फोटयति किन्त्वेकेन भुजेनैव। **वयन्तु** आभ्यां विषमविलोचनगाण्डीविभ्याम् आजघ्ने। किम् आजघ्ने इत्याह – विषमविलोचनस्य वक्षः भुजा अर्थाद् गाण्डीविना, गाण्डीवी चाजघ्ने, अर्थाद् विषमविलोचनेनेति। अस्मिन् पक्षे कर्मण्येव प्रत्ययः। यद् वा **अकर्मकविवक्ष**यैवात्मनेपदं विधाय पश्चात् **कर्मविवक्षा,** पच्यते मासानितिवत्। अस्मिन् **पक्षे अस्य** सूत्रस्यैव विषयः। यद् वा 'अस्य विषमविलोचनस्य भुजाभ्यां गाण्डीवी आजघ्ने' इति कर्मणि प्रत्ययः। वक्ष उद्दिश्येति साध्याहारान्वयः इति ब्रूमः ॥४९२।२२।

## ४९२/२३. व्युद्भ्यां तपः

**[दु० वृ०]**

व्युद्भ्यां परस्तपती रुचादिर्भवति। वितपते, उत्तपते। स्खलति भासते वेत्यर्थः। वितपते पाणिम्, उत्तपते पाणिम्। सन्तापयतीत्यर्थः अत्राप्यकर्मकः स्वाङ्गकर्मकश्चेति कर्मान्तरे न भवति। आदित्यः पृथिवीं वितपति, उत्तपति सुवर्णं स्वर्णकारः ॥४९२।२३।

**[दु० टी०]**

व्युद्भ्याम्०। वितपते, उत्तपते। ज्वलति भासते वेत्यर्थः। वितपते उत्तपते पाणी, सन्तापयतीत्यर्थः। अकर्मकस्वाङ्गकर्मक इत्येव। आदित्यः पृथिवीं वितपति, उत्तपति सुवर्णं स्वर्णकारः। विलाययतीत्यर्थः ॥४९२।२३।

**[वि० प०]**

व्युद्भ्याम्०। वितपते, उत्तपते। ज्वलति भासते वेत्यर्थः। वितपते पाणिम्। सन्तापयतीत्यर्थः। अत्रापि अकर्मकः स्वाङ्गकर्मकश्चेति कर्मान्तरे न भवति। आदित्यः पृथिवीं वितपति, उत्तपति सुवर्णं स्वर्णकारः ॥४९२।२३।

## ४९२/२४. तपःकर्मकः

**[दु० वृ०]**

तपः कर्म यस्य तपतेरिति विग्रहः। तपःकर्मकस्तपती रुचादिर्भवति। तप्यते तपस्तापसः। तत्र चकारात् तपेस्तपःकर्मकादिति यण् कर्तरि ॥४९२।२४।

**[दु० टी०]**

तपःकर्मकः। तपः कर्म यस्य तपेरिति। तप्यते तपस्तापसः ॥४९२।२४।

**[वि० प०]**

तपः। तपः कर्म यस्य तपेरिति विग्रहः। तप्यते तपस्तापसः। तत्र चकारात् तपेस्तपःकर्मकादिति कर्तरि यण् ॥४९२।२४।

## ४९२/२५. निसंव्युपेभ्यो ह्वः

**[दु० वृ०]**

निसंव्युपेभ्यः परो ह्वयती रुचादिर्भवति। निह्वयते, संह्वयते, विह्वयते, उपह्वयते ॥४९२।२५।

**[दु० टी०]**

निसं०। निसंव्युपेभ्यो ह्वेति। निह्वयते, संह्वयते, विह्वयते, उपह्वयते। एवं निह्वास्यते, संह्वास्यते इति। नहि विकृतिः प्रकृतिं गृह्णातीति न चोद्यम्, **जाति**प्रधान-त्वान्निर्देशस्य ॥४९२।२५।

## ४९२/२६. स्पर्धायामाङः

**[दु० वृ०]**

आङः परो ह्वयती रुचादिर्भवति स्पर्धायाम्। मल्लो मल्लमाह्वयते। **स्पर्धा** पराभिभवेच्छा। यद्यपि आङ्परो ह्वयतिः स्पर्धायां न वर्तते, किन्त्वाह्वाने, तथापि स्पर्धाविषयकम् आह्वानमिह स्पर्धोच्यते उपचारात्। मल्लः स्पर्धमानो मल्लान्तर-माह्वयति = आकारयति ॥४९२।२६।

**[दु० टी०]**

स्पर्धायाम्। मल्लो मल्लमाह्वयते। **स्पर्धा** पराभिभवेच्छा। आङः पूर्वस्य ह्वयतेः स्पर्धायां वृत्त्यसंभवात् स्पर्धाविषयमाह्वानं स्पर्धोच्यते। स्पर्धमानमाह्वयतीत्यर्थः। यदा तु आङ्पूर्वोऽपि स्पर्धावृत्तिः साक्षात्, तदा मल्लो मल्लमाह्वयते स्पर्धयतीत्यर्थः ॥४९२।२६।

**[वि० प०]**

स्पर्धायामाङः। **स्पर्धा** पराभिभवेच्छा। यद्यपि आङ्पूर्वो ह्वयतिः स्पर्धायां न वर्तते किन्त्वाह्वाने, तथापि स्पर्धाविषयमिहाह्वानं स्पर्धोच्यते इहोपचारात्। मल्लो मल्लमाह्वयते। मल्लः स्पर्धमानो मल्लान्तरमाह्वयति आकारयतीत्यर्थः। स्पर्धायां किम्? पिता पुत्रम् आह्वयति ॥४९२।२६।

## ४९२/२७. सूचनावक्षेपणसेवनसाहसयत्नकथोपयोगेषु कृञ्

**[दु० वृ०]**

एष्वर्थेषु वर्तमानः करोती रुचादिर्भवति। **सूचनं** परापकारप्रयुक्तं परदोषा-विष्करणम्। **अवक्षेपणं** तिरस्करणम्। सेवनम् अनुवर्तनम्। **साहसं** यदबुद्धिपूर्वकं करणम्। **यत्नः** सतो गुणान्तराधानम्। **कथा** व्याख्यानम्। **उपयोगो** धर्मादिप्रयोजनं द्रव्यस्य विनियोगः। तत्र सूचने – अयमिदमुपकुरुते, सूचयतीत्यर्थः। अवक्षेपणे – श्येनो

वर्त्तिकामुपकुरुते, तिरस्करोतीत्यर्थः। सेवने – गणिकामुपकुरुते, सेवते इत्यर्थः। साहसे – परदारानुपकुरुते, तेषु सहसा प्रवर्तते इत्यर्थः। यत्ने – एधोदकस्योप – स्कुरुते, गुणान्तराधानं करोतीत्यर्थः। उपात् प्रतियत्नविकृतवाक्याध्याहारेषु सुट्। कथायाम् – जनापवादान् प्रकुरुते, प्रकर्षेण कथयतीत्यर्थः। उपयोगे – शतं प्रकुरुते, धर्माद्यर्थं नियुङ्क्ते इत्यर्थः ॥४९२।२७।

**[दु० टी०]**

सूच०। सूचनेत्यादि०। **सूचनम**पकारप्रयुक्तं परदोषाविष्करणम् – अयमिदमुपकुरुते। **अवक्षेपणं** तिरस्करणम्। श्येनो वर्त्तिकामुपकुरुते। **सेवनम्** अनुवर्तनम्। गणिकामुपकुरुते। **साहसं** यदबुद्धिपूर्वकं करणम्। परदारानुपकुरुते। **यत्नः** सतो गुणान्तराधानम्। एधोदकस्योपस्कुरुते। **कथा** आख्यानम्। जनापवादान् प्रकुरुते, गाथाः प्रकुरुते। **उपयोगो** धर्मादिप्रयोजने द्रव्यविनियोगः। शतं प्रकुरुते ॥४९२।२७।

**[वि० प०]**

सूचन०। **सूचनम्** अपकारप्रयुक्तं परदोषाविष्करणम्। **अवक्षेपणं** तिरस्करणम्। **सेवनम्** अनुवर्तनम्। **साहसं** यदबुद्धिपूर्वकं करणम्। **यत्नः** सतो गुणान्तराधानम्। **कथा** आख्यानम्। **उपयोगो** धर्मादिप्रयोजनं द्रव्यस्य विनियोगः। तत्र सूचने – अयमिदमुपकुरुते। सूचयतीत्यर्थः। अवक्षेपणे – श्येनो वर्त्तिकामुपकुरुते, निर्भर्त्सयतीत्यर्थः। सेवने – गणिकामुपकुरुते, सेवते इत्यर्थः। साहसे - परदारानुपकुरुते, तेषु सहसा प्रवर्तते इत्यर्थः। यत्ने – एधोदकस्योपस्कुरुते, तस्य गुणान्तराधानं करोतीत्यर्थः। **"उपात् प्रतियत्नविकृतवाक्याध्याहारेषु"** (कात० परि० – सं० ११४) इति सुट्। कथायाम् – जनापवादान् प्रकुरुते, प्रकर्षेण कथयतीत्यर्थः। उपयोगे – शतं प्रकुरुते, धर्माद्यर्थं विनियुङ्क्ते इत्यर्थः ॥४९२।२७।

**[क० च०]**

सूच०। आङ् इति न सम्बध्यते न स्मर्यते, तत्पूर्वककृञः सूचनार्थत्वाभावात्। यद्यपि उभयपदित्वादात्मनेपदं सिद्धं तथाप्येष्वर्थेषु आत्मनेपदमेव यथा स्यादिति वचनम् ॥४९२।२७।

## ४९२/२८. अधेः शक्तौ

**[दु० वृ०]**

अधेः परः करोती रुचादिर्भवति शक्तौ गम्यमानायाम्। शत्रून् अधिकुरुते। अभिभवतीत्यर्थः। शक्तो हि परानभिभवति, न च परैः पराजीयते। शक्ताविति किम्? अधिकरोति राजा ॥४९२।२८।

[दु० टी०]

अधेः। शक्तौ वर्तमानात् कृञः। तम् अधिचक्रे। **अन्य** आह-शक्तौ कर्तरीति तम् अधिचक्रे इति तम् अभिबभूव, न च पराजितस्तेनेत्यर्थः। शक्तो हि परम् अभिभवति, न च परेण पराजीयते ॥४९२।२८।

[वि० प०]

अधेः। शत्रूनधिकुरुते, अभिभवतीत्यर्थः। शक्तो हि परान् शत्रून् अभिभवति। न च परैः पराजीयते। शक्ताविति किम् ? अधिकरोति राजा ॥४९२।२८।

## ४९२/२९. वेः शब्दकर्मकः

[दु० वृ०]

शब्द एव कर्म यस्येति विग्रहः। वेः परः शब्दकर्मकः करोती रुचादिर्भवति। क्रोष्टा विकुरुते स्वरान्। शब्दकर्मक इति किम् ? विकरोति मानसं वसन्तः। कर्म इति किम् ? शब्देन विकरोति मतिम् ॥४९२।२९।

[दु० टी०]

वेः शब्द०। क्रोष्टा विकुरुते शब्दान्। शब्द इति किम् ? विकरोति मानसम्। शब्दकर्मक इति किम् ? शब्देन विकरोति मतिम् ॥४९२।२९।

[वि० प०]

वेः शब्द एव कर्म यस्येति विग्रहः। क्रोष्टा विकुरुते स्वरान्। शब्दकर्मक इति किम् ? विकरोति मानसं वसन्तः। कर्म इति किम् ? शब्देन विकरोति मतिम् ॥४९२।२९।

## ४९२/३०. अकर्मकश्च

[दु० वृ०]

वेरित्येव। वेः परोऽकर्मकः करोती रुचादिर्भवति। विकुर्वते सैन्धवाः। सिन्धौ भवा जाता वा अश्वाः शोभनं वल्गयन्तीत्यर्थः। ओदनपरिपूर्णाश्छात्रा विकुर्वते, निष्फलं चेष्टन्ते इत्यर्थः ॥४९२।३०।

[दु० टी०]

अकर्मक०। वेरित्येव। विकुर्वते सैन्धवाः। सिन्धौ भवा जाता वा अश्वाः शोभनं वल्गयन्तीत्यर्थः। ओदनपरिपूर्णाश्छात्रा विकुर्वते, निष्फलं चेष्टन्ते इत्यर्थः ॥४९२।३०।

## ४९२/३१. पूजोत्क्षेपणोपनयनज्ञानभृतिविगणनव्ययेषु नीञ्

[दु० वृ०]

एष्वर्थेषु नयती रुचादिर्भवति। **पूजा** सम्मानः। **नयते शर्ववर्मा व्याकरणे।**

पदार्थानुपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रतिपादयतीत्यर्थः । ते च युक्तिभिर्निश्चाय्यमानाः पूजिता भवन्ति । अभिलषितार्थसम्पादनेनैव तेषां पूजा इत्यर्थः । **उत्क्षेपणम्** ऊर्ध्वप्रापणम् । माणवकमुपनयते । अधःस्थितं माणवकमूर्ध्वं प्रापयतीत्यर्थः । **उपनयनम्**आचार्यक्रिया । माणवकमीदृशेन विधिना आत्मसमीपं प्रापयति, येनासावुपनेत्रा स्वयम् आचार्यः सम्पद्यते । माणवकमुपनयते । आत्मानमाचार्यं कुर्वन् माणवकमात्मसदृशं सम्पादयतीत्यर्थः । **ज्ञानं** प्रमेयनिश्चयः । नयते कात्यायनो व्याकरणे । प्रमेयं निश्चिनोतीत्यर्थः । **भृतिः** कर्ममूल्यम् । कर्मकरानुपनयते । भृतिदानेन समीपं करोतीत्यर्थः । **विगणनम्** ऋणादेर्निर्यातनम् । माद्राः कारं विनयन्ते । राजग्राह्यभागं निर्यातयन्तीत्यर्थः । कर एव कारः, स्वार्थे अण्, राजग्राह्यभागः कृषकैः रक्षार्थं परिकल्पितः । **व्ययो** धर्मादिषु विनियोगः । शतं विनयते । धर्मार्थं विनियुङ्क्ते इत्यर्थः । पूजादिष्विति किम् ? अजां नयति ग्रामम् ।।४९२।३१।

**[दु० टी०]**

पूजेत्यादि । पूजाद्यर्थविशिष्टो नयतिरित्यर्थः । **नयते शर्ववर्मा व्याकरणे,** पदार्थान् शिष्येभ्यः प्रतिपादयति । तेषां युक्तिभिर्निश्चाय्यमानानां पूजा । माणवकमुपनयते । उत्क्षेपणेनोर्ध्वं प्रापयतीत्यर्थः । माणवकमुपनयते । उपनयनेन स्वसमीपं प्रापयतीत्यर्थः । **नयते कात्यायनो व्याकरणे ।** प्रमेयं निश्चिनोतीत्यर्थः । कर्मकरानुपनयते । भृतिदानेन स्वसमीपीकरोतीत्यर्थः । माद्राः कारं विनयन्ते । राजग्राह्यभागं निर्यातयन्तीत्यर्थः । शतं विनयते । विनियुङ्क्ते इत्यर्थः ।।४९२।३१।

**[वि० प०]**

पूजोत्० । **पूजा** सम्मानः । **नयते शर्ववर्मा व्याकरणे ।** पदार्थान् उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रतिपादयतीत्यर्थः । ते च पदार्था युक्तिभिर्निश्चीयमानाः पूजिताः सम्मानिता भवन्तीत्यर्थः । अभिलषितार्थसम्पादनेनैव तेषां पूजा इत्यर्थः । **उत्क्षेपणम्** ऊर्ध्वप्रापणम् । माणवकमुपनयते । अधःस्थितं माणवकम् ऊर्ध्वं प्रापयतीत्यर्थः । **उपनयनमा**चार्यक्रिया । माणवकम् ईदृशेन विधिना आत्मसमीपं प्रापयति येनासावुपनेत्रा स्वयमाचार्यः सम्पद्यते । माणवकमुपनयते । आत्मानमाचार्यं कुर्वन् माणवकमात्मसदृशं सम्पादयतीत्यर्थः । **ज्ञानं** प्रमेयनिश्चयः । **नयते कात्यायनो व्याकरणे** । प्रमेयं निश्चिनोतीत्यर्थः । **भृतिः** कर्ममूल्यम् । कर्मकरानुपनयते । भृतिदानेनात्मसमीपं करोतीत्यर्थः । **विगणनम्** ऋणादेर्निर्यातनम् । माद्राः कारं विनयन्ते । राजग्राह्यभागं निर्यातयन्तीत्यर्थः । कर एव कारः, राजग्राह्यो भागः कृषकै रक्षार्थं परिकल्पितः । **व्ययो** धर्मादिप्रयोजने द्रव्यस्य विनियोगः । शतं विनयते । धर्माद्यर्थं नियुङ्क्ते इत्यर्थः । पूजादिष्विति किम् ? अजां नयति ग्रामम् ।।४९२।३१।

[क० च०]

पूजोत० । 'माणवकमुपनयते' इत्यनेनात्मनेपदेन सह तुल्यार्थत्वात् कथम् **'विनिन्युरेनं गुरवे गुरुप्रियम्'** इति **रघुकारः** परस्मैपदम् ? सत्यम् । आचार्यकरणं न विवक्षितम्, किन्तु अध्यापयामासुरित्यर्थः ॥४९२।३१।

## ४९२/३२. कर्तृस्थामूर्तकर्मकश्च

[दु० वृ०]

कर्तृस्थममूर्तमकठिनं कर्म यस्य नयतेरिति विग्रहः। कर्तृस्थामूर्तकर्मको नयती रुचादिर्भवति । क्रोधं विनयते । हर्षं विनयते । उपशमयतीत्यर्थः । कर्तृस्थ इति किम् ? देवदत्तो यज्ञदत्तस्य मन्युं विनयति । अमूर्त इति किम् ? गण्डुं विनयति । कर्म इति किम् ? बुद्ध्या विनयति ॥४९२।३२।

[दु० टी०]

कर्तृ० । कर्तृस्थममूर्तमकठिनं कर्म यस्य नयत्यर्थस्येति भावः । क्रोधं विनयते । कर्तृस्थ इति किम् ? छात्रस्य मन्युं विनयति । अमूर्त इति किम् ? गण्डुं विनयति ॥४९२।३२।

[वि० प०]

कर्तृस्था० । कर्तृस्थममूर्तमकठिनं कर्म यस्य नयतेरिति विग्रहः । क्रोधं विनयते, हर्षं विनयते । शमयतीत्यर्थः । कर्तृस्थ इति किम् ? देवदत्तो यज्ञदत्तस्य मन्युं विनयति । अमूर्त इति किम् ? गण्डुं विनयति ॥४९२।३२।

[क० च०]

कर्तृस्था० । उभयपदित्वादात्मनेपदसिद्धौ नियमार्थमिदमिति, कर्तृस्थामूर्तकर्मकेत्यादिना आत्मनेपदमेव । तर्हि कथम् **'नयन्ति पौरुषम्'** इति **भारविः** ? सत्यम्, उपसर्गादित्यतो मण्डूकप्लुत्या उपसर्ग इत्यनुवर्तते, तेनोपसर्गात् परस्यैवास्य सूत्रस्य विषयः । इदन्तु केवलमिति ॥४९२।३२।

## ४९२/३३. वृत्त्युत्साहतायनेषु क्रमः

[दु० वृ०]

एष्वर्थेषु क्रमो रुचादिर्भवति । **वृत्तिर**प्रतिबन्धः । **उत्साह**श्चैतसिको धर्मः । **तायनं** स्फीतता । ऋद्धस्य क्रमते बुद्धिः, न विहन्यते इत्यर्थः । अध्ययनाय क्रमते छात्रः, उत्सहते इत्यर्थः । नीतिमति श्रियः क्रमन्ते, स्फीतीभवन्तीत्यर्थः ॥४९२।३३।

[दु० टी०]

वृत्त्यु० ।**वृत्ती**त्यादि । वृत्तिरप्रतिबन्धः ।**उत्साह**श्चैतसिको धर्मः **तायनं** स्फीतता ।

ऋद्धस्य क्रमते बुद्धिः, न प्रतिहन्यते इत्यर्थः। क्रमते व्याकरणेऽध्ययनाय, उत्सहते इत्यर्थः। क्रमन्ते स्फीतीभवन्तीत्यर्थः। 'क्रमः' इत्यधिकारोऽनुपसर्गो वेति यावत् ॥४९२।३३।

**[वि० प०]**

वृत्त्युत्० । **वृत्तिरप्रतिबन्धः** । **उत्साह**श्चैतसिको धर्मः । **तायनं** स्फीतता । ऋद्धस्य क्रमते बुद्धिः, न प्रति**हन्यते इत्यर्थः** । अध्ययनाय क्रमते छात्रः । उत्सहते इत्यर्थः । नीतिमति श्रियः क्रमन्ते, स्फीतीभवन्तीत्यर्थः ॥४९२।३३।

## ४९२/३४. परोपाभ्याम्

**[दु० वृ०]**

इह वृत्त्यादयोऽर्था अनुवर्तन्ते । तत्र च पूर्वेणैव सिद्धे नियमार्थनिदम् । उपसर्गाणां मध्ये परोपाभ्यामेव वृत्त्यादिष्वर्थेषु क्रमो रुचादिर्भवति । पराक्रमते, उपक्रमते । न प्रतिहन्यते, उत्सहते, स्फीतीभवतीत्यर्थः । परोपाभ्यामिति किम् ? संक्रामति । वृत्त्यादिष्वेव – पराक्रमति, उपक्रामति ॥४९२।३४।

**[दु० टी०]**

परोपाभ्याम् । उपसर्गात् परोपाभ्यामेव वृत्त्यादिष्वर्थेष्विति । पराक्रमते, उपक्रमते॥४९२।३४।

**[वि० प०]**

परोपा० । इह वृत्त्यादयस्त्रयोऽर्था अनुवर्तन्ते । तत्र पूर्वेणैव सिद्धे नियमार्थमिदं भवति । उपसर्गाणां मध्ये परोपाभ्यामेव वृत्त्यादिष्वर्थेष्विति । पराक्रमते, उपक्रमते । न प्रतिहन्यते, उत्सहते, स्फीतीभवतीति वा इत्यर्थः । परोपाभ्यामिति किम् ? संक्रामति । "**क्रमः परस्मै**" (३।६।६८) इति दीर्घः । वृत्त्यादिष्वेव – पराक्रमति, उपक्रामति ॥४९२।३४।

## ४९२/३५. आङो ज्योतिरुद्गमे

**[दु० वृ०]**

आङः परः क्रमो रुचादिर्भवति ज्योतिरुद्गमे । ज्योतिरुद्गमे ज्योतिषां ग्रहनक्षत्रादीनामुद्गम ऊर्ध्वगमनमित्यर्थः । आक्रमते सूर्यः, उदगच्छतीत्यर्थः । ज्योतिरिरिति किम् ? आक्रामति धूमः । उद्गम इति किम् ? अग्निरिन्धनमाक्रामति, व्याप्नोतीत्यर्थः । कथमेतत् – **'नभः समाक्रामति कृष्णवर्त्मना स्थित्वैकचक्रेण रथेन भास्करः'** । अत्रापि व्याप्त्यर्थस्य विवक्षितत्वात् । तथाहि 'नभः' इति कर्मपदं दृश्यते॥४९२।३५।

**[दु० टी०]**

ज्योति० । ज्योतिषां ग्रहनक्षत्रादीनाम् ऊर्ध्वगमनमित्यर्थः । आक्रमते आदित्यः, नभसा गच्छतीत्यर्थः । ज्योतिरिति किम् ? आक्रामति धूमः । उद्गम इति किम् ? अग्निरिन्धनमाक्रामति, प्राप्नोतीत्यर्थः । तथा **'नभः समाक्रामति कृष्णवर्त्मना स्थित्वैकचक्रेण रथेन भास्करः'** इति कर्मपदं दृश्यते, व्याप्त्यर्थस्य विवक्षितत्वात् ॥४९२।३५।

**[वि० प०]**

आङो० । ज्योतिषां ग्रहनक्षत्रादीनाम् ऊर्ध्वगमनमित्यर्थः । आक्रमते आदित्यः, उद्गच्छतीत्यर्थः । ज्योतिरिति किम् ? आक्रामति धूमः । उद्गम इति किम् ? अग्निरिन्धनमाक्रामति, व्याप्नोतीत्यर्थः । कथमेतत् **'नभः समाक्रामति कृष्णवर्त्मना स्थित्वैकचक्रेण रथेन भास्करः'** इत्यत्रापि व्याप्त्यर्थस्य विवक्षितत्वात् । तथाहि 'नभः' इति कर्मपदं दृश्यते ॥४९२।३५।

## ४९२/३६. वेः पादाभ्याम्

**[दु० वृ०]**

वेः परः क्रमो रुचादिर्भवति, पादाभ्यां यदि सा क्रिया क्रियते। साधु विक्रमते हंसः । द्विवचनस्यातन्त्रत्वात् पादैरपि यदा क्रियते तदापि भवति । लघु विक्रमते अश्वः । पादाभ्यामिति किम् ? अश्वेन विक्रामति॥४९२।३६।

**[दु० टी०]**

वेः पादा० । पादाभ्यां चेत् सा क्रिया क्रियते । साधु विक्रमते । अश्वादीनां **गति-विशेषो विक्रमणम्** । पादाभ्यामिति द्विवचन**मतन्त्रम्** । पादाभ्यामिति किम् ? अश्वेन विक्रामति॥४९२।३६।

**[वि० प०]**

वेः पादाभ्याम् । पादाभ्यां यदि सा क्रिया क्रियते । साधु विक्रमते हंसः । द्विवचनस्यातन्त्रत्वाद् यदा पादैरपि सा क्रिया क्रियते तदापि भवति । सुष्ठु विक्रमतेऽश्वः । पादाभ्यामिति किम् ? अश्वेन विक्रामति॥४९२।३६।

## ४९२/३७. प्रोपाभ्यामारम्भे

**[दु० वृ०]**

प्रोपाभ्यां परः क्रमो रुचादिर्भवत्यारम्भेऽर्थे । प्रक्रमते । भोक्तुमारभते इत्यर्थः । कथम् उपक्रमते । शुश्रूषामङ्गीकरोतीत्यर्थः ? सत्यम्, अङ्गीकरणमप्यारम्भविषयमेवेत्यदोषः । आरम्भ इति किम् ? पूर्वेद्युः प्रक्रामति, गच्छतीत्यर्थः । अपरेद्युरुपक्रामति, आगच्छतीत्यर्थः ॥४९२।३७।

**[दु० टी०]**

प्रोपाभ्याम्० । प्रक्रमते भोक्तुम् । उपक्रमते भोक्तुम् । आरभते इत्यर्थः । अङ्गीकरणमप्यारम्भः । प्रक्रमते शुश्रुषाम् । उपक्रमते शुश्रूषाम् । आरम्भ इति किम् ? पूर्वेद्युः प्रक्रामति, गच्छतीत्यर्थः । अपरेद्युरुपक्रामति, आगच्छतीत्यर्थः ॥४९२।३७।

**[वि० प०]**

प्रोपाभ्यामारम्भे । **प्रक्रमते** भोक्तुम्, उपक्रमते भोक्तुम् । आरभते इत्यर्थः । कथं प्रक्रमते, शुश्रूषामङ्गीकरोतीत्यर्थः ? सत्यम्, अङ्गीकरणमप्यारम्भविशेष एवेत्यदोषः । आरम्भ इति किम् ? पूर्वेद्युः प्रकामति, गच्छतीत्यर्थः । परेद्युरुपक्रामति, आगच्छतीत्यर्थः ॥४९२।३७।

**[क० च०]**

प्रो० । कथं **'ते तां हन्तुं प्रचक्रमुः'** (दुर्गासप्त० २।४९) इति **चण्ड्यां** परस्मैपदम् ? सत्यम्, नात्रारम्भो विवक्षितः, किन्तु गतवन्त इत्यर्थः ॥४९२।३७।

## ४९२/३८. अनुपसर्गो वा

**[दु० वृ०]**

अनुपसर्गः क्रमो रुचादिर्भवति वा । क्रमते, क्रामति । अनुपसर्ग इति किम् ? संक्रामति । क्रम इति निवृत्तम् ॥४९२।३८।

**[दु० टी०]**

अनुप० । क्रमते, क्रामति । अनुपसर्ग इति किम् ? संक्रामति ॥४९२।३८।

**[वि० प०]**

अनुपसर्गो वा । क्रमते, क्रामति । क्रम इति निवृत्तम् ॥४९२।३८।

**[क० च०]**

अनु० । ननु विकल्पे उभयपदस्यैव न्याय्यत्वाद् यजादिपाठ एव न्याय्यः ? सत्यम्, कर्त्रभिप्राये क्रियाफले एव यजादिष्वात्मनेपदं विधीयते, इह तु सामान्येनैव विधीयते । इह तु सामान्येनैवेति **वररुचिश्च** । प्रसङ्गादत्रैव पाठः **इत्यपरे** । कथं **'वारिपूर्णां महीं कृत्वा पश्चात् संक्रमते गुरुः, अर्धरात्रे कलाहीने यदा संक्रमते रविः'** ? सत्यम्, अत्र सम उपसर्गप्रतिरूपकत्वाद् अनुपसर्गता । 'संक्रमते' इति पाठः सुप्रसिद्धः इति चकारादन्यत्रापीति **केचित्** । **अपरे** तु 'संचरते' इति पाठमाहुः, तन्न । तृतीयान्तपदाभावात् समस्तृतीयायुक्त इत्यस्याविषयत्वात् ॥४९२।३८।

## ४९२/३९. निह्नवे ज्ञाः

**[दु० वृ०]**

निह्नवेऽर्थे ज्ञा रुचादिर्भवति । शतमपजानीते, सहस्रमपजानीते । अपह्नुते इत्यर्थः ।

निह्नव इति किम् ? न त्वं किञ्चिदपि जानासि। स्वभावादपपूर्वो जानातिरपह्नवे वर्तते॥४९२।३९।

**[दु० टी०]**

निह्नवे ज्ञाः। शतमपजानीते। निह्नव इति किम् ? न त्वं किञ्चिदपि जानासि। अपपूर्वो जानातिरपह्नवे॥४९२।३९।

**[वि० प०]**

निह्नवे ज्ञाः। शतमपजानीते, सहस्रमपजानीते। अपह्नुते इत्यर्थः। **"ज्ञश्च"** (३।६।८२) इति जादेशः, **"उभयेषाम्"** (३।४।४४) इत्यादिना आकारस्येकारः। निह्नव इति किम् ? न त्वं किञ्चिदपि जानासि। स्वभावादपपूर्वो जानातिरपह्नवे वर्तते॥४९२।३९।

**[क० च०]**

निह्नवे०। अनुपसर्ग इति न सम्बध्यते, अपादेव निह्नवार्थस्य वाचकत्वाच्चेद् अपाज्ज्ञा इति कथं न कृतम् ? सत्यम्, **स्पष्टार्थम्**॥४९२।३९।

## ४९२/४०. अकर्मकश्च

**[दु० वृ०]**

अकर्मको ज्ञा रुचादिर्भवति। सर्पिषो जानीते। नात्र सर्पिर्ज्ञेयत्वेन **विवक्षितम्** अपि तु ज्ञानस्य भेदकत्वेनेत्यकर्मत्वम्। इह न भवति – स्वरेण पुत्रं जानाति, सकर्मकत्वात्॥४९२।४०।

**[दु० टी०]**

अकर्मकश्चेति। सर्पिषो जानीते। सर्पिरत्र ज्ञानस्य भेदकत्वेन **विवक्षितम्** इत्यकर्मता॥४९२।४०।

**[वि० प०]**

अकर्मकश्च। सर्पिषो जानीते। नात्र सर्पिर्ज्ञेयत्वेन **विवक्षितम्** अपि तु ज्ञानस्य भेदेन इत्यकर्मकत्वम्। इह न भवति-स्वरेण पुत्रं जानाति, सकर्मकत्वात्॥४९२।४०।

**[क० च०]**

अकर्म०। कथं **'वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिराम्, जानीते जयदेव'** (गीत० १।४) इत्यत्रात्मनेपदम्, सकर्मकत्वात्। तथा 'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽपि दृष्टा मया, **न जाने स प्रधानो मे शूरहस्ती सदामदः'** (दुर्गासप्त० १।१३) इत्येतदर्थम् "अनुपसर्गाज्ज्ञा" (अ० १।३।७६) इति **पाणिनिसूत्रम् ?** सत्यम्, चकारात् सकर्मकश्च रुचादिः, स चाभिधानादनुपसर्ग एव। **जयदेव**प्रयोगे तु **वयं** ब्रूमः– **'वाचः**

**पल्लवयत्युमापतिः, सन्दर्भशुद्धिं गिरां जानीते जयदेवः'** (गीत० १।४) **उमापति**र्वाचः वाण्याः सन्दर्भशुद्धिं पल्लवयति, जयदेव एव गिरा जानीते, गीःसम्बन्धिज्ञानवान् जयदेव **इत्यर्थः। यथा** 'सर्पिषो जानीते' इति। **मूर्खास्तु "निह्नवे ज्ञाः"** (३।२।४२-३९) इत्यस्य विषयमाहुः ॥४९२।४०।

## ४९२/४१. सम्प्रतिभ्यामस्मृतौ

**[दु० वृ०]**

सम्प्रतिभ्यां ज्ञा रुचादिर्भवति अस्मृतावर्थे। संजानीते, प्रतिजानीते। अभ्युपगच्छतीत्यर्थः। अस्मृताविति किम् ? मातुः संजानाति। स्मरतीत्यर्थः ॥४९२।४१।

**[दु० टी०]**

सम्प्रतिभ्यामस्मृताविति। संजानीते, प्रतिजानीते। अभ्युपगच्छतीत्यर्थः। अस्मृताविति किम् ? मातुः संजानाति, उत्कण्ठते इत्यर्थः ॥४९२।४१।

**[वि० प०]**

सम्प्रतिभ्यामस्मृतौ। संजानीते, प्रतिजानीते। अभ्युपगच्छतीत्यर्थः। अस्मृताविति किम् ? मातुः संजानाति। स्मरतीत्यर्थः ॥४९२।४१।

**[क० च०]**

सम्प्रति०। ननु मातुः संजानातीति कथं प्रत्युदाहरणं सकर्मकत्वेन द्व्यङ्ग-विकलत्वात् ? सत्यम्, मातुरित्यत्र सम्बन्ध एव षष्ठी, न तु स्मृत्यर्थकर्मणि। **वस्तुतस्तु** अस्मृताविति विशेषणाद् अकर्मक इति नानुवर्तते। अत एव अनोरकर्मक इत्यत्र पुनरकर्मग्रहणं करिष्यति ॥४९२।४१।

## ४९२/४२. ज्ञानयत्नोपच्छन्दनेषु वद

**[दु० वृ०]**

एष्वर्थेषु वदती रुचादिभवति। वदते **पतञ्जलि**र्व्याकरणे। ज्ञानपूर्वकं वदतीत्यर्थः। भाषणमपि ज्ञानपूर्वकमेवेति न पृथगुक्तम्। ज्ञानेनैवोक्तत्वात्। वदते **कात्यायनो** व्याकरणे। देदीप्यमानस्तत्र पदार्थान् वदतीत्यर्थः। यत्ने – क्षेत्रे वदते। क्षेत्रविषये यत्नमुत्साहमाविष्करोतीत्यर्थः। उपच्छन्दने – कर्मकरानुपवदते। **उपच्छन्दनं** प्रलोभनम्, तच्चोपसान्त्वनान्न भिद्यते इति। परदारानुपवदते। उपच्छन्दनेनैव सिद्धम्। वदिरित्य-धिकारस्तयोर्वेति यावत् ॥४९२।४२।

**[दु० टी०]**

ज्ञानेत्यादि। ज्ञानादिष्वर्थेषु विशेषणेष्विति भावः। वदते **पतञ्जलि**र्व्याकरणे, ज्ञानपूर्वकं वदतीत्यर्थः। भाषणमपि ज्ञानपूर्वकमेव। वदते व्याकरणे **कात्यायनः**।

देदीप्यमानस्तत्र पदार्थान् वदतीत्यर्थः। यत्र भाषणं तत्रावश्यं ज्ञानेन भवितव्यमिति। कोऽस्मिन् क्षेत्रे वदते। कः क्षेत्रविषयमुत्साहमाविष्करोतीत्यर्थः। कर्मकरानुपवदते तथा परानुपवदते। उपच्छन्दनं प्रलोभनम्, तच्चोपसान्त्वनान्न भिद्यते ॥४९२।४२।

**[वि० प०]**

ज्ञानयत्नोपच्छन्दनेषु वद। **वदते पतञ्जलिर्व्याकरणे**। ज्ञानपूर्वकं वदतीत्यर्थः। भाषणमपि ज्ञानपूर्वकमेवेति न पृथग् वाच्यम्, ज्ञानेनैव सिद्धत्वादिति। **वदते कात्यायनो व्याकरणे**। देदीप्यमानः पदार्थांस्तत्र वदतीत्यर्थः। यत्ने-क्षेत्रे वदते। क्षेत्रविषयं **यत्नम्** उत्साहमाविष्करोतीत्यर्थः। उपच्छन्दने – कर्मकरानुपवदते। उपच्छन्दनं प्रलोभनम्, तच्चोपसान्त्वनान्न भिद्यते इति। परदारानुपवदते इत्युपच्छन्दनेनैव सिद्धम्। वद इत्यधिकारस्तयोर्वेति यावत् ॥४९२।४२।

**[क० च०]**

ज्ञान०। ननु **पाणिनि**सूत्रे शोभोपसम्भाषणोपसान्त्वनानां पृथगुपादानमस्ति। इह तदभावे का गतिरित्याह – भाषणमिति ॥४९२।४२।

## ४९२/४३. अनोरकर्मकः

**[दु० वृ०]**

अनोः परोऽकर्मको वदती रुचादिर्भवति। अनुवदते कठः कालापस्य। अनुशब्दः सादृश्ये। यथा अधीयानः कालापः पठति तथा कठ इत्यर्थः। पश्चादर्थे वा। कालापेन पूर्वमुदिते पश्चात् कठो वदतीत्यर्थः। अकर्मक इति किम् ? पूर्वमेव यदुदितं तदनुवदति। पुनर्वदतीत्यर्थः ॥४९२।४३।

**[दु० टी०]**

अनोरकर्मक इति। अनुवदते कठः कालापस्य। यथा अधीयानः कालापः पठति तथा कठ इत्यर्थः। अकर्मक इति किम् ? पूर्वमेवानुवदति। पुनर्वदतीत्यर्थः ॥४९२।४३।

**[वि० प०]**

अनोरकर्मकः। अनुवदते कठः कालापस्य। अनुशब्दः सादृश्ये, यथा अधीयानः कालापः पठति तथा कठोऽपीत्यर्थः। पश्चादर्थे वा – कालापेन पूर्वमुदिते पश्चात् कठो वदतीत्यर्थः। अकर्मक इति किम् ? पूर्वमेव यदुदितं तदनुवदति, पुनर्वदतीत्यर्थः ॥४९२।४३।

**[क० च०]**

अनोः। अत्र व्यक्तवाचामिति न स्मर्यत इति **वररुचिर्जयमङ्गला** च, तदप्रमाणम्। **'घोषस्यानुपदिष्टैव लङ्का दूतकृतः पुरा'** इति **भट्टौ** लङ्काया व्यक्तवचनाभावादिति

**महान्तः** । तन्न, न हि लङ्का अनुपदिष्टेति, किन्तु इवशब्देन तत्सादृश्यस्योक्तत्वादिति ब्रूमः ॥४९२।४३।

## ४९२/४४. विमतौ

### [दु० वृ०]

विमतावर्थे वदती रुचादिर्भवति । विविधा नाना मति**र्विमतिः** गेहे विवदन्ते । विमतिपतिता विचित्रं भाषन्ते इत्यर्थः ॥४९२।४४।

### [दु० टी०]

विमताविति । विविधा नाना मतिरिति विशेषणं वदत्यर्थस्य । गेहे विवदन्ते । विमतिपतिता विचित्रं भाषन्ते इत्यर्थः ॥४९२।४४।

### [वि० प०]

विमतौ, विविधा नाना मतिर्विमतिः । गेहे विवदन्ते । विमतिपतिता विचित्रं भाषन्ते इत्यर्थः ॥४९२।४४।

### [क० च०]

विमतौ । कथं 'सत्यं विप्रवदन्ति ये मधुलिहः कान्तं वसन्तोत्सवे' इति ? सत्यम्, सहोक्तावित्यतः सिंहावलोकनन्यायेन व्यक्तावितीहानुवर्तते । तेन मधुलिहस्त्वव्यक्तमेव वदन्ति । विशेषस्तु **"तयोर्वा"** (३।२।४२-४६) इत्यत्र व्याख्यास्यामः ॥४९२।४४।

## ४९२/४५. व्यक्तं सहोक्तौ

### [दु० वृ०]

व्यक्ताक्षरं यथा भवति तथा सहोक्तौ सहोच्चारणेऽर्थे वदती रुचादिर्भवति । संप्रवदन्ते ग्राम्याः । व्यक्ताक्षरं युगपद् वदन्तीत्यर्थः । व्यक्तमिति किम् ? प्रवदन्ति कुक्कुटाः । यत्र अकारादयो वर्णाः स्वरूपेण स्पष्टमुपलभ्यन्ते, स व्यक्तो **ध्वनिः** । सहोक्ताविति किम् ? वदति ब्राह्मणः ॥४९२।४५।

### [दु० टी०]

व्यक्तम्० । सहोक्ताविति व्यक्ताक्षरं सहोच्चारणमित्यर्थः । संप्रवदन्ते ग्राम्याः । व्यक्तमिति किम् ? संप्रवदन्ति कुक्कुटाः । सहोक्ताविति किम् ? वदति ब्राह्मणः ॥४९२।४५।

### [वि० प०]

व्यक्तम्० । व्यक्ताक्षरं यथा भवति तथा सहोक्तौ सहोच्चारणे इत्यर्थः । संप्रवदन्ते ग्राम्याः । व्यक्ताक्षरं युगपद् वदन्तीत्यर्थः । व्यक्तमिति किम् ? सम्प्रवदन्ति कुक्कुटाः । यत्र वर्णाः स्वेन रूपेण स्फुटमुपलभ्यन्ते स व्यक्तो **ध्वनिः** । सहोक्ताविति किम् ? किं वदति ब्राह्मणः ॥४९२।४५।

**[क० च०]**

व्यक्तम्० । **"व्यक्तवाचां समुच्चारणे"** (अ० १।३।४८) इति **पाणिनि**सूत्रे व्यक्तवाचो मनुष्या एव **रूढाः** । **काशिका**–एतच्च कुक्कुटादिव्यवच्छेदार्थमु**पलक्षणम्** । तेन 'देवा विवदन्ते' इत्यपि स्यात् । तस्माद् वर्णगतमेवाव्यक्तत्वम् अभिमतम्, अन्यथा व्यवच्छेद्याभावात् कुक्कुटादिवाक्यस्यापि व्यक्तत्वाद् इत्याह – व्यक्ताक्षरमिति ॥४९२।४५।

## ४९२/४६. तयोर्वा

**[दु० वृ०]**

विमतिव्यक्तसहोक्त्योरेकत्र विवक्षायां वदती रुचादिर्भवति वा । विप्रवदन्ते मौहूर्ताः, विप्रवदन्ति वा । परस्परं विप्रतिषेधेन व्यक्ताक्षरं युगपद् वदन्तीत्यर्थः । विमतावित्येव – संप्रवदन्ते ग्राम्याः । व्यक्तमित्येव – विप्रवदन्ति शकुनयः । सहोक्तावित्येव – एकैकशो विप्रवदन्ते मौहूर्ताः । विमताविति नित्यमेव ॥४९२।४६।

**[दु० टी०]**

तयोर्वेति । विमतौ व्यक्तं सहोक्तौ चैकत्र विवक्षितायामित्यर्थः । विप्रवदन्ते मौहूर्त्ताः विप्रवदन्ति वा युगपत् परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः । विमतावित्येव – सम्प्रवदन्ते ग्राम्याः । व्यक्तमित्येव – विप्रवदन्ति शकुनयः । सहोक्तावित्येव-एकैकशो विप्रवदन्ति मौहूर्ताः ॥४९२।४६।

**[वि० प०]**

तयो० । विमतावित्येव – सम्प्रवदन्ते ग्राम्याः । व्यक्तमिति किम् ? सम्प्रवदन्ति शकुनयः । सहोक्तावित्येव – एकैकशो विप्रवदन्ते मौहूर्त्ताः । विमताविति नित्यमेव भवति ॥४९२।४६।

**[क० च०]**

तयो० । तच्छब्दस्य प्रसिद्ध्यर्थग्राहकत्वाद् **विमति**रिह प्रलापमात्रम्, न तु विचित्रभाषणमात्रमिति **कुलचन्द्रः** । प्रलापमात्रं स च प्रलापोऽत्र विचित्रभाषणं सामान्यभाषणं च, तदुभयोरेव ग्रहणम् । अतो न **पाणिनि**परिग्रहविरोधः । **"व्यक्तवाचां समुच्चारणे"** (अ० १।३।४८) इत्यनुवृत्तौ विभाषा । **'विप्रलापो विरोधोक्तिः'** **इत्यमरः** । अत एव **पञ्जिकाकारेण** विप्रतिषेधेनेत्यर्थकथनं कृतं न तु विचित्रमित्युक्तम्, अत एव 'विप्रवदन्ते शकुनयः' इत्यत्र विरुद्धभाषणप्रत्युदाहृतत्वाद् विमतावित्यनेनात्मनेपदम् । 'एकैकशो विप्रवदन्ते मौहूर्ताः' इति प्रत्युदाहरणे तु विचित्रभाषणमवगन्तव्यम् । अतो विमतावित्यनेन नित्यमात्मनेपदमित्युक्तम् । यद् वा विमतावित्यत्रापि व्यक्तमिति सम्बन्धनीयमिति व्याख्यातमेव तत्सूत्रे ॥४९२।४६।

## ४९२/४७. अवाद् गिरः

### [दु० वृ०]

अवात् परो गिरती रुचादिर्भवति। अवगिरते। तिब्लोपं कृत्वा तौदादिकस्य **'गृ निगरणे'** (५।२२) इत्यस्य निर्देशः। तेनेह न भवति – अवगृणाति ।।४९२।४७।

### [दु० टी०]

अवाद्०। अवगिरते। गिरेति निर्देशादिह न स्यात्। अवगृणाति। **'गृ शब्दे'** (८।२२) **"प्वादीनाम्"** (३।६।८३) ह्रस्वः ।।४९२।४७।

## ४९२/४८. समः प्रतिज्ञायाम्

### [दु० वृ०]

समः परो गिरती रुचादिर्भवति प्रतिज्ञायाम्। शतं संगिरते। अभ्युपगच्छतीत्यर्थः। प्रतिज्ञायामिति किम् ? संगिरति। वक्ति अभ्यवहरति वेत्यर्थः ।।४९२।४८।

### [दु० टी०]

समः प्रतिज्ञायाम् इति। शतं संगिरते, अभ्युपगच्छतीत्यर्थः। प्रतिज्ञायामिति किम् ? संगिरति, वक्ति अभ्यवहरति वेत्यर्थः ।।४९२।४८।

### [वि० प०]

समः प्रतिज्ञायाम्। शतं संगिरते, अभ्युपगच्छतीत्यर्थः। प्रतिज्ञायामिति किम् ? संगिरति, वक्ति अभ्यवहरति वेत्यर्थः ।।४९२।४८।

## ४९२/४९. किरादिश्रन्थिग्रन्थिसनन्ताः कर्मकर्तृस्थाः

### [दु० वृ०]

एते धातवो रुचादयो भवन्ति कर्मकर्तृस्थाः। आदिशब्दः प्रकारवचनः। किरतिप्रकाराः किरादयः **शिष्टप्रयोगानु**गम्याः स्वभावादन्तर्भूतकारितार्थाः कर्मकर्तृस्थत्वात्। कर्मवद्भावः प्राप्तस्तदपवादः कर्तर्यात्मनेपदं विधीयते। अवकारयति हस्तिनं हस्तिपकः, अवकिरते हस्ती स्वयमेव। ग्रथ्नाति मालां मालाकारः। ग्रथ्नीते माला स्वयमेव। ग्रथ्नाति मालां मालिकः, ग्रथ्नीते माला स्वयमेव। चिकीर्षति कटं देवदत्तः, चिकीर्षते कटः स्वयमेव ।।४९२।४९।

### [दु० टी०]

किरादि इत्यादि। किरतिप्रकाराः किरादयः **शिष्टप्रयोगानु**गम्याः अन्तर्भूतकारितार्थाः। अवकारयति हस्तिनं हस्तिपकः। अवकिरते हस्ती स्वयमेव। ग्रथ्नाति मालाम्, ग्रथ्नीते माला स्वयमेव, एवं चिकीर्षते कटः स्वयमेव ।।४९२।४९।

**[वि० प०]**

किरादिश्रन्थिग्रन्थिसनन्ताः कर्मकर्तृस्थाः । **आदिशब्दः प्रकारवचनः ।** किरतिप्रकाराः किरादयः **शिष्टप्रयोगानु**गम्याः स्वभावादन्तर्भूतकारितार्थाः कर्मकर्तृस्थत्वात् कर्मवद्भावः प्राप्तस्तदपवादः कर्तर्यात्मनेपदं विधीयते । अवकारयति हस्तिनं हस्तिपकः । अवकिरते हस्ती स्वयमेव । ग्रथ्नाति मालां मालाकारः । ग्रथ्नीते माला स्वयमेव । ग्रथ्नाति मालां मालिकः, ग्रथ्नीते माला स्वयमेव । चिकीर्षति कटं देवदत्तः, चिकीर्षते कटः स्वयमेव ॥४९२।४९।

**[क० च०]**

किरादि० । कर्मकर्तृस्थक्रियावचनतया धातुरपि तत्स्थो व्यपदिश्यते ॥४९२।४९।

## ४९२/५०. दुह

**[दु० वृ०]**

'कर्मकर्तृस्थ' इति वर्तते । कर्मकर्तृस्थो दोग्धी रुचादिर्भवति । दोग्धि गां गोपालकः । दुग्धे गौः स्वयमेव ॥४९२।५०।

**[दु० टी०]**

दुहेति । दोग्धि गोपालको गाम् । दुग्धे गौः स्वयमेव ॥४९२।५०।

**[वि० प०]**

दुह । कर्मकर्तृस्थ इति वर्तते । दोग्धि गोपालको गाम् । दुग्धे गौः स्वयमेव । **"दादेर्घः"** (३।६।५७) इति हस्य घत्वे **"घढधभेभ्यस्तथोर्धोऽधः, धुटां तृतीयश्चतुर्थेषु"** (३।८।३,८) इति च भवति ॥४९२।५०।

**[क० च०]**

दुह० । कथम्,

**उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया ।**
**स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी ॥**

इति **भारविः** ?

सत्यम् । पदमिह स्खलितम् **इत्येके,** तन्न । द्विकर्मके दुहधातौ प्रधानकर्मविषये कर्मकर्तृस्थम् अतोऽप्रधानकर्मणः प्रयोगो दुर्निवार्य इति **कुलचन्द्रः** ॥४९२।५०।

## ४९२/५१. अद्यतन्यां स्वरान्तश्च वा

**[दु० वृ०]**

अत्रापि कर्मकर्तृस्थ इत्येव । अद्यतन्यां विषये स्वरान्तो यो धातुश्चकाराद् दुहिश्च कर्मकर्तृस्थो रुचादिर्भवति वा । अकार्षीत् कटं देवदत्तः, अकृत कटः स्वयमेव, अकारि

कटः स्वयमेव । एवम् अलविष्ट केदारः स्वयमेव, अलावि केदारः स्वयमेव, अदुग्ध गौः स्वयमेव, अदोहि गौः स्वयमेव ॥४९२।५१।

**[दु० टी०]**

अद्यतन्यां स्वरान्तश्च वेति । अत्रापि कर्तृस्थ इत्येव । अद्यतन्यामिति विषयसप्तमी, चकारेण दुहिरनुकृष्यते । अकृत कटः स्वयमेव, अकारि कटः स्वयमेव । अलविष्ट केदारः स्वयमेव, अलावि केदारः स्वयमेव, अदोहि गौः स्वयमेव ॥४९२।५१।

**[वि० प०]**

अद्यतन्यां स्वरान्तश्च वा । अत्रापि कर्मकर्तृस्थ एवेति अद्यतन्यां विषये स्वरान्तो यो धातुश्चकाराद् दुहिश्च कर्मकर्तृस्थो वा रुचादिरित्यर्थः । अकार्षीत् कटं देवदत्तः, अकृत कटः स्वयमेव, अकारि कटः स्वयमेव । "**ह्रस्वाच्चानिटः**" (३।६।५२) इति सिचो लोपः । पक्षे कर्मवद्भावाद् इच्प्रत्यये वृद्धिः "**इचस्तलोपः**" (३।४।३२) इति च । एवम् अलविष्ट केदारः स्वयमेव, अलावि केदारः स्वयमेव । अदुग्ध गौः स्वयमेव । पूर्ववद् घत्वादि । "**दुहदिहलिहगुहाम्**" इति सण् विकल्पितः । पक्षे सिजपि नास्तीति वक्ष्यति । अदोहि गौः स्वयमेव ॥४९२।५१।

**[क० च०]**

अद्य० । इदमपि कर्मवद्भावबाधनार्थम् ॥४९२।५१।

## ४९२/५२. स्नुनमौ स्वयम्

**[दु० वृ०]**

कर्मकर्तृस्थ इति निवृत्तम् । स्वयम् इत्यधिकृतस्य कर्तुर्विशेषणम् । स्वयं कर्तरि स्नुनमौ रुचादी भवतः । अनन्यप्रेरिते कर्तरीत्यर्थः । प्रस्नुते गौः स्वयमेव । पयो मुञ्चतीत्यर्थः । नमिरयमन्तर्भूतकारितार्थः । नमयति दण्डं देवदत्तः, नमते दण्डः स्वयमेव । कर्मवद्भावस्य बाधकत्वाद् यणिचौ न भवतः । स्वयमिति किम् ? प्रस्नौति गौर्दोग्धुः कौशलेन नमति पल्लवो वातेन ॥४९२।५२।

**[दु० टी०]**

स्नुनमौ स्वयमिति । कर्मकर्तृस्थमिति निवृत्तम् । स्वयमित्यधिकृतस्य कर्तुर्विशेषणं स्वयं कर्तरि, अनन्यप्रेरिते कर्तरीत्यर्थः । प्रस्नुते गौः स्वयमेव, पयो मुञ्चतीत्यर्थः । नमते दण्डः स्वयमेव । अन्तर्भूतकारितार्थो 'नमयति दण्डं छात्रः' इति कर्मवद्भावस्य बाधितत्वाद् यणिचोरविषयः । स्वयमिति किम् ? प्रस्नौति गौर्दोग्धुः कौशलेन, नमति पल्लवो वातेन ॥४९२।५२।

**[वि० प०]**

स्नुनमौ । नमिरन्तर्भूतकारितार्थो नमयति दण्डं देवदत्तः, नमते दण्डः स्वयमेवेति कर्मवद्भावस्य बाधितत्वाद् यणिचौ न भवतः। स्वयमिति किम् ? प्रस्नौति गौर्दोग्धुः कौशलेन, नमति पल्लवो वातेन ॥४९२।५२।

**[क० च०]**

स्नुनमौ । कर्मकर्तृस्थ इति निवृत्तमिति । ननु यदीदमुच्यते तत् कथम्-नमयति दण्डं देवदत्तः, नमते दण्डः स्वयमेव, कर्मवद्भावस्य बाधितत्वाद् यणिचौ न भवतः, परपङ्क्तिः संगच्छते ? सत्यम्, इहापि स्वयंग्रहणं कर्मकर्तृस्थपरम्, तर्हि कथं तन्निवृत्त्यर्थं स्वयंग्रहणं कृतमिति चेत् ? तन्निवृत्त्या तत्सम्बद्धस्याद्यतन्यामित्यस्य विकल्पस्य च निवृत्तिः साधिता, न तु कर्मकर्तुः । एवं सति स्वयमिति किं कर्मकर्तृस्थमिति किमित्यर्थः। यत्तु स्वयमनन्यप्रेरिते कर्तरीत्युक्तं तदपि कर्मकर्तृ क्रियाप्रेरिते व्यापारानुकूलक्रिया व्याप्यभूतकर्तरीत्य**भिप्रायकमेव,** तेन यत् क्रियायाः कर्तृत्वं तदनतिरिक्तायां प्रेरितस्तद-नुकूलक्रियाव्याप्यभूतकर्मकर्त्रैव पर्यवस्यति । अयं चार्थः कर्मकर्तृप्रस्तावे लभ्यते । अत एव शुद्धकर्तरि प्रत्युदाहृतम् । अन्यथा कर्मकर्तर्येव प्रत्युदाहर्तुमुचितम् ।

ननु यदि नमिरन्तर्भूतकारितार्थ इत्युच्यते । तदा किरादिपाठेनैव सिध्यति किमनेनेति ? सत्यम्, तदान्यप्रेरिते कर्मकर्तरि 'नम्यते पल्लवो वातेन स्वयमेव' इत्यत्रापि कर्मवद्भावो न स्यात्, किन्तु किरादित्वात् कर्मकर्तर्येव स्यादिति **हेमकरः** ॥४९२।५२।

## ४९२/५३. उदः सकर्मकश्चर

**[दु० वृ०]**

उदः परः सकर्मकश्चरती रुचादिर्भवति । कुटुम्बमुच्चरते । उत्क्रम्य गच्छतीत्यर्थः। सकर्मक इति किम् ? धूम उच्चरति, उद्गच्छतीत्यर्थः ॥४९२।५३।

**[दु० टी०]**

उदः सकर्मकश्चर इति । कुटुम्बमुच्चरते, कुटुम्बमुत्क्रम्य गच्छतीत्यर्थः । सकर्मक इति किम् ? धूम उच्चरति, ऊर्ध्वं गच्छतीत्यर्थः। भक्षणे सकर्मक इत्**यन्ये** । शक्तुमुच्चरते । तथा अन्तर्भूतोत्क्रमे व्याप्यत्वात् सकर्मक इत्**यपरे** विदुः ॥४९२।५३।

**[वि० प०]**

उदः सकर्मकश्चरः । कुटुम्बमुच्चरते, उद्गच्छतीत्यर्थः । सकर्मक इति किम् ? धूम उच्चरति, उद्गच्छतीत्यर्थः ॥४९२।५३।

## ४९२/५४. समस्तृतीयायुक्तः

**[दु० वृ०]**

सम्-शब्दविशिष्टस्तृतीयान्तेन युक्तश्चरती रुचादिर्भवति । रथेन सञ्चरते । सम इति किम् ? रथेन चरति । तृतीयायुक्त इति किम् ? उभौ लोकौ सञ्चरति, इमं चामुं च देवल इति ॥४९२।५४।

**[दु० टी०]**

समस्तृतीयायुक्त इति । रथेन सञ्चरते । तृतीयान्तेन युक्त इति किम् ? उभौ लोकौ सञ्चरति, इमं चामुं च देवलः । तपसा विद्यया वा इत्यर्थादिह गम्यते ॥४९२।५४।

**[वि० प०]**

समस्तृतीयायुक्तः । सम्-शब्दविशिष्टस्तृतीयान्तेन युक्तश्चरतिरित्यर्थः । रथेन संचरते । सम इति किम् ? रथेन चरति । तृतीयायुक्त इति किम् ? उभौ लोकौ संचरति, इमं चामुं च देवलः । यद्यपि विद्यया तपसा वेत्यर्थात् तृतीयान्तो गम्यते, तथापि तृतीयायुक्तग्रहणं साक्षात् तृतीयान्तप्रतिपादनार्थमिति प्रत्युदाह्रियते, अन्यथा करणमन्तरेण क्रियासिद्धेरभावाद् व्यावृत्तिरेव न घटते इत्यर्थः ॥४९२।५४।

**[क० च०]**

सम० । कथं संचरत्यविरतं सह सैन्यैरिति ? सत्यम्, क्रियाकारकयोरन्तरङ्गसम्बन्धात् करणतृतीयाया एव ग्रहणम्, न तु सहार्थतृतीयाया इति ॥४९२।५४।

## ४९२/५५. दाण सा चेच्चतुर्थ्यर्थे

**[दु० वृ०]**

समस्तृतीयायुक्त इति वर्तते, सा तृतीया यदि चतुर्थ्यर्थे भवति, तदा समः परो दाण रुचादिर्भवति । दास्या मालां सम्प्रयच्छते कामुकः । सा चेच्चतुर्थ्यर्थ इति किम् ? दास्या सम्प्रयच्छति भिक्षां छात्तेभ्यः । तृतीयायुक्त इत्येव – दास्यै सम्प्रयच्छति भिक्षाम् ॥४९२।५५।

**[दु० टी०]**

दाण सा चेत्० । समस्तृतीयायुक्त इत्येव । सा यदि तृतीया चतुर्थ्यर्थे भवति । इह पूर्वत्र च सम इति विशेषणसम्बन्धे षष्ठी । समा विशिष्टो दाणिति, तेन व्यवधानेऽपि न विरुध्यते । दास्या सम्प्रयच्छते मालां कामुकः । करणत्वविवक्षायामियं तृतीया स्याद् अशिष्टव्यवहारे वक्तव्येति भावः । सा चेच्चतुर्थ्यर्थ इति किम् ? दास्या सम्प्रयच्छति भिक्षाम् । **भाष्यकारस्तु** सहयोगे तृतीया । व्यतीहाराच्चात्मनेपदमिति प्रत्याचष्टे ॥४९२।५५।

**[वि० प०]**

दाण० । सा चेच्चतुर्थ्यर्थे भवति, तदा समा दाण रुचादिरित्यर्थः । इह पूर्वतः सम इति विशेषणसम्बन्धे षष्ठी, समा विशिष्टो दाण इति, सम्बन्धस्तु व्यवधानेऽप्यस्त्येव इत्युपसर्गान्तरव्यवहिते सम्-शब्दे भवति । दास्या सम्प्रयच्छते मालां कामुकः । **"दाणो यच्छः"** (३ । ६ । ७५) इति यच्छादेशः । दास्यै ददातीत्यर्थः । कथमिह चतुर्थ्यर्थे तृतीया, न ह्यशिष्टव्यवहारे तृतीयेति वक्तव्यमस्तीति ? सत्यम्, इह सम्प्रदानस्य करणत्वेन **विवक्षा,** सा चाशिष्टव्यवहार एव **लोके** स्थिता । यदाह **चन्द्रगोमी** – सा चेहाशिष्टव्यवहार एव लौकिकी विवक्षेति । **जिनेन्द्रबुद्धि**रप्याह – **लौकिकी विवक्षैव** समाश्रीयते । सा चेच्चतुर्थ्यर्थ इति किम् ? दास्यै सम्प्रयच्छति भिक्षां छात्रेभ्यः । तृतीयायुक्त इति किम् ? दास्यै सम्प्रयच्छति मालाम् ॥४९२।५५।

## ४९२/५६. उद्वाहे उपयम

**[दु० वृ०]**

उद्वाहे विवाहे उपपूर्वो यमी रुचादिर्भवति । कन्यामुपयच्छते, विवाहयतीत्यर्थः ॥४९२।५६।

**[दु० टी०]**

उद्वाहे० । उपेत्यादि । कन्यामुपयच्छते, विवाहयतीत्यर्थः । **अन्य** आह – स्वीकरणमात्रे वक्तव्यम् । 'कोपात् काश्चित् प्रियाः प्रभोरुपायंसत नासवम्' । ताभिर्मद्यं न स्वीकृतम् इत्यर्थः ॥४९२।५६।

**[वि० प०]**

उद्वाहे उपयमः । उद्वाहे विवाहेऽर्थे उपपूर्वो यमी रुचादिरित्यर्थः । कन्यामुपयच्छते विवाहयतीत्यर्थः ॥४९२।५६।

**[क० च०]**

उद्वाहे० । ननु कथम् 'कोपात् काश्चित् प्रियाः प्रभोरुपायंसत नासवम्' इति, तथा 'शस्त्राण्युपायंसत जित्वराणि' इति, तथा 'उपायंस्त महास्त्राणि' इति ? सत्यम्, **"उपाद् यमः स्वीकरणे"** (अ० १।३।५६) इति **पाणिनिः** । स्वीकरणम् आत्मीयकरणमात्रम्, तत्रात्मनेपदम् इति **भाषावृत्तिः । अस्मन्मते** यजाद्याश्रयणादिति ॥४९२।५६।

## ४९२/५७. शदिरनि

**[दु० वृ०]**

शदधातू रुचादिर्भवति अनि विकरणे । शीयते । अन्यत्र न भवति । यथा शत्स्यति ॥४९२।५७।

**[दु० टी०]**

शदिरनीति । अन्विकरणाविषय इत्यर्थः । शीयते । अनीति किम् ? शत्स्यति ॥४९२।५७।

**[वि० प०]**

शदिरनि । शीयते । शदेः शीयः । अनीति अन्विकरणविषय इत्यर्थः । अन्यत्र न भवति – शत्स्यति ॥४९२।५७।

## ४९२/५८. आशीरद्यतन्योश्च मृङ्

**[दु० वृ०]**

चकारादद्यतनीति सम्बध्यते । मृङो ङकारानुबन्धत्वात् सिद्धे नियमार्थमुच्यते । आशीरद्यतन्यन्विकरणविषयेष्वेव मृङ् रुचादिर्भवति नान्यत्र । मृषीष्ट, अमृत, म्रियते ॥४९२।५८।

**[दु० टी०]**

आशी० । आशीरद्येत्यादि । आशीरद्यतन्योरेव विषये अन्विकरणे चेति । मृषीष्ट, अमृत, म्रियते । एष्विति किम् ? ममार । ऋकारान्तप्रस्तावादात्मनेपदिषु पाठोऽस्येति ॥४९२।५८।

**[वि० प०]**

आशी० । चकारादनीति सम्बध्यते । मृङो ङकारानुबन्धत्वात् सिद्धे नियमार्थमुच्यते । आशीरद्यतन्यन्विकरणेष्वेव विषयेषु भवति, नान्यत्र । मृषीष्ट, अमृत । **"ह्रस्वाच्चानिटः"** (३।६।५२) इति सिचो लोपः, **"ऋदन्तानां च"** (३।५।११) इत्यगुणत्वम् । म्रियते । **"इरन्यगुणे"** (३।४।७३) इतीकारागमः । **"स्वरादाविवर्णोवर्णान्तस्य"** (३।४।५५) इत्यादिना इयादेशः । अन्यत्र न भवति – मरिष्यति, ममार । अस्य चात्मनेपदिषु पाठः, **'धृङ् अनवस्थाने, पृङ् व्यायामे'** (५।११३, ११०) इत्यादि ऋकारान्तधातुप्रस्तावात्, न तु आत्मनेपदार्थ इति ॥४९२।५८।

**[क० च०]**

आशी० । मृषीष्ट इत्यादि । ननु कथं मरणम् आशीर्विषयम् ? सत्यम्, अतिशयव्याधिपीडितानां मरणमपि श्रेय न दुष्यतीति ॥४९२।५८।

## ४९२/५९. अशने भुजिः

**[दु० वृ०]**

अशनेऽर्थे भुजी रुचादिर्भवति । ओदनं भुङ्क्ते । अशन इति किम् ? भुनक्ति पृथिवीं राजा, पालयतीत्यर्थः । प्रभुजति, वस्त्रं कुटिलं करोतीत्यर्थः ॥४९२।५९।

**[दु० टी०]**

अशने। भुङ्क्ते। अशन इति किम् ? भुनक्ति, पृथिवीं पालयतीत्यर्थः। प्रभुजति वस्त्रम्, कुटिलं करोतीत्यर्थः ॥४९२।५९।

**[वि० प०]**

अशने। भुङ्क्ते, रुधादित्वान्न शब्दः, "रुधादेर्विकरणान्तस्य" इत्यकारलोपः। अशन इति किम् ? भुनक्ति पृथिवीं राजा, पालयतीत्यर्थः। प्रभुजति, वस्त्रं कुटिलं करोतीत्यर्थः। कथमेतत् **"अम्बरीषश्च न भोगो बुभुजाते चिरं महीम्"** इति ? अत्र **'भुजो अनवने'** (५।५३) इति कुर्वन्तोऽवनात् पालनादन्यत्र सर्वत्र भवतीत्याहुः। अत्र किल पालनं न च विवक्षितम्, अपि तु तदाश्रय उपकारः **'अनेकार्थाश्च धातवः'** इत्युपकारे च वर्तते इति। यद्येवं 'प्रभुजति वस्त्रम्' इत्यत्रापि स्यादिति चेत्, न। अनवनप्रतिषेधेन तद्विषयस्य रौधादिकस्यैव **'भुज पालनाभ्यवहारयोः'** (६।१४) इत्यस्य ग्रहणम्। अयं च तौदादिकः **'भुजो कौटिल्ये'** (५।५३) इति कुतः प्रसङ्गः ? अयं पुनरपप्रयोग इति मन्यते व्यावृत्तेरभावात्। न हि पालनादन्यस्तदाश्रय उपकारोऽस्तीति। अशने भुजिरित्येतदेव युक्तम्। उपभुङ्क्ते, परिभुङ्क्ते इति भोजनविषय एवायमिति ॥४९२।५९।

**[क० च०]**

अश०। अशनमिह भक्षणम्। तदा कथं 'दिवं मरुत्वानिव भोक्ष्यते महीम्' इति, तथा 'नारीमुखस्पर्शसुखानि भुङ्क्ते'। **'बुभुजे पृथिवीपालः'** इति **रघुः**। 'यशो भुङ्क्ते यावद्भुजाहृतम्' इति, 'मेदिनीमुपभुङ्क्ते नरेन्द्रः' इत्यादि च ? सत्यम्, अशनशब्दोऽत्र उपभोगवचनः, न तु भक्षणमात्रवचनः इति रुचादे**राकृतिगणत्वात्**। **'अश भोजने'** (८।४३) इति भुज्यर्थमात्रे अशेरनुशासनाच्च। अत एव **पञ्ज्यां** वक्ष्यति। उपभोगोऽपि भोजनविशेष इति। तर्हि कथं 'बुभुजाते चिरं महीम्' इत्ययम**पप्रयोगो** मन्यते इति **पञ्जीकृतो**क्तम् ? चेत् परसूत्रव्याख्याभिप्रायेणैव तदुक्तम्, न तु स्वमतम् एतदनवगम्य भट्टेन पञ्जी दूषिता, तत् तुच्छमेव ॥४९२।५९।

## ४९२/६०. समः क्ष्णुः

**[दु० वृ०]**

समः परः क्ष्णू रुचादिर्भवति। संक्ष्णुते शस्त्रम्, निर्मलं करोतीत्यर्थः ॥४९२।६०।

**[दु० टी०]**

समः क्ष्णुरिति। संक्ष्णुते शस्त्रम्, सकर्मकार्थं **"समो गमृच्छि"** (३।२।४२-२०) इत्यादिषु न कृतः पाठः ॥४९२।६०।

**[वि० प०]**

समः क्ष्णुः । संक्ष्णुते शस्त्रम्, निर्मलं करोतीत्यर्थः । **"समो गमृच्छि"** (३ । २ । ४२-२०) इत्यादौ कथं पाठोऽस्य न कृतः इति न देश्यम्, अस्य सकर्मकत्वाद् अकर्मकश्चेति अत्रानुवर्तते ॥४९२ । ६० ।

**[क० च०]**

समः । **"समः प्रतिज्ञायाम्"** (३ । २ । ४२-४८) इत्यस्यानन्तरं क्ष्णुरिति न कृतम्, प्रतिज्ञायामित्यनुवर्तनशङ्कया च ॥४९२ । ६० ।

## ४९२/६१. स्वराद्यन्तादुपसर्गादयज्ञपात्रेषु युजिर्

**[दु० वृ०]**

स्वर आदिरन्तोऽवयवो यस्योपसर्गस्येति विग्रहः । स्वरादिमात्रात् स्वरान्ताच्चेति यः शब्दः स्वरादिर्व्यञ्जनान्तः, यश्च व्यञ्जनादिः स्वरान्तश्च ततोऽपि युजी रुचादिर्भवति । उद्युङ्क्ते, उपयुङ्क्ते, प्रयुङ्क्ते । स्वराद्यन्तादिति किम् ? संयुनक्ति । अयज्ञपात्रेष्विति किम् ? यज्ञपात्रं प्रयुनक्ति ॥४९२ । ६१ ।

**[दु० टी०]**

स्वरा० । स्वरेत्यादि । स्वर आदिरन्तोऽवयवो यस्योपसर्गस्येति विग्रहः । स्वरादिमात्रात् स्वरान्तमात्राच्चेत्यर्थः । स्वरादिर्यः स्वरान्तश्च स पक्षद्वयेऽप्यन्तर्भूत इति उपयुङ्क्ते, नियुङ्क्ते । स्वराद्यन्तादिति किम् ? संयुनक्ति । अयज्ञपात्रविषय इति किम् ? यज्ञपात्रं प्रयुनक्ति । इरनुबन्धः किम् ? **'युज समाधौ'** (३ । ११५) इत्यस्य नियमो मा भूत् । यस्यैव यज्ञपात्रविषये प्रयोगस्तस्यैव युजेर्वाग्रहणमिति । **प्रतिपत्तिरियं गरीयसीति** ॥४९२ । ६१ ।

**[वि० प०]**

स्वरा० । स्वर आदिरन्तोऽवयवो यस्योपसर्गस्येति विग्रहः । स्वरादिमात्रात् स्वरान्तमात्राच्चेति यः स्वरादिर्व्यञ्जनान्तो यश्च व्यञ्जनादिः, स्वरान्तस्ततोऽपीत्यर्थः यश्च स्वरादिः स्वरान्तश्च वा स पक्षद्वयेऽप्यन्तर्वर्तते इति ततोऽपि भवति ॥४९२ । ६१ ।

**[क० च०]**

स्वरात्० । नन्वस्य धातोरुभयपदित्वादेवात्मनेपदं सिद्धम्, किमनेन ? सत्यम्, उपसर्गात् परस्यात्मनेपदं भवत् स्वरान्तोपसगदिव, नान्योपसर्गात् परस्मैपदमेव, केवलस्याप्युभयपदित्वमेवेति निश्चितम् । अत एव **'प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्'** इति **भारविः** । तथा **'बाणं युनक्तिस्म धनुष्यमोघम्'** इति **काव्यान्तरम्** ॥४९२ । ६१ ।

## ४९२/६२. हेतुकर्तृभीस्म्योरिन्

**[दु० वृ०]**

हेतुकर्तुः सकाशाद् यौ भीस्मी, तयोर्य इन् स रुचादिर्भवति । मुण्डो भीषयते । भीषिचिन्तीति वचनाद् भियः सान्तता । जटिलो विस्मापयते । हेतुकर्तुरिति किम् ? कुञ्चिकयैनं विभाययति, रूपेणं विस्माययति ॥४९२।६२।

**[दु० टी०]**

हेतु० । हेत्वित्यादि । हेतुकर्तृतो यौ भीस्मी, तयोर्य इन्नित्यर्थः क्रियायाः कारकसाध्यायास्ततो भावाद् धातुरपि तथोपचर्यते सम्बन्धे षष्ठी वा । मुण्डो भीषयते, जटिलो विस्मापयते । हेतुकर्तरीति किम् ? कुञ्चिकयैनं विस्माययति, भाययति ॥४९२।६२।

**[वि० प०]**

हेतु० । हेतुकर्तुः सकाशाद् यौ भीस्मी तयोर्य इन् रुचादिरित्यर्थः । क्रियायाः कारकसाध्याया हेतुकर्तृताभावात् तद्वाचकावपि भीस्मी तथोपचर्येते, सम्बन्धे षष्ठी वा । हेतुकर्तुः सम्बन्धिनौ यौ भीस्मी तयोरिन्निति । मुण्डो भीषयते । भीषिचिन्तीति वचनाद् भियः सान्ततेति वक्ष्यति, जटिलो विस्मापयते । उभयत्रापि हेत्वर्थे इन् । **"स्मिजिक्रीङामिनि"** (३।४।२४) इति स्मयतेराकारः ॥४९२।६२।

## ४९२/६३. प्रलम्भने गृधिवञ्च्योः

**[दु० वृ०]**

गृधिवञ्च्योर्य इन् स रुचादिर्भवति प्रलम्भनेऽर्थे । वटुं गर्धयते, वटुं वञ्चयते, प्रतारयतीत्यर्थः । प्रलम्भन इति किम् ? श्वानं गर्धयति । आकाङ्क्षामस्योत्पादयतीत्यर्थः ॥४९२।६३।

**[दु० टी०]**

प्रलम्भन इत्यादि । इन्नित्येव । प्रलम्भनं विसंवादनम् । वटुं गर्द्धयते, वटुं वञ्चयते । प्रलम्भन इति किम् ? श्वानं गर्द्धयति, अहिं वञ्चयति ॥४९२।६३।

**[वि० प०]**

प्रल० । इन्नित्येव प्रलम्भनं विसंवादनम् । वटुं गर्द्धयते । वटुं वञ्चयते, प्रतारयतीत्यर्थः । प्रलम्भन इति किम् ? श्वानं गर्द्धयति । आकाङ्क्षामस्योत्पादयतीत्यर्थः ॥४९२।६३।

**[क० च०]**

प्रलम्भने । 'वञ्चयन् प्रणयिनीं ललाप सः' इति **रघुकाव्ये** । स्खलितमिति **केचित्** । **वस्तुतस्तु** परिहारं कुर्वन्नित्यर्थः ॥४९२।६३।

## ४९२/६४. पूजाभिभवयोश्च लातेः

**[दु० वृ०]**

लातेर्य इन् स रुचादिर्भवति पूजाभिभवयोरर्थयोश्चकारात् प्रलम्भने च। जटाभिरालापयते। पूजामधिगच्छतीत्यर्थः। श्येनो वर्त्तिकामुल्लापयते, अभिभवतीत्यर्थः। कस्त्वामुल्लापयते, प्रतारयतीत्यर्थः ॥४९२।६४।

**[दु० टी०]**

पूजेत्यादि। इन्नित्येव। पूजायां गम्यमानायामभिभवे प्रलम्भने च। जटाभिरालापयते, पूजां समधिगच्छतीत्यर्थः। श्येनो वर्त्तिकामुल्लापयते, अभिभवतीत्यर्थः। कस्त्वामुल्लापयते, विसंवादयतीत्यर्थः ॥४९२।६४।

**[क० च०]**

पूजा०। पूजाभिभवयोः प्रलम्भने च वर्तमानाल्लाती रुचादिरित्यर्थः। **पूजा** – वाक्यार्थः, इतरो धात्वर्थ इत्याह – पूजायां गम्यमानायामित्यस्तीति **कुलचन्द्रः।** पूजाभिभवयोरिति **भाषावृत्तिः। एतन्मते** पूजापि धात्वर्थः। जटाभिरिति हेतौ तृतीया। यस्य जटाः सन्ति लोके स महांस्तपस्वीति सम्प्रत्ययः सन् पूज्यो भवतीत्यर्थः। **वररुचिस्तु** जटाभिः शिवं पूजयतीत्यर्थ इत्याचष्टे। उभयथापीनर्थस्याप्रतीत्या **रूढिरेव शरणम्** ॥४९२।६४।

## ४९२/६५. मिथ्याभियोगेऽभ्यासे कृञः

**[दु० वृ०]**

इन्नित्येव। मिथ्याशब्देन योगेऽभ्यासे पौनःपुन्ये कृञः पर इन् रुचादिर्भवति। पदं मिथ्या कारयते। स्वरादिदुष्टं पदं पुनः पुनरुच्चारयतीत्यर्थ। मिथ्याभियोगे इति किम् ? साधु पदं कारयति। अभ्यास इति किम् ? सकृन्मिथ्यापदं कारयति। कृञ इति किम् ? मिथ्यापदं वाचयति ॥४९२।६५।

**[दु० टी०]**

मिथ्याभियोगेत्यादि। इन्नित्येव। अभ्यासः पौनःपुन्यम्। पदं मिथ्या कारयते। स्वरादिदुष्टं पदम् असकृदुच्चारयतीत्यर्थः। आभीक्ष्ण्यस्यात्मनेपदेनैव द्योतितत्वाद् द्विर्वचनं न स्यात्। मिथ्यायोग इति किम् ? साधुपदं कारयति ॥४९२।६५।

**[वि० प०]**

मिथ्या०। इन्नित्येव। मिथ्याशब्देन योगेऽभ्यासे पौनःपुन्ये कृञः परः इन्प्रत्ययो रुचादिरित्यर्थः। पदं मिथ्या कारयते। स्वरादिदुष्टं पदं पुनः पुनरुच्चारयती-त्यर्थः ॥४९२।६५।

[क० च०]

मिथ्या० । मिथ्याशब्दोऽयमव्ययः । **अस्यार्थ**माह – स्वरादिदुष्टमिति । आदिशब्दे-नैवंरूपस्यापि परिग्रहः । पुनः पुनरिति । अत्रात्मनेपदेनैवाभ्यासस्योक्तत्वान्न द्विर्वचनम् । द्विर्वचनप्रकरणे व्यवस्थितविभाषाश्रयणादि**त्यपरे** ।।४९२।६५।

## ४९२/६६. अनियमे चागतिहिंसाशब्दार्थहसः

[दु० वृ०]

इन्निति निवृत्तम् । अनियमो व्यतीहारः परिवर्त इत्येकोऽर्थः, स च धातुप्रस्तावात् क्रियाया एव, तस्मिंश्च वर्तमानो धातू रुचादिर्भवति । गतिश्च हिंसा च शब्दश्च, तेऽर्था येषां ते तथोक्ताः । गत्यर्थाः शब्दार्था हिंसार्थाश्च हस् च सत्यप्यनियमे रुचादयो भवन्तीत्यर्थः ।।४९२।६६।

**।। इति रुचादिगणे दुर्गसिंहकृता वृत्तिः समाप्ता ।।**

●

[दु० टी०]

अनियमे । इन्निति निवृत्तम् । गतिश्च हिंसा च शब्दश्च तेऽर्था येषामिति विग्रहः । गतिहिंसाशब्दार्थहस चेति द्वन्द्वे पश्चान्नञ्समासः गतिहिंसाशब्दार्थहसवर्जिता धातव इत्यर्थः । अनियमो व्यतीहारः परिवर्तः इत्येकोऽर्थः, स च धातुप्रस्तावात् क्रियायाः । ननु क्रिया अनवस्थायिन्यः कृतस्य करणायोगाच्च कथं क्रियाव्यतीहारद्योत्ये इति ? सत्यम्, यदा बुद्ध्या निरूपितम् । इयं कर्तव्येति देवदत्तेन सा देवदत्तस्य तां यज्ञदत्तो यदा करोति, यज्ञदत्तेन कर्तव्यतया समीहितां देवदत्तः करोति तदा न विरुध्यते । व्यतिलुनन्ते, व्यतिभवन्ते । अगत्यादय इति किम् ? व्यतिगच्छन्ति, व्यतिजल्पन्ति, व्यतिहसन्ति, व्यतिघ्नन्ति । कथं व्यतिहरते भारम्, व्यतिवहते भारम् । नैतौ गत्यर्थौ किन्तर्हि देशान्तरप्रापणार्थौ ? एवं 'व्यतिप्रसंहरन्ते राजानम्' इति न हरतिर्हिंसार्थः, किन्तर्हि योधने इतरेतरान्योऽन्यपरस्परैः क्रियाविनिमयस्योक्तत्वान्नैवात्मनेपदम् । इतरेतरस्य व्यतिलुनन्ति, अन्योऽन्यस्य व्यतिलुनन्ति, देवदत्तस्य धान्यं व्यतिलुनन्ति इति देवदत्तेन यद् गृहीतं धान्यं पुरस्तात् तल्लवणेन गृह्णातीति साधनव्यतीहारोऽयम् । व्यतिहारश्चानेक-कर्तृविषय इति द्विवचने न्यग्भूतावयवसमुदाये । एकवचनमपि – व्यतिलुनीते सेनेति । **'अनन्तरस्य विधिः प्रतिषेधो वा'** (कात० प० १८) इति, गम्यते ग्रामः 'व्यतिहन्यन्ते दस्यवः' इति भावकर्मणोरात्मनेपदम् ।।४९२।६६।

**।। इति रुचादिगणे दुर्गसिंहकृता टीका समाप्ता ।।**

●

**[वि० प०]**

अनि० । इन्निति निवृत्तम् । अनियमो व्यतीहारः परिवर्तः इत्येकोऽर्थः, स च धातुप्रस्तावात् क्रियाया एव, तस्मिंश्च वर्तमानो धातू रुचादिरित्यर्थः ॥४९२।६६।

**[क० च०]**

अनियमे । सत्यमित्यादि । नन्वेवं सति कथम् **'धर्मोऽस्ति सत्यं तव राक्षसायम् अन्यो व्यतिस्ते तु ममापि धर्मः'** इति **भट्टौ । 'व्यतिरक्ष श्रीपद्मानि' इति पुरुषोत्तम** इति । **अन्ये** तु चिकीर्षितायाः क्रियायाः अन्यस्य करणाभावः ? सत्यम् । सजातीयक्रियाद्वयस्य परस्परक्रियाकर्तृसम्बन्धित्वेनोत्पत्तिकत्वमेवेति व्यतिहारो विवक्षित इति । सम्बन्धश्च तदनभिलङ्घितत्वाद् वा क्वचित् पक्षे उत्पद्यमानत्वं क्वचित् क्रियासमानकालोत्पत्तिकत्वम् इति बोध्यम् । तेन देवदत्तेन चिकीर्षितां क्रियां यज्ञदत्तः करोतीत्युक्तम्, तदुपलक्षणमात्रम् । ननु **'सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्'** इति कथम् ? सत्यम्, विनिमयशब्देनैव क्रिया-विनिमयस्योक्तत्वान्नात्मनेपदमिति ।

एवम् 'अन्योऽन्यं स्म व्यतियुतः शब्दैः शब्दांस्तु भीषणम्' इत्यादयस्तु रुचादयः सिद्धाः । ननु **परमतेन** गतिहिंसार्थेभ्यः पृथगेव निषेधस्य सत्त्वात् 'व्यतिगम्यते' इत्यादौ देश्यमेव नास्ति । **अस्मन्मते** तु गत्यादिव्यतिरिक्तस्य धातो रुचादिपाठविधानाद् गत्यादस्तत्पाठनिषेधाद् वा कर्मण्यात्मनेपदप्रसङ्ग एव नास्ति, किं न्यायानुसारेण । सोऽपि न्यायः **परमते** एव घटते । **"नेर्विशः"** (३।२।४२-१) इत्यादिसूत्रेणात्मनेपदविधानात् । **अस्मन्मते** विशेषवाक्ये रुचादिपाठ एव बोध्यते, आत्मनेपदं तु मूलसूत्रेणैव । अतः कर्तरीति साक्षादेवोक्तम् । ततश्च गत्यादिव्यतिरिक्तेभ्यो व्यतीहारे कर्तर्यात्मनेपदम् इति सूत्रार्थे किमुपपन्नम् । न चागतीत्यादिप्रसज्यप्रतिषेधपक्षे ग्रन्थो योज्य इति वाच्यम्, आत्मनेपदनिषेधाभावे युक्त्यभावात् । नहि इदं सूत्रं विषयप्रदर्शनमात्रम् । अत्र ब्रूमः— **परमते "न गतिहिंसार्थेभ्यः"** (अ० १।३।१५) इति पृथक् सूत्रविधानात् कर्मण्यात्मनेपदं निषिध्यते । **स्वमते** तु व्यतिगम्यते इत्यपि स्यात्, तच्च कथं **पाणिनि**विरोधाद् इत्याशयेन **पञ्जिकायां** चोदितम् । **सिद्धान्तस्तु परमते**ऽनन्तत्वाद् अकर्मकर्तर्यात्मनेपदस्य निषेधाद् भावकर्मणोरात्मनेपदमिष्टम् **इत्यभिप्रायः** ॥४९२।६६।

**॥इति रुचादिगणे सुषेणविद्याभूषणकृतः कलापचन्द्रः समाप्तः॥**

●

# परिशिष्टम् – १ [आ] विद्यासागरकृतटिप्पणी

## ४२५. क्रियाभावो धातुः [३।१।९]

**[दु० टी० – व्याख्या]**

ननु भवतेरिहार्थो नास्ति, तत् कथम् इन् इत्यत आह-हेत्विति । इनन्तो न केवल इत्यर्थः । एतेन हेतुविवक्षायामिनं कृत्वा पश्चादर्थान्तरे वृत्तिरिति **केचित्। वस्तुतस्तु** इन्विषये भूधातोर्ज्ञाने वृत्तिरिति घटत एवेत्याशयः । क्रियते इति । नन्वेवं घटादीनामपि साध्यत्वात् क्रियात्वं स्यात् । 'अग्रे श्वेतते' इत्यादौ पूर्वपक्षासङ्गतिश्च साध्यतायाः सत्त्वात् । न च साक्षात्कर्तृसाध्यत्वं विवक्षितम् । तच्च न घटादीनामिति वाच्यम्, घटवत् पाकादेरपि साक्षात् क्रियासाध्यताविरहात् । किञ्चैवं क्रियात्वेनावभासते इत्यनेन सिद्धान्तेऽपि सत्तादौ लक्षणाव्याप्तिर्वज्रलेपायितैव स्यात् ! नहि सर्षपत्वेनाध्यवसीयमानं हेमरजः सर्षपकार्यं करोति । यदि च साध्यतया प्रतीयमानत्वं लक्षणं तदा व्यवच्छेद्याभावः, अत एव **न्यासोक्तं** निरवयवविशेषणमप्यपास्तम् । साध्यत्वे सति निरवयवत्वस्य गन्धस्पर्शादिसाधारणत्वात् प्रत्ययवाच्यसाध्यताकोऽर्थः क्रियेति तात्पर्यात्, उत्पादना हि त्याद्यर्थ इति **रत्नकोषः।** अत एवाख्यातस्य साध्यताविधायकत्वमित्यपि **सिद्धान्तो** घटते । **भट्टमते** तु भावनैवाख्यातार्थ इति साध्यताशब्दस्यापि भावनापरत्वमेव मन्तव्यम् ।

अथवा **येषां मते** साध्यतावाचकत्वं नाख्यातस्य तन्मतमाशङ्क्यैव **सर्वदर्शनविरुद्धं** लक्षणमुक्तम् । सा चेति प्रत्ययवाच्यपूर्वापरीभावकत्वं क्रियात्वमित्यर्थः । तथा ह्याख्यातस्य पूर्वापरीभावोऽप्याख्यातार्थ इति **वर्धमानादिभि**र्व्याख्यातम् । आख्याताभिधेयकालान्वयबोधयोग्यार्थोपस्थापकत्वं धातुत्वमिति, तत्त्वबोधस्याप्युक्तलक्षण एव तात्पर्यम् । एवं च सत्तादौ पौर्वापर्यसत्त्वात् कथं प्रत्ययेन तदभिधानमित्याशयेनाग्रिमं चोद्यम् इत्यत्र व्यक्तिर्भविष्यति । न च 'श्वेतते' इति सिद्ध्यर्थमग्रिमसिद्धान्तेन श्वेतगुणस्य क्रियात्वे व्यवस्थापिते तदभिधायिनां शुक्लादिपदानामपि धातुसंज्ञा स्यात् । यदुत्तरेण प्रत्ययेन यस्यार्थस्य बाध्यते प्रतिपाद्यते श्रुतत्वात् तस्यैव धातुसंज्ञेति व्याख्यानात् ।

**वस्तुतो** यथा भावयतिग्रहणबलात् 'पच्यते' इत्यादीनां व्यावृत्तिर्ग्रन्थकृता वक्ष्यते । यथा वा **नैयासिकै**र्बृहत्संज्ञाकरणेन हि कुपादीनां निरासः क्रियते तथैव शुक्लादीनामपि व्यावृत्तिः सिद्धेत्यग्रे व्याख्यास्यामः । न च शुक्लादिपदस्य क्रियावाचकत्वाद् घटस्य शुक्लं रूपमित्यत्र कर्तरि तृतीया स्यादिति वाच्यम् । यदि प्रयोगो न दृश्यते तदा शब्दविशेषण एव **कारकत्वविवक्षा** इति स्वीकरणीयत्वात् । अस्तु वा उक्तलक्षणाव्ययकृदन्तातिरिक्तनामभिन्नत्वेनाभिधीयमानत्वे सतीति विशेषणमव्यययोगे 'तमृते

परमात्मानम्' इत्यादौ कर्मत्वदर्शनादव्ययपदम्। एवं चेत्, शुक्लादिपदस्यापि सुतरां निरासः, प्रत्ययानां साध्यतादिवाचकत्वं विशिष्टस्यैव **वृद्धव्यवहारा**दन्वयव्यतिरेकाच्चावगन्तव्यमिति परस्पराश्रयदोषोऽपि नाशङ्कनीयः। शब्दानां नित्यत्वान्नहि साध्यतायां प्रत्ययविधायकं किमपि वाक्यमस्ति। अमूर्तायाः क्रियायाः कथं पौर्वापर्यमित्याह – कथं पूर्वत्वेनेति। मूर्तद्रव्यगतं पौर्वापर्यं क्रियायामुपचर्यते इति **कुलचन्द्रः**। तन्न, अमूर्तानामपि पौर्वापर्यबाधकाभावात्।

किञ्च क्रियामात्रे यदि पौर्वापर्यारोपस्तदा 'अग्रे श्वेतते' इत्यादौ विशिष्टं पूर्वपक्षयित्वा तदारोपेण समाधानाभिधानमसङ्गतं स्यात्, तस्मात् पूर्वापरीभूतं घटादावतिप्रसक्तमित्याशङ्क्यैवायं **ग्रन्थोऽ**भिमतः। सम्बन्धोऽभिसम्बन्धः, प्रत्ययवाच्यसम्बन्ध इत्यर्थः। अक्रमस्येति यद्युत्पत्तिदशायामेव पूर्वापरकाले सम्बन्धोऽस्त्येव, तथापि पौर्वापर्याभिसन्धानस्यात्र पौर्वापर्यशब्दवाच्यत्वेनार्थपदानुक्तत्वात्। अक्रमपरं यथोक्तक्रमाभिधानसम्बन्धरहितपरं क्रमप्राप्तिः क्रमाभिसम्बन्ध एव, तेन पूर्वापरतया प्रत्ययवाचकीभूतावयवेत्यर्थः पर्यवस्यति। पूर्वापरेति। पूर्वमवयवविशेषणमिदानीं क्रियाविशेषणं पूर्वापरीभूते क्रिये अवयवौ यस्या इत्यर्थः।

यद्यपि अधिश्रयणादयो नान्यावयवा न वा तत्तत्क्रियातिरिक्तोऽन्यो धर्मी पच्यादिवाच्यस्तथापि अतीतादिकालान्तःपतिताः कर्तृव्यापारा बुद्धिपरिकल्पिते समुदायेऽवयवत्वेनाध्यारोप्यन्ते, तेन क्रमिकानेकव्यापारात्मिका क्रियेति पर्यवस्यति। पचतीत्युक्ते पाकानुकूलक्रमिकानेकव्यापारवानिति प्रतीतेः, बहुक्रियाणामियं पूर्वापरीभूता निरवयवा साध्यमानावस्था भूतभविष्यद्वर्तमानसदसदनेकावयवसमूहरूपा नेन्द्रियग्राह्येति **मैत्रेयादिभि**रुक्तम्, तत् स्वरूपकथनमात्रम् प्रायिकं लक्षणपरमिति भाव्यम्। अथ यदि अनेकावयवसमूहरूपा क्रिया तर्हि न प्रत्यक्षा, आशुविनाशिनां क्रमिकाणां मेलकाभावेन समुदायादुपलम्भाद् अतो नास्त्येवात्र **प्रमाण**मिति चेत्, न। योऽवयवो दृष्टः स स्मर्यते यश्च वर्तते स प्रत्यक्षेणैव गृह्यते इति मनसा समुदायोपलम्भात् क्वचित् प्रधानफलदर्शने तत्साम्ग्र्यस्यानुमानाच्च।

**सदकारणवन्नित्यम्** इति प्रथमसूत्रे व्याख्यातमेव। अत्र **बौद्धाः**– यद् वासना विकल्पयन्ति तत् प्रवाहज्ञानेऽवभासते ज्ञेयमिति चोच्यते। तच्च बाह्येऽसदेवारोपिताकारं व्यवहारहेतुः, **पदार्थभेदस्तु** वास्तवो नास्त्येवेत्याहुः। ततः सत्तापि वासनाविकल्पतो नित्यानित्यक्रमिकाक्रमिकरूपैव भविष्यति, वासनाविकल्पोऽपि एतच्छब्दविशेषाधीनो वेति शङ्क्यते। अथेति। यद्यपि सत्ताशब्देन नित्यस्वरूपैवोच्यते तथाप्यस्तिना सैवानित्याभिधीयते इत्यर्थः। जगद्विकल्पस्य प्रत्यक्षसिद्धत्वान्न वासनामात्रं तन्निदानं प्रागवगतस्यैव वासनातो लाभाद् अतः एकत्रानेकविरुद्धधर्मसमावेशो न वा शब्दभेदेनार्थभेद

इत्याह – न हीति । किञ्चार्थ एव स्वज्ञानद्वारा शब्दस्य हेतुः, न शब्दोऽर्थस्य पूर्वमसत्त्वात् । तथा च कथं कार्येण कारणमन्यथा कर्तव्यम्, शब्दार्थभेदपक्षस्तु विचारासह एवेत्याह – कार्यभूतश्चेति । किञ्च साध्यत्वमात्रं वा क्रियालक्षणम्, साध्यत्वक्रमिकवत्तया प्रत्ययवाच्यत्वं वा । आद्ये कटादावतिव्याप्तिः, अन्ते तु सत्तायामतिव्याप्तिरेव स्वरूपम् अत एवार्थशब्देनावेदनाच्छब्दाधीनो योऽर्थस्य विशेषः स एव शब्दवाच्य इति । अभ्युपगमे हि शब्दाभासोच्छेदप्रसङ्ग इत्याह – यदि चेति ।

न च भ्रमजनकत्वेनैव शब्दाभासत्वं ज्ञानस्य सत्यत्वनियमात्तथा चाविद्यमानस्याप्यर्थस्य शब्देनावेदने सत्यत्वनियमोऽपि भज्येतेत्याह – न चेति । ज्ञेयाकारो ज्ञानविषयः । एतच्च सर्वथा यथार्थत्वाङ्गीकर्तृप्रकारमतेनोक्तम् । शाब्दज्ञानं भ्रमोऽपि भवत्येवेति **वैशेषिकादिरीत्या त्वसिद्धान्तः** । न किञ्चिदिति तत्तच्छून्योऽसावभाव इति । **बौद्धमतेने**दम् । अत एव सर्वोपाख्याविरह इति **पञ्जी** । **उपाख्या** प्रसिद्धिः, तच्छून्योऽप्रसिद्ध इत्यर्थः । वास्तविकपक्षे उपाख्या द्रव्याद्यष्टपदार्थलक्षणं तद्विरह एव लक्षणमसाधारणो धर्मो यस्येत्यर्थः । इत्त्थमपि तस्य न क्रियात्वसम्भव इत्याह न चेति । 'श्वेतते' इत्यादौ शङ्काबीजमाह – यथेति । यथा ह्येको घटस्तथा तन्निष्ठो रूपादिरप्येक एव, तत्र च कथं क्रमिकत्वान्वयः, न हि क्रमेणानेकरूपवान् घट इत्यपि शक्यते वक्तुमित्यर्थः । यद्यपि पाकादिना क्रमिकानेकरूपस्य संयोगस्य चैकत्र सम्भव एव, तथापि यत्रैकमात्रसम्भवस्तत्र क्रमिकत्वानन्वयात् क्रियालक्षणा व्याप्तिरिति शङ्का ।

**व्याकरण** इति । **'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि'** इत्येव **दर्शनं व्याकरणं** सिद्धम्, अतोऽसतोऽपिशब्देनाभिधानादर्थोक्तलक्षणा व्याप्तिरिति **फलितार्थः** । उदयो यस्येति साधनायत्तत्वेनोदयो ज्ञानमित्यर्थः । यद् वा साधनायत्तोत्पत्तिकमित्यभिधीयते इति शेषः । बुद्ध्यवस्थेति । क्रियादिव्यवहारस्य कारणीभूता या बुद्ध्यवस्था बुद्धिविशेषः । अत एव हेतोः सिद्धमपि क्रियात्वेनावभासते इति **वृत्त्यर्थः**। सत्तायां साध्यतारोपबीजमाह – सत्तावत इति । अत्र क्रियायां प्रयोजनीभूतपचनादिक्रियायां सत्ताश्रयस्य पूर्वापरीभूतव्यापारोपलम्भात् सत्तायामपि क्रमिकत्वादिकल्पनेति भावः । सत्तावतोऽप्यवश्यम् अर्थक्रियेति कुतो नियमः । येन तद्दर्शनात् तद्धर्मारोप इत्यत आह – अर्थक्रियेति । **वेदान्तिनस्तु** मते ब्रह्मस्वरूपैव सत्ता अविद्यावशात् पाकत्वादिरूपेण कल्प्यमानभेदा पचादिधातुनाभिधीयत इति । सुतरां तत्र क्रमिकत्वाद्यारोप इत्याह – तथा चेति । एतच्च सम्बन्धिभेदात् 'सत्तैवेति' इत्यादिश्लोकप्रस्तावे लिङ्गसूत्रे **प्रपञ्चितमेव** । **वैशेषिकमते** तु सत्तायाः सर्वधातुवाच्यत्वं नास्त्येव, केवलं भूधातोः क्रियामात्रेऽपि वृत्तिरित्याशयेन **'सर्वे धातवो भ्वर्थाः'** इति **किंवदन्ती** । अत एव भावः क्रियेति **पर्यायः** । भावो भवितारमन्तरेण न सम्भवतीति प्रयोगः **प्रामाणिकानाम्** । यत्तु भवतीत्युक्ते क्रियामात्रं प्रतीयते तत् प्रसिद्धतया सत्तायामेव पुनः प्रदुह्यमानत्वादिति बोध्यम् ।

ननु सत्तायाः क्रियात्वस्थापनमनुचितम्। किं करोतीत्युक्तेऽस्तीति प्रतिवचनाभावात् तथा करोत्यर्थ एव क्रिया सर्वेषां धातूनां सामान्यविशेषभावेन करोतिसामानाधिकरण्यात् किं करोतीत्युक्ते पचतीति प्रतिवचनादिति **रक्षितेनाप्युक्तमिति** चेत्, न। भूधातोः सत्तायामिव क्रियामात्रवाचिनोऽपि कृञो भावनायाम् अनेकार्थप्रसिद्धतया किं करोतीत्यनेन भावविशेषप्रश्नेऽस्तीत्युत्तराभावात् किं क्रियावतीति प्रश्ने तु क्वचिदस्तीत्यस्य प्रतिवचनं भवत्येव। अत एव वियोगवतीत्युक्ते न क्रियावतीत्यनुभूयते इति न तस्य क्रियात्वमित्यपि वादिनः प्रलापो निरस्तः। यतो वैशेषिकसिद्धस्पन्दनादिकक्रियावृत्त्यर्थमेव न गम्यते। धात्वर्थवत्त्वं तु अनुभवसिद्धमेव। **वस्तुतस्तु कारककौमुद्यां** सत्त्वसम्बन्धे ----- वदनेति ---- । अत्रापि प्रत्ययस्य स्थानान्तरे कदाचित् साध्यताबोधकस्य सत्त्वाद् धातुत्वमि**त्याशयः**। वस्तुतो गणपाठबलादुक्तम् इत्यत्रैव तात्पर्यम्।

ननु क्रियायाः सकर्तृकत्वनियमात् कर्तुः कारकविशेषत्वाज्जन्मनो नास्ति सकर्तृकतेति, कथं क्रियात्वमित्यत आह– तथाङ्कुर इति। अङ्कुरशब्दार्थः सामान्यं जातिः, सा च पूर्ववदेवास्ति यद्विशिष्टोऽङ्कुरव्यक्तिभूतो जन्मार्थो जन्मान्वयः प्रागसत्त्वादित्येवोक्तम्। जन्म चेति। न परं त्वसतः कर्तृत्वं जन्म चेति चार्थः। न च वाच्यम् अन्यः कर्ता अन्यश्चोत्पद्यते इति तयोरभेदात्। तथा च **भट्टादिमते** जातिव्यक्त्योर्भेदाभेदौ **जातिरेव च शब्दार्थः**। इत्थं प्राक् जातिः कर्त्री व्यक्तिरूपतयोत्पद्यते इति **वाक्यार्थः। व्यक्तिभिन्नैव जाति**रिति पक्षेऽपि न दोषः। जन्मनो विशेषप्रकाशरूपत्वादि- त्याह– जायते इति। अङ्कुरसामान्यं व्यक्तिनिष्ठतया प्रकाशते इति **वाक्यार्थ** इत्या**शयः**।

यद् वा इदमपि **भट्टादिमतेनैव** व्याख्येयम्, विशेषेण व्यक्तिरूपेण प्रकाशते **जाति**रित्यर्थः। ननु **बौद्धमते** सामान्यं नास्ति कस्तर्हि शब्दार्थः ? **योगाचारमते ज्ञानाकार** एव, तदुक्तम्– **'ज्ञानमेकं क्षणस्थायि बाह्यं किञ्चिन्न विद्यते'** इति, न च ज्ञानस्यान्तर्गतत्वाद् बहिःप्रवृत्त्यनुपपत्तिर्ज्ञानमेव स्वमाकारं बहिरारोप्य प्रवर्तयतीति सिद्धान्तादिति चेत् तर्हि स एव कर्तेत्याह– यद् वेति। पूर्वं दृष्टः इन्द्रियजनितोऽङ्कुरो ज्ञानाकारः कर्तेत्यर्थः। ननु ज्ञानं कर्तृ तत्त्वाद् अविद्यापरिकल्पितस्तु बाह्योऽसन्नेवोत्पत्त्याश्रयः इति कथम् एकस्योत्पत्त्याश्रयत्वकर्तृत्वयोरन्वय इत्याशङ्क्याह– न चेति। एकत्वेति। यथा **वेदान्तमते** ब्रह्मैव घटादिप्रपञ्चरूपेण विवर्तते। तथा **तन्मतेऽपि** ज्ञानाकार एव बाह्यरूपेण विवर्तते इत्यदोषः। अतः सतोऽन्यथाभावरूपस्य विवर्तस्यैव जन्यर्थत्वात्। यद् वा आरोप एव **जन्मार्थः** तथा च ज्ञानाकारोऽङ्कुरो बाह्यत्वेनाध्यवसितो भवतीति **वाक्यार्थः**। यथोक्तमिति दृश्यो ज्ञानाकारः **पारमार्थिकः** विकल्पितो वासनापरिकल्पितः। अत्र च भेदाभेदस्वीकार एवेति मन्तव्यम्।

ननु **सौत्रान्तिकाः** ज्ञानाकारान्यथानुपपत्त्या **पारमार्थिकमपि** बाह्यं नीलादिकमङ्गी- कुर्वते। तन्मते प्रथमारोपो जन्मार्थ इत्युपपद्यताम् इत्याह– प्रत्यक्षेऽपीति। बाह्यं

प्रत्यक्षमस्तीति पक्षेऽपि ज्ञानाकार एव बाह्यरूपेण संविद्यते ज्ञानार्थयोरभेदानुभावात्। अत आरोप एव जन्मार्थ इत्याशयः। यद् वा पूर्वदृष्टोऽङ्कुरः कर्तेत्यादिकमपि सौभ्रास्तिकमतमेवोक्तम्। बाह्यस्य ज्ञानाकारभिन्नतया कथं बाह्यरूपतया जन्मेत्येव न चेत्यादिना शङ्कितम्, विकल्पितो बाह्यस्तथा तयोरेकताध्यवसाय एव जन्मार्थः, तेन बाह्यरूपतया जन्मेत्युक्तमिति **सिद्धान्ताभिप्रायः**। ननु बाह्यतया प्रत्यक्षे घटादौ कथम् अनन्तरीणज्ञानाकाराभेदरोप उपपद्यतां विशेषणदर्शनसत्त्वादित्यत आह – प्रत्यक्षेऽपीति। अत्राप्यनाद्यविद्यावशाज्ज्ञानाकारत्वेनैव बाह्यं संवेद्यते इत्यर्थः। यद्येवं ज्ञानार्थयोः सर्वथैवाभेदः स्वीक्रियताम्, किमभेदारोपकल्पनया पारमार्थिको हि भेदो बाह्यानपेक्षया कदा नीलपीताज्ञानाकारोत्पत्तिः स्यादित्याह – न बाह्यमिति। स्वलक्षणज्ञानं न बाह्यरूपमित्यर्थः। बाह्यापेक्षया तु कारणत्वादेवेत्याह – केवलमिति। भेदे दूषणमुद्धृत्याभेदं प्रत्याचष्टे। बाह्यस्वलक्षण इति बाह्यमेव स्वलक्षणं स्वरूपं यत्तु तादृशसंवेदनपक्षे ज्ञानस्याग्निरूपत्वस्वीकाराज्ज्ञानमात्रेण दाहोत्पत्तिः स्यादित्यर्थः।

**कुलचन्द्रस्तु** स्वलक्षणं व्यक्तिः, अथ बाह्यस्य ग्रहणे कथं 'नीलः, पीतः' इति ज्ञानभेद इत्याह – केवलमिति। अर्थोपलब्धौ दोषमाह – बाह्येति, अर्थज्ञानयोस्तादात्म्यादिति भावः। **वैशेषिकमते** तु न बहिर्ज्ञानाकारोऽस्ति अविज्ञानेन बहिरेव प्रवृत्तेः, तस्माद् अर्थाकार एव गृह्यते इति तदयुक्तम्, अर्थस्यातीन्द्रियतया तदाकारस्याप्रत्यक्षत्वादर्थाकार-योस्तादर्थ्यादिति व्याचष्टे। तच्चिन्त्यम्, ज्ञानार्थयोस्तादात्म्ये यथा बाह्यस्य ज्ञाने दाहस्तथा तदज्ञानेऽपि दाहप्रसङ्गादारोपस्य जन्मार्थत्वानुपपत्तिश्च। ननु यदि बाह्यमतिरिक्तम्, तदा ज्ञानस्य साकारत्वेऽपि किं प्रमाणम्, येन पृथग् ज्ञानाकारानुपलम्भादभेदाध्यवसाय-मङ्गीकुरुषे इत्याशङ्क्याह – साकारं चेति। ननु स्वप्ने स्मृतौ च न ज्ञानाकारो भासते तयोः पूर्वानुभवजन्यया अनुभूत एवाकारस्तद्विषयः पूर्वानुभवश्च बाह्यगोचर एवेति शङ्कात इत्याह – बाह्येति। स त्विति। स्वप्नसम्बन्धीत्यर्थः। स्वप्नो हि तदानीन्तनाकारो-ऽनुभूयते, न च बाह्यस्तादृशाकारस्तदानीमस्तीति ज्ञानाकारस्यैव संवेदनमुच्यते इत्याह – तदा तस्येति। **मध्यमकः** पुनराह – केवलं ज्ञानम् आकारस्तु वासनाधीनो भ्रान्त इति। तत्राह – निराकारेति। तदा स्वप्नकाले वासनाया अभावाद् भ्रान्ते सत्यग्रहणपूर्वकत्वाद् बाधकं विना भ्रमत्वानौचित्याच्चेति शेषः। किञ्च यद्याकारो नास्ति तदा किं कृतो नीलज्ञानमिदं न पीतज्ञानमिति नियमः, विपर्ययस्यापि प्रसङ्गाज्ज्ञानार्थयोः सम्बन्धान्तराच्चेत्यभेदात् साकारेति, अपि समाधानान्तरसमुच्चयेऽवधारणे वा। **प्रवाहज्ञानं** वासनावशान्नीलाद्याकारेणोत्पद्यमानं स्वमाकारमेवाध्यवस्यति नान्याकारमिति न विपर्ययमिति भावः।

**सद्वादः साङ्ख्यमतं** कारणं बीजादिकं कार्यम् अङ्कुरादिकं परिणमते अन्यथात्वं लभते विकरोतीति यावत् । तथा च बीजमङ्कुरो जायते इति **वाक्यार्थः** । ननु बीजं कर्तृ अङ्कुरस्योत्पत्तिरिति भिन्नविषयत्वं तदवस्थमेव, यदि च बीजाङ्कुरयोरभेदः, हन्त तर्हि कस्योत्पत्तिः, पूर्ववदेव बीजमात्रमुपलभ्यते इत्यत आह – जन्मार्थ इति । आविर्भावः कार्यभूतोऽङ्कुर एव जन्मार्थे जन्माश्रयः प्रागसत्त्वात् । तथा च तन्मते कार्यकारणयोर्भेदाभेदस्वीकारात् कारणरूपेण कर्तृत्वं कार्यरूपेण चोत्पत्तिरिति भावः। अत एव च्विप्रत्ययोऽपीत्याह – प्रकृतिरिति । तथा जन्मनः क्रमिकत्वाभावात् कथं क्रियात्वमित्याशङ्का प्रागुक्तसकलपक्षे समाधत्ते-कार्येति ।**कुलचन्द्रस्तु ये** तु मन्यन्ते कारणे कार्यशक्तिरूपं कर्तृशक्तिमतश्चोत्पत्तिः सदैव भेदश्च तयोर्नास्तीति,**तन्मतेनाह** – जन्मार्थ इति । जन्मार्थो जन्मकारणम्, आविर्भावः शक्तिमान्, नवा समुच्चये, **वृद्धसाङ्ख्यः** पुनराह – नासतः प्रादुर्भावः, अपि तु सतः, तदा को जन्मार्थ इति चेद् अप्रकाशस्य स्फुटीभवनमात्रम् अङ्कुरो हि बीजम् अन्यथाकुर्वन् जायते पत्रकाण्डनालादिभेदेन स्फुटीस्यादिति । अत उक्तं वृत्तौ अथवेति । अमुमेव पक्षमाश्रित्याह – कार्येति । व्याचष्टे उच्छूनलताग्रशिथिलावयवसंयोगः ।

ननु कारणस्योच्छूनलताद्यनेकक्रमिकावस्थानत्वेऽपि जन्मनः कथं क्रमिकत्वम् आद्यक्षणसम्बन्धादिरूपस्य तस्यैकत्वादित्याशङ्क्याह – न चेति । कारणगतो बीजगतः कारणव्यापारस्य कार्यार्थतया तत्क्रमोऽपि कार्यजन्मनाऽध्यवसीयते इति प्रत्ययवाच्यक्रमिकत्वरूपस्य नोक्तक्रियालक्षणस्य **व्याप्ति**रिति समाधत्ते कार्येति । यदा तु स्फुटीभावमात्रं जन्मार्थस्तदा जायते इत्यत्र पत्रादिभेदात् क्रमशः स्फुटीभवतीत्यर्थः । **वस्तुत** एव क्रमिकत्वात् किमारोपेणेति भाव्यम् । **वैशेषिके व्याकरणस्य सर्वपारिषदत्वाद्** एकस्यापि बहुधा व्याख्यानं न पिष्टपेषणदोषमावहति । अदृष्टं धर्माधर्मौ, तत्प्रबोधितारम्भे कार्यजनने शक्तिर्येषामिति विग्रहः । परमाणवस्त्वादिकारणं नित्यभूतास्त एव कर्तार इत्यर्थादायातम्, समवायिकारणम् अङ्कुरावयवो निमित्तं भूमिजलादिविकाररूपं कार्यद्रव्यं कार्यद्रव्यस्याङ्कुरस्य । एतदुक्तं भवति क्षित्युदकसहकारिणो बीजस्य नाशकादृष्टत्वादुपजातक्रियस्य विभागादवयविद्रव्यनाशे विभक्ताः परमाणवः पुनरारम्भकादृष्टादुपजायते क्रियाभिर्जनितमित्थं संयोगाद् द्व्यणुकादि जायते द्व्यणुकादितोऽपि चतुरणुकादि इत्यादिक्रमेणान्तेऽङ्कुरो जायते । तथा चाङ्कुरपदं तदारम्भकपरमाणुपरम्, **धातुस्तु** जन्मार्थो मिलने व्यापारे वर्तते । परमाणवोऽङ्कुरोत्पत्त्यनुकूलक्रमिकव्यापारवन्त इत्यर्थः । एतेन परमाणव एव द्व्यणुकादिद्वारा अङ्कुरेऽपि हेतुरिति **कन्दलीकारमतेनो**क्तम् ।

**ये** तु परमाणूनां द्व्यणुकमात्रे हेतुत्वमाहु**स्तन्मतेऽ**ङ्कुरशब्दस्य तदवयवमात्रे लक्षणा, न चेद् एवम् अङ्कुरावयवो जायते इति प्रयोगः स्यात् । कस्मिंश्चिदन्वयबोधे

कानिचिदेव पदानि समर्थानि, न तु तत्समर्थकानि पदान्तराणीति न्यायात्। अथवा **वैशेषिकमते** कारकत्वाभावे तद्**विवक्षामात्रेण** कर्तृत्वम्। अङ्कुरोत्पत्तेश्च क्रमिकत्वं कारणीभूतद्व्यणुकादिक्रमाध्यारोपेणैव प्रत्ययवाच्यमित्येव **टीकायां** दर्शितम्। **गुरुमते** तु क्रियाफलहेतुत्वमेव कारकत्वमित्युत्पत्तिफलहेतुत्वादङ्कुरस्य कर्तृत्वम् अप्रत्यूहमेव। उत्पत्तिफलं च द्वितीयादिक्षणयोगस्तत्साक्षात् कालो वेत्यलं विस्तरेण। तथेति **'दुष वैकृत्ये'** (३।२८)। वैकृत्यं चावयवेषु क्रमेणैवावयविन्यपि उत्कृष्टापकृष्टानेकविकाराः क्रमिका एवेति भावः। एवमिति उत्पन्नाभावो **ध्वंसः**, अवयवानां क्रमेण विभागे सति घटो नश्यतीति। अत्र नशेर्विभागक्रमारोप इत्यर्थः। प्रागिति उत्पत्तेः पूर्वं योऽभावः स प्रागभावः। कपाले घटो नास्तीत्यत्र नञो द्योतकत्वेन धातूनां प्रागभावाभिधाने जन्मवत् पौर्वापर्याध्यारोपात् साध्यताध्यारोपवत् प्रयोग इति भावः। क्वचित्तु प्रत्ययस्य लक्षणयाऽभावप्रतियोगित्वमात्रबोध इति मन्तव्यम्।

अत्यन्तेति। त्रैकालिकाभावोऽत्यन्ताभावः। यथा 'आकाशे पुष्पं नास्ति' इत्यत्राप्यधिकरणे निषेध्यसम्बन्धमग्रतो बुद्ध्याऽध्यवस्यति पश्चात् तदभावबोध इति तार्किकसिद्धान्तात् सम्बन्धगतं क्रमिकत्वं साध्यत्वं चाभावेऽध्यारोप्य प्रत्ययेन क्वचित्तूच्यते इति भावः। इतरेति। गौरयमश्वो न भवतीत्यादौ भेदव्यवहारहेतुर्योऽभावस्तस्यापि वस्तुनस्तादात्म्यारोपस्य ग्राहकतया बुद्धिकृतसंस्पर्शस्य क्रमिकत्वं साध्यत्वं च कदाचिदारोपादेवेति भावः। अथवा समवायसम्बन्धादिरूप एवाभावो नातिरिक्त इति **गुरुमते** ग्रन्थो योजनीयः। एतेन चतुर्विधस्याप्यभावस्य क्रियात्वमुक्तम्। अत्रैव **भर्तृहरिसंवादः**– यावत्सिद्धमित्यादिना **वृत्तौ** दर्शितः। सिद्धं सत्तादि, असिद्धं गुणादि। साध्यत्वेन प्रतीयते प्रत्ययेन बोध्यते इत्यर्थः। आश्रितमुपचारादिना प्रत्ययबोधितं क्रमरूपं यस्येति विग्रहः। नन्विति भावे प्रत्ययविधानार्थं धात्वपेक्षया प्रत्ययान्तस्यार्थभेदोऽस्ति। भावशब्दस्य क्रियापर्यायत्वादित्येवात्र **शब्दबीजम्** अतस्तदपि निरस्यति नैवमिति। एतेन धातोरेव साध्यताप्यर्थ इति। **"भावे"** (४।५।३) इति सूत्रे **रक्षितेन** यदुक्तं तन्निराकृतम् इति **"आत्मनेपदानि"** (३।२।४०) इत्यत्र विवेचयिष्यामः। अन्वयव्यतिरेकात् सत्तोत्पादना भावना वा क्रमिकता वा आख्यातार्थ इति **सर्वतान्त्रिकसिद्धान्तानु**सारात् सैव साध्यतेत्यभिधीयते। न तु साध्यता कर्तृयोग इति **कुलचन्द्रमतं** युक्तम्, भावप्रत्ययस्य तदनभिधायकत्वात्। सिद्धता च सिद्धिरेव। पाक इत्युक्ते पचधात्वर्थस्य सिद्धिरिति प्रतीतेः। तथा च **"कर्तरि कृत्"** (४।६।४६) इत्यत्र **न्यासकृता** यद्यपि भावे घञ् आत्मनेपदं च श्रूयते, तथापि **शब्दशक्तिस्वाभाव्याद्** भावधर्मसिद्धतासाध्यतापरं भावपदम्। अतो न स्वार्थिकत्वम्, यतो घञादीनां धात्वर्थस्य सिद्धतामेवाभिधातुं सामर्थ्यम् आख्यातस्य साध्यतामिति व्याख्यातम्। कथन्तर्हि 'पाकः सिद्धः' इति सहप्रयोग इति चेत् सिद्ध

एव सिद्धतापरतया लक्षणया उपपादनीयः। व्यतिरेकित्वादिति अन्वयव्यतिरेकव्यभिचारादित्यर्थः। तमेव दर्शयति – तथा हीति। घञादेः सिद्धतायामन्वयव्यतिरेकौ दर्शयित्वा साध्यतायामात्मनेपदस्य तौ दर्शयति – असत्यपीति। आत्मनेपदेऽसति घञादिसत्त्वे पचौ सत्यपि साध्यता न प्रतीयते इत्यर्थः। कृदाख्यातवाच्ययोरर्थयोर्ज्ञानभेदादेव भेद इति दर्शयति – अन्य इति। कारकपदं कारकविभक्तिपदम्, तेन 'शोभनं पचति' इत्यादौ कर्मत्वस्वीकारेऽपि न दोषः। ----- लिङ्गादिमान् अत्र च शब्दभाव एव नियामकः। यथेति क्रियाभावशब्दौ धर्मवतीमेव क्रियामाहतुः। अन्यस्तु तदभिधायी नास्ति, अत एव धर्मवत एव क्रियात्वमिति। धर्मातिरेके न तत्क्षतिरिति भावः।

अभावादिति पूर्वाचार्यप्रसिद्धत्वादित्यर्थः। नन्वशुद्धक्रियानिष्ठत्वं न क्रियामात्रप्रतिपादकत्वम् असिद्धेः सर्वेषां प्रवृत्तिनिमित्तवाचकत्वात् 'पच्यते पाकः' इत्यत्र भावप्रत्यये क्रियामात्रवाचकत्वाक्षतेः साध्यताया भावनादिरूपायाः क्रियात्वाव्यभिचारात्। नापि सिद्धतासाध्यतानभिधायित्वं पुत्रीयादेरपि तथात्वात्। एवं च भावयतिना तत्र धातुत्वं न स्यादित्येतदर्थं **"ते धातवः"** (३।२।१६) इति वचनम् इत्यग्रिमग्रन्थस्यासङ्गतिः, तेन क्रियापदं क्रियानिष्ठधर्मरहितक्रियापरमिति कुलचन्द्रप्रलापोऽप्यपास्तः। नाप्यलक्षणिकत्वं चिकीर्षादिं प्रति **"ते धातवः"** (३।२।१६) इति वचनं सुखार्थमिति ग्रन्थासङ्गतेः। उच्यते – यदुत्तरप्रत्ययेन साध्यत्वं क्रमिकत्वं चालोच्यते, तदनपेक्षक्रियावाचित्वमेवात्र शुद्धक्रियानिष्ठत्वम्। पच्यते इत्यादिः पुत्रीयतीत्यादिश्च न तथा प्रत्ययस्य नाम्नश्च सुखसमुदयान्तर्गतत्वेनापेक्षणाच्चिकीर्षादेस्तु धातुसंज्ञा सिद्धैव, प्रकृतेश्चोत्तरं प्रत्ययेन साध्यत्वाद्यभिधानात्। कथं पुनरयमर्थो लभ्यते इति चेत्, प्रत्ययवाच्यसाध्यताक्रमिकताश्रयो हि क्रियेत्युक्तम्, तद्वाचकोऽपि यदुत्तरप्रत्ययेन साध्यताऽभिधीयते स एव प्रत्यासत्त्या वाचकः। अत्र च भावयति – ग्रहणबल ---- क्रियावाचकान्यानपेक्षक्रियावाचकत्वलाभः, अन्यथा क्रियात्व इति विदध्यात्। न च प्रत्यासत्त्या साध्यतावाचिप्रत्यययोग्यस्य क्रियाभावस्यैव ग्रहणमिष्यताम्, किं पुत्रीयाद्यर्थं **"ते धातवः"** (३।२।१६) इत्यस्य स्वीकारेणेति वाच्यम्। 'मृद्वपाक्षीत्' इत्यत्र मृदुपचिसमुदायस्यापि धातुत्वापत्तेः। तदुत्तरप्रत्ययेनापि विशिष्टक्रियासाध्यताभिधानात्।

यद् वा भावयतिना क्रियामेव भावयतीति नियम उच्यते, अत्र च क्रियाभिन्नमात्रं न नियमव्यावृत्तं सर्वस्यैव प्रवृत्तिनिमित्ताभिधायित्वात्, किन्तु प्रागुक्तप्रत्यासत्त्या क्रियापदस्यात्र स्वसाध्यस्वक्रमिकत्ववाचकप्रत्ययसम्बन्धिशब्दप्रतिपाद्यत्वक्रियाविशेषपरत्वं स्वसाध्यत्वक्रमिकत्ववाचकप्रत्ययसम्बन्धिशब्दवाच्यत्वमेव क्रियालक्षणमिति स्थिते तादृशीं क्रियामेव भावयति न तु साध्यतादिवाचकप्रत्ययरहितशब्दाभिधीयमानं भावयति, यतस्तस्य

संज्ञार्थमेव नियममग्रे स्वयं वक्ष्यति । पच्यते पाको मृद्वपाक्षीदित्यत्र पुत्रीयतीत्यादौ प्रत्ययेन नाम्ना च साध्यतावाचकप्रत्ययशून्येनाभिधीयमानमेवार्थं समुदायोऽभिधत्ते इति तस्य व्यावृत्तिः । न चैवं साध्यतादिवाचकप्रत्ययशून्यशुक्लादिशब्दवाच्याभिधायकस्य श्वितादेः कथं धातुसंज्ञेति वाच्यम्, यस्य धातुसंज्ञा तेन प्रतिपादनदशायां साध्यतादिवाचकप्रत्ययरहितशब्दाभिधीयमानत्वाभावात् तेन यदुत्तरः प्रत्ययः साध्यतां क्रमिकतां च नाभिधत्ते, तदनपेक्षया क्रियाभावस्तदभिधीयमानानभिधायकत्वे सति क्रियाभिधायको वा धातुरिति **फलितार्थः।**

अत एव ऋते शुक्लप्रभृतीनामपि धातुसंज्ञाप्रसङ्गो निरस्तः । अथ भावयतिग्रहणबललभ्योऽयमर्थग्रहणबलेनापि लभ्यते किं भावयतिनेति समाशङ्क्याह – यद्येवमिति । अन्यत्रापीति । अर्थग्रहणं कदाचित् क्रियार्थस्यार्थतः प्रवृत्तावपि याप्रभृतेर्धातुसंज्ञार्थमिति कुतो न शङ्क्यते इति भावः । अथा**न्यायविरुद्धो** ज्ञापयितुमयोग्यः । अन्यथा भावयतिग्रहणेऽप्यनिस्तारादित्याह – प्रतिपत्तेश्चेति । यदि च सर्वत्र तादृशप्रत्ययविहितत्वं विवक्षितं तदा विकल्पार्थस्य वाशब्दस्य [शब्दस्य वा सत्तेत्यत्र सत्तावृत्तिवाशब्दस्य] वितर्कार्थस्य नुशब्दस्य च धातुसंज्ञा स्यात् । तेषां सर्वत्र तादृशप्रत्ययविहितत्वाभावेन तत्र हि शब्दानपेक्षया क्रियाभावत्वाभावादिति चोद्यार्थः । **'शक्तिभेदेन शब्दभेदः'** इति दर्शनमवलम्ब्य समाधत्ते – अन्य इति । वितर्काद्यर्थो नुशब्दादिः सर्वथैव सादृशप्रत्ययरहितः, न तु स्तुत्यर्थ इत्याशयः । यद् वा यत्क्रियावाचकः संज्ञित्वेनाभिमतस्तत्क्रियां प्रति सर्वत्र साध्यतावाचकप्रत्ययरहितः, यतस्तदनपेक्षमेव विवक्षितम् । नुशब्दादिस्तु स्तुत्यादिकेऽर्थे न तादृशप्रत्ययरहित इति तदनपेक्षा भवति, वितर्कादौ तु तादृशप्रत्ययरहितत्वान्न तदपेक्षया तक्रियाभिधायित्वं तस्य स्वस्य स्वानपेक्षत्वाभावाद् अतो न तदभिधाने धातुसंज्ञेत्याशयेनेदं **समाधानम्।** अथैवमपि या प्राप्तिरस्ति इत्यादौ याशब्दस्य सर्वनाम्नोऽपि प्राप्तिवचनत्वाद् धातुत्वापत्तिः । तस्मिन्नर्थे तस्य कदाचित् साध्यताभिधायि प्रत्यययोगित्वादिति चेत्, न । येन रूपेण यस्य यत्क्रियाभिधायित्वं तेन रूपेण तत्र साध्यताभिधायी यस्तदुत्तरप्रत्ययस्तत्र हि तदनपेक्षित्वं **विवक्षितम्** । याशब्दस्य येन रूपेण तादृशप्रत्यययोगिता न तेन रूपेण सर्वनामतेति सर्वनामत्वरूपेण तादृशप्रत्ययरहितानपेक्षत्वम्, तस्य न सम्भवतीत्यदोषः ।

ननु प्रादीनामन्यत्र शक्त्यकल्पनात् प्रपचतीत्यादौ धातूपसर्गसमुदायस्यैव विशिष्टेऽर्थे शक्तिरिति समुदायस्यैव धातुसंज्ञा स्यान्न त्वेकदेशस्य निरर्थकत्वात् प्रशब्दो द्योतक एव, धातुस्तु विशिष्टार्थाभिधायक इत्यु**दयनाचार्यादिमते** तु साध्यतादिवाचकप्रत्ययशून्योपसर्गापेक्षा अर्थप्रत्यायकत्वात् पुत्रीयादिवदिहापि नास्य सूत्रस्य विषयः स्यात् । यदि च तादृशवाचकान्तरापेक्षायामेव न दोषः । प्रशब्दस्तु निरर्थक एवेति तदपेक्षयार्थप्रत्यायकस्यापि

धातुसंज्ञा तदा समुदायस्य कथं न स्यादित्याशङ्क्याह – प्रपचतीति। उपसर्गस्य धातोश्च प्रत्येकमर्थवत्त्वात् 'मृद्वपाक्षीत्' इतिवदिहापि विशिष्टार्थप्रत्यायकस्य समुदायस्य पूर्वोक्तयुक्त्यैव निरासार्थ इति भावः।

ननु यत्रोपसर्गसन्निधावपि धातोरन्यत्र परिक्लृप्तोऽर्थः प्रतीयते तत्राधिकस्य वाचको भवतूपसर्गः। यत्र तु 'प्रतिष्ठते' इत्यादौ धातोर्न क्लृप्तार्थावगतिः, किन्त्वर्थान्तरमात्रं तत्रोपसर्गसमुदायस्यैव गत्यादौ शक्तिर्युक्तेति कथमेकदेशस्य निरर्थकस्य धातुसंज्ञेत्याशङ्क्याह – प्रतिष्ठते इति। प्रेण विना गतावदृष्टोऽपि तिष्ठतिर्गतिनिवृत्तौ क्रियायां दृष्ट इति क्रियाभावत्वेन दृष्टत्वात् स एव गत्यर्थः, गणे च पठितत्वात् कथं तिष्ठतिर्गत्यर्थः स्यादित्याह – अनेकेति। नन्विदं हेत्वन्तरमिति **कुलचन्द्रालापो**ऽयुक्तः। आदिकर्मादिप्रकर्मादिभेदेनोपसर्गाणामनेकार्थदर्शनात्। नन्वेकस्यैव तिष्ठतेर्विरुद्धोभयार्थता कथं घटताम् इत्यत आह – विरुद्धेति। ननु प्रपचतीत्यादौ प्रशब्दः क्रियावाची दृष्ट एव, तथा च तिष्ठतौ वा प्रशब्दे वा शक्तिरित्यत्र विनियमकाभावात् समुदाये शक्तिरेव न्याय्येत्यत आह – आदीति। प्रशब्दस्य विशेष्यार्थाभिधायित्वं न दृष्टं तिष्ठतेस्तु तद् दृष्टमिति तत्रैव शक्तिरिति भावः। यदि च दर्शनमात्रमकिञ्चित्करम् अन्वयव्यतिरेकाभ्यां प्रशब्दस्यैव गतौ शक्तिरिति वक्तुं युज्यते। अत एव सर्वत्रोपसर्गस्य वाचकत्वमिति **कन्दलीकारादि**भिरुक्तम्, तथापि तिष्ठतेर्वानर्थकं प्रत्यर्थं नियोगे गतौ न स्यात्, प्रकृत्यर्थान्वितस्वार्थबोधकत्वेनैव प्रत्ययानां व्युत्पत्तेर्नित्यतैव **तात्पर्यम्**। न चैवं 'प्रपचति' इत्यत्राप्युपसर्गार्थे विशिष्टे पाके प्रत्ययार्थान्वयो न स्यादिति वाच्यम्, विशिष्टस्यानतिरिक्तत्वेन प्रकृत्यर्थत्वाक्षतेः। अन्यथा ओदनं पचतीतिवदत्रापि ओदनकर्मके पाके आख्यातार्थान्वयो न स्यात् तर्हि प्रशब्दोच्चारणं किमर्थमित्यत आह – तस्या इति। गतेरेकव्यवच्छेदके द्योतक इत्यर्थः। तत्सन्निधावेव धातोर्गत्यर्थाभिधायितया शक्तिपरिचायकत्वमेव द्योतकत्वमिति वाच्यम्। न चैवमत्र दृष्टत्वात् प्रपचतीत्यादावपि द्योतकतैव युक्तेति वाच्यम्, किञ्चिदर्थद्योतकत्वदर्शनेन सर्वत्र द्योतकत्वकल्पने मानाभावात्। प्रगतो नायकः प्रणायकः, प्रपचतीत्यादौ वाचकत्वस्यापि दर्शनाच्च।

न च शब्दस्य सामान्यतः प्रकर्षादौ शक्तिकल्पने प्रतिष्ठते इत्यादावपि क्वचित् प्रकृष्टस्थितद्योतकः स्यात्, अतो यदि पचादिपूर्वकप्रशब्दत्वेन प्रकर्षादौ शक्तिस्तदा प्रोत्तरपचादित्वेनैव प्रकर्षशक्तिरस्तु, धातोः स्वार्थकत्वस्य प्रत्ययार्थान्वयार्थकबोधेनावश्यकत्वादिति वाच्यम्, प्रशब्दादुत्तरस्यैव तिष्ठतेः स्थितिबोधकत्वेन प्रकृष्टस्थितिबोधाभावात् तस्मादुपसर्गस्य धात्वपेक्षाया न त्वस्वार्थाभिधानार्थत्वम्, किन्तु साधुत्वार्थमेव। यत्तु प्रपचतीत्यत्र प्रकृष्टपचनस्य प्रतिष्ठते इत्यत्र गतेर्लक्षणाया धातुत एव प्रतीतिरिति **गङ्गेशेनो**क्तम्, तत् तुच्छमेव। **लक्षणा** हि मुख्यार्थान्न प्रपचेत्यादिप्रबन्धने सापेक्षा

भवति । प्रकृतेऽपि सत्यमुख्यार्थान्वययोग्यत्वे झटिति तत्तदर्थस्यैव बोधात् कुतस्तदवसरः, अन्यथा सर्वत्र प्रकृतित एव प्रत्ययार्थावगमः प्रत्ययस्तु द्योतक एवोपसर्गतुल्यत्वादिति किं न कल्प्यते, तस्मात्–

**धात्वर्थस्य विरुद्धार्थः प्रादिभ्यो यत्र लभ्यते।**

**तत्रामी द्योतका ज्ञेया बुधैरन्यत्र वाचकाः॥ इति संक्षेपः।**

**दिवाकरादेर**पि मतमेतत् । अस्तु वा सर्वत्रोपसर्गस्य द्योतकत्वमिति **उदयनाचार्य**मतम् । तथापि प्रकृते न दोष इत्याह – एवमिति । उक्तयुक्तार्थान्तरगतौ तावत् सुतरां न दोषः । द्योतकत्वेनार्थान्तरानवगतिपक्षेऽपि प्रतिष्ठते इत्यादिवदेव न दोष इत्यर्थः । न च समुदायस्य संज्ञा स्यात्, यावति क्रियावाचकत्वं पर्यवस्यति, तदवच्छेदेनैव संज्ञाविधानान्न च सोपसर्गसमुदायवाचकत्वं पर्यवसितम्, उपसर्गस्य निरर्थकत्वादिति **दिक्** । ननु कथम् इङिकोर्धातुसंज्ञा, तथा ह्यनयोरवधिसहितयोरेवार्थवत्त्वं न केवलयोः । यस्तु गणेऽनयोरर्थनिर्देशः समुदायार्थमवयवेऽध्यारोप्य कृत इति प्रातिपदिकसंज्ञायां **न्यासकृतो**क्तम् । अथ अध्यारोपितार्थयोरप्यनयोर्गणपाठबलादेव धातुत्वमिति तेनैव **सिद्धान्तित**मिति चेत् तथापि समुदायस्य धातुसंज्ञा केन निवार्यते इत्याह – अधीते इति । तथापीति । शिष्टैरित्यादिकं पूर्वत्र व्यस्ते योज्यम्, अन्ते वा उभयत्र हेतुपरत्वात् । अर्थेति । अधेरर्थान्तरे क्लृप्तां शक्तिं कुण्ठयित्वा समुदाये शक्त्यन्तरकल्पना नासाधीयसी । न विशिष्टं च शक्तिमत्त्वावच्छेदकम्, **गौरवात्** । अतः केवलयोरेवार्थवत्त्वम्, उपसर्गापेक्षा तु साधुत्वार्था, तद्योग एव विशिष्टेस्तदनुशासनादित्यर्थः । तर्ह्यर्थस्यापि प्रतीतिः स्याद् इति चेत् कदाचिद् भवत्येव । यत्र तु न प्रतीयते तत्र द्योतकतामात्रम्, एकत्र दृष्टस्त्वन्यत्रापि इङिकोरिवार्थवत्त्वादित्याशयेन क्वचित्तदर्थानुभवं दर्शयति – तथा हीति ।

ज्ञानार्थविषयमिति ज्ञानस्य योऽर्थो विषयः स एव विषयो यस्येति विग्रहः । नन्विदं सार्वत्रिकम्, क्वचित् स्मरणादिमात्रप्रतीतिः । **वस्तुतस्तु** तयोरनर्थकत्वे प्रत्ययान्वयो न स्यात्, अधीत्येति च समासानुपपत्तिः । **गणकारवा**क्यस्यापि अमुख्यार्थकल्पना नोचितेतीन्द्ध ---------- देवादयः । अस्तु वा अनर्थकयोरप्यनयोर्गणपाठबलादेव धातुत्वम्, तथापि न समुदायस्य संज्ञाप्रसङ्ग इत्याशयेनाह – किञ्चेति । न च इङिकोः क्रियाभावत्वानभ्युपगमेऽधेस्तद्योगाभावात् कथमुपसर्गतेति वाच्यम्, द्योतकवत् सार्थकावयवस्यापि धातूनामर्थवत्त्वसहायभावमात्रेणोपसर्गत्वाविरोधात् । यद् वा 'प्रतिष्ठते' इत्यादावुपसर्गस्य द्योतकत्वे सोपसर्गसमुदायस्य न कथं धातुसंज्ञा इत्याशङ्क्यैवायं ग्रन्थो योज्यः । तस्मादिति न चात्मनेपदार्थः पाठः, नामधातोरुभयपदस्यावश्यकत्वे शुद्धधातोः केवलात्मनेपदित्वस्वीकारेऽपि प्रयोजनाभावात् । अधिकं 'कर्तुरायिः' इत्यत्र वक्ष्यते । सर्वोद्दिष्टमिदं ज्ञापकम्, अनर्थकभागस्य धातुभागस्य च यः समुदायः स धातुरिति

भावः। यथेति। अन्यथा अडागमं बाधित्वा वृद्धिरेव स्यादिति भावः। **कुलचन्द्रस्तु** नियमार्थोऽयं पाठः, स एव धातुर्नान्य उपसर्ग इत्यर्थः। न च वाच्यम् आत्मनेपदार्थः पाठः रुचाद्याश्रयणादपि सिद्धिरेव स्यादित्याचष्टे। तदेति। यद्यपि आलपयतीत्यादि-समुदायस्य क्रियावाचित्वमेव नास्ति, तथाहि आज्ञापयतीत्यर्थे आलपयति, वल्पतीत्यर्थे वर्पति, वपतीत्यर्थे वफति, कर्षतीत्यर्थे किसति, तथाप्यवयवस्य क्रियावाचित्वमिति कृत्वा पूर्वपक्षो घटनीय इत्यर्थो **न्यासः**। युक्तं चैतत्, धातोरेव **प्राकृतशास्त्रेण** वैरूप्यस्य कृतत्वात् प्रत्यययुक्तस्य धातुविकारयुक्तस्य धातुत्वं केन वार्यताम्, न चेष्टापत्तिः साधुत्वापत्तेः, धातोः साधुत्वनियमाभावात्। किञ्च किसतीत्यत्र गुणः स्यादिति हृदयम् अनुवर्तते। एतच्च **नैयासिकादि**रीत्योक्तम्।

**वैयाकरणा**स्तु पदांशेऽपि शक्तिमाद्रियन्ते एव, तदा प्रशंसायां वन्तुः। प्रशस्तार्थवत्ता नास्तीत्यर्थः। अथवा अर्थः प्रयोजनं संज्ञारूपं प्रकृतत्वादसाधवोऽमी, तथा च साधुशब्दानुप्रसङ्गात् साधूनामेव सञ्ज्ञितावगमः इति प्रातिपदिकसूत्रे **न्यासकृता**ऽप्युक्तम्। एवं च तस्यैव धातुसंज्ञायामसाधुतावारणार्थं प्रयत्नान्तरमनुचितमिति हृदि निधाय तत्समाधानमुपन्यस्यति। अपर इति। **अस्मन्मते** भावयतिग्रहणबलाद् योऽर्थ उक्तः सोऽपि तन्मते बृहत्सञ्ज्ञाबललभ्यः एवेति दर्शयति। तथेति। **स्वमत**माह – एवमिति। यस्मादीदृशं सूत्रं भ्वादयो धातवः इति न कृतम्, तेनात्र नाव्याप्तिशङ्केति भावः। तर्हि गणपाठो व्यर्थ इत्यत आह – भ्वादीति। अनुबन्धप्रत्ययो गणाद् विवरणार्थः। गुणाश्रय इति पाटवादिगुणाश्रय इत्यर्थः। यद्यपि प्रकृत्यर्थस्य कर्मणि प्रत्ययः, न तु प्रकृत्यर्थे कर्मस्वरूपे, तथापि पाकादिशब्दात् कर्मणि त्यादयः स्युरित्यपि बोध्यम्। द्वितीयादिशब्दवत् प्रकृत्यर्थेऽपि स्युरिति वा सम्भाव्यते।

**॥ इत्याख्यातमञ्जर्यां क्रियाभावो धातुरितिसूत्रीयदुर्गसिंहकृतटीकायां**

**विद्यासागरकृता व्याख्या समाप्ता ॥**



# परिशिष्टम् — २ = रूपसिद्धिः

| क्र०सं० | शब्दरूपाणि | पृ०सं० |
|---|---|---|
| ५५. | अवतूलयति | १७१ |
| ५६. | अवेवेक् | ३७६ |
| ५७. | अवोचत | २२८ |
| ५८. | अशाश्यते | १९४ |
| ५९. | अशिश्रवत् | ४०६ |
| ६०. | अशिश्रियत् | २२५ |
| ६१. | अशिषत् | २३३ |
| ६२. | अशुषत् | २३३ |
| ६३. | अश्वयति | १८५ |
| ६४. | अश्वितत् | २३३ |
| ६५. | असरत् | २३३ |
| ६६. | अससमरत् | ४०९ |
| ६७. | असिचत् | २२८ |
| ६८. | असुस्त्रुवत् | २२५ |
| ६९. | अस्थायि भवता | २३७ |
| ७०. | अस्पार्क्षीत् | २१९ |
| ७१. | अस्पृक्षत् | २१९ |
| ७२. | अहं पचामि | ३३ |
| ७३. | अह्वत् | २२८ |
| ७४. | आचष्टे | २७४ |
| ७५. | आष्ट | ३६३ |
| ७६. | आटतुः | ३६३ |
| ७७. | आटिथ | ३६३ |
| ७८. | आनञ्ज | ३६७ |
| ७९. | आनञ्जतुः | ३६७ |
| ८०. | आनञ्जुः | ३६७ |
| ८१. | आनर्च्छ | ३६७ |
| ८२. | आनर्च्छतुः | ३६७ |
| ८३. | आनर्च्छुः | ३६७ |
| ८४. | आनृधाते | ३६९ |
| ८५. | आनृधिरे | ३६९ |
| ८६. | आनृधे | ३६८ |
| ८७. | आरत् | २३३ |
| ८८. | आरमति | २९६ |
| ८९. | आरिप्सते | ४१३ |
| ९०. | आलिप्सते | ४१३ |
| ९१. | आवां पचावः | ३३ |
| ९२. | आशिशत् | ३१७ |
| ९३. | आसाञ्चक्रे | २०६ |
| ९४. | आस्यते भवता | २३९, २५८ |
| ९५. | इदंकाम्यति | १५० |
| ९६. | इन्द्रिद्रीयिषति | ३२२ |
| ९७. | इयर्ति | ३७९ |
| ९८. | इयृयात् | ३७९ |
| ९९. | इह भुङ्क्तां भवान् | ९६ |
| १००. | इह भुञ्जीत भवान् | ९६ |
| १०१. | इहासीत भवान् | ९६ |
| १०२. | इहास्तां भवान् | ९६ |
| १०३. | ईप्सति | ४१५ |
| १०४. | ईयतुः | ३६२ |
| १०५. | ईयुः | ३६२ |
| १०६. | ईशयति | १८६ |
| १०७. | ईहांव्यतिबभूवे | २१७ |
| १०८. | ईहाञ्चक्रे | २०९, २१३ |
| १०९. | ईक्षामास | २१६, २१७ |
| ११०. | ईक्षाम्बभूव | २१७ |
| १११. | ईक्षाम्बुभूवे | २१७ |
| ११२. | उञ्छाञ्चकार | २०९ |
| ११३. | उड्डिडिषति | ३२१ |
| ११४. | उत्पुच्छयते | १७२ |
| ११५. | उदपादि | २३५ |
| ११६. | उन्दिदिषति | ३२१ |

# परिशिष्टम् – ३ = श्लोकसूची

१३. अलोपबाधात्मकमात्रदीर्घान्न नागमः किन्तु स पूर्वदीर्घात्।
अस्य प्रवृत्तिश्च न यत्र सिद्धिस्तेनानृधेकादिपदस्य सिद्धिः।।
(वैद्यकारिका) ३६५

१४. अलोपबाधा यदिह प्रविष्टा प्रायेण यद् वा खलु भाविता सा।
तस्या अभावेऽपि ततः प्रसिद्धा सिद्धिङ्गतान्यानृध इत्यमूनि।।
(पण्डित — का०) ३६५

१५. अवर्णपूर्वाजमुखं परं स्यादभ्यासतो योग्यतया तु यस्य।
धातोर्बहुव्रीहिसमासगम्यः स मूलधातुर्न ततोऽस्ति दोषः।।
( पण्डितवार्त्तिकम् ) ३८४

१६. अवसाम स्मरसि ह तत्र शश्वदहन्म च।
भविष्यन्मात्रे नित्यं स्यात् श्वस्तनी परिदेवने।
इयं तु सा कथं गन्ता एवं पादौ करोति या।। ८२

१७. आकाङ्क्षायामुभे स्यातां जानामि स्मर बालक!
अवसाम च काश्मीरे तत्रौदनमभुङ्क्ष्महि।। ८२

१८. आत्मजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेत्।
कृतिजन्या भवेच्चेष्टा तज्जन्यैव क्रियोच्यते।। (वङ्गभाष्यम्) १४७

१९. आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च।। १४६

२०. आदित्यग्रहताराणां परिस्पन्दमथापरे।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः।। (वा० प० ३।८।७६) ५२

२१. आदिलोपोऽन्तलोपश्च मध्यलोपस्तथैव च।
विभक्तिपदवर्णानां दृश्यते शार्ववर्मिके।। २३४

२२. आराद् दूरसमीपयोः। (अ० को० ३।३।२४२) ४५

२३. आलानं करिणां सस्ने। २९३

२४. आश्चर्येऽपि च दृष्टेयमाश्चर्यं यच्च यत्र सः।
वृषलो याजयेत् तत्र एता भूते विभाषिताः।। ८२

२५. इतः पश्यति धावन्तं दूरे यान्तं वनस्पतिम्।
तां ब्रवीमि विशालाक्षि ! या पिनष्टि जरद्गवम्।। २७९

२६. इतरार्थानवच्छिन्ने स्वार्थे यो बोधनक्षमः।
तिङ्ङर्थस्य निभाद्यन्यः स वा प्रत्यय उच्यते।।
(शब्दशक्तिप्रकाशिका, का० १०) १२६

२७. इत्थमन्वर्थसंज्ञाया विधानेनैव लक्ष्यते।
मतं हि पाणिनेरेव सम्मतं शर्ववर्मण:।। २८२

२८. इदं गुरुभ्य: पूर्वेभ्यो नमोवाकं प्रशास्महे।।
(उ० रा० च० १।१) २९३

२९. उक्त्वा बहुव्रीहिफलं द्विरुक्तिं सव्यञ्जनस्योदितमेव वृत्तौ।
एकस्वरेत्यस्य फलं दरिद्रो नान्यद् द्विरुक्तिर्हि दरोऽधिकस्य।।
(वैद्यकारिका) ३०८

३०. उपदिशि चकाशिरे काशा:।। (भ० का०) २०३

३१. उक्षां प्रचक्रुर्नगरस्य मार्गान्।। २१५

३२. ऋ ऋस्वरूपो भवतीह यत्र स ऋद्ग्रहेणादृत एव धातु:।
ऋदन्तभावोऽर्थनिबन्धनेन शेषश्च चाकर्त्तिपदे प्रसङ्ग:।। ४०१

३३. ऋधातुजातेट् सनि तद् द्विरुक्ते: पूर्वं विधि: स्यात् स्वरसङ्गतस्तत्।
पश्चाद् द्विरुक्ति: सनि कार्यितापि निमित्तता बीज इवाङ्कुरादे:।।
(पण्डितवार्त्तिकम्) ३८५

३४. एकस्थ: सविता देवो यथा विश्वप्रकाशक:।
तथा लिङ्गवती शास्त्रमेकस्थापि प्रदीपयेत्।।
(वङ्गभाष्यम्) १२६

३५. एकस्य बहूनां वा धातोर्लिङ्गस्य पदानां वा।
विभजन्त्यर्थं यस्माद् विभक्तयस्तेन ता: प्रोक्ता:।।
(ना० शा० १४।३०) ४८

३६. एकापि पुंश्चली पुंसां यथैकैकं प्रयाति हि।
विध्यङ्गशेषभूता तद्विधिं प्रत्यनुगच्छति।। (वङ्गभाष्यम्) १२६

३७. एति जीवन्तमानन्दो नरं वर्षशतादपि।।
(वा० रा० ५।३४।६; ६।१२९।२) २५७

३८. एहि मन्ये मृगाक्षीणामहं प्रेयान् भविष्यसि।
स्यात् प्रेमविषयस्तासामक्ष्णा काणो भवादृश:।। ३२

३९. ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मण: पुरा।
कण्ठं भित्त्वा विनिर्जातौ तेन माङ्गलिकावुभौ।। ४

४०. ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया।
आयिलोपश्च विज्ञेयो न चाश्वो गर्दभत्यपि।। १५३

४१. ओजसोऽप्सरसो नित्यमन्यस्यान्ये विभाषया।
एके त्वप्सरसो नित्यं सलोपस्मृतिमास्थिता:।। १५५

४२. [1]कच्चिज्जीवति ते माता। ९३

४३. कदाचित् कुप्यते माता नोदरस्था हरीतकी।। २९३

४४. कमलवनोद्घाटनं कुर्वते ये।। (मयूर:)

४५. करेणुरारोहयते निषादिनम्।। (माघ० .........) २८३

४६. कर्त्रभिप्राय इत्येतत् सूत्रं विहितं यत:।
तस्मात् सामान्यमेवास्य सम्मतं शर्ववर्मण:।। २८२

४७. कर्मस्थ: पचतेर्भाव: कर्मस्था च [illegible]: क्रिया।
अस्यासिभाव: कर्तृस्थ: कर्मस[illegible] क्रिया।। २६८

४८. कार्यिकार्यनिमित्तानां पदानां य[illegible]णम्।
वक्ष्यमाणार्थसंक्षेपायाधिकार: स उच्यते।। ३०५

४९. काशे स्पन्द कुशे स्पन्द स्पन्द त्वं शक्रमस्तके।। २७३

५०. किंकिलास्त्यर्थयोर्दृष्टा भविष्यन्त्यर्थयोस्तयो:।
लक्षणे किंकिलार्थोऽयं वृषलं याजयिष्यति।। ८१

५१. कृतस्त्रिष्वपि विज्ञेया भावे कर्मणि कर्तरि।
देयं ध्येयं चैव यति ण्यति कार्यं च कृत्यका:।।
(अ० पु० २५८।१—४) १२६

५२. कृतस्यास्मरणे कर्तुरत्यन्तापह्नवेऽपि च।
दर्शनादेरभावेऽपि त्रिषु विद्यात् परोक्षताम्।। ६८, ७०

५३. क्रियमाणं तु यत् कर्म स्वयमेव प्रसिध्यति।
सुकरै: स्वैर्गुणै: कर्तु: कर्मकर्तेति तद् विदु:।। २५९

५४. क्रियान्तरपरिच्छेदे प्रवृत्ता या क्रियां प्रति।
निर्ज्ञातपरिमाणा सा काल इत्यभिधीयते।। ५२

५५. क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद् विचेष्टितम्।
तदपेक्ष्य प्रयुञ्जीत गच्छतीति विचारयन्।।
(व्यवहारवादी) ६६

---

१. कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता।
माराविद ! त्वां पृच्छामि कच्चिज्जीवति पार्वति! ।।
(काशिका० ३।३।१५३— कामप्रवेदनेऽकच्चिति)।

५६. क्रियाभेदाद् यथैकस्मिन् तक्षाद्याख्या प्रवर्तते।
क्रियाभेदात् तथैकस्मिन् ऋत्वाद्याख्या प्रवर्तते।। ५२

५७. क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः।
प्रयोगतोऽनुसर्तव्या अनेकार्था हि धातवः।।
(क्षी० त०, चु० ३९२) ४७

५८. क्रुध्यामि श्रद्दधे नैव कतरः कतमश्च सः।
को नाम वृषलस्तत्र याजयेद् याजयिष्यति।। ८१

५९. गतिपूर्वो यदा धातुः क्वचित् स्यात् तद्धितोदयः।।
(अ० वे० प्रा० १।१।११) ४८

६०. गर्हामाह कथन्तत्र याजयेद् वृषलं भवान्।
को नाम वृषलं तत्र याजयेद् याजयिष्यति।। ८१

६१. गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते।। ५२

६२. गुपो वधेश्च निन्दायां क्षमायां च तथा तिजः।
संशये च प्रतीकारे कितः सन्नभिधीयते।। १२७, १३१

६३. चक्रे सुबन्धुः सुजनैकबन्धुः।। ७५

६४. चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः।
प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते।।
(वा० प० २।१९४) १२६

६५. तनोति शुभ्रं गुणसम्पदा यशः।। २७८, २७९, २८१

६६. तव दर्शनं किन्न धत्ते।। २७८, २८०

६७. तवात्मयोनेरिव किन्न धत्ते।। २७८

६८. तस्मादिदं लक्षणयैव धातोर्हुत्वेऽग्रतो द्विर्वचनात् पदस्य।
सिद्धिं समावेशयितुं विधेयं द्वयस्य संज्ञाऽन्यफलाय नैव।।
( उमापतिः ) ३२६

६९. तातांझ प्रथम उत्तस्थासाथांध्वं च मध्यमः।
उत्तम इवहिमहि ..........................।।
(अ० पु० ३५७।६) १७

७०. ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन् कृतार्थताम्।
सोऽभवद् वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः।।
(र० वं० ११।५६) १२६

७१. - - - - - - - तिप्तसन्तीति प्रथमः पुमान्।
सिप्थस्थमध्यमनरो मिब्वस्मस् चोत्तमः पुमान्।।
(अ० पु० ३५७। ५) १७

७२. दग्धा च दहनीया च दह्यमाना च दृश्यते।
वतिरेकाग्निसंयोगाद् वर्तमानो न तेऽस्ति किम्।।
(व्यवहारवादी) ६७

७३. दशवर्षसहस्राणि रामो राज्यमचीकरत्।।
(वा० रा० १। १। ९७) १७७

७४. दशास्यं घातयित्वा तु रामो यास्यति मन्दिरम्।।
(वररुचिः) १७७

७५. दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः
कण्ठे शब्दौघसिद्धिक्षतबहुकठिनीशेषभूषानुयातः।
सर्वं विस्मृत्य दैवात् स्मृतिमुषसि गतां घोषयन् यो घुसंज्ञां
प्राक् संस्कारेण सम्प्रत्यपि धुवति शिरः पट्टिकापाठजेन।।
(नै० च० १९। ६२) ३६

७६. द्वयंग्रहे तिष्ठति नात्र तत्राभ्यस्तं परं ह्वे विहितेऽस्य हुत्वे।
कृतार्थता स्यादिति लक्षणस्य न लक्षणा संश्च तया न लक्ष्यः।।
(उमापतिः) ३२६

७७. द्वयस्य संज्ञाविहितो न लोपोऽभ्यासे यदातो विहितो निमितो।
लोपस्य संबन्ध इह प्रतीतो हेतुस्वभावेन विचक्षणैश्च।।
(वार्तिकम्) ३२७

७८. द्वयोर्यदुक्तं द्वयशब्दयोगे तज्जातिपक्षे न हि तन्निषेधः।
व्यक्तौ तु पक्षे द्वयकीर्तनं स्यान्निषेधबाधा कृतलक्षणैव।।
(वार्तिकम्) ३२८

७९. द्वित्वे द्विरुक्तेरिह तद्बलात् स्यादित्त्वं प्रबाध्याटिषतीति रूपम्।
ईदृग् द्विरुक्त्याटिषतीति रूपं सूत्रं विना स्यादिति वाग्घटा स्यात्।।
(महामहोपाध्यायकारिका) ३१५

८०. धातुजं धातुजाज्जातम् - - - - - - - - - - - - -।।
(बृहद्देवता २। १०४) ४७

८१. धातोर्हि हः प्रत्ययगस्त्वकारो मध्यं परित्यज्य तयोर्द्विरुक्तिः।
ह—अस्वरूपस्य ततो द्विरुक्तिः सिद्धा न धात्वादिषु यन्न सिद्धा।।
(बिल्वेश्वरगुरोर्गुरुः) ३४९

८२. धातौ साधने दिशि पुरुषे चिति तदाख्यातम्।
धातुभ्यः स्युः क्विबादयः।। (काश० धा० व्या०, सू० १, ४५) ४७

८३. धात्वङ्गभावादिह चेन्न चान्तो विशेषणं स्यात् क्वन्सोश्च सङ्गे।
संयोगसत्त्वेन भवेन्नकार आश्वान् मुखं केवलमेव दोषः।।
(वार्त्तिकम्)। ३६६

८४. न चाश्वो गर्दभत्यपि।। १५३

८५. न चोपलेभे वणिजां पणायाः।। (भट्टिकाव्यम्) १९६

८६. न बालतां हन्तुमनाश्चिकित्सते।। (मुरारिप्रयोगः) १३५

८७. न श्रद्दधे भवांस्तत्र वृषलं याजयिष्यति।
अस्ति स विद्यते नाम वृषलं याजयिष्यति।। ८१

८८. निपातनस्येष्टतया ब्रवीति शब्दो द्वितोक्तेः सुजयन्तु वारम्।
अध्याहृतौ तेन सुचोऽप्रयोगः स्वाभाविकी शक्तिरुदीरिता वा।।
(पण्डितवार्त्तिकम्) ३०५

८९. निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः।
यो यत्स्वार्थस्योत्तरस्थतृजर्थे बोधनक्षमः।।
(श० श० प्र०, का० १४) ४८

९०. नैवमन्वर्थसंज्ञायाः प्रायो वृत्तिर्न दृश्यते।
अतो न पाणिनेः सूत्रं सम्मतं शर्ववर्मणः।। २८२

९१. पतितं वेत्स्यसि क्षितौ।। (वामनः) ३०

९२. पत्रेण हंसाः पटुभिर्निनादैः प्रबोधयन्ते मृगराजकन्याः।। २८३

९३. पप्साविति प्रत्युदहारि वृत्तौ तच्छिट्परस्यैव विखण्डनेन।
भूते बहुव्रीहिसमासके तु स्यात् सिद्धिरस्येति वदन् विनिन्द्यः।।
(कारिका) ३४५

९४. परस्मै पद्यते यस्मात् तत् परस्मैपदं स्मृतम्।
आत्मने पद्यते यस्मात् तदेवात्रात्मनेपदम्।। २८२

९५. पर्यायता नास्त्यभिधेयमात्रे सा वस्तुसत्ता विहितैव यस्मात्।
एकार्थतायामपि युष्मदर्थे भवान् करोतीति न मध्यमः स्यात्।। ३०

९६. पृथिव्यादिषु भूतं स्याद् भूतः कालपिशाचयोः।। ६३

९७. पृथुं मृदुं दृढं चैव कृशं च भृशमेव च।
परिपूर्णं वृढं चैव षडेतान् रविधौ स्मरेत्।। १८७

९८. प्रवृत्तोपरतश्चैव वृत्ताविरत एव च।
नित्यप्रवृत्तः सामीप्यो वर्तमानश्चतुर्विधः।। ६७, ७०

९९. प्रत्ययविभागजनिता प्रकर्षसंयोगसत्त्ववचनैश्च।
यस्मात् पूरयतेऽर्थान् प्रत्यय उक्तस्ततस्तस्मात्।।
(ना० शा० १४। २८) १२५

१००. प्रप्रपूज्य महादेवं संसंयम्य मनः सदा।
उपोपहाय संसर्गमुंदुद्गतः स तापसः।। ३००, ३०४

१०१. प्रियामुखं किम्पुरुषश्चुचुम्बे।। २९३

१०२. प्रेषणाध्येषणे कुर्वंस्तत्समर्थानि वाऽऽचरन्।
कर्तैव विहितां शास्त्रे हेतुसंज्ञां प्रपद्यते।।
(वा० प० ३। ७। १२५) १७५

१०३. [1]फलव्यापारयोर्धातुः।। (ना० पु० ५२। ८८) ४८

१०४. भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय।। (मालतीमाावम्) ७

१०५. भाषते राघवस्तदा।। ६७, ८२—८३

१०६. भीमो भयानके रुद्रे पाण्डवे च नृपान्तरे।। (मेदिनीकोशः) ११

१०७. भुवोऽस्तिजातस्य तु बाधनाय न स्यात् कथं वा भवति प्रयोगः।
असंभवो वैकरणो भुवोऽस्तेर्बाधाद्वयोर्वैकरणोऽस्ति यत्र।।
(पण्डितवार्त्तिकम्) ३७२

१०८. भूतः पञ्चविधः प्रोक्तो भविष्यंश्च चतुर्विधः।
वर्तमानो द्विधाख्यात इत्येकादशकल्पना।।
(वा० प० ३। ९। ३८) ७५

१०९. भूते भव्ये वर्तमाने भावे कर्तरि कर्मणि।
प्रयोजके गुणे योग्ये धातुभ्यः स्युः क्विबादयः।।
(काश० धा० व्या०, सू० ४५) १२५

११०. भूवाद्या धातवो ज्ञेयाः परस्मैपदिनः स्मृताः।।
(ना० पु० ५३। १९) ४८

---

१. फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।।
(वै० भू० सा०, धात्वर्थ० का० २)।

